कल्पलता ।

यासम्यात्यन्तिकदुःखहानोपाये न वैदुष्यमिति भावः । आकर्णयन्तीति श्रौतं ज्ञानमभिप्रैति(१)। तच्च 'आत्मा वा अरे श्रोतव्यः' इत्याद्युपनिषदां श्रवणात्। एवकारेण लक्ष्यसम्यक्त्वायोगव्यवच्छेदं काशीमरणादेः स्वातन्त्र्ये-ण मोक्षोपायत्वशङ्कां निराकर्तुं पुनराह । नान्यदि-ति ।(२) यद्वा उपायमेव तत्त्वज्ञानमिति विशेषण-सङ्गत ए(वायमे)वकारस्तत्त्वज्ञानार्थिप्रवृत्ति(३)वैफल्य-शङ्कानिरासाय । ननु भवतु तत्त्वज्ञानं मोक्षहेतुस्तथा-प्यात्मतत्त्वं किमिति विविच्यत इत्यत आह । आत्मै-व तत्त्वतो ज्ञेय इति । ननु बौद्धा नैरात्म्यज्ञानं तत्त्व-ज्ञानमाहुः, तथा च कथमेकवाक्यतेत्यत आह। प्रतियो-ग्यनुयोगितयेति । तेषामपि प्रतियोगितया आत्मतत्त्वं ज्ञाने(४) स्फुरतीति मतं यत इति भावः । यद्वा यथा देहेन्द्रियादिभ्य आत्मा भिन्न इति तत्त्वज्ञानं तथात्म-नः शरीरादिकं भिन्नमित्यपि तत्त्वज्ञानं देहेन्द्रियादि-हानौपयिकत्वेनेति दर्शयति । प्रतियोगीति । नन्वहं गौर इत्यादिप्रकारकमात्मज्ञानमयत्नसिद्धमेवेत्यत आह। नैसर्गिकमिति। स्वाभाविकम् अयत्नसिद्धमिति यावत्, अहं सुखीत्यादिप्रकारकात्मज्ञानस्य तत्त्वज्ञान-त्वेपि(५) न मिथ्याज्ञाननिवर्तकत्वमतस्तदन्यतत्त्वज्ञा-नमेवेति भावः। ननु नैरात्म्यवादिनां शरीरेऽहंप्रत्यय-

(१) अभिप्रेतं—पु० पु० पा० ।
(२) नान्यदिति ।—इति पाठमनुसृत्य व्याख्यातम् । नान्यमिति ।—पुण० पु० पा० ।
(३) तत्त्वज्ञानार्थं प्रवृत्ति—पाठः ।
(४) आत्मतत्त्वज्ञानं—पाठः । आत्मतत्त्वज्ञाने—पुण० पु० पा० ।
(५) तकारकात्मतत्त्वज्ञानत्वेपि—पुण० पु० पा० ।

कल्पलता ।

स्तत्त्वज्ञानमेवेत्यत उक्तम्, यदि नैरात्म्यमिति । अयत्नसिद्धत्वात् तेषामप्येतादृशं ज्ञानमनादेयमित्यर्थः । आत्मतत्त्वं विविच्यत इति । शरीरादिभ्यो नित्यः सुख(१)ज्ञानादिगुणश्चानात्मा विवेकेन भेदेनोपदर्श्यत इत्यर्थः ॥

---

तत्र बाधकं भवत्(२) क्षणभङ्गो वा(३) बाह्यार्थभङ्गो वा(४) गुणगुणिभेदभङ्गो वा अनुपलम्भो वेति ।

---

दीधितिः ।

सति च बलवत्तरबाधकप्रमाणे साधकसहस्रस्याप्यकिञ्चित्करत्वात् तदेवादौ निरस्यति । तत्रेत्यादिना । क्षणभङ्गेत्यादौ भङ्गपदं(५) भङ्गसाधकमानपरमिति वदन्ति ॥

दीधितिटिप्पणी ।

तदेव बाधकमेव । स्वरूपतो भेदस्याबाधकत्वादाह । भङ्गपदमिति । भङ्गसाधकेति । तथा च तादृशमानाद्भङ्गार्थसिद्धिरेव स्थिरत्वे बाधः, बाह्यार्थभेदभङ्गसिद्धिर्गुणगुणिभेदभङ्गसिद्धिश्च ज्ञानसुखाद्याश्रयात्मबाधः । वस्तुतस्तु(६) ज्ञायमानकरणतामते तादृशभङ्ग एव बाधकमिति यथाश्रुतमेव सम्यक् ॥

---

(१) नित्यसुख—पाठः ।

(२) अयमेव पुणतामकरसम्मतः प्रकृतानुगुणश्च पाठः । तत्र बाधकं भवदात्मनि—कलि० मु० पु० पा० । तत्रात्मनि बाधकं भवत्—इति पाठो मथुरानाथसम्मतः ।

(३) क्षणभङ्गो वा स्यात्—पुण० पु० पा० । (४) बाह्यात्मभङ्गो वा—पाठान्तरं पुण० पु० ।

(५) अयमेव टिप्पणीकृन्मतः पाठः । भङ्गत्रयं—इति त्वन्यसम्मतः ।

(६) वदन्तीत्यनेन सूचितमस्वरसं प्रकटयितुमाह । वस्तुतस्त्विति । न च ज्ञायमानकरणतामतेपि स्थैर्याद्यभावस्यैव क्षणभङ्गादिरूपतया साध्याविशेषेण क्षणभङ्गादेः स्थैर्याद्यभावसाधकत्वरूपस्थैर्यादिबाधकत्वानुपपत्तिरिति वाच्यम् । ध्वंसाप्रतियोगित्वरूपस्थैर्यस्याभावानुमाने क्षणिकत्वस्य हेतुत्वेनैव तस्य साध्याविशेषविरहात् । एतादृशस्थैर्यस्य च तन्मते ध्वंसेऽलीके वा प्रसिद्धेः, तन्मते ध्वंसस्याप्यनन्तत्वाभ्युपमात् ।

कल्पलता ।

बाधनिरासमन्तरेणोच्यमानमप्यात्मनि प्रमाणमन्तरमेवातो विशिष्ट(१) आत्मनि बाधकमाशङ्क्य निराचष्टे । तत्रेति । नैरात्म्यवादिनामस्मदभिमतात्मनि बाध(२)कान्येतान्येवेति क्रमशो(३) निरसनीयानि, वेदान्तिनोऽप्यापाततो नैरात्म्यवादिन एवेति तन्मतमपि दूष्यत एव(४), तथा च श्रुतिभ्यः समधिगते(५)ऽप्यात्मनि सङ्कसुकतानिवृत्तये(६) न्यायः प्रवर्तनीयः, स च बाधनिरासमन्तरेण नाङ्गं(७) धारयतीति प्रथमं बाध(क)निरासारम्भ इति भावः । क्षणभङ्गादिपदं च तत्साधकप्रमाणपरम् । तत्र क्षणभङ्गे नित्यत्वभङ्गः । बाह्यार्थभङ्गे ज्ञानभिन्नात्मनोऽसिद्धिः । बाह्यत्वं च ज्ञानभिन्नत्वमेव(८)। गुणगुणिभेदभङ्गेऽपि तथा(९)। अनुपलम्भे तु स्वरूपस्यैवासिद्धिः । शरीरादिभिन्नात्मानुपलम्भवशान्नानुपलम्भः ।

दीधितिः ।

क्षणभङ्गे विप्रतिपत्तिः । शब्दादिः क्षणिको न वा । क्षणिकत्वं च स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति

दीधितिटिप्पणी ।

तैः शब्दादेरेव पक्षीकरणात् शब्दादिरित्युक्तम् । स्वाधिकरणेत्या-

(१) विशिष्य—पुस्त० पु० पा० ।
(२) दभिमतात्मबाध—पाठः ।
(३) तान्येव भागशो—पाठः ।
(४) तन्मतमपि दूष्यमेव—पुस्त० पु० पा० ।
(५) समवगते—पाठः ।
(६) अस्थिरतानिवृत्तय इत्यर्थः ।
(७) स च न बाधकनिरासमन्तरेणाङ्गं— कलि० मु० पु० पा० ।
(८) बाह्यं च ज्ञानभिन्नमेव—पुस्त० पु० पा० ।
(९) ज्ञानभिन्नात्मनोऽसिद्धिरित्यर्थः ।

दीधितिः।

कादाचित्कत्वम्, उत्पत्तिमत्त्वं वा। उत्पत्तिश्च स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसम्बन्धः। क्षणश्च स्वाधेयपदार्थप्रागभा-

दीधितिटिप्पणी।

दि। तत्क्षणस्थस्य द्विक्षणावस्थायित्वे स्वाधिकरणद्वितीयक्षणप्रागभावाधिकरणाद्यक्षणोत्पत्तिकत्वान्न यथोक्तरूपतेति क्षणमात्रस्थायित्वसिद्धिः। समयपदं कालिकसम्बन्धेनाधिकरणतालाभाय, अन्यथा विषयतया ज्ञानाधिकरणानागतघटादिप्रागभावाधिकरणक्षणोत्पत्तिकतया क्षणिकत्वेपि ज्ञानस्य यथोक्तरूपता न स्यात्। तादृशप्रतियोगिकप्रागभावाधिकरणमहाकालाद्युत्पत्तिकत्वस्योत्पत्तिमन्मात्रवृत्तित्वादप्रसिद्धिरिति क्षणपदम्। नित्यव्यावर्तनाय कादाचित्कत्वम्। न च प्रागभाववदेव भावाः स्युरित्यर्थान्तरं तवैव स्यादिति वाच्यम्। जन्यभावस्य प्रागभावसादृश्यवत्त्वे बाधात्, न हि जन्यो भाव उत्पत्त्यभाववान् विनश्येत्, तथा सति जन्यभावत्वस्यैवासत्त्वात्। यदि च तथाप्यर्थान्तरत्व(१)शङ्का तदाऽऽह। उत्पत्तिमत्त्वं वेति। नन्वत्र विशेष्यदलस्था उत्पत्तिः स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपा वक्तुं न शक्यते, वक्ष्यमाणमहाप्रलयप्रसिद्ध्यसङ्गतत्वापत्तेः, तादृशध्वंसाप्रसिद्धेरत आह। उत्पत्तिश्चेति। सत्यन्तदलप्रविष्टोत्पत्तिस्तु स्वाधिकरणसमयध्वंसानधिकरणेत्यादिरूपैव, क्षणाप्रवेशेन लाघवात्, न तु निरुक्तोत्पत्तिरपि तत्र निवेशिता, तथा सति क्षणिकत्वलक्षणे क्षणपदस्यासत्प्रयोजनत्वापत्तेः। तथाहि, उत्पत्तिलक्षणे क्षणनिवेशने स्वाधिकरणसमयप्रागभावाधिकरणं यत् स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणरूपं तत्सम्बन्धाभाव इत्यस्यैव सम्यक्त्वात्। स्वाधिकरणसमयध्वंसानाधिकरणेत्याद्युत्पत्तिप्रवेशे तु न क्षणपदवैयर्थ्यम्। तथाहि, क्षणिकलक्षणे क्षणपदादाने स्वाधिकरणसमयप्रागभावाधिकरणसमयः स्वाधिकरणसमयध्वंसानधिकरणसमयो यस्य तद्भिन्नत्वे सतीत्यर्थकरणेप्यसम्भवः,

(१) तथाप्यर्थस्यैवतत्त्व—इत्यादर्शपुस्तके पाठः।

दीधितिटिप्पणी ।

तथाविधस्थूलकालसम्बन्धस्य तत्रापि सत्त्वात् । न च क्षणिकत्वलक्षणस्थस्वपदस्यानुयोगिकोटौ दाने सत्यन्ते स्वाधिकरणसमयध्वंसानधिकरणेत्याद्युत्पत्तिप्रवेशे महाप्रलये स्वप्रसिद्धिरिति वाच्यम् । स्वपदस्यानुयोगिनि दाने विशेष्यस्य वैयर्थ्यापत्तेः प्रतियोगिन्येव तद्दानात्, तावतैव प्रागभाववारणसम्भवात् । न च तथापि प्रागभावनित्ययोर्वारणार्थं विशेष्यदले उत्पत्तिमत्त्वं प्रवेश्यते, तच्च व्यर्थम्, अवश्यनिविष्टप्रागभावप्रतियोगित्वेनैव तद्वारणादिति वाच्यम् । प्रागभावप्रतियोगित्वमात्रोक्तौ प्रागभावसाधारण्यापत्तेः, तस्यापि ध्वंसीयप्रागभावस्वरूपघटात्मकध्वंसप्रतियोगित्वात्, प्रागभावत्वनिरूपकप्रतियोगित्वस्याविवक्षणात् । न च वास्तवप्रागभावप्रतियोगित्वविवक्षयैव तन्निरासः, चरमध्वंसस्यापि स्वप्रतियोगिचरमभावप्रागभावप्रतियोगित्वात् तथात्वमविकलमिति वाच्यम् । स्वभेदात्मकप्रागभावान्तरप्रतियोगित्वेन तथापि प्रागभावसाधारण्यात् । केचित्तु विशेष्यदलस्थोत्पत्तिमत्त्वस्य प्रागभावप्रतियोगित्वमेवार्थः, स्वाधिकरणेत्यादिनिर्वचनं च सत्यन्तस्थस्यैव । न चैवं क्षणपदवैयर्थ्यम्, सप्तम्यर्थघटितविशेषणविशेष्यभावेऽप्रविष्टाभेदान्वयेन वैयर्थ्यदानासम्भवादित्याहुः । स्वाधिकरणमहाकालावृत्त्यप्रसिद्ध्या उत्पत्तिलक्षणे प्रथमक्षणपदम् । द्वितीयक्षणपदं तु घटपूर्वापरकालवर्त्तिस्थूलकालमादाय द्वितीयादिक्षणे उत्पत्तिलक्षणस्यातिव्याप्तिवारणाय, न त्वेतल्लक्षणे प्रयोजनशालि, तद्विनापि नित्यप्रागभावयोर्वारणात् । न च तथाप्युत्पत्तिलक्षणे कालिकसम्बन्धेन स्वावृत्तिप्रागभावप्रतियोगिक्षणसम्बन्धस्यैव सम्यक्त्वादधिकरणक्षणपदयोर्वैयर्थ्यमिति वाच्यम् । यथोक्तविशेषणविशेष्यभावेऽवैयर्थ्यात् । यद्वा प्राचीनमते जन्यमात्रस्य कालोपाधित्वं नास्तीति न वैयर्थ्यम् । ननु क्षणत्वं स्ववृत्तिप्रागभावप्रतियोग्यनधिकरणत्वं महाप्रलयात्मककालोपाधावप्रसिद्धम्, अतस्तद्घटितोत्पत्तिर्न चरमध्वंसे, अत आह । क्षणश्चेति । अत्राप्याधेयत्वमाधारत्वं च कालिकसम्बन्धेन बोध्यम्, तेनानागतविषयकज्ञानस्य ज्ञानोत्पत्तिक्षणोत्पन्नपदार्थप्रागभावविषयकज्ञानस्य वा न क्ष-

दीधितिः।

वानाधारसमयः। प्रसिद्धिस्तु विधेः नैयायिकानां प्रागभावे चरमध्वंसे च, निषेधस्य च बौद्धानामलीके। स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वं क्षणिकत्वमिति तु ज्यायः। प्रसिद्धिरेतस्य महाप्रलये। प्रागभावश्चात्र भावाभावसाधारणो बोध्यः, तेनान्त्यभावव्युदासः, अन्त्ये कादाचित्काभावो वा (१) स्वाधि-

दीधितिटिप्पणी।

णत्वव्यावृत्तिः, समयपदादेव तयोर्लाभः। (प्रसिद्धिरिति।) प्रागभावे प्रसिद्धिः कादाचित्कत्वगर्भस्य, उभयलक्षणयोः प्रसिद्धिश्चरमध्वंसे, निषेधस्य च जन्येषु विशेषणाभावान्नित्येषु विशेष्याभावात् प्रसिद्धिः सुलभैव। अलीक इति। प्रतियोगिप्रसिद्धिः शब्दादावेवेति, अलीकस्य समयसम्बन्धाभावात्। अनुत्पत्तिकत्वप्रवेशेनैव कादाचित्कत्वं प्रवेश्यते, अत एव तदप्रवेशनयाँ लाघवात् प्रकारान्तरमाह(२)। स्वाधिकरणेति। अत्र च क्षणावृत्तित्वं क्षणासम्बन्धित्वम्, अन्यथाऽवृत्तितयापि पर्यवसानं स्यादित्यपव्याख्यानम्, अवृत्तेः स्वाधिकरणसमयाभावादेवातिप्रसङ्गवारणात्, स्वपदस्यानुयोगिन्येव तात्पर्यात्(३)। ननु भावमात्रस्य प्रातिस्विकरूपेण प्रामाणिकत्वेन वा पक्षत्वम्, एवञ्चान्त्यभावस्य द्वित्रिक्षणावस्थायित्वेपि यथोक्तरूपवत्त्वात् सिद्धसाधनम्, अत आह। प्रागभावश्चात्रेति। अत्र अनयोर्निरुक्तयोः। अन्त्यभावेति। यस्य भावस्यानन्तरं भावोत्पत्तिर्नास्ति सोऽन्त्यभावः। स च क्षणत्रयस्थायी वा चतुरादिक्षणस्थायी वा भवत्वित्यन्यदेतत्। तथा च यदि भावाभावसाधारणं न स्यात् तदा प्रत्येकस्य पक्षतयान्त्यभाव एवास्मन्मते सिद्धसाधनं स्यात्। तथाहि, तस्याधिकरणसमयस्तत्पूर्वोत्पन्नस्तत्समोत्पन्नभावो ध्वंसरूपश्चाभावोस्ति, तत्र स्वाधिकरणभावरूपसमयप्रागभावक्षणे तस्योत्पत्तिरेव नास्ति, तदुत्तरं भावानुत्पत्तेः,

(१) टिप्पणीकृन्मतोयं पाठः। प्रागभावश्चात्र भावाभावसाधारणो बोध्यः, अन्त्ये कादाचित्काभावो वा, तेनान्त्यभावव्युदासः—इति तु सर्वत्र पाठः।

(२) तदप्रवेशा ... प्रकारकमाह—इत्यादर्शपुस्तके पाठः।

(३) स्वपदस्यानुयोगिन्येवसस्थवति...योलाघवात्—इत्यादर्शपुस्तके पाठः।

दीधितिः ।

करणक्षणवृत्तिध्वंसप्रतियोगिवृत्तित्वं वा क्षणिकत्वम् । क्षणत्वं च स्वावृत्तियावत्स्ववृत्तिध्वंसप्रतियोगिकत्वम्, स्ववृत्तिध्वंसप्रतियो-

दीधितिटिप्पणी ।

स्वाधिकरणस्य स्वद्वितीयादिक्षणोत्पत्तिकध्वंसरूपसमयस्य च न वास्तवः प्रागभावस्तदानीम्, येन तदधिकरणक्षणोत्पत्तिकत्वेन सत्यन्तसत्त्वं तत्र न स्यात्, किन्तु भावरूप(१)प्रतियोग्येव तदानीं तत्प्रागभावः, अतो भावाभावसाधारण्यं युक्तम् । अन्त्यनिरुक्तौ विवक्षान्तरमपि कर्तुं शक्यत इत्यतः, अन्त्य इति । अन्त्ये न्याय इत्यनेनोक्ते; अभावपदेन कादाचित्काभाव एव विवक्षित इत्यर्थः । अन्त्यभावस्य स्वाधिकरणोपान्त्यभावध्वंसाधिकरणक्षणवृत्तित्वात् तद्व्युदासः । प्रथमे तु तादृशध्वंसाधिकरणक्षणानुत्पत्तिकत्वस्य तत्रापि सत्त्वान्न तद्व्युदास इत्यन्त्य इत्युक्तम् । ननु कथमन्त्य इत्युक्तम्, आद्येपि कादाचित्काभावप्रवेशे निर्दोषत्वात्, अन्त्यभावे स्वाधिकरणसमयकादाचित्काभावरूपध्वंसाधिकरणद्वितीयक्षणोत्पत्तिकत्वस्यैव सत्त्वात्, उत्पत्तिलक्षणनिविष्ट(२)प्रागभावस्यापि कादाचित्कतया निवेशेऽन्त्यभावद्वितीयक्षणस्यापि(३) स्वाधिकरणसमयावृत्तिकादाचित्काभावप्रतियोगितया उत्पत्त्यात्मकत्वेन सत्यन्तासत्त्वादिति । न । सत्यन्तनिविष्टोत्पत्तेः स्वाधिकरणसमयध्वंसानाधारसमयसम्बन्धरूपाया एव निवेशस्योक्तत्वात्, ईदृशमुत्पत्तिलक्षणं च न द्वितीयादिक्षण इत्यदोषश्च । स्वयं प्रागभावानभ्युपगमात्तदघटितं साध्यमाह । स्वाधिकरणेत्यादि । एवं प्रागभावाघटितं क्षणलक्षणमप्याह । क्षणत्वं चेति । स्वावृत्तीति । स्वस्मिन्नवृत्तयो यावन्तः स्ववृत्तिध्वंसानां प्रतियोगिनो यस्य तत्त्वमित्यर्थः । विनाशसामग्रीविशिष्टानां भावानां तथात्वम्, तदवच्छेदेन स्ववृत्तिध्वंसप्रतियोगिनः कस्यापि स्वस्मिन्नवृत्तेः । लघु लक्षणमाह । स्ववृत्तीति ।

(१) भवत्वात्—इत्यादर्शपुस्तके पाठः ।
(२) लक्षणनिविष्ट—इत्यादर्शपुस्तके पाठः ।
(३) महाप्रलयपूर्वक्षणस्यापीत्यर्थः । तेनान्त्यभावस्य क्षणद्वयावस्थायित्वे द्वितीयादिपदपरिग्रहः ।

दीधितिः।

ग्यनाधारत्वं वा। क्षणोपि वा नोपादेयः। भिन्नकालयोरनाधाराधेयभावो वा, वृत्तिर्वा कालिकी वक्तव्या, तेनातीतगोचरक्षणिकज्ञाने नांशतो बाधादिः। शब्दादिः स्वोत्पत्त्यव्यवहितोत्तरकालीनध्वंसप्रतियोगी न वा, स्वोत्पत्तिव्याप्यो न वा, व्याप्तिश्च कालिकी,

दीधितिटिप्पणी।

इहापि पूर्ववदेव विनश्यदवस्थानां भावानां महाप्रलयावच्छेदेन च ध्वंसानां तथात्वं बोध्यम्। क्षणोपि वेति। न च तदनुपादाने क्षणिकत्वेपि भावानां स्वाधिकरणमहाकालवृत्तिध्वंसप्रतियोगिवृत्तित्वान्न यथोक्तरूपतेति बाध इति वाच्यम्। तैर्महाकालस्यापि क्षणिकता(१)स्वीकारेण तन्मते बाधाभावात्, स्वाधिकरणक्षणिकमहाकाले स्वाधिकरणक्षणध्वंसासत्त्वात् क्षणध्वंसाधिकरणमहाकाले च स्वाधिकरणत्वाभावात, उभयवादिसिद्धा साध्यप्रसिद्धिश्चरमध्वंस एवास्तीति न साध्याप्रसिद्धिः, चरमध्वंसाधिकरणसमयस्य ध्वंसरूपतया ध्वंसप्रतियोगित्वाभावात्। वस्तुतः क्षण एव(२) नोपादेयः, तथा च स्वाधिकरणध्वंसप्रतियोग्यवृत्तित्वं स्ववृत्तिध्वंसप्रतियोग्यवृत्तित्वं वा क्षणिकत्वमित्येव सम्यक्, अत्र च बाधादिदोषानवकाशात्। ननु भवतामतीतघटादिगोचरवर्तमानज्ञानस्य क्षणिकत्वानुमाने बाधः, स्वस्य ज्ञानस्याधिकरणवर्तमानक्षणवृत्तिध्वंसप्रतियोगिन्यतीतघटे विषयतासम्बन्धेन वृत्तेरत आह। भिन्नकालयोरिति। तथा चातीते विषयतया ज्ञानं न वर्तत एवेति भावः। सिद्धान्तविरोधादाह। वृत्तिर्वेति। इदमुपलक्षणम्। स्वाधिकरणत्वमपि कालिकं ग्राह्यम्। अंशत इति। अवच्छेदकावच्छेदेन साध्यसिद्धावंशतो बाधस्यापि दूषकत्वात्। केषाञ्चिन्मतमाह। शब्दादिरिति। स्वोत्पत्त्येति। अव्यवहितोत्तरत्वमिह स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वमात्रं, पूर्वक्षणसाधारण्येपि प्रकृते क्षत्यभावात्। (एक)देशिनामिति।

---

(१) क्षणिकत्वा—इत्यादर्शपुस्तके पाठः।

(२) वस्तुतो अक्षण एव—इत्यादर्शपुस्तके पाठः।

दीधितिः ।

विधिप्रसिद्धिरेकदेशिनामन्त्यशब्द इति केचित् । सत्त्वमुत्पत्तिव्याप्यं न वा इत्यादिकं तु न युक्तम्, तथा सति सत्त्वादेरेवोत्पत्तिव्याप्यत्वादिकस्य साधयितुमुचितत्वात् ॥

दीधितिटिप्पणी ।

अन्त्यस्य स्वमतेऽपि चरमध्वंसे प्रसिद्धिर्द्रष्टव्या । केचिदित्यनेन प्रथमे अन्त्यशब्दस्य क्षणिकत्वा(न)भ्युपगमः, द्वितीये तु स्वाधिकरणेत्याद्यपेक्षया गौरवमेवास्वरसः सूचितः । गुरुचरणास्तु उत्पत्तिक्षणवर्तिघटं पक्षीकृत्यायमेतदव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगी न वा । प्रसिद्धिरेतस्य तादृशोत्तरक्षणविनष्टापरपदार्थ इत्याहुः । सत्त्वमित्यादि । यत्र यदा सत्त्वमित्यादिकालिकदैशिकोभयसम्बन्धेन व्याप्तिर्बोध्या, तदैवाभिमतसिद्धेरिति, अन्यथा केवलदैशिकव्याप्तावपि न क्षणिकत्वसिद्धिः, एवं कालिकव्याप्तावपि न क्षणिकत्वसिद्धिरिति द्रष्टव्यम् । उचितत्वादिति । तथा च यत् सदित्यादिसाधनमर्थान्तरदुष्टमिति भावः । अत्र केचित्, स्वाधिकरणेत्यादिसिद्धावपि न क्षणभङ्गसिद्धिः, ध्वंसान्तरप्रतियोग्य(न्तर)वृत्तित्वेन स्थिरस्यापि तथात्वाविरोधात्, एवं चरमध्वंसवत् तत्कालोत्पन्नभावस्याविनाशित्वेऽपि तथा स्यादित्यर्थान्तरमतस्तत्, शब्दादिः स्वोत्पत्त्यव्यवहितेत्यादि । साध्यप्रसिद्धिश्च ध्वंसेषु, तेषां स्वभेदात्मकतादृशध्वंसान्तरप्रतियोगित्वात्, ध्वंसत्वनिरूपकप्रतियोगित्वस्याविवक्षणात् । घटादिनिष्ठप्रतियोगिताको(१)ऽतिरिक्त एव भेदः, अभावप्रतियोगिकाभावाधिकरणकाभावस्यानतिरेके सिद्धान्तसत्त्वादिति न सिद्धसाधनम् । यद्वा तादृशध्वंसनिष्ठप्रतियोग्यनुयोगितासम्बन्धाश्रयत्वं साध्यम्, तथा च स्वोत्पत्त्युत्तरकालवृत्तिध्वंसनिष्ठतादृशसम्बन्धाश्रयत्वे घटादौ (साध्यमाने) पक्षधर्मताबलात् तत्प्रतियोगित्वप्रसिद्ध्याभिमतलाभ इति वदन्ति ।

---

कल्पलता ।

विचारप्रवर्तकसंशयमूलं च क्षणभङ्गे विप्रतिपत्तयः । सत्त्वं क्षणमात्रवृत्त्यनेकवृत्तिधर्मव्यापकताव्या-

(१) घटादिनिष्ठो-इत्यादर्शपुस्तके पाठः ।

कल्पलता ।

प्यं(१) न वा, सत्त्वमुत्पत्तिव्याप्यं न वा, कार्यं स्वोपादानसमानकालीनं न वा, भावः स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगी न वा । एकदेशिमतेनान्त्यशब्दे विधिकोटिप्रसिद्धिः, निषेधकोटि(प्रसिद्धि)-स्त्वलीके सौगतानां मते ॥

तत्र न प्रथमः, प्रमाणाभावात् । यत् सत् तत् क्षणिकं, यथा घटः, संश्च विवादाध्यासितः

दीधितिः ।

अनुमितिकारणव्याप्तिपक्षधर्मताज्ञानजनकोदाहरणोपनयात्मकद्व्यवयवन्यायवादी(२) बौद्धः क्षणिकत्वे मानमाह । यत् सदिति । स्थूलद्रव्याभ्युपगमेन घटो दृष्टान्तः प्रसाध्याङ्कः(३), तथोत्पादविशिष्टो वा परमाणुसमूहो घटः । असन्नेव वा व्यतिरेके दृष्टान्त(४) इति कश्चित्(५) । विवादाध्यासित इत्येकदेशिमतेनान्त्यशब्दे अंशतः सिद्धसाधनवारणाय, स्वरूपक-

दीधितिटिप्पणी ।

द्व्यवयवन्यायवादित्वे हेतुः, अनुमितिकारणेति । तथा चैतावतैवानुमितिनिर्वाहे नावयवान्तरस्वीकार इति भावः । तन्मतेऽवयविनो घटस्य शशशृङ्गतुल्यत्वात् परमाणुपुञ्जस्यैव घटत्वादाह । स्थूलेति । तस्य क्षणिकत्वं नोभयसम्मतमत आह । प्रसाध्याङ्क इति । तथेति । परमाणुसमूहः, क्षणिक इत्यादिः, कुर्वद्रूपत्वविशिष्टपरमाणुसमूहो वा घटपदेनोक्त इत्यर्थः । मतान्तरमाह । असन्नेव वेति । अलीकघट एव वा व्यतिरेके दृष्टान्त इत्यर्थः । व्यतिरेकपक्षस्य पश्चाद्दक्ष्य-

(१) क्रमिकक्षणद्वयमात्रवृत्तिधर्मस्तदुभयत्वं तदुभयान्यतरत्वं वा, तद्व्यापकत्वं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वम्, तच्च कालिकसम्बन्धेन बोध्यम् । नैयायिकमते केनापि सम्बन्धेनावृत्तौ गगनादावेतस्य प्रसिद्धिः, परेषां चालीके । सत्त्वस्य च तद्व्याप्यत्वं साध्यते, तत्सामानाधिकरण्यमात्रस्य साध्यत्वे गगनादौ तत्सत्त्वेन सिद्धसाधनापत्तेः ।

(२) द्व्यवयववादी—कलि० मु० पु० पा० । (३) सन्दिग्धसाध्यक इत्यर्थः ।

(४) व्यतिरेकदृष्टान्त-कलि० मु० पु० पा० । (५) टिप्पणीकृन्मतोऽयं पाठः । केचित्-इति सर्वत्र ।

शब्दादिरिति चेन्न । प्रतिबन्धासिद्धेः ।

दीधितिः ।

थनमात्रं(१) वा, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्याया अनुत्पन्नत्वेन तस्यादोषत्वात् । शब्दादिरिति विभिन्नरूपेण पक्षत्वेपि न क्षतिः, समूहालम्बनरूपाया अनुमितेः सम्भवात्, केषाञ्चिद्विशिष्यानुपादानेपि न तत्र सन्दिग्धानैकान्तिकत्वं, गृहीतव्याप्तिकस्य हेतोस्तत्र परामर्शेनुमितेरेवोदयात्, पक्षत्वेनोपन्यासस्याकिञ्चित्करत्वात् । प्रामाणिकत्वार्थक्रियाकारित्वरूपयोर्वा(२) सत्त्वयोरेकतरस्य पक्षतावच्छेदकत्वं हेतुत्वं चान्यतरस्य । पक्षतावच्छेदकस्य हेतुत्वेपि न दोषः, व्याप्तिग्रहेण हेतौ साध्य-

दीधितिटिप्पणी ।

माणत्वेनेदानीं तदुपन्यासानौचित्यमेव कश्चिदित्यस्यास्वरसः । स्वरूपकथने हेतुः, पक्षतावच्छेदकेति । एवं विभिन्नपक्षतावच्छेदकं कृत्वाप्येकदानुमितिः शक्यत इत्याह । शब्दादिरिति । समूहालम्बनेति । तच्छब्दत्वेन तद्घटत्वेन चैकदा पक्षत्वेप्येकदैव तावद्विषयानुमितिरित्यर्थः । एवञ्चान्त्यशब्दस्य पक्षबहिर्भाव इति हृदयम्, अन्यथा पक्षतावच्छेदकभेदेनांशतः सिद्धसाधनस्य दोषत्वापत्तेः । नन्वन्त्यशब्दस्य विशिष्यानुपादाने हेतुस्तत्र सन्दिग्धानैकान्त इत्यत आह । केषाञ्चिदिति । गृहीतव्याप्तिकस्येति । अयं भावः, एकस्य पक्षतयोपन्यासेऽपरस्यानुपन्यासेन भवता तदानीं सन्दिग्धानेकान्तो दीयते, तत्र यदि पक्षत्वोपन्यासपूर्वं हेतौ व्याप्तिग्रहस्तदा पक्षत्वोपन्यासेपि समानम्, व्याप्त्यग्रहेनुमितरभावाच्छब्दप्रयोगरूपोपन्यासेन वा किं क्रियत इति भावः । एतेनाप्रामाण्यासञ्जनं क्रियते इत्यपास्तम्, उपन्यासानुपन्यासयोः समानत्वात् । एकदैव सर्वस्य पक्षत्वमप्याह । प्रामाणिकत्वेति । एकसञ्ज्ञाया हेतुपक्षतावच्छेदकोभयार्थकत्वेपि न दोष इत्याह । पक्षतेति । अन्यतरस्य चरमस्य, तत्रैव क्रमयौगपद्येत्यादितर्कस्य दर्शयिष्यमाणत्वात् । न दोषः न सिद्धसाधनम् ।

(१) स्वरूपकथनं—कालि० मु० पु० पा० । (२) रूपयोः—कालि० मु० पु० पा० ।

दीधितिः।

सामानाधिकरण्यावगाहनेपि हेतुमान् साध्यवानिति हेतुमत्त्वाव-च्छेदेन हेतुमद्विशेष्यकसाध्यवत्त्वबुद्धेरुद्देश्याया असिद्धेः(१)। प्र-तिबन्धः व्याप्तिः॥

दीधितिटिप्पणी।

हेतुमान् हेतुव्यापकसाध्यवानिति हेतुमद्विशेष्यकव्याप्तिग्रहस्य क-दाचित्सम्भवात् हेतुमत्त्वावच्छेदेनेत्युक्तम्। व्याप्तिरिति। तदसि-द्धिश्चरमध्वंसमात्रे यथोक्तसाध्यसत्त्वात् सत्त्वे हेतौ तत्सामानाधि-करण्याभावात् अन्त्यशब्दस्याप्यतथात्वेन घटादौ व्यभिचारादिति॥

---

कल्पलता।

पराभिमतं क्षणिकतायां प्रमाणमाह। यत् सदि-ति। व्याप्तिपक्षधर्मताज्ञानमात्रमनुमितिजनकं, तदु-पदर्शकौ चोदाहरणोपनयावेवेति द्व्यवयव एव प्र-योगो बौद्धाभिमतः। विवादास्पदत्वमिह पक्षताव-च्छेदकम्। शब्दादिरिति त्वधिकस्फुटार्थम्। यद्वा शब्दादित्वेनैव पक्षता, विवादास्पदत्वमन्त्यशब्दे सिद्धसाधनवारणाय, शब्दादिरिति चालीकस्य पक्ष-तानिरासाय, अन्यथा तत्र सत्त्वस्य हेतोरसिद्धौ भा-गासिद्धिः स्यात्। आदित्वं प्रामाणिकत्वं(२) पक्षताव-च्छेदकम्, सत्त्वं चार्थक्रिया(३)कारित्वं हेतुरिति तयो-र्भेदः, अन्यथा तयोरैक्ये व्याप्तिग्राहकमानादेव साध्य-सिद्धावनुमानवैयर्थ्यं स्यात्। यद्वा सत्त्वेनैव पक्षता हेतुता च, अनुमितिस्तु प्रकारभेदं लिङ्गोपधानादि(४)क-

---

(१) अप्रसिद्धेः—कालि० मु० पु० पा०।

(२) सद्विषयकधीविषयत्वमेव शब्दादित्वम्। तच्च सदसतोरेकज्ञानाविषयतया प्रामाणि-कत्वमेवेति भावः। (३) च्छेदकम्, स्वक्रिया—पुण० पु० पा०।

(४) प्रकारभेदम्, अनुमितिकारणज्ञानस्यानुमितितो भिन्नप्रकारकत्वं, अनुमितेश्च लिङ्गो-पधानम्, तदवच्छिन्नविशेष्यताकत्वमादायानुमितिरुपपादनीयेत्यर्थः।

कल्पलता ।

मादायेति न दोषः । घटः प्रसाध्याङ्को दृष्टान्तः । न च सत्त्वेन तस्यापि पक्षत्वे दृष्टान्तत्वानुपपत्तिः, साध्यवत्तया निश्चितत्वमात्रेणैव दृष्टान्तता, न तु पक्षभिन्नत्वमपि तन्त्रम् । न चांशतः सिद्धसाधनम्, विशेषतः सिद्धावपि सामान्यासिद्धेरुद्देश्यत्वात् । घटभिन्नसत्त्वेन वा पक्षता । प्रतिबन्धेति । प्रतिबन्धो व्याप्तिः, तस्याः क्षणिकत्वनिरूपिताया असिद्धेरित्यर्थः । क्षणिकत्वनिरूपिता व्याप्तिरन्यशब्दत्वादौ प्रसिद्धा सत्त्वे प्रतिषिध्यत इति नाप्रसिद्धिः ॥

सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेण भेदसिद्धौ

दीधितिः ।

भेदसिद्धाविति । अङ्कुरमकुर्वाणादङ्कुरकारिण इव तदकुर्वाणात् तत्कारिणः, एवं तत्तदकुर्वाणात् तत्तत्कारिणो भेदसिद्ध्या तेषु क्षणिकत्वसिद्धौ(१) क्षणिकत्वसत्त्वयोर्व्याप्तिसिद्धिरित्यर्थः । सि-

दीधितिटिप्पणी ।

नन्वङ्कुरकारितदकारिणोर्भेदसिद्धावपि न क्षणिकत्वसिद्धिः, भिन्नयोस्तयोरनेककालस्थायित्वेऽप्युपपत्तेः(२), अतः क्रमेण तदुपपादयति । अङ्कुरमकुर्वाणादिति । तथा च यथा विरुद्धधर्माध्यासेनाङ्कुरमकुर्वाणात् कुशूलस्थादङ्कुरकारिणः क्षेत्रस्थस्य भेदसिद्धिरेवं क्रियाविरोधादिरूपतत्कार्यमकुर्वाणात्तस्मादेव कुशूलस्थात्तत्कार्यकारिणः कुशूलस्थतादशायामपि भेदसिद्धिरित्यर्थः । एतावतापि न क्षणिकत्वमायाति, तत्पदेन एकमात्रकार्यावधारणात्, अतो बीजसमयोत्तरतत्तत्कार्यमादायाह । तत्तदिति । प्रतिक्षणमेव किञ्चित्क्रियादिकार्यजननात् तत्तद्भेदात् क्षणिकत्वसिद्धिरित्यर्थः । तेष्विति । तथा च तेषु

(१) क्षणिकत्वसिद्धौ तेषु—कलि० मु० पु० पा० । नायं टिप्पणीकृन्मतः ।

(२) अङ्कुरपूर्वतृतीयक्षणस्थबीजस्य पूर्वपूर्वकालवृत्तित्वे तदव्यवहितपूर्वक्षणस्थबीजस्य चोत्तरोत्तरकालवृत्तित्वेऽप्युपपत्तेरित्यर्थः ।

तत्सिद्धिरिति चेन्न। विरुद्धधर्मसंसर्गासिद्धेः।

दीधितिः।

द्व्याप्तिकाच्च सत्त्वात् सन्मात्रे क्षणिकत्वानुमानमिति। किञ्चित्सामर्थ्यादिकमविरुद्धं किञ्चिच्चासिद्धमित्याशयेनाह। विरुद्धेति॥

दीधितिटिप्पणी।

क्षणिकत्वसिद्ध्या तत्रैव व्याप्तिसिद्धौ शब्दादिकं पक्षीकृत्य व्याप्यसत्त्वेन व्यापकानुमानं क्रियत इत्यर्थः। सन्मात्र इति। तथा च विरुद्धधर्माध्यासादेकत्र प्राप्तावपि सन्मात्रे क्षणिकत्वप्राप्तिरनुमानफलमिति भावः। ननु कथं विरुद्धधर्मसंसर्गासिद्धिः, सामर्थ्यासामर्थ्यस्यैवोक्तत्वादित्यत्रोत्तरानुक्तौ न्यूनत्वमाशङ्क्याह। किञ्चिदिति। सामर्थ्यासामर्थ्यं यदि फलोपधानानुपधानरूपमुच्यते, तदा तदविरुद्धमेव, यदि च स्वरूपयोग्यत्वतदभावरूपमुच्यते, तदा तस्य प्रकृतेऽसत्त्वमेवेत्युभयथैव विरुद्धयोः संसर्गासिद्धिः, आद्ये विशेषणाभावात्, अन्त्ये च विशेष्याभावादिति भावः। प्रकृते आह। किञ्चिच्चेति॥

कल्पलता।

सामर्थ्येति। प्रतिक्षणं क्वचित् सामर्थ्यं क्वचिदसामर्थ्यमिति विरुद्धधर्माध्यासात् क्षणिकत्वसिद्धौ व्याप्तेः सिद्धिरित्यर्थः। यद्यपि विरुद्धधर्माध्यस्तत्वा(१)देव भेदसिद्धिरिति सत्त्वहेतोर्वैयर्थ्यं, तथापि ततो भेदमात्रमनेन तु क्षणिकत्वमिति प्रकारभेद इति भावः। विरुद्धेति। (स्वरूपयोग्यत्वस्वरूपायोग्यत्वयोः)ययोर्विरोधस्तयोः संसर्ग एव नास्ति, संसृष्टत्वेनानुभूयमान(कारित्वाकारित्वयोः साहित्यासाहित्य)योस्तु न विरोध इत्यर्थः।

प्रसङ्गविपर्ययाभ्यां(२) तत्सिद्धिरिति चेन्न।

दीधितिः।

प्रसङ्गेति। यद्यदा यत्कार्यमङ्कुरं वा प्रति समर्थं तत्तदा तत् करो-

(१) धर्माध्यासा—पुण० पु० पा०। (२) प्रसङ्गतद्विपर्ययाभ्यां—पुण० पु० पा०।

दीधितिः।

ति, यथा सहकारिमध्यमध्यासीनं बीजम्(१), अङ्कुरसमर्थं च तदानीं कुशूलस्थं बीज(२)मुपेयते परैरिति प्रसङ्गः। यद्यदा यत्कार्यमङ्कुरं वा न करोति तत्तदा न तत्समर्थम्, यथा यावत्सत्त्वमङ्कुराकारि शिलाशकलमङ्कुरासमर्थम्, न करोति च कुशूलस्थं बीजं(३) तदानीमङ्कुरमिति विपर्ययः। तेन कुशूलस्थतादशायां संयोगादेरुत्तरबीजस्य वा कालान्तरे चाङ्कुरस्य जननाभ्युपगमेऽपि न क्षतिः। यन्नाङ्कुरसमर्थं तन्नाङ्कुरं करोति, यथा शिलाशकलम्, अङ्कुरासमर्थं च सहकारि(४)समवहितं बीजमिष्यते परैरिति प्रसङ्गः, यदङ्कुरं करोति तदङ्कुरसमर्थं, यथा धरण्यादिभेदः, करोति च सहकारिसमवहितं बीजमङ्कुरमिति विपर्ययश्च सामर्थ्यसाधनाय नोपादेयः, अनभ्युपग-

दीधितिटिप्पणी।

कुशूलस्थबीजस्य पक्षतया तत्र नैयायिकानां हेतुसत्त्वं दर्शयति। अङ्कुरेति। अन्यथा विपर्यये सिद्धसाधनात् कुत्र व्यापकाभावेन व्याप्याभावानुमानं स्यात्। इति प्रसङ्गः एतत्स्वरूपप्रसङ्गः। यथेति। यावत्सत्त्वमङ्कुराकारि शिलाशकलं यथाङ्कुरासमर्थमिति सम्बन्धः। पक्षधर्मतां प्रदर्शयति। न करोति चेति। कार्यं यदित्यस्य यदेत्यस्य च क्रमेण प्रयोजनमाह। तेनेति। बीजेन कुशूलस्थतादशायां संयोगादेरुत्तरबीजस्य च कालान्तरे जननात् विपर्ययहेत्वसिद्धिः स्यादित्यर्थः। उत्तरबीजस्येति तन्मते यदेत्यस्य प्रयोजनम्। कालान्तर इति। तथा च कुशूलस्थबीजे कालान्तरेऽङ्कुरजनकत्वस्य नैयायिकैरभ्युपगमात् तन्मते हेत्वसिद्धिः स्यादिति भावः। कस्यचिन्मतं दूषयितुमुपन्यस्यति। यन्नेति। एतन्मते सहकारिसमवहिते सामर्थ्यसाधनमेव फलमभ्युपेयते परैरिति यदुक्तम्, तदेव दूष-

(१) मध्यासीनबीजम्—कालि० मु० पु० पा०।
(२) कुशूलस्थबीजम्—कालि० मु० पु० पा०।
(३) कुशूलस्थबीजम्—कालि० मु० पु० पा०।
(४) सहकार्य—कालि० मु० पु० पा०।

सामर्थ्यं हि करणत्वं(१) वा योग्यता वा(२)।

दीधितिः ।

मेन प्रसङ्गहेतोरसिद्धेः, सहकारियोग्यतायाः स्वरूपयोग्यताया वा(३) सामर्थ्यस्य अभ्युपगतत्वेन विपर्यये सिद्धसाधनादिति । सामर्थ्यं हि कारणत्वम् । तद्द्विविधम्, फलोपधानं योग्यता च । फलोपधानं च फलाव्यवहितप्राक्कालसम्बन्धः । तदेव करणं कारित्वं च । योग्यतापि द्वयी, सहकारियोग्यता स्वरूपयोग्यता च । चरमापि द्विविधा, जनकतावच्छेदकरूपं बीजत्वादि कुर्वद्रूपत्वं वा सहकारिविरहप्रयुक्तकार्याभाववत्त्वं च । तत् क्रमेण(४) विकल्प्य दूषयति । सामर्थ्यं हीति ॥

दीधितिटिप्पणी ।

यति । हेतोरसिद्धेरिति । सहकारीति । सहकारिसमवहिते पक्षे नैयायिकैः सामर्थ्याङ्गीकारात् । तदा को दोष इत्यत आह । सामर्थ्यस्येति । एतद्रूपस्य सामर्थ्यस्य नैयायिकैः सहकारिसमवहितेऽभ्युपगमेन विपर्यये सिद्धसाधनमेव दोषः स्यादित्यर्थः । सामर्थ्यं हि द्विविधं फलोपधानमित्यादिलिखनं न युज्यते, सामर्थ्यस्य एतद्द्वयात्मकस्य ग्रन्थेऽप्रसिद्धेरतोऽन्तरा कारणत्वरूपं तदर्थमाह । कारणत्वमिति । तदेव फलोपधानमत्र, एतद्द्वयपदवाच्यम् । तदर्थप्रदर्शनं च ग्रन्थे क्वचित् कारिपदेन लिख्यते क्वचिच्च करणपदेन लिख्यते तदर्थम् । सहकारियोग्यता सहकारिसत्त्वेऽवश्यं कार्योत्पादादिरूपा । चरमा स्वरूपयोग्यता, योग्यतापीत्यपेक्षयाऽपिः । तत्स्वरूपमाह । बीजत्वादीति । मतभेदादुभयलिखनम् । अपरामाह । सहकारीति । क्रमेण तद्द्विविधमिति क्रमेण । उत्तरत्रापि नापि द्वितीय इत्यत्रापि ॥

(१) करणं वा- -पुण० पु० पा । (२) तद्योग्यता वा--पुण० पु० पा० ।

(३) टिप्पणीकृन्मतोयं पाठः । सामर्थ्यस्य सहकारियोग्यतायाः स्वरूपयोग्यताया वा— इति तु सर्वत्र पाठः । (४) तत्र क्रमेण-कालि० मु० पु० पा० ।

कल्पलता ।

प्रसङ्गेति । प्रसङ्गाभ्यां विपर्ययाभ्यां चेत्यर्थः । तथाहि, कुशूलस्थं बीजं यद्यङ्कुरसमर्थं स्यादङ्कुरं कुर्यात्, न च करोति, तस्मान्न समर्थम्, एवं क्षेत्रपातितं यद्यसमर्थं स्यान्न कुर्यात्, करोति च, तस्मान्नासमर्थमिति प्रसङ्गाभ्यां विपर्ययाभ्यां च कुशूलस्थक्षेत्रपातितबीजयोर्भेदः । तथा च क्षणिकत्वमेव पर्यवस्येदिति भावः । समर्थस्य क्षेपायोगादिति तत्कालीनं सामर्थ्यं तत्कालीनफलोपधानलक्षणं कारित्वमापादयतीति यदा कदाचित् करणेन न सिद्धसाधनम् । करणमिति । फलोपधानमित्यर्थः ।

---

नाद्यः(१), साध्याविशिष्टत्वप्रसङ्गात् । व्यावृत्तिभेदादयमदोष इति चेन्न । तदनुपपत्तेः । व्यावर्त्यभेदेन

---

दीधितिः ।

नाद्यः पक्षः । एवमुत्तरत्रापि(२) । साध्येति । साध्यं व्यापकम् । तथा चापाद्यानुमेयाभ्यामापादकानुमापकयोरविशेषप्रसङ्गादित्यर्थः । असमर्थाकारिव्यावृत्त्योर्भिन्नयोरेव समर्थकारिपदाभ्यामभिधानान्न साध्याविशेष इत्याह । व्यावृत्तीति । तदनुपपत्तेः व्यावृत्तिभेदानुपपत्तेः । व्यावर्त्यभेदः एकेन व्यावर्त्यस्य विशेष्यस्य भेदोऽपरव्यावर्त्यात्, एकोप-

दीधितिटिप्पणी ।

साध्याविशिष्टेति मूले प्रसङ्गविपर्यययोर्द्वयोरेव दोषो दत्तः, अत्र च साध्यपदेन न प्रसङ्गसङ्ग्रहः स्यादत आह । साध्यमिति । दृष्टाशिष्टापारूपव्यावर्त्ययोर्भेदस्य परस्परविरोधाभावादर्थमाह । एकेनेति ।

---

(१) न तावदाद्यः—पुग० पु० पा० । (२) टिप्पणीकृन्मतीये पाठः । एवमग्रेऽपि—इति सर्वत्र ।

विरोधो हि तन्मूलम् ।

दीधितिः ।

गृहीतस्यापरेण परित्याग इति यावत् । स च द्विविधः, एकोपगृहीतस्य अन्येन नियमतः परित्यागः, कस्यचिदुपग्रहे सति कस्यचित्परित्यागश्च । असावप्येकतरमात्रेण परस्परेण च । तत्राद्यो विरुद्धयोरेव, मध्यमो व्याप्यव्यापकयोरेव, चरमो व्यभिचारिणोरेव । तादृशेन भेदेन विरोधः ऐक्यानुपपत्तिः । तन्मूलम् व्यावृत्तिभेदमूलम्, तच्चेह नास्तीति ॥

दीधितिटिप्पणी ।

तथा च एकेनावृक्षव्यावृत्तिस्वरूपेण व्यावर्त्यस्य वृक्षस्याम्रादेरशिंशपाया अव्यावृत्तेर्व्यावर्त्यायाः शिंशपाया भेदोऽस्तीति भावः। एवञ्च मूले व्यावर्त्यभेदनिबन्धनो विरोधस्तन्मूलमित्यर्थः। मूले भिन्नाभिन्नस्योक्तत्वाद्भेदमाह। स चेति। कस्यचिदिति। अत्रापि एकोपगृहीतस्येति सम्बन्धः। मूले न्यूनत्व(१)माशङ्क्य परमपि दर्शयति। असावपीति। असौ अन्त्यः। एकतरमात्रेणेति। परित्याग इत्यनुषज्यते। आद्यः नियमेनेत्यादिरूपः। असामानाधिकरण्यरूपो विरोधो वृक्षशिंशपादौ नास्तीत्यत आह। ऐक्येति। तथा च तादृशभेदनिबन्धना या व्यावर्त्ययोरैक्यानुपपत्तिस्तया विभिन्ना व्यावृत्तिरङ्गीक्रियत इति भावः ॥

कल्पलता ।

साध्याविशिष्टत्वादिति(२) । आपाद्याविशिष्टत्वात्(३)। साध्यसाधनयोरिवापाद्यापादकयोरपि भेदे सत्यापादनप्रवृत्तेः । (४)असमर्थव्यावृत्तिरापादिका,

(१) द्वितीयपक्षनिराकरणायाग्रे 'परापरभावानभ्युपगमात्-'इति मूलं 'परापरभावेति मिथोव्यभिचारस्याप्युपलक्षकम्-'इति व्याख्यास्यते, तच्चेदानीं मिथोव्यभिचारस्याप्रस्तुतत्वेऽसङ्गतं स्यादिति तादृशव्याख्यानानुपपत्ताविव प्रसक्तं मूलस्य न्यूनत्वमित्यर्थः। तच्च परापरभावप्रतिषेधमात्रेण न द्वितीयपक्षनिराकरणसम्भवः तादृशहेतोर्मिथोव्यभिचारिसाधारण्यादित्याकारकं बोध्यम् ।

(२) साध्याविशिष्टत्वादित्येव मूलपाठमनुसृत्य व्याख्यातम् ।

(३) त्वादित्यर्थः—पुण० पु० पा० । (४) अपोहवादार्थवादिपक्षे-इत्याधिकं पुण० पु० ।

कल्पलता ।

अकारि(त्व)व्यावृत्तिश्चापाद्येति नापाद्याविशेष इत्याह । व्यावृत्तीति । व्यावृत्त्योरपि भेदः प्रकृते नास्तीत्याह । नेति । कथं नास्तीत्यत आह । व्यावर्त्यभेदेनेति । तन्मूलम् व्यावृत्तिभेदमूलमित्यर्थः ॥

स च न तावन्मिथो व्यावर्त्यप्रतिक्षेपाद्गोत्वाश्वत्ववत्,तथासति(१) विरोधादन्यतरापाये(२) बाधासि-

दीधितिः ।

तदेव व्युत्पादयति । स चेति । सः विरोधः । मिथ इत्यादि । व्यावर्त्यस्य नियमेन प्रतिक्षेपात्, प्रतिक्षेपमात्रस्य व्यभिचारिसाधारण्यात् । एतावतैव सामञ्जस्ये मिथ इति व्यावृत्त्योरसामानाधिकरण्यस्य स्फुटतरप्रतिपत्तये । बाधासिद्धी धर्मिणि साध्यसाधनयोरभावौ । तथा चासमर्थाकारिव्यावृत्त्योरेकतरसत्त्वेऽन्यतराभावनियमेन सामानाधिकरण्यविरहे प्रसङ्गे विरोधो

दीधितिटिप्पणी ।

स चेति मूले मिथो व्यावर्त्यप्रतिक्षेपनिबन्धनः स विरोधो नास्तीत्यर्थः, नियमपदपूरणं किमर्थं कृतमत आह । प्रतिक्षेपमात्रस्येति । न च परस्परव्यभिचारिसाधारण्ये को दोष इति वाच्यम् । तथासति बाधासिद्ध्योरित्यादिदोषस्य व्यभिचारिण्यसङ्गतेः, न्यूनत्वं वा स्यात् । ननु नियमपददाने मिथ इत्यनर्थकम्, व्याप्यव्यापकभावापन्नस्य नियमेन प्रतिक्षेपाभावादेव वारणादित्यत आह । एतावतैवेति । स्फुटतरेति । मिथःपदेन शीघ्रमेवोभयत्र प्रतिक्षेपः प्रतीयत इति भावः । पक्षे साध्याभावसाधनाभावयोरेव बाधासिद्धिपदाभिधेयत्वात् प्रकृते तदसम्भवा(३)दाह । बाधासिद्धी इति । विरोध इति । एतावता व्यभिचारोपि

(१) तथा च सति—पुण० पु० पा० । (२) अन्यतरापायेन—पाठः ।
(३) बौद्धैर्मुख्यतया कुशूलस्थबीजेऽसामर्थ्यं साधनीयम्, तत्सिद्धावेव क्षेत्रस्थबीजमसा-

द्धोरन्यतरप्रसङ्गात् ।

---

दीधितिः ।

विपर्यये च व्यभिचार इति भावः ॥

दीधितिटिप्पणी ।

बोध्यः । ननु विपर्यये कथं बाधासिद्ध्योरन्यतरवत्त्वम्, विरोधाभावात्, न हि गोत्वाभावाश्वत्वाभावयोर्विरोधः, अत आह । विपर्यये चेति ॥

---

कल्पलता ।

विरोधमेव प्रतिक्षिपति । स चेति । अन्योन्यव्यावर्त्यं प्रतिक्षिपवत्यो(१)र्गोत्वाश्वत्वलक्षणव्यावृत्त्योर्भेदः सम्भवतु(२), गोत्वस्य व्यावर्त्यां विशिष्टां(३) गोव्यक्तिमश्वत्वं प्रतिक्षिपति, अश्वत्व(४)व्यावर्त्यां चाश्वव्यक्तिं गोत्वमिति (हि) तयोर्भेदः, प्रकृते तु नैवमित्यर्थः । ननु प्रकृतेपि तथैव(५) किं न स्यादत आह । तथासतीति । यदि कारित्वं सामर्थ्येन प्रतिक्षिप्येत तदा आपाद्यबाधः स्यात् , यदि कारित्वेन सामर्थ्यं प्रतिक्षिप्येत तदा आपादकासिद्धिरित्यर्थः । आपाद्यबाधो गुण एवेति चेन्न, आपाद्यापादकयोः क्वापि सामानाधिकरण्यं न स्यादिति मूलशैथिल्यं विपर्ययापर्यवसा-

---

मर्थ्यवद्भिन्नं, सामर्थ्यादित्यादिनानुमानेन कुशूलस्थक्षेत्रस्थबीजयोर्भेदसिद्ध्या तयोः क्षणिकत्वस्य सिद्धौ तद्दृष्टान्तेन यत् सत् तत्क्षणिकमितिव्याप्तिसिद्धिसम्भवस्य 'सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेण भेदसिद्धौ तत्सिद्धिः (पृ० २८ पं० ११ )—'इत्यादिना पूर्वमुक्तत्वात्, तच्च कुशूलस्थबीजं यदि समर्थं स्यात् तर्हि कारि स्यादिति प्रसङ्गेन कुशूलस्थबीजमसमर्थमकारित्वादिति विपर्ययानुमानेन च साधनीयम्, तत्र कारित्वसामर्थ्ये तत्तदन्यापोहलक्षणे गोत्वाश्वत्वे इव विरुद्धे चेत् बौद्धैः स्वीक्रियेते, तर्ह्येव पूर्वोक्तप्रसङ्गविपर्यययोर्बाधासिद्धी उद्भाव्येते, तच्चासङ्गतम्, आपत्तौ बाधस्यानुगुणतयाऽदोषत्वात् हेतोः पक्षेऽसत्त्वेपि तत्प्रसक्त्या आपत्तिसम्भवेन तदसिद्धेरप्यकिञ्चित्करत्वात् प्रतियोगिनोर्विरोधेपि विपर्ययस्यातथात्वादेकाभावेनापराभावसाधने बाधासिद्ध्योरन्यतरप्रसङ्गाच्चेति भावः । (१) प्रतिक्षिपतो—पुण० पु० पा० । (२) दः सिध्यतु—पुण० पु० पा० । (३) विशेष्या-पुण० पु० पा० ।(४) अश्वत्वस्य-पुण० पु० पा० । (५) तथा-पुण० पु० पा० ।

नं चेति भावः(१) ॥

नापि तदाक्षेपप्रतिक्षेपाभ्यां वृक्षत्वशिंशपात्ववत्, परापरभावानभ्युपगमात् । अभ्युपगमे वा समर्थस्याप्यकरणमसमर्थस्यापि वा करणं(२) प्रसज्येत ।

दीधितिः ।

नापीत्यादि । तयोः एकेन व्यावर्त्त्ययोः, अपरेणाक्षेपप्रतिक्षेपाभ्यां परिग्रहपरित्यागाभ्यां द्विविधाभ्यामुपदर्शिताभ्याम् । वृक्षत्वशिंशपात्ववत्, यवत्वाङ्कुरकुर्वद्रूपत्ववच्च(३)। परापरभावेति । मिथोऽव्यभिचारस्याप्युपलक्षकम् । परापरभावस्य मिथोऽव्यभिचारस्य चाभ्युपगमे दोषमाह, अभ्युपगमे वेत्यादिना । सामर्थ्यस्य परत्वे समर्थस्याप्यकरणं कारित्वस्य परत्वे त्वसमर्थस्यापि करणं मिथोऽव्यभिचारे तूभयं प्रसज्येत । तथा च समर्थस्याकर-

दीधितिटिप्पणी ।

पूर्वं चरमो व्यभिचारिणोरेवे(४)ति लिखितम्, तस्य च मूलेऽनुट्ङ्कने न्यूनता स्यादतो मूलत एव तदर्थमाह । द्विविधाभ्यामिति । किंविधाभ्यामित्यत आह । उपदर्शिताभ्यामिति । एकतरमात्रेण परस्परेण चेत्यादिनेत्यर्थः । व्यभिचारिणोः पूरयित्वा दर्शयति । यवत्वेति । अनयोः परस्परव्यभिचारात् । व्यभिचारिणोर्दोषानुक्तौ न्यूनता स्यादत आह । मिथ इति । अत्र पूरणं विषमव्यभिचारिसाधारणत्वं केवलाभ्युपगमशब्दादेव दर्शयति । परापरेति । मिथोव्यभिचारिणि च दोषं मूलोक्त्यैव दर्शयति । मिथ इति । उभयमिति । तथा च प्रत्येकमुभयत्रैव च तात्पर्यमिति भावः । तदा कोदोषोऽत आह । तथा चेति । असमर्थत्वकरणयोरसामानाधिकरण्यरूपविरोध एवासमर्थस्य करणत्वे प्रतिबन्धक इत्यर्थः । केचित्तु नञाप्रश्लेषेण अविरोधः अविरोधप्रसङ्ग इत्याहुः । ननु विरोधोऽस्माभि-

(१) भावात्—पुण० पु० पा० । (२) समर्थस्यापि करणं–पुण० पु० पा० । (३) यवत्वाङ्कुरत्वकुर्वद्रूपवच्च–कलि० मु० पु० पा० । (४) २२ पृष्ठे ६ पङ्क्तौ दीधितिकृतेति शेषः ।

दीधितिः ।

णे व्यभिचारः, असमर्थस्य तत्करणे(१) विरोधः, विरोधाय दत्ते जलाञ्जलौ क्व विरुद्धधर्माध्यास इति भावः ॥

दीधितिटिप्पणी ।

नं मन्यत इत्यत आह। विरोधायेति। मूलबाधकमेवागतमिति भावः(२) ॥

कल्पलता ।

ननु गोत्वाश्वत्ववत् परस्परात्यन्ताभावसामानाधिकरण्यं मास्तु(३), वृक्षत्वशिंशपात्ववद्व्याप्यव्यापकभाव एव व्यावृत्त्योः स्यात्, एतावतापि भेदः सिद्ध्यत्येवेत्यत आह। नापीति। आक्षेपः सङ्ग्रहः, प्रतिक्षेपो व्यवच्छेदः, तथा च वृक्षत्वस्य पनससङ्ग्राहकत्वं शिंशपात्वस्य च तद्व्यवच्छेदकत्वम्। न चैकस्यैतदुपपद्यते इति तयोर्भेदोऽस्तु, स च व्याप्यव्यापकभावाधीनः, प्रकृते च तथाभ्युपगमे सामर्थ्यस्य व्यापकत्वे कथमापादकत्वं, व्यभिचारात्, व्याप्यत्वे तु सामर्थ्यं विनापि कारित्वं स्यादित्यनिष्टमित्यर्थः(४) ॥

दीधितिटिप्पणी ।

नाप्युपाधिभेदादिति मूलेऽवश्यं स चेत्यनुषङ्गः, तथा च सः व्यावर्त्यभेदेन विरोधः उपाधिभेदादित्यनन्वितम्, व्यावर्त्यभेदेनेत्यादि दूरीकृत्य उपाधिभेदाद्विरोधस्तन्मूलमित्यर्थकतया स्वातन्त्र्येणोत्थापनं च न सन्दर्भशुद्धम्, स चेत्यस्यैव प्रकृतत्वात् प्रतिज्ञातस्य व्यावर्त्यभेदेन विरोधो हीत्यादेस्त्यागानौचित्यात्, तस्मादेत

(१) असमर्थस्य करणे तु—कलि० मु० पु० पा०।

(२) तथा च कारित्वाभावेन कुशूलस्थबीजेऽसामर्थ्यसिद्धावपि क्षेत्रस्थबीजमसामर्थ्यवतो भिन्नं, सामर्थ्यादिति प्रधानानुमितिर्नैव स्यात्, कारित्वरूपसामर्थ्यवत्यापि तादृशासामर्थ्यस्य त्वयाऽभ्युपगतत्वेन तादृशहेतोरनैकान्तिकत्वादिति प्रधानानुमितिनिर्वाहायासामर्थ्यकरणयोरसामानाधिकरण्यरूपो विरोधस्त्वयाप्यभ्युपेय इति भावः। (३) नास्ति—पुण० पु० पा०।

(४) न्यूनाधिकदेशवृत्तित्व एव व्याप्यव्यापकभाव इत्यभिप्रायः।—इत्यधिकं पुण० पु०।

नाप्युपाधिभेदात् कार्यत्वानित्यत्ववत्, तदभावात्। न च शब्दमात्रमुपाधिः, पर्यायशब्दोच्छेदप्रसङ्गात्।

दीधितिः।

ननु माभूदिह स्व(१)व्यावर्त्यभेदेन विरोधः, स्वावच्छेदकोपाधिव्यावर्त्यभेदेन तु स्यात्, प्रागभावत्वध्वंसत्वलक्षणावच्छेदकोपाधिव्यावर्त्यभेदादिव कार्यत्वानित्यत्वयोरित्याशङ्क्य निराकरोति। नापीति। कार्यत्वेति। परेषामभावस्यालीकत्वेन वास्तवस्य व्यावर्त्यस्य विरहेपि व्यावहारिकं तद्बोध्यम्(२)। प्रागभावावच्छिन्नं सत्त्वं कार्यत्वं ध्वंसावच्छिन्नं चानित्यत्वम्(३)। स्वमतेनोक्तमित्यपि केचित्। शब्दमात्रम्(४) बोधकशब्दवृ-

दीधितिटिप्पणी।

दभिप्रायेणैवैतदुत्थानम्। तथाहि, व्यावर्त्यभेदेन विरोधस्तन्मूलमिति सत्यम्, तत्र च स्वव्यावर्त्यैति न वाच्यम्, किन्तु स्वावच्छेदकत्यादिरूपेणैवेत्याह, नन्वित्यादिना। विरोध इत्यनन्तरं तन्मूलमिति शेषः। एवमग्रेपि। स्वेति। स्वम् व्यावृत्तिः, तथा च स्वावच्छेदकस्य य उपाधिस्तद्व्यावर्त्यभेदेनेत्यर्थः। कार्यत्वानित्यत्वस्थले च व्यावृत्त्योरवच्छेदकौ(पाधी) ध्वंसत्वप्रागभावत्वरूपौ, तयोर्व्यावर्त्यौ ध्वंसप्रागभावरूपौ, तयोर्भेदेन ध्वंसप्रतियोगिप्रागभावप्रतियोगिनिष्ठव्यावृत्त्योरैक्यानुपपत्तिरित्यर्थः। ननु ध्वंसप्रागभावयोरलीकत्वेन न तद्रूपव्यावर्त्यभेद इत्यत आह। परेषामिति। कार्यत्वानित्यत्वयोर्मिथोव्यभिचारितया पूर्वमेव गतत्वात् सत्त्वगर्भमाह। प्रागिति। केषाञ्चिन्मतमाह। स्वमतेनेति। स्वमतेन नैयायिकमतेन, अतो न अलीकत्वदोषः। सत्त्वागर्भं पुनरत्रापि मते बोध्यम्। न च शब्दमात्रमिति मूलम्, तथा चावच्छेदकशब्दमात्रोपाधिभेदेन विरोधः स्यादित्यर्थः, स च न सम्भवति, शब्दस्य तादृशभेदवद्वृत्तेर्व्यावृत्त्यवच्छेदकत्वात्, न त्ववच्छेदकस्योपाधित्वं, तद्वृत्तेरेव तत्त्वादत आह। शब्दमात्रमिति।

(१) माभूदिहास्य—पाठः। (२) तन्मन्तव्यम्—पाठः।
(३) सत्त्वं चानित्यत्वमिति—पाठः। (४) शब्दमात्र—कालि० मु० पु० पा०।

नापि विकल्पभेदः, स्वरूपकृतस्य तस्य व्यावृत्तिभेदकत्वेऽसमर्थव्यावृत्तेरपि भेदप्रसङ्गात्, विषयकृतस्य तु तस्य(१) भेदकत्वेऽन्योन्याश्रयप्रसङ्गात(२) । न च निर्निमित्त एवायं व्यावृत्तिभेदव्यवहारः, अतिप्रसङ्गात्(३) ।

दीधितिः ।

त्तिरानुपूर्वीभेदादिः । उपाधिः, विरोधसम्पादक इति शेषः । पर्यायेति । बोधकशब्दभेदेन बोध्यव्यावृत्तिभेदे पर्यायोच्छेदः । भिन्नयोरभिन्नप्रवृत्तिनिमित्तकत्वं पर्यायत्वम् । विकल्पभेद इति । उपाधिरित्यादिकमनुषज्यते । भेदप्रसङ्गादिति । तथा च व्याप्तिपक्षधर्मताज्ञानाभ्यां विषयीकृतयोर्भेदे क प्रसङ्गादिवार्तेति भावः ॥

दीधितिटिप्पणी ।

आनुपूर्व्यास्तु शब्दवृत्तित्वमस्त्येवेति न दोषः । एतावतापि स्वावच्छेदकोपाधीतिपर्यन्तं प्राप्तम्, तद्व्यावर्त्यभेदेनेति न प्राप्तम्, अतः पूरयति । उपाधिरिति । एवञ्च विरोधेत्यादेः स्वव्यावर्त्यभेदेनेत्यादिपर्यन्तं लब्धम् । कथं पर्यायोच्छेद इत्यत आह । भिन्नयोरिति । तच्चात्र नास्तीति भावः । एतन्मतेऽतद्व्यावृत्तेरेव प्रवृत्तिनिमित्तत्वात् तद्भेदे च नैकप्रवृत्तिनिमित्तकत्वरूपपर्यायत्वमित्यर्थः । तथा चेत्यादि । ज्ञानभेदस्य व्यावृत्तिभेदकत्वे हेतूकृताया असमर्थव्यावृत्तेरपीदृशत्वाद्विभिन्नाभ्यां व्याप्तिपक्षधर्मताज्ञानाभ्यां भेदात् कथमेकत्र हेतौ व्याप्तिपक्षधर्मताज्ञाने येन प्रसङ्गस्तद्धेतुत्वे साधकः स्यात् । न च परामर्शात्मकविशिष्टज्ञानविषयत्वान्न तथेति वाच्यम् । तन्मते परामर्शानङ्गीकारात् । न च तन्मते यत्प्रकारकं व्याप्तिज्ञानं तत्प्रकारकं पक्षधर्मताज्ञानं कारणमुच्यते, तच्चैकस्मिन्नेव धर्मिणि भिन्ने चेति न

(१) कृतस्य तस्य—पुण० पु० पा० । (२) शङ्करामिश्रसम्मतोयं पाठः । भेदकत्वे परस्पराश्रयत्वप्रसङ्गात्—पुण० पु० पा। (३) प्रसङ्गादिति- [illegible] पु० पा० ।

कोऽपि विशेष इति वाच्यम् । तथासति विकल्पभेदेन व्यावृत्तिभेद एकप्रकारकत्वमेवासिद्धम्, व्यावृत्तेरेव प्रकारतया विभिन्नज्ञानयोरेकप्रकाराभावादिति भावः ॥

कल्पलता ।

ननु गोत्वाश्वत्ववत् परस्परपरिहारो वृक्षत्वशिंशपात्ववत् सामान्यविशेषभावो वा मास्तु, उक्तदोषात्, किं तु कार्यत्वानित्यत्ववत् समव्याप्तिरस्तु, तथा च स्यादेवापाद्यापादकभावो भेदाधीन इत्यत आह । नापीति । उक्तोपाधेरन्यस्मादुपाधिभेदादित्यर्थः । प्रागभावावच्छिन्नसत्तायोगित्वं(१) कार्यत्वं ध्वंसावच्छिन्नसत्तायोगित्व(१)मनित्यत्वमित्यु(२)पाधेर्भिन्नत्वमस्तु, प्रकृते तु न तथोपाधिरस्तीत्याह । तदभावादिति । ननु समर्थ(३)पदवाच्यत्वादन्यदेव कारि(४)पदवाच्यत्वमिति कथं न भेद इत्यत आह । न चेति । शब्दभेदादेव यद्यर्थभेदस्तदैकस्मिन्नर्थे शब्दानां वृत्तिः(५) पर्यायत्वं तन्न स्यादित्यर्थः(६) ॥

नापि द्वितीयः । सा हि सहकारिसाकल्यं वा प्रातिस्विकी वा ।

दीधितिः ।

प्रातिस्विकी प्रतिकारणजातीयानियता ॥

दीधितिटिप्पणी ।

प्रतिकारणेति । स्वं स्वं प्रतीति व्युत्पत्त्या बीजत्वादिरुच्यते ॥

(१) सत्ताप्रतियोगित्वं—पुण० पु० पा० । (२) मिति तदु—पुण० पु० पा० ।
(३) नन्वसमर्थ—पुण० पु० पा० । (४) देवाकारि—पुण० पु० पा० ।
(५) प्रवृत्तिः—पुण० पु० पा० । (६) यद्यपि शब्दभेदस्योपाधित्वेऽप्यभिन्नप्रवृत्तिनिमित्तकतया पर्यायत्वं स्यादेव, तथापि शब्दभेदादर्थभेदः कल्प्यत इति मते पर्यायशब्दोच्छेदो दूषणमित्यर्थः—इत्यधिकं पुण० पु० ।

कल्पलता।

*कारित्वप्रकारकज्ञानात् समर्थत्वप्रकारकं ज्ञानमन्यदिति तद्भेदादपि न भेद इत्यत आह(१)। नापीति। स्वरूपकृतस्येति। ज्ञानव्यक्तिभेदमात्रकृतस्येत्यर्थः। अन्योन्याश्रयेति। विषयभेदाधीनो विकल्पभेदो विकल्पभेदाधीनश्च विषयभेद इत्यन्योन्याश्रय इत्यर्थः(२)॥*

योग्यतापक्षं दूषयति। नापीति। सा हीति। प्रति स्वं नियता प्रातिस्विकी, यथा बीजेषु बीजत्वं तन्तुषु तन्तुत्वम्, तत्तत्कारणतावच्छेदिका जातय इत्यर्थः।

---

न तावदाद्यः पक्षः(३), सिद्धसाधनात्, परानभ्युपग-

---

दीधितिः।

सिद्धसाधनादिति। सिद्धसाधनहेत्वसिद्धी विपर्ययप्रसङ्गयोः। परः स्थिरवादी। विपर्यये सिद्धसाधनं विवृणोति,

दीधितिटिप्पणी।

(४)कुशूलस्थबीजे नैयायिकैः सहकारिसाकल्यानभ्युपगमाद्धेत्वसिद्धिरिति प्रसङ्गे लगतीत्यभिप्रायेण व्युत्क्रमाभिधानमाह। सिद्धसा-

---

* प्रमादवशात्पूर्वमनिवेशितोऽयमंशः ४० पृष्ठीय १६ पङ्क्तौ संयोज्य पठनीयः।

(१) इत्याह--पुण० पु० पा०।

(२) अतिप्रसङ्गादिति। प्रयोजकविरहेपि यदि सामर्थ्यकारित्वयोर्भेदस्तदा त्वभिन्नेपि स्यादित्यर्थः।—इत्यधिकं पुण० पु०। (३) न तावदाद्यः,—पुण० पु० पा०।

(४) श्रीरामतर्कालङ्कारभट्टाचार्यविरचितस्यात्मतत्त्वविवेकदीधितिव्याख्यानस्यैकमेवादर्शपुस्तकमत्यशुद्धमुपलब्धमेतद्ग्रन्थमुद्रणारम्भसमयेऽस्माभिर्वाराणसीस्थराजकीयसरस्वतीभवनादिति तदवलम्ब्यैवास्माभिरतिश्रमेण मुद्रणकार्यमेतावत्पर्यन्तं कृतम्, परमिदानीं भगवदिच्छयाऽन्यदप्येकं पुस्तकं खण्डितमपि प्रायः शुद्धमधिगतमस्त्यत्रत्यानामेव स्वर्गीयपण्डितप्रवरश्रीनागेश्वरपन्तधर्माधिकारिणां तनुजन्मनः पण्डितश्रीलक्ष्मीधरपन्तधर्माधिकारिण इति महान् हर्षविषयः। एतत्पुस्तकलाभेन मुद्रणकार्यमतिसुलभमेव सञ्जातमिति सुधियो विदाङ्कुर्वन्तु। इतःपरं धर्माधिकारिपुस्तकं २ पुस्तकमिति व्यवहरिष्यत इति ध्येयम्।

मेन हेत्वासिद्धेश्च। यत् सहकारिसमवधानवत् तद्धि(१) करोत्येवेति को नाम नाभ्युपैति(२) यमुद्दिश्य साध्यते। न चाकरणकाले सहकारिसमवधानवत्त्वमस्माभि(३)-रभ्युपेयते यतः प्रसङ्गः प्रवर्त्तेत (४)।

दीधितिः।

यदित्यादिना। यदि कश्चिदकुर्वाणमपि कारणजातीयं सहकारिसमवहितमभ्युपेयात् तदा तं प्रति तस्याकारित्वेन सहकारिसमवधानाभावः साधयितुमुचितः, न त्वेतदस्ति, सहकारिसमवहिते करणनियमाभ्युपगमेनार्थतोऽकारिणः सहकारिसमवधानाभावनियमस्याप्यभ्युपगतत्वात्, तथा चाकुर्वाणे सहकारिसमवधानाभावसाधने सिद्धसाधनमिति भावः। यत्तु सहकारिसमवहिते(५) सहकारिसमवधानेन करणप्रसञ्जने सिद्धसाधनमिष्टापत्तिरिति, तन्न, तादृशप्रसङ्गस्याप्रस्तुतत्वेन तत्र दूषणोपन्यासायोगात्॥

दीधितिटिप्पणी।

धनेति। यथाश्रुतमूले विपर्ययीयसाध्यादर्शनात्तत्र सिद्धसाधनप्रदर्शनमेतस्य न शब्दतो लभ्यते, अतोऽर्थतो व्यतिरेकमर्थेन तथा दर्शयति। यदि कश्चिदित्यादि। इदमेवोपसंहरति। तथा चेति। प्रसङ्ग एव सिद्धसाधनव्याख्यातॄणां मते आह। यत्त्विति। एतन्मते सहकारिसमवहितक्षेत्रादिस्थबीजमेव पक्षः, अत एव सप्तम्यन्तेन पक्षकथनम्। तर्के सिद्धसाधनाभावादिष्टापत्तिपर(ता)माह। सिद्धसाधनमिति। तादृशप्रसङ्गस्य सहकारिसमवहितपक्षकप्रसङ्गस्य। अप्रस्तुतत्वेनेति। क्षेत्रस्थप्रतियोगिकभेदसाधनाय कुशूलस्थासामर्थ्यसाधनस्यैव तस्योद्देश्यतया तत्पक्षकस्याप्रस्तावोचितत्वमिति भावः॥

(१) तत्—पुण० पु० पा०। (२) नाभ्युपगच्छति—पाठः।
(३) समवधानवत्तास्माभि—पुण० पु० पा०। (४) प्रवर्त्तेत—पुण० पु० नास्ति।
(५) पक्षे इति शेषः।

कल्पलता ।

**सिद्धसाधनादिति। (सङ्गृह्य) विवृणोति। यदिति। परानभ्युपगमेनेति। विवृणोति। न चेति। अकुर्वतः कुशूलस्थस्य बीजस्य परेण नैयायिकेन सहकारिसमवधानानभ्युपगमात् तर्कस्य पराभ्युपगममादायैव प्रवृत्तेरित्यर्थः॥**

---

प्रातिस्विकी तु योग्यता अन्वयव्यतिरेकविषयीभूतं(१) बीजत्वं वा स्यात् तदवान्तरजातिभेदो वा सहकारिवैकल्य(२)प्रयुक्तकार्याभाववत्त्वं वा।

---

दीधितिः ।

अन्वयव्यतिरेकेति। अन्वयव्यतिरेकग्रहेत्यर्थः। बीजत्वमिति बीजमधिकृत्य। एतच्च बीजस्यैवा(३)ङ्कुरजनकत्वमिति मतेन। बीजे विनष्टे तदवयवेभ्य एवाङ्कुरोत्पाद इति मते(४) तु कपालादिव्यावृत्तकलमयवाद्यवयवानुगतजातिविशेषपरं बीजत्वपदमिति वदन्ति। तदवान्तरेति। बीजत्वव्याप्यं कुर्वद्रूपत्वं वेत्यर्थः। कार्याभावः कार्यकारित्वाभावः। चरम-

दीधितिटिप्पणी ।

ननु दण्डत्वादिकं विहाय कथं बीजत्वमेवोक्तमत आह। बीजत्वमितीति। तथा च प्रकृतस्थले बीजं प्रक्रान्तमिति तदुक्तम्। एतच्च बीजत्वमिति योग्यतावच्छेदकमिति कथनम्। कपालेत्यादि। कपालादिपदेन बीजेतरस्यावयवोपलक्षणम्, तथा च कपालादौ न वर्तते कलमयवादिरूपबीजानामवयवे वर्तते या जातिः सैवात्र बीजत्वपदेनोच्यत इत्यर्थः। तादृशजातिसिद्धिश्च बीजजनकतावच्छेदकतया। ननु निमित्तकारणे सहजत एव कार्याभावोऽस्ति,कथं सहकारिविरह-

---

(१) विषयभूतं पुण० पु० पा०। (२) सहकारिव्यतिरेक—पुण० पु० पा०।
(३) बीजस्या—पाठः। (४) इति मतेन –कलि० मु० पु० पा०।

दीधितिः ।

कारणस्याप्युत्तरकाले कार्यकारित्वाभावः सहकारिविरहप्रयुक्त इति भावः । यथाश्रुतं त्वस्माकं निमित्तासमवायिनोः परेषामुपादानस्याप्यसिद्धमिति द्रष्टव्यम् ॥

दीधितिटिप्पणी ।

प्रयुक्तः स्यादत आह । कार्यकारित्वाभाव इति । ननु चरमकारणे कार्यकारित्वाभावरूपविशेषस्यासत्त्वान्न सहकारिविरहेत्यादिरूपवत्ता स्यादत आह । चरमेति । तस्यापि कार्यद्वितीयक्षणे कार्यकारित्वाभावः सहकारिविरहप्रयुक्त एवेति भावः । कारित्वपर्यन्तव्याख्याप्रयोजनमाह । यथाश्रुतं त्विति । निमित्तासमवायिनोरित्यसिद्धमित्यनेनान्वयि । परेषामिति । न च तन्मतेऽयथाश्रुतमप्यसिद्धम्, न हि तेनोपादाने सहकारिविरहप्रयुक्तकार्यकारित्वाभावोऽप्यङ्गीक्रियते, क्षणिकत्वात्, तथा च यथाश्रुतेपि तत्रासिद्धौ को दोष इति वाच्यम् । भावानवगमात् । तथाहि, अयं यथाश्रुतहेतुः कस्य मते कृतः, यद्यस्माकं मते, तदा निमित्तासमवायिनोरसिद्धिः, अथ परमते, तदा तेषामुपादानेऽप्यसिद्धमिति भावः, तथा चोभयथापि यथाश्रुतं न समीचीनम्, व्याख्यातं तु नैयायिकमत एव समीचीनमिति भावः ॥

---

कल्पलता ।

बीजे सत्यङ्कुरं तद्विना नेत्यन्वयव्यतिरेकौ । तदवान्तरजातिभेदः कुर्वद्रूप(व)त्वं पराभ्युपगतमित्यर्थः । उभयसाधारणीं योग्यतामाह । सहकारीति । सहकारिवैकल्यप्रयुक्तो व्याप्यो यः कार्याभावस्तद्वत्त्वमित्यर्थः । शिलाशकले कार्याभावो न सहकारिवैकल्यप्रयुक्तः, किं तु शिला(१)त्वप्रयुक्त एव । बीजे सहकारिसाकल्ये कार्याभावो न भवत्येव ॥

---

(१) शिलाशकल—पुण० पु० पा० ।

न तावदाद्यः, अकुर्वतोपि बीजजातीयस्य प्रत्यक्षसिद्धत्वात्, तवापि तत्राविप्रतिपत्तेः।

दीधितिः।

अकुर्वतोपीत्यादि। तथा च बीजत्वस्य करणव्यभिचारोऽकरणस्य बीजत्वाभावव्यभिचारश्चोभयसिद्ध इति न प्रसङ्गविपर्ययप्रवृत्तिरिति भावः।

दीधितिटिप्पणी।

तथा चेति। क्रमेण तयोर्व्यभिचारप्रदर्शनम्॥

कल्पलता।

अकुर्वतोपीति। यदि कुशूलस्थं बीजं स्यात् तदा कुर्यादिति प्रसङ्गः, न च करोति तस्मान्न बीजमिति विपर्ययश्च व्यभिचारबाधाभ्यामनुपपन्न इत्यर्थः॥

न द्वितीयः(१), तस्य कुर्वतोपि(२) मयानभ्युपगमेन दृष्टान्तस्य साधनविकलत्वात्, को हि

दीधितिः।

तस्य कुर्वद्रूपत्वस्य, दृष्टान्तस्य अङ्कुरकारिणो बीजस्य, साधनम् प्रसङ्गसाधनं कुर्वद्रूपत्वम्, तद्विकलत्वम् तदप्रसिद्ध्या तद्वत्त्वग्रहाभावः,तथा च प्रसङ्गे हेतोरप्रसिद्धिः,अत एव तदभावरूपस्य

दीधितिटिप्पणी।

विपर्ययसाधने वैकल्याभावादाह। साधनमिति। तद्वत्त्वग्रहाभाव इति। यद्यपि तद्वत्त्वग्रहस्याप्यप्रसिद्ध्या तदभावोपि वक्तुं न शक्यत एव, तथापि ग्रहे प्रसिद्ध्यावत्पदार्थान्यतराविषयताकत्वे तात्पर्यम्। नन्वेवं मूलेन प्रसङ्ग एव दोषदाने विपर्यये न कोपि दोषः स्यादत आह। अत एवेति। यत एव प्रसङ्गहेतोरप्रसिद्धिः, अत एवैतद्ध-

(१) नापि द्वितीयः पाठः। (२) कुर्वत्यपि—पुण० पु० पा०। अयमेव समीचीनः।

नाम सुस्थात्मा प्रमाणशून्यमभ्युपगच्छेत । स हि न तावत्(१) प्रत्यक्षेणानुभूयते, तथानवसायात् । नाप्यनुमानेन, लिङ्गाभावात् । यदि न कश्चिद्विशेषः,

दीधितिः ।

विपर्यये साध्यस्याप्रसिद्धिः, अतो व्याप्यत्वासिद्ध्या नैकस्यापि प्रवृत्तिरिति भावः । नानभ्युपगममात्रेण प्रामाणिकोऽर्थो निवर्तत इत्यत आह(२)। को हीति। प्रत्यक्षम् निर्विकल्पकम्, अनुभवनम् विषयीकरणम् । प्रत्यक्षम् इन्द्रियम्, अनुभवः निर्विकल्पकमिति वा। अवसायः सविकल्पकम्, तदभावे निर्विकल्पकाभावस्य तत्राप्यभिमतत्वादिति भावः । वीजमङ्कुरं करोतीति बुद्धेश्च फलोपहितं स्वरूपं फलाव्यवहितप्राक्कालवृत्ति स्वरूपं वा विषयो न तु कुर्वद्रूपत्वमिति । लिङ्गाभावादिति । साध्याप्रसिद्ध्या व्याप्य-

दीधितिटिप्पणी ।

तोरभावोऽपि विपर्ययसाध्येऽप्रसिद्ध इत्यर्थः । अत इति । प्रसङ्ग हेत्वप्रसिद्धिरूपा व्याप्यत्वासिद्धिः, विपर्यये च साध्याप्रसिद्धिरूपेति भावः । (३)को हीति। तथा च प्रामाणिकत्वमेव खण्डनमिति भावः। तथानवसायादित्यनेन निर्विकल्पकीयप्रमाणाभावो दर्शितः, स चात्र निर्विकल्पकप्रदर्शनेनैव लगतीत्यत आह। प्रत्यक्षमिति । निर्विकल्पकस्यानुभवाभावादाह । अनुभवनमिति । अपरप्रकारमाह । प्रत्यक्षमिन्द्रियमिति । वाकार एकतत्सूचकः। अभिमतत्वादिति । निर्विकल्पके सविकल्पकस्यैव प्रमाणत्वादिति भावः । *वीजमङ्कुरं करोतीत्यादिसविकल्पकमेव तत्र मानमित्यत्राह । वीजमित्यादि । फलाव्यवहितप्राक्काले तदुपधानाभावा(४)दाह। फलाव्यवहितेति ।* साध्याप्रसिद्ध्येति । तथा च लिङ्गपदेनात्र गृहीतव्याप्तिक एवोच्यत इति

(१) तावत्—पुण० पु० नास्ति । (२) इत्याह-कलि० मु० पु० पा० ।

(३) रूपभावः । रूपकेति । ईश्वरे । कोहीति इत्यादर्शपुस्तके पाठः ।

* एतच्चिन्हान्तर्गतो ग्रन्थः २ पुस्तक एव वर्तते । गुणानन्दीयटीकायामप्ययमंशो नोपलभ्यते। (४)फलोपहितमित्यस्य फलोपधानविशिष्टमित्यर्थः, अङ्कुरोत्पत्तिप्रयोजकताविशिष्टमिति

कथं तर्हि(१) करणाकरणे इति चेत्, क एवमाह नेति । परं(२) किं जातिभेदरूपः सहकारिलाभालाभरूपो वेति नियामकं प्रमाणमनुसरन्तो न पश्यामः । तथापि योऽयं सहकारिमध्यमध्यासीनोऽक्षेप-

दीधितिः ।

ग्रहेण लिङ्गत्वायोगादिति । तज्जातीयत्वाविशेषेऽपि करणाकरणे न विना प्रयोजकविशेषमुपपद्येते,(३)अतः करणोपपादकतया विशेषः सिध्यन् परिशेषाज्जातिरूप एव सिद्ध्यति, तदभावादेव चाकरणमित्याशङ्कते । यदीति । जातिभेदः कुर्वद्रूपत्वम् ,तद्रूपः तत्स्वरूपः तन्निरूप्यस्तदभावश्च । जातिभेदस्याभिधानात् तदभावोऽप्यर्थतो लब्ध इत्यन्ये । न पश्याम इति । साध्यसन्देहेऽपि न परिशेषावकाश इत्यभिप्रायेण । तथापीति । स्वोत्पत्त्यव्यवहितोत्तरका-

दीधितिटिप्पणी ।

भावः । विनेति प्रयोजकविशेषान्वयि । जातिभेदरूप इत्यनेन करणाकरणानियामक उच्यते, तत्र केवला जातिः करणनियामिका, न तु तदभावनियामिका, तथा च तदनभिधाने न्यूनता स्यात्, अत एवाग्रे सहकारिलाभालाभेत्युभयमुक्तम्, अतोऽत्र जातिभेद( रूप )शब्दस्यैव जातितदभाववाचकत्वमाह । जातिभेद इत्यादि । तत्स्वरूप इति । तत्स्वरूपोऽप्युक्तः तन्निरूप्यः तदभावः, सोऽप्युक्त इत्यर्थः । नन्वेवं न पश्याम इत्यादिना स्वोक्तस्याप्यनिर्णयदर्शनान्न स्वमतसिद्धिरत आह । सन्देहेपीति । तथा चेदृशसन्देहेपि भवदुक्तपरिशेषो नावतरतीत्यभिप्रायेण सन्देहो दर्शितः, वस्तुतः पुनः सन्देह एव नास्तीति भावः । स्वोत्पत्तीत्यादि । न चैवमेतावतापि न क्षणिकत्वसिद्धिः स्यात्, स्वद्वितीयक्षण

यावत्, उत्पत्तिप्रयोजकतायाः करोत्यर्थत्वात् वैशिष्ट्यस्याख्यातार्थत्वात्, तत्रोत्पत्तिप्रयोजकत्वं कारणस्वरूपं न सम्भवति, तथात्वेऽन्यदापि तत्प्रसङ्गात्, किं तूत्पत्तिकाल एव, तस्याभावादित्यर्थः ।

(१) तर्हि-पुण० पु० नास्ति । (२) परन्तु-पुण० पु० पा० । (३) उपपद्येत-कालि० मु० पु० पा० ।

करणस्वभावो भावः स यदि प्रागप्यासीत् तदा प्रसह्य कार्यं(१) कुर्वाणो गीर्वाणशापशतेनाप्यपहस्तयितुं न(२) शक्यत इति चेत्, युक्तमेतत् यद्यक्षेपकरणस्वभावत्वं(३) भावस्य प्रमाणगोचरः स्यात्, तदेव (४) कुतः

दीधितिः ।

ल(५)वृत्तिकार्यमात्रकारित्वं स्वकार्यव्यवहितप्राक्कालावृत्तित्वं स्वकार्यप्रागभावसमानकालीनध्वंसप्रतियोगिसमयावृत्तित्वं स्वोत्पत्तिक्षण(६)एव कारित्वं वाऽक्षेपकारित्वम् । तथा च पूर्वं कार्यानुत्पादात् तदानीन्तनानामक्षेपकरणस्वभावस्य विरहेण वीजत्वस्य

दीधितिटिप्पणी ।

एव कार्यं जनयित्वा कार्याजनकस्य शतशः प्रचुरकालावस्थायित्वेऽप्येतद्रूपसत्त्वादिति वाच्यम् । एतावतापि प्रकृतनिर्वाहात् । यद्वा तथापि तेनावश्यं स्वध्वंसो जननीयः, तथा च द्विक्षणावस्थायित्वे नैतद्रूपनिर्वाह इत्यदोषः । उत्पत्तिघटितस्य गुरुतया एतदपेक्षया लाघवात्(७) प्रकारान्तरमाह । स्वकार्यव्यवहितेति । अत्र स्वकार्यव्यवहितप्राक्कालत्वं स्वकार्यप्रागभावाधिकरणकालप्रागभावाधिकरणकालत्वरूपं न सम्भवति, कार्यव्यवहितप्राक्कालवृत्तिस्थूलकालस्यापि तथात्वेनासम्भवापत्तेः, क्षणत्वरूपेण प्रवेशे गौरवात्, अतः प्रकारान्तरमाह । स्वकार्यप्रागभावेति । आचार्यानुरोधादाह । स्वोत्पत्तीति । उत्पत्तेरनन्तरमेव करणमित्यनेनाचार्यै(८)रेतल्लक्षणस्य कर्तव्यत्वात् । कार्यानुत्पादात् स्वकीययावत्कार्यानुदयात्, अन्यथा अङ्कुररूपयत्किञ्चित्कार्यस्य पूर्वमुत्पादेपि तदानीं ध्वंसरूपकार्यानुत्पादादक्षेपकरणत्वाभावात् पूर्वमित्यादिहेतुकथनमसङ्गतं स्यात्।?तदानीन्तनानाम् कुशूलस्थादीनाम् । पूर्वोक्तप्रसङ्गविपर्ययोरक्षेपकारित्वसा·

(१) कार्यं—पुण० पु० नास्ति । (२) शतेनापि नापहस्तयितुं—पुण० पु० पा० ।
(३) करणधर्मत्वं—पाठः । (४) तदेव तु—पुण० पु० पा० ।
(५) त्तसमय-कालि० मु० पु० पा० । (६) त्तिसमय--कालि० मु० पु० पा० ।
(७) एतदपेक्षया लघु-पा० २ पु० । (८) करणमित्याचार्यै-पा० २ पु० । अयमेव युक्तः ।

सिद्धमिति नाधिगच्छामः(१)। प्रसङ्गतद्विपर्ययाभ्यामिति चेन्न, परस्पराश्रयप्रसङ्गात् । एवंस्वभावत्वसिद्धौ(२) *(हि) तयोः प्रवृत्तिः, तत्प्रवृत्तौ चैवंस्वभावत्वसिद्धिरिति(३)।

दीधितिः।

तन्नियामकत्वानुपपत्त्या तन्नियामकं कुर्वद्रूपत्वं नाम जात्यन्तरमास्थेयमिति भावः। तादृशस्वभावत्वसिद्धौ सत्यामेवमेतत्(४), तदेव त्वसिद्धमित्याह, युक्तमित्यादिना। प्रसङ्गेति। यन्न यत्कार्याक्षेपकारि तन्न तत्कारि यथाऽलीकम्, शिलाशकलं वा, नाङ्कुराक्षेपकारि च सामग्रीसमवहितं बीजमुपेयते परैरिति प्रसङ्गः, यद्यदङ्कुरं करोति तत् तदक्षेपकारि यथा धरण्यादिभेदः, करोति चाङ्कुरमिदं बीजमिति विपर्ययः। परस्परेति। चक्रकेपि परस्पराश्रयत्वमक्षतम्॥

दीधितिटिप्पणी।

धकत्वाभावात् तदन्यौ तौ दर्शयति। यन्नेत्यादि। यत् प्रसङ्गे हेतुः क्रियते तद्विपर्यय एव विपर्यये साध्यं क्रियते अतः प्रसङ्गेऽक्षेपकारित्वं न साध्यं कृतम्। स्थिरवादिमते ध्वंसविशेष एवाक्षेपकारित्वसिद्धिः, येनोत्पत्तिद्वितीयक्षण एव ज्ञानं जनितमिति। अत्र च सामग्रीसमवहितबीजस्य पक्षत्वम्। परैरिति। क्षेत्रस्थबीजस्यापि स्वकार्यव्यवहितप्राक्कालावृत्तित्वस्य नैयायिकैरनङ्गीकारादित्यर्थः। एवंस्वभावत्वसिद्धाविति मूलम्, कुत्रापि वस्तुनि अक्षेपकारित्वस्व-

(१) नावगच्छामः—पुग० पु० पा०।

(२) स्वभावसिद्धौ—पाठः। अयमेव भगीरथाभिप्रेतः।

* () मूल एतच्चिन्हान्तर्गतो ग्रन्थः पुणतामकरसम्मतो न भवतीति सर्वत्र ज्ञेयम्।

(३) स्वभावत्वमिति—पुग० पु० पा०।

(४) सत्यामेतत्-पा० २ पु०। सत्यामेव तत्-पाठः।

दीधितिटिप्पणी ।

भावसिद्धौ साध्यसिद्धौ सत्यामेवानयोरभावः सिद्धव्याप्तिकः स्यादित्यर्थः ॥

कल्पलता ।

कुशूलस्थं बीजं यदि कुर्वद्रूपत्वजातिमत् स्यात् कुर्यात् क्षेत्रपतितबीजवदिति प्रसङ्गं निरस्यति । न द्वितीय इति । तस्य जातिविशेषस्य । दृष्टान्तस्येति । क्षेत्रपतितेपि बीजे कुर्वद्रूपत्वं नास्ति, तथा चापादकविकलो दृष्टान्त इत्यर्थः। ननु तवानभ्युपगममात्रेण कथं जातिविशेषविरह इत्यत आह। को हीति। प्रमाणाभावाधीन एवानभ्युपगमो ममेति भावः। प्रमाणाभावमेवोपपादयति । स हीति । अनुभवः आलोचनम्(१), तस्यैव तन्मते प्रमाणत्वात्। तथानवसायादिति । अवसायः सविकल्पकम्, तदेवालोचनोन्नायकम्, तदभावादालोचने प्रमाणान्तरं(२) नास्तीत्यर्थः।लिङ्गाभावादिति। स चानुपलम्भादिति भावः।(ननु) करणा(३)न्यथानुपपत्त्युन्नेय एव जातिविशेषस्तदभावश्चाकरणो(४)न्नेयः कुशूलस्थ इत्याह।यदीति।अर्थापत्तावन्यथोपपत्तिशङ्कामाह। क एवमाहेति । सहकारिलाभाधीनं करणं तदभावाधीनमकरणमिति(५) यद्यपि निश्चय एव,तथाप्यापाततः स-

(१) निर्विकल्पकमित्यर्थः ।

(२) प्रमाणं-पुण० पु० पा० । अयमेव युक्तः ।

(३) कारणा-पुण० पु० पा० ।

(४) कारणो-पुण० पु० पा० ।

(५) तदलाभाधीनमकरणमिति- कालि० मु० पु० पा० ।

कल्पलता।

न्देहादप्यर्थापत्ति(१)र्दूषिता भवति(२) तमेवाह। परमिति। बीजस्याक्षेपकरणस्वाभाव्ये साध्येपि(३) पूर्वापरबीजयोरैक्ये दोषमाह। तथापीति। वस्तुत एवाक्षेपकरणस्वाभाव्ये दोषोयं(४) न त्वन्यथापीति परिहरति। युक्तमेतदिति। अक्षेपकारित्वस्वाभाव्यं वास्तवं शङ्कते। प्रसङ्गेति। बीजं यदि अक्षेपकरणस्वभावं न स्यात् न कुर्यात्, करोति च, तस्मादक्षेपकारिस्वभावमिति प्रसङ्गविपर्ययाभ्यामक्षेपकारिस्वाभाव्यसिद्धिरित्यर्थः। परिहरति। परस्परेति।(५) अक्षेपकरणस्वाभाव्यस्य प्रतियोगिनः प्रसिद्धौ तदभावमादाय प्रसङ्ग(६)प्रवृत्तिस्तत्प्रवृत्तौ च स्वाभाव्यसिद्धिरित्यर्थः॥

---

स्यादेतत्। कार्यजन्मैव अस्मिन्नर्थे प्रमाणं, त्रिल-

---

दीधितिः।

अस्मिन्नर्थे अक्षेपकारित्वे। अक्षेपविलम्बयोरन्यस्य प्रकार-

दीधितिटिप्पणी।

ननु विलम्बकारिस्वभावानुवृत्ताविति मूलमसङ्गतम्, अक्षेपकारित्वाभावविशिष्टस्य विलम्बकारिस्वभावत्वेन नियमाभावात्, इतरस्वभावस्यापि सम्भवादत आह। अक्षेपविलम्बयोरिति।

---

(१) सन्देहादप्यथापत्ति—पुण० पु० पा०।

(२) भवतीति—पुण० पु० पा०। अयमेव युक्तः।

(३) स्वाभाव्यमारोप्य—पाठः। अयमेव युक्तः, वस्तुत एवाक्षेपकरणस्वाभाव्ये दोषोयमित्युत्तरग्रन्थस्वारस्यात्।

(४) स्वाभाव्यदोषोयं-पुण० पु० पा०।

(५) परिहरति। नेति—कलि० मु० पु० पा०।

(६) प्रसङ्गविपर्ययोः—पुण० पु० पा०।

म्बकारिस्वभावानुवृत्तौ कार्यानुत्पत्तिः सर्वदे(१)ति चेन्न, विलम्बकारिस्वभावस्य सर्वदैवाकरणे तत्त्वव्याघातात्। ततश्च विलम्बकारीत्यस्य यावत् सहकार्यसन्निधानं तावन्न करोतीत्यर्थः। एवं च कार्यजन्म(२) सामग्र्यां प्रमाणयितुं

---

दीधितिः।

स्याभावा(३)द्विलम्बबाधे परिशेषादक्षेपसिद्धिरिति भावः। विलम्बो ह्यवाकरणम्, तच्च सर्वदैव, कदाचिद्वा। आद्ये विलम्बकारित्वासिद्धिः, द्वितीये तु कार्योत्पत्तेरविरोधान्न परिशेषावतारः, तथा चाक्षेपकरणस्वभावस्यासिद्धौ न तन्नियामकत्वेन कुर्वद्रूपत्वसिद्धिरित्याह, न विलम्बेत्यादिना। एतेनाविवक्षितविशेषं सामान्यतो जनकतावच्छेदकरूपवत्त्वमेव सामर्थ्यमभिहितमिति परास्तम्, स्वरूपयोग्यस्यापि करणप्रयोजकसहकारिसाहित्य-

दीधितिटिप्पणी।

न परिशेषावतार इति। विलम्बकारित्वे कार्यानुत्पादभिया परिशेषादक्षेपकारित्वसिद्धिस्त्वया क्रियते, तथा च विलम्बकारित्वपक्षेपि कार्योत्पादो यदि न विरुद्ध्यते, तदा किन्निबन्धनमक्षेपकारित्वं सेत्स्यतीति भावः। एतेन प्रघट्टकेन(४)। अभिमतम्,(५) प्रसङ्गहेतुत्वेन। प्रघट्टकमेवाह। स्वरूपयोग्यस्येति। मूलेति। एतद्व्याप्तेर्मूलस्य

---

(१) वृत्तौ सर्वदा कार्यानुत्पत्तिरि-पुण० पु० पा०।

(२) जननं-पुण० पु० पा०।

(३) स्यासम्भवा-कलि० मु० पु० पा०।

(४) एतादृशप्रघट्टकप्रतिपाद्येन सहकारिसाहित्यस्य करणप्रयोजकत्वेनेत्यर्थः।

(५) एतादृशप्रतीकधारणेन दीधितौ 'सामर्थ्यमभिमतम्'इति पाठष्टिप्पणीकृन्मत इति विज्ञायते।

शक्यते, न तु जातिभेदे। ते तु किं यथानुभवं विलम्बकारिस्वभावाः परस्परं प्रत्यासन्नाः कार्यं कृतवन्तः, किं वा यथात्वत्परिकल्पनं क्षिप्रकारिस्वभावा इत्यत्र कार्यजनन(१)मजागरूकमेवेति।

दीधितिः।

विरहेणाकरणोपपत्तेर्मूलशैथिल्यात्। ते बीजादयः(२)॥

दीधितिटिप्पणी।

समर्थस्य क्षेपायोगादिति व्याप्तेः(३) शैथिल्यमित्यर्थः। मूले, यथानुभवम् अनुभवानतिक्रमेण। यथात्वत्परिकल्पनम् त्वत्परिकल्पनानतिक्रमेण॥

---

कल्पलता।

ननु विलम्बकारित्वे कदापि कार्यजन्म न स्यादिति तदन्यथानुपपत्त्यैवाक्षेपकारित्वसिद्धिरिति शङ्कते। कार्येति। विलम्बकारित्वेपि कार्यजन्मोपपद्यत एवेत्याह। विलम्बेति। ननु विलम्बकारित्वस्वाभाव्यं चेत् तदा ध्वंसपर्यन्तं तत्स्वाभाव्यानुवृत्तौ कार्यजन्म न स्यादेवेति विलम्बकारित्वमन्यथा समर्थयति। ततश्चेति। ततश्च यदधीनं कार्यजन्म तत् तदेव गमयेत्, न त्वक्षेपकारित्वमित्याह। एवं चेति। न तु(४) जातिभेदं पराभ्युपगते। विलम्बकारित्वेपि कार्यजन्मोपपा-

(१) कर्मोपजनन—पाठः।

(२) ते बीजादयः–इति क्वचिन्नास्ति।

(३) यदि कुशूलस्थबीजमङ्कुरजनकतावच्छेदकरूपवत् स्यात् अङ्कुरकारि स्यादिति प्रसङ्गमूलीभूताया यदङ्कुरजनकतावच्छेदकरूपवत्तन्नाङ्कुराकारीत्यर्थक–'समर्थस्य क्षेपायोगात्'–इतिवाक्यप्रतिपाद्याया इत्यर्थः।

(४) न च–पुण० पु० पा०।

कल्पलता ।

दयति । ते त्विति । सामग्रीघटकाः सहकारिण इत्यर्थः । तथा चाक्षेपकारित्वे कार्यजन्माप्रयोजकमिति भावः ॥

---

नापि तृतीयः, विरोधात् । सहकार्यभावप्रयुक्तकार्याभाववांश्च सहकारिविरहे कार्यवांश्चेति व्याहतम् । त-

---

दीधितिः ।

नापीत्यादि । यद्यदा सहकारिविरहप्रयुक्तयत्कार्याभाववत् तत् तदा तत्कार्यं करोतीत्येव(१)वा प्रसङ्गः, किं वा यदा तदेति परित्यज्य । नाद्यः, विरोधात् । द्वितीयेपि किमाप्याद्यापादकयोर्यौगपद्येन सामानाधिकरण्यस्य ग्रहः, कालभेदेन वा । नाद्यः, विरोधेन तथाग्रहासम्भवात् । द्वितीये तु एकस्यैव धर्मिणः पूर्वापरकालावस्थायित्वलक्षणं स्थैर्यमवगाहमाना सामानाधिक-

दीधितिटिप्पणी ।

कार्याभावकार्ययोरेककाल एव विरोधः, अतो भिन्नकालोक्तौ न कोपि दोषः स्यादतो विकल्प्य न्यूनतां परिहरति । यद्यदेत्यादि । यौगपद्येनेति । न च यदा तदेत्यस्य परित्यागे कथं यौगपद्यं लब्धमिति वाच्यम् । अत्र संसर्गविधयैककालत्वस्य लब्धत्वात्, अत एव न पूर्वेण पौनरुक्त्यम्, तत्र तस्य प्रकारत्वात्, केवलं न्यूनत्वपरिहारार्थमेव तदुपादानमिति न दोषः । द्वितीये त्वित्यादि । कालभेदेन विवक्षणेयमर्थः स्यात्, यद्बीजमेककाले सहकार्यभावप्रयुक्तकार्याभाववत् तत् तदन्यकाले कार्यवत्, एवं चैकबीजस्योभयकालीनत्वावगाहनमेव क्षणिकत्वविरोधीति भावः । यथाश्रुते यदभावेत्यसङ्गतम्, न हि चक्राभाव एव दण्डो घटं न करोति, अपि

---

(१) अयं पाठः क्वचिदुपलभ्यते । करोत्येव–कालि० मु०पु० पा० ।

स्माद्यद्यदभाव एव यन्न करोति, तत् तत्सद्भावे तत् करोत्येवेति (तु) स्यात्। एतच्च स्थैर्यसिद्धेरेव परं बीजसर्वस्वमिति(१)।

दीधितिः।

रण्यबुद्धिरेव क्षणिकत्वं विरुणद्धीत्यर्थः। यदित्यादावेवकारौ भिन्नक्रमेण(२), यदेव तदेवेति। यदभावे यस्य सहकारिसाकल्यस्याभावे, इत्यन्ये। तौ च नियतान्वयव्यतिरेकाभ्यां कार्यकरणाकरणयोः सहकारिसमवधानासमवधानप्रयुक्तत्वस्य प्रदर्शनाय॥

दीधितिटिप्पणी।

तु सलिलाद्यभावेपीत्येवकारासङ्गत्याऽऽह। एवकाराविति। भिन्नक्रम इति। एतत्क्रमातिरेके न दोषावहमित्यर्थः। तदेवाह। यदेवेति। अत्र चैवकारः स्वरूपार्थक एव, अन्यथाऽसङ्गतेः, दण्ड एव करोतीत्यस्यापि वक्तुमसम्भवित्वात्। नन्वेवमेवकारावुक्तोभयमते निष्प्रयोजनावत आह। तौ चेति। आद्यैवकारेणाकरणस्य सहकारिविरहप्रयुक्तत्वं दर्शितम्, द्वितीयेन तु करणस्य सहकारिसमवधानप्रयुक्तत्वमिति भावः॥

कल्पलता।

ननु कुशूलस्थं बीजं यदि सहकारिविरहप्रयुक्तकार्याभाववत् स्यात् कुर्यात्, न च करोति, तस्मान्न तथेति प्रसङ्गविपर्ययौ स्यातामित्यत आह। नापीति। कुशूलस्थस्य सहकारिवैधुर्यमुभयासिद्धम्, तथा च सहकारिविधुरं बीजं यदि सहकारिविरहप्रयुक्तकार्याभाववत् स्यात् तदा कुर्यादिति विरुद्धमित्याह।

(१) अयमेव पुणनामकरसंमतः पाठो युक्तः, 'बीजम् प्रत्यभिज्ञानम्, तस्य सर्वस्वं, उपपादकत्वात्' इति भगीरथेन व्याख्यानात्। बीजं सर्वस्वम्–कालि० मु० पु० पा०।

(२) भिन्नक्रमे–पाठः। अयमेव टिप्पणीकृत्सम्मतः।

चेत्, कीदृशं पुनर्जननं मुख्यसमर्थव्यवहारनिमित्तम् । न तावदक्षेपकरणम्, तस्यासिद्धेः । नियमस्य च सहकारिसाकल्ये सत्येव करणं करणमेवेत्येवंस्वभावत्वेना(१)-

दीधितिः ।

वस्य वा प्रसङ्गात् । नियतं करणं तथा स्यादत आह । नियमस्य चेति । नियमस्य करणनियमस्य, नियतकरणस्येति यावत् । सत्येव करणमित्यन्तस्य एवकारबललभ्ये सहकारिवैकल्ये करणाभावे तात्पर्यम्, तथा च यद्धर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तद्धर्मवत्त्वमित्यर्थः । अस्ति चेदं कुर्वद्दशायामपि वीजे, ना-

दीधितिटिप्पणी ।

वेति । तदानीं सहकार्यभावाधीनकार्याभावरूपप्रवृत्तिनिमित्ताभावादित्यर्थः, तदानीं कार्यस्यैव सत्त्वात् । कीदृशं पुनरित्यादिना जननस्यैव तदभिधानस्य प्रकृतत्वान्नियमस्य तदभिधानमपर्यनुयोज्यविधयोत्तरमतस्तत्पदं नियमितजननपरमाह । नियतमित्यादि । सर्वत्र च करणपदं भावपरम् । तथापि न तद्दोषोद्धार इत्यत आह । नियतकरणस्येति यावदिति । नियमस्येत्यादिमूलं न समीहितसाधकम्, एतावता ग्रन्थेनैवकारलभ्यस्य सहकारिसाकल्याभावाकालीनसहकारिसाकल्यकालीनजननस्य समर्थव्यवहारनिमित्तत्वमानीतम्, तथा चाकरणदशायां न समर्थव्यवहारप्रसिद्धिरायाता(२), अत एव केवलकरणपदलभ्यविशेष्यीभूतस्य करणस्य दूरीकरणेन तल्लभ्यविशेषणीभूत एव तात्पर्योपवर्णनेनार्थमाह । सत्येवेति । करणाभाव इति । करणाभाव एव तात्पर्यम्, न तु विशेष्यीभूते करणेपीत्यर्थः । यद्धर्मावच्छिन्नस्य यद्धर्माधिकरणस्य । कुर्वत्यपीत्याद्युक्तदोषोद्धारं दर्शयति । अस्ति चेदमिति । अवच्छेदकधर्मस्य त-

(१) स्वभावत्वे—पाठः ।

(२) व्यवहारप्रसिद्धावायतो–पाठः ।

कल्पलता।

विरोधादिति। तस्मात् यत् सहकारिविरहान्न करोति तदेव सहकारिसत्त्वे करोतीत्यायातम्, तच्च स्थैर्यसिद्धावेव स्यादित्याह। तस्मादिति॥

एतेन समर्थव्यवहारगोचरत्वं हेतुरिति निरस्तम्, तादृग्व्यव(१)हारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात्। नासौ मुख्यस्तत्र व्यवहारः(२), तस्य ज(३)-ननिमित्तकत्वात्, अन्यथा त्वनियमप्रसङ्गादिति

दीधितिः।

समर्थेति। तथा च न प्रागुक्तसाध्यावैशिष्ट्यमिति भावः।
हेतुः प्रसङ्गहेतुः। तादृगित्यादि। तथा च व्यभिचार इति भा-
वः। मुख्यत्वेन व्यवहारस्य विशेषणान्न व्यभिचार इत्याशयेना-
शङ्कते। नासाविति। कथं न मुख्यता, अत(४) आह। तस्येति।
अन्यथा जनकजातीयत्वस्य सहकारिविरहप्रयुक्तकार्याभाववत्त्वस्य
वा निमित्तत्वे। अनियमप्रसङ्गात् द्रव्यत्वादिना बीजसजातीय(५)-
शिलादौ समर्थव्यवहारस्य सहकारिसमवहिते कुर्वत्यपि तदभा-

दीधितिटिप्पणी।

यथाश्रुतमूले मुख्यत्वस्य तत्रासत्त्वप्रदर्शनेपि व्यभिचारो नोद्धृ-
तः, मुख्यत्वविशेषणस्य तत्रानुपादानादिति मुख्यत्वविशेषणं दत्वा
भावार्थमाह। मुख्यत्वेनेत्यादि। अन्यथेत्यनेन प्रागुक्तजननिमित्त(क)-
त्वस्याभावोक्तावनियमप्रसङ्गो न व्यक्तीभवतीत्यतोऽन्यथा व्याचष्टे।
अन्यथेति। द्रव्यत्वादिनेति। द्वयं कल्पद्वये यथासङ्ख्येन। तदभावस्य

(१) अयमेव कल्पलतादीधितिकृत्संमतः पाठः। तादृशव्यव-पुण० पु० पा०। अयं
भगीरथाभिमतः। (२) अयमेव पुणतामकरसंमतो युक्तः पाठः,'तत्र'अङ्कुरानुपहिते बीजे'इति
भगीरथेन व्याख्यानात्। तद्व्यवहारः—कलि० मु० पु० पा०।
(३) तस्य तज्ज—पुण० पु० पा०।
(४) मुख्यतेत्यत-पाठः। (५) बीजजातीय-कलि मु० पु० पा०।

चेत्, कीदृशं पुनर्जननं मुख्यसमर्थव्यवहारनिमित्तम् । न तावदक्षेपकरणम्, तस्यासिद्धेः। नियमस्य च सहकारिसाकल्ये सत्येव करणं करणमेवेत्येवंस्वभावत्वेना(१)-

दीधितिः ।

वस्य वा प्रसङ्गात् । नियतं करणं तथा स्यादत आह । नियमस्य चेति । नियमस्य करणनियमस्य, नियतकरणस्येति यावत् । सत्येव करणमित्यन्तस्य एवकारबललभ्ये सहकारिवैकल्ये करणाभावे तात्पर्यम् , तथा च यद्धर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तद्धर्मवत्त्वमित्यर्थः । अस्ति चेदं कुर्वद्दशायामपि बीजे, ना-

दीधितिटिप्पणी ।

वेति । तदानीं सहकार्यभावाधीनकार्याभावरूपप्रवृत्तिनिमित्ताभावादित्यर्थः, तदानीं कार्यस्यैव सत्त्वात् । कीदृशं पुनरित्यादिना जननस्यैव तदभिधानस्य प्रकृतत्वान्नियमस्य तदभिधानमपर्यनुयोज्यविधयोत्तरमतस्तत्पदं नियमितजननपरमाह । नियतमित्यादि । सर्वत्र च करणपदं भावपरम् । तथापि न तद्दोषोद्धार इत्यत आह । नियतकरणस्येति यावदिति । नियमस्येत्यादिमूलं न समीहितसाधकम् , एतावता ग्रन्थेनैवकारलभ्यस्य सहकारिसाकल्याभावाकालीनसहकारिसाकल्यकालीनजननस्य समर्थव्यवहारनिमित्तत्वमानीतम् ,तथा चाकरणदशायां न समर्थव्यवहारप्रसिद्धिरायाता(२), अत एव केवलकरणपदलभ्यविशेष्यीभूतस्य करणस्य दूरीकरणेन तल्लभ्यविशेषणीभूत एव तात्पर्योपवर्णनेनार्थमाह । सत्येवेति । करणाभाव इति । करणाभाव एव तात्पर्यम्, न तु विशेष्यीभूते करणेपीत्यर्थः । यद्धर्मावच्छिन्नस्य यद्धर्माधिकरणस्य । कुर्वत्यपीत्याद्युक्तदोषोद्धारं दर्शयति । अस्ति चेदमिति । अवच्छेदकधर्मस्य त-

(१) स्वभावत्वे—पाठः ।
(२) व्यवहारप्रसिद्धावायतो-पाठः ।

प्युपपत्तेः, ततश्च जननिमित्त(१) एवायं व्यव-

हारो न च(२) व्याप्तिसिद्धिरिति ।

दीधितिः ।

स्ति च शिलाशकलादौ सत्यपि सहकारिसाकल्ये, तत्र कार्यानु-
त्पादेन स्वभावस्यैव तत्प्रयोजकत्वात् । अथ बीजमपि भृष्टं शि-
लासमानमिति चेत्*(न), अभृष्टबीजत्वमेवास्तां तादृशो धर्मः,
आसादयतु वा भर्जनाद्यभावोपि सहकारिभावम्। करणमेवेत्यस्य
च सत्यन्तानुपङ्गात् यद्धर्मावच्छिन्नस्य सहकारिसाकल्येऽवश्यं क-
रणं तद्धत्त्वमर्थः । एवं चैतन्निमित्तकसमर्थव्यवहार(विषय)स्यापि
सहकारिरहितस्य(३)बीजादेः करणविरहाद्व्यभिचारेण न व्याप्ति-
सिद्धिरित्याह। ततश्चेति। न च यावत्सत्त्वं करणं करणनियतजा-

दीधितिटिप्पणी ।

दानीमपि सत्त्वादिति भावः। यद्धर्मावच्छिन्नेत्यनेन द्रव्यत्वादीत्या-
दिना शिलादावतिप्रसङ्गदानमप्युद्धृतमिति दर्शयति। नास्ति चेति।
शिलादेः सहकारिसाकल्ये सत्यपि कार्याजनकत्वमित्यर्थः, तथा च
बीजत्वमपि जनकतावच्छेदकधर्म इत्यर्थः। तादृशः अवच्छेदकः ।
आसादयतु वेति । तथा च भृष्टबीजे सहकारिसाकल्यविरहादेव न
कार्यमिति भावः ।करणमेवेति नियमस्या(४)व्यवश्यं करणमित्यर्थः;
तथा चेदं प्रवृत्तिनिमित्तमकुर्वति बीजे नास्तीति न समीहितसि-
द्धिरित्यतोऽवश्यावच्छेदकधर्मं प्रवेशयार्थमाह। करणमेवेत्यस्येति।
सत्यन्तानुपङ्गात् एवकाररहितसत्यन्तानुपङ्गात् । ततश्चेत्यादिमूलं
जननपदं निरुक्तावच्छेदकधर्मपरमिति सूचयन् व्याचष्टे। एवं चेति।

(१) जननिबन्धन—पुग० पु० पा० । अयमेव गदाधरसम्मतः ।

(२) न —कालि० मु० पु० पा० ।

* () दीधितावेतच्चिह्नान्तर्गतो ग्रन्थः पुगतामकरसम्मतो न भवतीति सर्वत्र ज्ञेयम् ।

(३) सहकारिविरहितस्य-पुग० पु० पा० ।

(४) करणमेवेत्यादिमूलोक्तनियमस्येत्यर्थः ।

दीधितिः।

तिमत्त्वं वा तथा(१), असिद्धत्वात्, अकरणदशायामपि तादृशत्वाविरोधाच्च। अनियमप्रसङ्गं निरस्यति, नियमस्य चेति तु सम्प्रदायः। अथ भवतां पटादौ नीलं रूपमिव समर्थव्यवहारस्य शुद्धं जननं निमित्तं, लाघवात्, अत एव जनकतावच्छेदकरूपवत्त्वमपि परास्तमिति चेत्, अस्तु तावदेवम्, तथापि निमित्तसत्त्वासत्त्वाभ्यामेव व्यवहारतदभावोपपत्तेरविरोधात्। निमित्ततदभावयोः करणाकरणरूपयोरेव विरोध इति चेत् (न), तस्याग्रे निरसनीयत्वात्। एतेन कारिपदबोध्यत्वेन करणप्रसञ्जनं करणविरहेण च कारिपदबोध्यत्वाभावसाधनमपि व्याख्यातम्॥

दीधितिटिप्पणी।

एतत् अवच्छेदकधर्म(ः)। द्वितीये, अकरणदशायामपीति। इदानीं मूलानुक्तफक्किकां स्वयमाशङ्क्य निराकरोति। अथेति। शुद्धम् केवलम्। अत एव लाघवादेव, जनकतावच्छेदकरूपवत्त्वमेव समर्थव्यवहारनिमित्तमिति मतमप्यपास्तमित्यर्थः। तथापीति। निमित्तम् जननरूपनिमित्तम्। इतरहेतुकप्रसङ्गविपर्ययावपि दूषयति। एतेनेति। एतेन अविरोधेन॥

---

कल्पलता।

ननु कुशूलस्थं यदि समर्थव्यवहारगोचरः स्यात् तदा कुर्यात्, न च करोति, तस्मान्न समर्थव्यवहारगोचर इति प्रसङ्गविपर्ययौ स्यातामित्यत आह। एतेनेति। अत्रापि प्रसङ्गे मूलशैथिल्यं विपर्यये च बाध इत्याह। तादृगिति। ननु मुख्यसमर्थव्यवहारजनकत्वनिबन्धनौ प्रसङ्गविपर्ययावि(२)ति नोक्तदोष इति शङ्कते। नासा-

(१) जातिमत्त्वं, स च तथा-पुण० पु० पा०।

(२) विपर्ययायोरि-पुण० पु० पा०।

कल्पलता ।

विति । अन्यथेति । यदि यथाकथञ्चित् समर्थव्यवहा-
रनिबन्धनमेव करणं स्यात् तदा भ्रान्तताहशव्यवहा-
रगोचरशिलाशकलादेरप्यङ्कुरः स्यादित्यर्थः । यद्वा
कुशलस्थस्यापि (मुख्य)समर्थव्यवहारगोचरत्वे ततो-
ऽप्यङ्कुरः स्यादित्यनियमप्रसङ्ग इत्यर्थः । मुख्यव्यवहारं
प्रति निमित्तं(१) विकल्प्य दूषयति । न तावदिति । अ-
नियमप्रसङ्गं परिहरति(२) । नियमस्य चेति । कुशल-
स्थस्य मुख्यसमर्थव्यवहारगोचरत्वेऽप्यङ्कुराजननं सह-
कारिवैधुर्यप्रयुक्तमिति नानियम इत्यर्थः । (एवं) बीजं
जनयत्येवेत्यत्यन्तायोगव्यवच्छेदो नियमः, सहकारि-
समवहितमेव जनयति, जनयत्येवेत्यन्ययोगायोगाभ्यां
नियमः(३) । शिलायां न प्रथमः, केवलबीजे (तु) न
द्वितीय(४) इति भावः । मुख्यसमर्थव्यवहारगोचरत्व-
मुपसंहरति । ततश्चेति । कदाचिज्जननमेव शिलाशक-
दिविलक्षणं(५) मुख्यसमर्थव्यवहारगोचरत्वे मूलम्,
तथा च यदि समर्थव्यवहारगोचरः स्यात् तदा कुर्या-
दिति न व्याप्तिरस्तीत्यतः प्रसङ्गे मूलशैथिल्यमित्यर्थः ।
यद्वा सत्त्वक्षणिकत्वयोरेतावता न व्याप्तिसिद्धि-
रित्यर्थः ॥

---

(१) व्यवहारनिमित्तं—पुण० पु० पा० ।

(२) दूषयति—पाठः ।

(३) अयमेव सार्वत्रिकः पाठः । जनयत्येवेत्ययोगान्ययोगाभ्यां नियमः—पुण० पु० पा० । जनयत्येवेत्यन्ययोगात्यन्तायोगाभ्यां नियमश्च—कलि० मु० पु० पा० ।

(४) न तु द्वितीय—पाठः ।

(५) विलक्षण—कलि० मु० पु० पा० ।

स्यादेतत्। एतावतापि भावस्य कः स्वभावः समर्थितो (भवति,) न हि क्षेपाक्षेपाभ्यामन्यः प्रकारोऽस्तीति चेन्न, दूषणाभिधानसमये(१) निश्चयाभावेनैव सन्दिग्धासिद्धिनिर्वाहे कथापूर्वरूपपर्यवसानात्।

दीधितिः।

अक्षेपकारित्वान्यथानुपपत्त्या क्षणिकत्वं सिषाधयिषुर्भावस्वाभाव्यं(२) पृच्छति। स्यादेतदिति। कथायाः जल्पस्य। पूर्वं रूपम्(३) प्रतीकम्, परपक्षखण्डनम्॥

दीधितिटिप्पणी।

अक्षेपकारित्वेत्यादि। भावं पक्षीकृत्य स्वभावसाधने इतरबाधेनाक्षेपकारित्वं प्रसाध्य तदन्यथानुपपत्त्या क्षणिकत्वं साधयितुमुत्सुक इत्यर्थः। दूषणावसर इति मूलस्यायमर्थः, भावस्यैकतरस्वभावासमर्थनेन परपक्षखण्डनपूर्वकस्वपक्षव्यवस्थापनरूपजल्पे को दोषो दीयते, न तावत् परपक्षखण्डने, त्वन्मतस्य दूषणावसरकाले अक्षेपकारित्वरूपसाधनस्य निश्चयाभावेनैव सन्दिग्धासिद्धिनिर्वाहे जल्पस्याद्यरूपरक्षणात्। षष्ठीसमासपुरस्सरमर्थमाह। कथाया इति॥

कल्पलता।

क्षेपकारिस्वाभाव्ये सर्वदैवाकरणमित्यक्षेपकरणस्वाभाव्यमेव भावानामङ्गीकार्यम्, तच्च स्वोत्पत्त्यव्यवहितोत्तरक्षण एव करणे सति स्यात्, तथा च समर्थासमर्थबीजक्षणयोर्भेदासिद्धौ सिद्धं क्षणिकत्वमित्याशयेन ( भावस्वाभाव्यं ) पृच्छति। स्यादेतदिति। न

(१) दूषणावसरे—पुण० पु० पा०। अयमेव भगीरथटिप्पणीकृतोः सम्मतः।

(२) भावस्वभावं-कलि० मु० पु० पा०।

(३) पूर्वरूपम्-कलि० मु० पु० पा०।

कल्पलता ।

हीति । 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति न्याय इति भावः । अक्षेपकारित्वस्याभावं सामर्थ्यमाल-स्व्य यदि समर्थं स्यात् कुर्यादिति प्रसङ्गस्तथावतारि-तः, तत्र च(१) तत्स्वाभाव्यसन्देहादपि सान्दिग्धा-सिद्धिदूषणमुक्तम्, एतावतैव परोक्तसाधने दूषणा-भिधानस्य कथापूर्वरूपस्य पर्यवसानात् तव पराजया-भिधानस्य इत्याह । दूषणाभिधानेति ॥

---

उत्तरपक्षावसरे तु सोपि न दुर्वचः । तथाहि, करणं प्रत्यविलम्ब इति कोऽर्थः, किमुत्पत्तेरनन्तरमेव करणं, सहकारिसमवधानानन्तरमेव वा । विलम्ब इत्यपि कोऽर्थः, किं यावन्न सहकारिसमवधानं तावद-

---

दीधितिः ।

उत्तरः पक्षः प्रतीकम्(२), स्वपक्षस्य प्रकृते स्थैर्यस्य स्थापनम् । उत्पत्तेरनन्तरं करणम्(३) उत्पत्त्यनन्तरकालीनकार्यकारित्वम्, उत्पत्तिकाले कारित्वमिति यावत् । एवमग्रेपि नेयम् ।

दीधितिटिप्पणी ।

ननु जल्पस्य द्वितीयदलरक्षार्थमेव समर्थनं कार्यमित्यत आह । उत्तरेति । एवं पक्ष इत्यस्यार्थः, प्रतीकम् । स्वोत्पत्तेरनन्तरं स्वस्यैवाभावेन कथं तदानीं जननानुकूलव्यापाररूपकरणमत आह । उ-त्पत्तेरिति । प्रथमस्य कुत्रचित्प्रमाणमाशङ्क्य समाधत्ते । कस्यचि-

---

(१) तदत्र—कालि० मु० पु० पा० । अयमेव टिप्पणीकृत्सम्मतः ।

(२) उत्तरपक्षः—कालि० मु० पु० पा० ।

(३) रनन्तरकरणम्—कालि० मु० पु० पा० ।

करणं, सर्वथैवाकरणमिति वा(१)। तत्र प्रथमचतुर्थयोः प्रमाणाभावादनिश्चयेपि द्वितीयतृतीययोः प्रत्यक्षमेव प्रमाणम्। बीजजातीयस्य हि सहकारिसमवधानानन्तरमेव करणं करणमेवेति प्रत्यक्षसिद्धमेवेति, तथा सहकारिसमवधानरहितस्याकरणमित्यपि, अत्र च भवानपि न विप्रतिपद्यत एव(२), प्रमाणसिद्धत्वात्, विपर्यये बाधकाच्च(३)। तथाहि, यदि सहकारिविरहेऽकुर्वाणस्त-

दीधितिः।

प्रथमेति। कस्यचिदुत्पत्तेरनन्तरमेव किञ्चित्कार्यकारित्वेपि न सर्वत्र तथात्व(४)नियमः, तस्य तदानीं सहकारिसाकल्यनिबन्धनत्वादिति भावः। क्षणिकत्ववादिभिरेकस्यां व्यक्तौ करणाकरणायोरनङ्गीकारादाह। बीजजातीयस्येति(५)। तथेति। अविलम्बकारित्वे एवकारेणा(६)न्तर्भावितोप्यर्थः प्राधान्येन विल-

दीधितिटिप्पणी।

दिति। ननु बीजजातीयस्य हीत्यादौ मूले यदविलम्बकारित्वं वितर्कितं तदन्तर्गतैवकारादेव तथेत्यादिमूलोक्तविलम्बकारित्वार्थलाभे व्यर्थं मूलेन तथेत्यादिना विलम्बकारित्वार्थकथनमत आह। अविलम्बकारित्व इत्यादि। तथा चात्र प्राधान्यमेवोक्तमिति भावः।

(१) सर्वदैवाकरणं वा—पाठः। सर्वदैव वाऽकरणमिति—पाठः।
(२) भवानपि विप्रतिपद्यत एव न—पाठः।
(३) बाधकाभावाच्च—पाठः।
(४) कारित्वेपि सर्वत्र तथात्वा-पुण० पु० पा०।
(५) बीजेति-पाठः।
(६) एवकारा-पा० २ पु०।

त्स(१)मवधानेऽपि न कुर्यात् तज्जातीयमकरणमेव स्यात्(२), समवधानासमवधानयोरुभयो(३)रप्यकरणात्। एवं(४) तत्समवधानविरहेऽपि यदि(५) कुर्यात् सहकारिणो(६) न कारणं स्युः, तानन्तरेणापि करणात्। तथा चानन्यथासिद्धान्वयव्यतिरेकवतामप्यकारणत्वे कार्यस्याकस्मिकत्वप्रसङ्गः(७)। तथा च कादाचित्क-

दीधितिः।

स्वरूपतया पृथगुपदर्शितः। तज्जातीयम् तद्धर्मावच्छिन्नम्। अकारणम्(८) अस्वरूपयोग्यं, तथात्वं च प्रामाणिकमिति भावः। एवमिति। सहकारिणो यदि तत्कार्यकारणापेक्षणीया न स्युः तत्कार्यकारणानि न स्युरित्यर्थः। तेन न वैयधिकरण्यम्(९) तथा चेति। तुल्यन्यायतया सर्वेषामेवाकारणत्वादिति भावः।

दीधितिटिप्पणी।

तज्जातीयमितरधर्मावच्छेदेनास्वरूपयोग्यमेवेत्यत आह। तद्धर्मेति। तथा च तद्धर्मावच्छेदेन स्वरूपयोग्यत्वाभावः साध्य इत्यर्थः। ननु सहकारिणामकारणत्वेपि सहकारितानिरूपकदण्डादेः कारणत्वं कथं बाधितमत आह। तुल्येति। दण्डादेरपि चक्रादिसहकारितया सहकारिणस्मकारणत्वे दण्डस्याकारणत्वमेव स्यादित्यर्थः। मूले

यत् सहकारिसमवधानेऽप्यकुर्वाणं यदि तत्सहकारिस—पाठः।
(१) यत् सहकारिसमवधानेऽप्यकुर्वाणं यदि तत्सहकारिस—पाठः।

(२) तज्जातीयमकारणं स्यात्-पाठः।
(३) समवधानयो—पाठः।
(४) एवं यदि—पाठः।
(५) विरहे—पाठः।
(६) णोपि—पुण० पु० पा०।
(७) कार्यस्याकारणकत्वप्रसङ्गः—पाठः।
(८) अकरणम्-कलि० मु० पु० पा०।
(९) तेन वैयाधिकरण्यं न-पाठः।

स्वविहाति(१)रिति। एवं च द्वितीयपक्षविवक्षायामक्षेपकारित्वमेव(२) भावस्य स्वभावः। तृतीयपक्षविवक्षायां तु क्षेपकारित्वमेव भावस्य स्व(३)रूपमिति नोभयप्रकार(४)निवृत्तिरिति।

---

दीधितिः।

एवं चेत्यादि। ननु यद्युपदर्शितं करणमकरणं च स्वभावो भावस्य, तदा यावत्सत्त्वं तदुभयापत्तिः, सति धर्मिणि स्वभावविरहायोगादिति चेत्, तत्स्व(५)भावत्वं हि(६) तत्तादात्म्यं वा स्यात्, यावत्त(७)त्सत्त्वं तत्र स(८)त्त्वं वा, तद्धर्मतामात्रं वा। तत्राद्ययोरनभ्युपगमः, अन्तिमस्तु धर्मधर्मिणोरत्यन्तभेदेन धर्मिसत्त्वेऽप्यसत्त्वं न विरुणद्धि॥

दीधितिटिप्पणी।

द्वितीयपक्षः, तथा हीत्यादिवितर्कितद्वितीयपक्षः। नोभयप्रकारनिवृत्तिरित्यत्रैव शङ्कते। ननु यदीति। उपदर्शितमिति। अक्षेपकारित्वं क्षेपकारित्वं चेत्यर्थः। धर्मधर्मिणोरिति। यद्यनयोरभेदः स्यात्तदेव धर्मिसत्त्वं विरुद्धं स्यात्, न चैवम्॥

---

कल्पलता।

ननु जल्पे स्वपक्षसाधनमपि वक्तुमुचितमित्यत आह। उत्तरेति। क्षेपाक्षेपयोरविवेचितयोरेकतरकोटिपरिग्रहोऽनुचित इति विवेक्तुं विकल्पयति। उत्पत्तेरनन्तरमेवेति। स्वोत्पत्त्यव्यवहितोत्तरक्षण एवेत्यर्थः।

---

(१) त्वव्याहति—पुण० पु० पा०। (२) कारित्वं—पाठः।
(३) कारित्वमेव स्व—पाठः। (४) नोभयाकार—पाठः।
(५) दिति चेन्न, स्व-कालि० मु० पु० पा०। (६) हि-कलि० मु० पु० नास्ति।
(७) याव-कालि० मु० पु० पा०। (८) तत्र तत्स-कालि० मु० पु० पा०।

कल्पलता ।

प्रथमचतुर्थयोरिति । स्वोत्पत्त्यनन्तरमेव करणे(१) प्रमाणाभावः, सर्वथैवाकरणे कार्यजातं कदापि नोपलभ्येतेति बलवद्विपक्षदण्ड इत्यर्थः । प्रमाणाभावादित्यापा(त)तः, विपरीतमेव प्रमाणमिति वस्तुगतिः । प्रत्यक्षमेवेति । अन्वयव्यतिरेकबलप्रवृत्तमित्यर्थः । अत्यन्तायोगव्यवच्छेदे चायमेवकारः । बीजत्वेनैव कारणतेति विवक्षन्नाह । बीजजातीयस्येति । तादृप्येणैवान्वयव्यतिरेक(प्र)दर्शनप्रवृत्तेरिति भावः । अयोगव्यवच्छेदाभ्यामक्षेपकारित्व(२)मेव द्रढयति । नन्वेवं न(३) मन्यामहे क्षेपकारित्वमाह । तथेति । नन्वेवं न(३) मन्यामह इत्यत आह । अत्र चेति । प्रमाणेति । सहकारिषु सत्सु(४) करणस्यासत्सु चाकरणस्य प्रत्यक्षसिद्धत्वादित्यर्थः । विपर्यये बाधकं स्फुटयति । तथाहीति । सहकारिसमवधानासमवधानयोरकायज्जातीयं(५) सहकारिसमवधानासमवधानयोरकारणं तज्जातीयमकारणमेव शिलाशकलवदिति(६) व्याप्त्युपष्टम्भेनाह(७) । यदीति । न च दीपोपरि नधनात् पक्वबीजे व्यभिचारः, तत्रापि सहकारिविशेषविरहस्य कल्पनीयत्वात् । यत्कार्यं यद्व्यतिरेकेण यत् करोति तत्कार्यं न तस्य तत्सहकारि(त्वं), यथा दण्डस्य घटे जनयितव्ये तन्तुरिति-

(१) नन्तरकरणे-पाठः ।
(२) माक्षेपकारित्व-पुण० पु० पा० । मेवोपकारित्व-पाठः ।
(३) न त्वेवं-पुण० पु० पा० ।
(४) सहकारिषु मतस्य-पुण० पु० पा० ।
(५) यज्जातीय-पाठः ।
(६) दित्यति-पुण० पु० पा० ।
(७) व्याप्त्यवष्टम्भेनाह-पाठः ।

कल्पलता।

व्याप्त्यवष्टम्भेनाह। एवमिति। यदि सहकारित्वेनाभिमताः क्षित्यादयोऽङ्कुरे जनयितव्ये बीजं (न) नापेक्षेरन् तदा ते तत्र सहकारिणो न स्युः, रासभवदित्यापादनार्थः। न चेष्टापत्तिः, अन्वयव्यतिरेकसिद्धकार्यकारणभावतिरस्कारे तद्व्यवस्थैव न स्यात्, स्याच्च कार्यस्याकस्मिकत्वमित्याह। तथा चेति। ततः किमित्यत आह। तथा चेति। किञ्चित्कालेऽसतः(१) किञ्चित्कालसत्त्वं कादाचित्कत्वं सुदृढप्रमाणावधृतमपि न स्यादित्यर्थः। ननु तथापि भावस्य कः स्वभाव इति प्रश्ने किमुत्तरमत आह। एवं चेति। सहकारिसमवधानासमवधानरूपावच्छेदभेदमादायाक्षेपकारित्वक्षेप(२)कारित्वयोरुभयोरप्येकस्मिन्(३) बीजजातीये दर्शनात्तयोर्विरोध इत्यर्थः(४)।

---

तथापि किमसमर्थस्यैव सहकारिविरहः स्वरूप-

---

दीधितिः।

स्यादेतत्। बीजत्वेन सामर्थ्ये सिद्धे समर्थानां बीजजातीयानामिवैकस्यापि बीजस्य सहकारिसाकल्यवैकल्याभ्यामेव करणाकरणयोरुपपत्तौ सिध्यति स्थैर्य(५), न त्वेतदस्ति, समर्थस्य

दीधितिटिप्पणी।

न्यूनतां परिहृत्य भावार्थं प्रकाशयन् मूलीयाभासं ददाति। स्यादेतदिति। यदि बीजत्वेन सामर्थ्यं भवेत् तदा यथा समर्थानां

---

(१) किञ्चित्कालासतः-पुण० पु० पा०। (२) मादाय चेपकारित्वाक्षेप-पुण० पु० पा०।
(३) रप्येकत्र-पुण० पु० पा०। (४) इति भावः-पुण० पु० पा०।
(५) पत्तौ स्थैर्यं सिध्यति-पाठः।

लाभानन्तरं कर्तुरेव (त्रा) सहकारिसमवधानम्, अन्यथा वेति किं नियामकमिति चेत्, इदमु(१)च्यते,

दीधितिः ।

क्षेपायोगादिति(२), तथा च कुर्वद्रूपत्वेनैव सामर्थ्यं न बीजत्वेन, समर्थ एव हि(३) सहकारिणां लाभो लाभ(४) एव, तथा च न सहकारिसाकल्यवैकल्यप्रयुक्ते करणाकरणे, किं तु सामर्थ्यासामर्थ्यप्रयुक्ते इत्याशयेनाशङ्कते । तथापीति । असमर्थेत्यादि(५) । समर्थस्यापि सहकारिविरहे(६) तदानीं कार्यस्यानुत्पत्तौ समर्थस्याप्यकरण(७)मुत्पत्तौ च सहकारिणामकरणत्वम्(८), असमर्थे च सहकारिसाकल्ये समर्थबीजविरहेऽपि कार्यस्यो(९)त्पत्तौ बीजस्याकरणत्वम्(१०) अनुत्पत्तौ च बीजविरहेण समर्थस्यापि सहकारिणोऽकरणं(११) प्रसज्येत, तेन तदुभयं व्यु-

दीधितिटिप्पणी ।

बीजानां मध्ये कस्यापि सहकारिविरहप्रयुक्तकार्याभाववत्त्वं कस्यापि तत्प्रयुक्तकार्यवत्त्वं तथा सामर्थ्यस्याविशेषादेकस्या अपि व्यक्तेरुभयत्वं न विरुद्धमिति रीत्या दृष्टान्तीकृत्य स्थैर्यं साध्यते-त्यर्थः । ननु कथं कुर्वद्रूपत्वेन तत्, कथं वा न बीजत्वेन तदत आह । समर्थ एव हीति । यस्मात् समर्थ एव सहकारिणां लाभो न तु समर्थभिन्ने, अतः कुर्वद्रूपे सहकारिलाभनिबन्धनं तत्त्वेनैव सामर्थ्यं वाच्यं, न तु बीजत्वेन, यस्मात उत्पत्तौ कार्यस्य सहकारिणाऽसमवहिते बीजे सामर्थ्यासत्त्वेन व्यभिचारः स्यादिति न बीजत्वमवच्छेदकम् । उत्पत्तौ कार्यस्योत्पत्तौ । तेन नियमद्वयेन । अन्यथेत्यस्यैवा-

(१) अत्रो-पुण० पु० पा० । (२) योगात्-पा० २ पु० । (३) अयमेव पाठष्टिप्पणीकृन्मतः । समर्थ एव च-इति तु सर्वत्र । (४) रिणां लाभ—पाठः । (५) असमर्थेति-पाठः । अन्वयव्यभिचारेणेत्यादिः । (६) विरहे च-पा० २ पु० । (७) अकारणत्वमित्यर्थः । व्यतिरेकव्यभिचारेणेत्यादिः । (८) मकारणत्वम्-पुण० पु० पा० । व्यतिरेकव्यभिचारेणेत्यादिः । (९) कार्यो-पाठः । (१०) कारणत्वम्-पुण० पु० पा० । अन्वयव्यभिचारेणेत्यादिः । (११) कारणत्वं-पाठः । (१२) सामर्थ्यम्-पा० २ पु० ।

कुशूलस्थबीजस्याङ्कुरानुकूलः शिलाशकलाद् विशेषः कश्चिदस्ति न वा(१), न चेन्नियमेनैकत्र प्रवृत्तिः अन्यस्मा(२)न्निवृत्तिश्च त(३)दर्थिनो न(४) स्यात्। परम्परयाङ्कुरप्रसवसमर्थ(५)बीजक्षणजननादस्त्येवेति

दीधितिः।

दस्तम्। अन्यथा वेति। समर्थस्यापि कदाचित्सहकारिणां वैकल्यं कदाचित्(६) साकल्यं, तेनाकरणं करणं चेति। प्रवृत्त्यन्यथानुपपत्त्या बीजत्वेनैव सामर्थ्यमित्याशयेन पृच्छति। कुशूलेत्यादि(७)। प्रवृत्तिमन्यथोपपादयति। परम्परयेति(८)। अस्त्येवेति। शिलाशकलाद्विशेषः। समर्थ क्षणं(९) प्रत्येवानायत्या बीजत्वेन सामर्थ्यं(१०) वाच्यम्, तथा च समर्थस्यापि

दीधितिटिप्पणी।

र्थमाह। समर्थस्यापीति। बीजत्वेनैवेति। तथा च बीजजातीयदृष्टान्तेन एकत्रापि व्यक्तौ तदुभयवत्त्वं वाच्यमिति भावः। अनायत्येति। शिलाशकलतो विशेषरक्षार्थं बीजत्वेन समर्थबीजक्षणं प्रति स्वरूपयोग्यत्वोक्तौ, अफलोपहितबीजस्य सामर्थ्ये सत्यपि सहकार्यभावाधीन एव फलाभाव उक्त इति भावः।

(१) शकलात् कश्चिदस्ति विशेषो वा—कलि० मु० पु० पा०।
(२) अपरस्मा—पाठः। अपरस्मि—पुण० पु० पा०।
(३) त्तिस्त—पाठः। (४) र्थिनः—पुण० पु० पा०। (५) प्रसवक्षम—पाठः।
(६) कदाचिच्च- पुण० पु० पा०। (७) कुशूलेति-पाठः।
(८) परम्परेति-कलि० मु० पु० पा०। (९) समर्थक्षणं-कलि० मु० पु० पा०।
(१०) परम्पराया एकरूपाया अभावात् परम्परानिरूपकस्यापि बीजस्यैक्याभावादनुगमार्थं बीजत्वेनैव सामर्थ्यमिति भावः।

चेत्, कदा पुनः परस्परस्यापि तथाभूतं करिष्यतीति(१) । चेत्, कदा पुनः परस्परस्यापि तथाभूतं करिष्यतीति(१) । किं तत्र(२) सन्देह इति चेत्, स पुनः किमाकारः । किं सहकारिषु(३) समवहितेष्वपि करिष्यति न वेति, उत(४) समवाहितेष्वपि (तेषु) करिष्यति न वेति(५), अथ यदा सहकारिसमवधानं तदैव करिष्यत्येव(६)

दीधितिः ।

सहकारिविरहादकरणमित्यायातमित्याशयेन पृच्छति । कदे-त्यादि । केचित्तु तज्जातीयानां सहकारिलाभालाभयोः करणाक-रणे न स्थैर्यसाधके, क्षणिकत्वेप्युपपन्नत्वात्, एकस्यैव तु ते ना-घापि सिद्धे, प्रत्यभिज्ञानं च व्यभिचारिजातीयमसिद्धप्रमा(७)-भावं न साधकमतः कथं स्थैर्यसिद्धिरित्या(८)शयेनाह । तथापीति । असमर्थेत्यादिनियम(९)द्वयं समर्थस्यापि सह-कारि(णा)वैकल्यादकृतस्ततः पश्चात् साकल्ये सति करणस्य

दीधितिटिप्पणी ।

पूर्वोक्तभावतोपि निर्दुष्टमाह । केचिदिति । अत एव प्राहुरिति वक्ष्यते, एकस्यां व्यक्तौ करणाकरणासिद्धेः । क्षणिकत्वेपीति । क्षणि-कत्वे कस्यापि बीजजातीयस्य तद्वत्त्वं कस्यापि तदभाववत्त्वमविरुद्ध-मित्यर्थः । ते करणाकरणे । समर्थस्यापीति । अपिनाऽसमर्थस्यापी-ति सूचितम्, तदेव नियमद्वयसार्थक्यात् । पूर्वं तु एतन्नियमद्वयं समर्थस्य क्षेपायोगादित्युपष्टम्भेन योजितमित्यतोपि मतयोर्भेदः ।

(१) करिष्यति—पाठः । (२) अत्र—पुस्त० पु० पा० ।
(३) कारि—पाठः ।
(४) उत तद—पुस्त० पु० पा० । (५) न वा—पाठः ।
(६) करोत्येव—पाठः । (८) स्थैर्यमित्या—कलि० पु० पु० पा० ।
(७) प्रमाण—पुस्त० पु० पा० ।
(९) तथापीति । नियम—पाठः ।

परं कदा तेषां(१) समवधानमिति सन्देहः।

---

दीधितिः।

प्रतिक्षेपकम्। प्रवृत्त्यन्यथानुपपत्त्या वीजत्वेन सामर्थ्यसिद्धौ न तादृशनियमसिद्धिरित्याशयेन पृच्छति। कुशूलेति। इति प्राहुः॥

दीधितिटिप्पणी।

न तादृशनियमासिद्धिः न समर्थस्येत्यादिक्षणिकत्वसाधकनियमसिद्धिः। कदा तेषां समवधान(२)मिति सन्देहफलप्रश्नालिखनम्, न तु सन्देहाकारस्य। सन्देहाकारस्तु इदानीं तदानीं वा समवधानमिति बोध्यः॥

---

कल्पलता।

नन्वेवं स्वभावद्वयस्थितावपि न स्थैर्यं, यतः कुर्वद्रूपस्यैव सहकारिसमवधान(म)तद्रूपस्यैव तद्विरह इति क्षणिकत्वेप्युपपद्यत(३) इत्यभिप्रेत्याह । तथापीति। कर्तुरेवेति। कुर्वद्रूपत्वजातिमत एवे(४)त्यर्थः। अकुर्वदपि बीजत्वालिङ्गितं समर्थमेवेत्येकस्यैव सहकारिलाभालाभाभ्यां करणाकरणे इति स्थैर्यमेवे-त्य(५)भिप्रेत्य पृच्छति । कुशूलस्थेति । अङ्कुरार्थि(६)प्रवृत्त्यन्यथानुपपत्त्यैव कुशूलस्थस्यापि सामर्थ्यमित्याह। न चेदिति। तदर्थिप्रवृत्तेरन्यथोपपत्तिमाह। परम्परयेति। असमर्थमपि कुशूलस्थं समर्थं जनयिष्यति, शिलाशकलं तु न तथेति विशेष इत्यर्थः। अस्त्येवेति। तदर्थिप्रवृत्तिरित्यनुषङ्गः। यद्वा

---

(१) तेषां सहकारिणां पाठः। (२) मूलस्थामिदं प्रतीकम्।
(३) त एव—पुण० पु० पा०। (४) इवे—कालि० मु० पु० पा०।
(५) मेवा—पुण० पु० पा०। (६) रादि—कालि० मु० पु० पा०।

कल्पलता ।

शिलाशकलादिशेष इत्यनुषज्यते । काचिद्भुक्तनष्टा व्यक्तिः समर्थ(१)लक्षणं न जनयत्यथ च(२) तत्रापि तदर्थिप्रवृत्तिरिति बीजत्वेनैव सामर्थ्यं वाच्यमिति हृदि निधाय पृच्छति। कदेति। परम्पराकारणे(३) प्रवृत्तौ कालावच्छेदज्ञानमतन्त्रमित्याशयेनाह। तत्रेति(४)। बीजं सहकारिसमवधाने करिष्यत्येव, समवधानं तु(५) कदेति(६) सन्देहो वाच्यः, तथा च बीजत्वेनैवाङ्कुरं प्रति सामर्थ्यं वाच्यमित्याशयेन संशयाकारं विकल्पयति। स पुनरिति॥

न तावत् पूर्वः(७),सामान्यतः कारणत्वावधारणे(८) तस्यानवकाशात्, अवकाशे वा कारणत्वानव(९)धारणात् । नापि द्वितीयः, सहकारिणां तत्त्वावधारणे तस्यानवकाशात्, अवकाशे वा तेषां तत्त्वानवधारणात् । तृतीये तु सर्व एव तत्सन्तानान्तःपातिनो बीजक्षणाः

दीधितिः ।

सामान्यत इति । न चाङ्कुरसमर्थबीजक्षणं प्रत्यपि परेषां बीजत्वेन न कारणत्वम्,अपि तु तत्कुर्व(१०)द्रूपत्वेनैवेति(११) वाच्यम् । तथात्वेपि बीजजातीयस्य सत्यां सहकारिसम्पत्तौ अ-

(१) समर्थं बीज—पुण० पु० पा० । (२) याति भवति च—पुण० पु० पा० ।
(३) कारिण—पुण० पु० पा० । (४) न तत्रेति—पाठः ।
(५) धानं—कलि० मु० पु० पा० । (६) कदेत्यत्र—पुण० पु० पा० ।
(७) न तावदाद्यः-पाठः । (८) कारणत्वावगमे-पाठः । (९) वा तदनव-पाठः ।
(१०) तथा च सामान्यतः सामर्थ्यानवधारणात् सन्देहोपपत्तिरिति भावः ।
(११) अपि तु कुर्व-पाठः ।

समानशीलाः प्राप्नुवन्ति, यत्र तत्र सहकारिसमवधाने(१) सति करणनियमात्, सर्वत्र च सहकारिसमवधानसम्भवात् ।

दीधितिः ।

वश्यं करणमिति सामान्यतोऽवधारणात्(२), अनवधारणे वा नियतप्रवृत्त्यनु(३)पपत्तेः । समानशीलाः समानयोग्यताकाः, तथा च सिद्धं बीजत्वेन कारणत्वमिति भावः(४) ॥

दीधितिटिप्पणी ।

अवधारणादिति । अङ्कुरार्थमेव सर्वैर्बीजसामान्यरक्षणादिति भावः । परेण कथमिदमवधार्यमित्यत आह । अनवधारणे वेति । वाकारश्चार्थः । बीजत्वमादाय समानशीलत्वं तैरप्युच्यत इत्यत आह । समानयोग्यताका इति ॥

(१) समवधानेपि-पाठः । (२) तथा च सन्देहानुपपत्तिः । (३) वा प्रवृत्त्यनु-पाठः ।

(४) अत्रायं भावः । सामान्यत इत्यादिमूलेन( ७२ पृष्ठे ११ पङ्क्तौ ) बीजत्वेन सामान्येन कारणत्वावधारणे सकलसहकारिषु समवहितेष्वपि बीजमङ्कुरसमर्थबीजक्षणं करिष्यति न वेति संशयो नोपपद्यत इत्युक्तम् । अत्र बीजत्वेन कारणत्वमेव नावधार्यते, अङ्कुरमिव तत्समर्थबीजं प्रत्यपि तत्तत्कुर्वद्रूपत्वरूपजात्यन्तरपुरस्कारेण कारणत्वसम्भवादित्याशङ्क्य निराक्रियते, न चेत्यादिना( ७२ पृष्ठे १७ पङ्क्तौ ) । तथात्वेपीत्यस्य अवान्तरजात्यन्तरस्य कारणतावच्छेदकत्वसम्भवेपीत्यर्थः । इति सामान्यतोऽवधारणादिति । इत्याकारकसहकारिसम्पत्तिविशिष्टबीजत्वरूपसामान्यधर्मे करणनियमावधारणेनोक्तसंशयनिवर्त्तकविशेषदर्शनसत्त्वादित्यर्थः । अनवधारणे, अङ्कुरार्थिनो बीजत्वपुरस्कारेण प्रवृत्तिदशायां तथानवधारणे, प्रवृत्त्यनुपपत्तेः, तादृशावधारणस्य प्रवृत्त्यङ्गत्वात्, अन्यथा सहकारिसम्पन्नमपि न करिष्यतीति सम्भावनायामपि प्रवृत्त्यापत्तेरित्यर्थः । समानशीला इति व्याचष्टे । समानयोग्यताका इति । अङ्कुरसमर्थबीजक्षणयोग्यत्वेन समाना इत्यर्थः । करणनियमादिति मूलम्, बीजत्वाक्रान्ते सहकारिसम्पत्तिमति क्वचिदपि अकरणस्यादर्शनादित्यर्थः । नन्वस्तु सहकारिसमवहितबीजे करणनियमः, तावतापि न सर्वबीजानां योग्यतासिद्धिः, सहकार्यसमवहितबीजानामकरणेनायोग्यत्वे बाधकाभावादत आह । सर्वत्र चेति । सहकारिसमवधानसम्भवादिति । तथा च यत्र बीजे सामर्थ्यं भवता नोपेयते, तत्रापि सहकारिसमवधानसम्भवेन सहकारिसम्पत्तिमतो बीजस्याकरणं प्रसज्येतेति भावः । विवृतौ, सिद्धं बीजत्वेन कारणत्वमिति । अवान्तरजातेर्न्यूनवृत्तितया योग्यतावच्छेदकत्वासम्भवादिति भाव इति सम्प्रदायः । अथात्र यदा सहकारिसमवधानं तदैव करिष्यत्येव, परं कदा तेषां समवधानमिति सन्देह इति तृतीयपक्षे सर्व एव तत्सन्तानान्तःपातिनो बीजक्षणाः समानशीलाः प्राप्नुवन्ति यत्र तत्र सहकारिसमवधाने सति

कल्पलता।

**सामान्यत इति। न च सौगतानभ्युपगतमिदं, वीजजातीयस्य सहकारिसमवधाने सत्येव करणं करणमेवेति प्रत्यक्षसिद्धमि(१)त्यादिना(२) तत्साधनात्। तेषामिति। न चेष्टापत्तिः, सहकारिणो न कारणं स्युरित्यादिना(३) पूर्वमेव साधनात्(४)। समानशी-**

---

दूषणाभिधानं न स- (७२ पृष्ठे १५ पङ्क्तौ)
करणनियमात् सर्वत्र च सहकारिसमवधानसम्भवादित्यादिना कुशूलादिस्थवीजसा-
क्षच्छते, सहकारिसमवधानसम्भावनामात्रेण शिलाशकलसाधारणेन योग्यतायाः
धारण्या निश्चेतुमशक्यत्वात्। न च कुशूलादिस्थे योग्यताया उक्तरीत्याऽनिर्णय इष्ट एव, सन्दिग्धयापि
तया परपक्षप्रतिक्षेपनिर्वाहादिति वाच्यम्। उत्तरपक्षावसरे तु सोपि न दुर्वच इत्यादिना(६२ पृष्ठे ९ पङ्क्तौ)
तन्निर्णयस्यैवोपक्रान्ततया तस्यैवाकाङ्क्षिततया तदनभिधाने मूलस्य न्यूनतापत्तेरिति चेन्न, कुशूलादि-
स्थवीजेऽङ्कुरार्थिनः प्रवृत्तिं प्रति शिलाशकलसाधारणस्य सकलसहकारिसमवधानसन्देहस्य स्वरूपतः
साक्षाज्जनकत्वासम्भवेनाङ्कुरात्मकफलोपधायकतासन्देहस्य च तन्निर्वाहकस्य सहकारिसमवधान-
सम्भावनामात्राधीनत्वे तत्सम्भावनायाः शिलाशकलसाधारणतया तत्राप्यङ्कुरार्थिप्रवृत्तिप्रसङ्गस्य दु-
ष्परिहरतयाऽनायत्याङ्कुरजननस्वरूपयोग्यतात्मकफलोपधायकत्वतदभावरूपकोटिद्वयसहचरितध-
र्मवत्तानिर्णयाधीनस्यैवाङ्कुरोपधायकत्वसन्देहस्याङ्कुरार्थिप्रवृत्तिहेतुत्वं वाच्यम्, तथा च लाघ-
वात्स्वरूपयोग्यतानिर्णयस्यैव तादृशप्रवृत्तिहेतुत्वस्योचिततया कुशूलादिस्थेपि वीजेऽङ्कुरार्थिप्रवृत्त्य-
न्यथानुपपत्त्या तस्य तत्र योग्यतानिर्णयः सिद्ध्यति। न च यद्धर्मावच्छिन्नस्य सहकारिसाकल्ये सत्य-
वश्यं करणं तद्धर्मवत्त्वं यदि योग्यतापदार्थस्तदा तन्निर्णयोऽकारिण्यपि सम्भाव्यते, योग्यतापदार्थ एव तु
कुर्वद्रूपमन्यद्वेत्यत्र नैव विनिगमकमस्तीति कुर्वद्रूपात्मकयोग्यतापक्षेऽकारिणि योग्यतानिर्णयो दुर्घट इति
वाच्यम्। प्रवृत्तिविषयांशे प्रकारीभूय विषयविधया प्रवृत्तिजनकतावच्छेदकस्य योग्यतापदार्थत्वनियमेन
वीजत्वादिरूपस्य तादृशधर्मस्य योग्यतारूपत्वौचित्यात्, कुर्वद्रूपत्वस्य च शिलादिसाधारणसन्देह-
विषयस्याकारिणि प्रवृत्तिनिर्वाहकत्वासम्भवात्। न च कुर्वद्रूपत्वस्य शिलादौ सन्देहो नोपगन्तुं श-
क्यते, यद्धर्मावच्छिन्ने सहकारिसाकल्ये सत्यवश्यं करणं वीजत्वरूपतद्धर्मविरहात्मकविशेषदर्शनस्यैव
तत्र तादृशसन्देहविरोधिनः सत्त्वात्, इत्थं च कुर्वद्रूपत्वसन्देहमात्रस्य प्रवर्त्तकत्वेपि शिलादौ प्रवृत्ते-
रापादयितुमशक्यतया योग्यतानिर्णयाधीनैवाङ्कुरार्थिनामकारिवीजविषयिणी प्रवृत्तिरिति रिक्तं वच
इति वाच्यम्। यद्धर्मावच्छिन्ने सहकारिसाकल्येऽवश्यं करणं तद्धर्मवत्त्वानिर्णयाधीनकुर्वत्त्वसन्देहस्य
तद्रूपेण प्रवृत्तिजनकत्वे गौरवस्यानुपदमेवोक्तत्वात्, यथाकथञ्चित्तत्सन्देहमात्रस्य प्रवर्त्तकत्वे च किञ्चि-
द्धर्मावच्छिन्नेपि सहकारिसाकल्यदशायां करणनियममनिर्धारितवतः पुंसस्तादृशधर्मविरहात्मकफलो-
पधायकताधीविरोधिविशेषदर्शनासम्भवेन प्रमेयत्वादिरूपसाधारणधर्मदर्शनाधीनस्य कुर्वत्त्वसन्देहस्य
शिलादावपि सम्भवेन तद्दशायामङ्कुरार्थिनस्तस्य शिलादौ प्रवृत्त्यापत्तेः कथञ्चिदपि वारयितुमशक्य-
त्वात् योग्यतारूपवीजत्वनिर्णयस्यैव प्रवृत्तिहेतुत्वाभ्युपगमस्यावश्यकत्वादिति विभावनीयम्।

(१) सिद्धमेव-पुण० पु० पा०। (२) ६२ पृष्ठे ३ पङ्क्तौ। (३) ६४ पृष्ठे ३ पङ्क्तौ।
(४) पूर्वमेव निरासात्—पुण० पु० पा०।

कल्पलता।

ला इति। समानं सामर्थ्यरूपं(१) शीलं येषां ते तथा। एवं तर्हि कुशूलस्थस्यापि स्यादित्यत आह(२)। सर्वत्र चेति॥

समर्थ एव क्षणे क्षित्यादिसमवधानमिति चेत्, तत् किमसमर्थे(३) सहकारिसमवधानमेव नास्ति(४), समवधाने सत्यपि वा तस्मान्न(५) कार्यजन्म(६)। नाद्यः, शिलाशकलादावपि क्षितिसलिलतेजःपवन(७)-योगदर्शनात्। न द्वितीयः, शिलाशकलादिव(८) कदाचित् सहकारिसाकल्यवतोपि(९) बीजादङ्कुरानुत्पत्तिप्रसङ्गात्(१०)।

दीधितिः।

समर्थ एवेति। तथा च न समानशीलत्वमिति भावः॥

कल्पलता।

समर्थासमर्थयोरेव सहकारिसमवधानासमवधाने इति नैकस्यैव तदधीने फलो(११)पधानानुपधाने इति कथमेकशीलत्वमित्याह। समर्थ एवेति॥

(१) समानसामर्थ्यरूपं-कलि० मु० पु० पा०।
(२) इत्यत आहेति। इत्याकारकग्रन्थम्, अतः, अनेन ग्रन्थेन, सार्वविभक्तिकस्तसिः, आहेत्यनेनान्वयः।
(३) मसमर्थक्षणे-पाठः। (४) न-पाठः।
(५) सत्यपि-न-वा तस्मात—पुण० पु० पा०। सत्यपि न तस्मात्-पाठः।
(६) जन्म वा-पाठः। (७) क्षितिपवनतेजःसं-पाठः।
(८) शकलादिवत्-पाठः। (९) साकल्यवतो-पाठः।
(१०) तथा च कस्यचिद्बीजस्य शिलाशकलवदसमर्थस्याप्यङ्कुरजननं स्यादिति भावः।
(११) धीनफलो-पुण० पु० पा०।

एवमपि स्यात्, को दोष इति चेत्, न तावदिद-मुपलब्धम् । आशङ्क्यत इति चेन्न(१), तत्समवधाने सत्यपि अकरणवत् तद्विरहे(२) करणमप्या(३)शङ्क्येत । आशङ्क्यतामिति चेत्, तर्हि बीजविरहेप्याशङ्क्येत, तथा च सति साध्वी(४) प्रत्यक्षानुपलम्भ(५)परिशुद्धिः(६) ।

दीधितिः ।

बीजजातीयस्य सहकारिसमवधाने सत्येव करणं सति क-रणमेवेति तावन्नियतान्वयव्यतिरेकाभ्यामवधारितम्, तत्र यद्येक-स्मिन्नंशे(७) आशङ्का स्यात् स्यादंशान्तरेपि, विपरीतनिश्चयस्या-किञ्चित्करत्वादित्याह, तत्समवधान इत्यादिना(८) । तच्छब्दः सह-कारिणः परामृशति ॥

दीधितिटिप्पणी ।

तत्समवधाने सतीत्यादिमूलेन एकत्र शङ्कायामन्यत्रापि तदापा-दनं निर्युक्तिकमत आह । बीजजातीयस्येति । तच्छ्याम् तत्समवधाने सतीत्यादौ तत्पदाभ्याम् । इदं च अव्यवहितपूर्वस्थशङ्काबोधा-पत्त्या व्याख्येयम् ॥

कल्पलता ।

एवमपीति । सहकारिसमवधानवतोप्यङ्कुरा-नुत्पत्तिः स्यादित्यर्थः । न तावदिति । क्षेत्रेपि तर्हि

(१) इति चेत्-पाठः ।
(२) तद्विरहेपि-पुण० पु० पा० ।
(३) करणमित्यप्या-पुण० पु० पा० ।
(४) तथा च साध्वी-पुण० पु० पा० ।
(५) नुपलब्धि-पाठः ।
(६) द्धिरिति-पाठः ।
(७) यद्येकांशे-पाठः ।
(८) तद्विरहेपि करणमित्याशङ्क्येतेतिप्रतिबन्दिमुखेन सूचितं शङ्काद्वये तुल्यप्रतिबन्धकसम-वधानं स्पष्टयति विवृतौ, बीजजातीयस्येत्यादिना( १८ पङ्क्तौ ) । सत्येव करणमित्यन्तावधारणं द्वि-तीयशङ्काया विरोधि, सति करणमेवेत्यवधारणं प्रथमशङ्कायाः । एकस्मिन्नंशे, सहकारिसमवहितस्याक-रणे । अंशान्तरे, तदसमवहितस्य करणे । अकिञ्चित्करत्वात्, भवताऽविरोधित्वोपगमात् ।-गदाधरः ।

कल्पलता।

कदाचिदङ्कुरो न स्यादिति भावः। आशङ्क्यत इति। त्वन्मते समर्थादपि कुशूलस्थादङ्कुरानुत्पत्तिश्चेत् तदा सहकारिसमवहितादपि तदनुत्प(१)त्तिः शङ्कास्पदं स्यादेवे(२)त्यर्थः। अनुभवमतिक्रम्यापि यदि शङ्का, तत्राह। तत्समवधान इति। आशङ्क्यतामिति। एतावतापि न क्षणिकत्वक्षतिरिति भावः। अनिबन्धना चेच्छङ्का, तदाऽऽह(३)। तर्हीति। तथा चाङ्कुरार्थिप्रवृत्तिर्नियमतो न स्यादिति भावः। तथा चेति। प्रत्यक्षानुपलम्भौ अन्वयव्यतिरेकौ, तत्परिशुद्धिः तदुपस्थितकार्यकारण(४)भावानिश्चयः, तथा च प्रवृत्तिनिवृत्त्योरभावे निरीहं(५) जगज्जायेतेति भावः॥

दीधितिः।

ननु नियतान्वयव्यतिरेकाभ्यां बीजजातीयस्याङ्कुरं प्रति सामर्थ्यमेवाव(६)धृतम्, तच्च न बीजत्वेन, समर्थस्य क्षेपायोगात् कुशूलस्थादेरपि(७) बीजादङ्कुरोत्पाद(८)प्रसङ्गात्, परं तु बीजत्वावान्तरेण कुर्वद्रूपत्वेन, समर्थानां च स्वकारणसामर्थ्याधीनः समाजनियमः प्रमाणबलादेव कल्प्यते, एकविरहेऽपरस्मात् कार्योत्पादे तस्याकारणत्वप्रसङ्गात्, अनुत्पादे च सामर्थ्यायोगात्, शिलादि-

दीधितिटिप्पणी।

मूले अवान्तरजातिविशेषमाश्रित्येत्यत्र हेतुर्नोक्तः, एवमेकविरहे इत्यपि नोक्तमतो न्यूनतापरिहारायाह। नन्विति। स्वमतेऽपि

(१) तदनुपप–कलि० मु० पु० पा०।
(२) स्यादि–कलि० मु० पु० पा०।
(३) तत्राह–पुण० पु० पा०।
(४) तदुपप्लवे कार्यकारण–पुण० मु० पा०।
(५) निर्बाधं–पाठः।
(६) सामर्थ्यमव–पुण० पु० पा०।
(७) कुशूलस्थादपि–पाठः।
(८) दङ्कुरोत्पत्ति–पाठः।

स्यादेतत्। न वीजादीनां(१) परस्परसमवधानवत्तामेव कार्यकरणमङ्गीकृत्या(२)शङ्क्यते येन समवधानानियमात(३) सर्वेषामेव(४) तज्जातीयानामेकरसतानिश्चयः(५) स्यात्। नापि यत्र तत्र(६) समर्थोत्पत्तिमङ्गीकृत्य, येन विकलेभ्योपि कदाचित् कार्यजन्म(७)सम्भावनायां प्रत्यक्षानुपलम्भविरोधः(८) स्यात्। किं नाम, बीजादिषु समवहितेष्व(९)वान्तरजातिविशेष(१०)माश्रित्या-

दीधितिः।

मिलितास्तु वीजविरहिणः क्षित्यादयो न समर्थाः कार्याजनकत्वा(११)दित्या(शयेना)शङ्कते। स्यादेतदिति। परस्परेति। एवकारेणातिशय(१२)नैरपेक्ष्यलाभः। आशङ्क्यते देश्यते, क्षणिकत्वमिति शेषः(१३)। एकरसत्वम् एकस्वभावत्वम्, एककार्यसामर्थ्यमिति यावत्(१४)। जातिभेदः कुर्वद्रूपत्वम्। एतदङ्गीका(१५)रस्वा-

दीधितिटिप्पणी।

परस्परसहकारिमतामेव कार्योत्पादाङ्गीकारादसङ्गतेराह। एवकारेणेति। अतिशयः कुर्वद्रूपत्वम्, तथा च कुर्वद्रूपत्वनिरपेक्षकार्यजनकत्वमङ्गीकृत्य नाशङ्क्यत इत्यर्थः। प्रकृते फक्किकैव क्रियते न शङ्क्यत आह। आशङ्क्यत इति। ननु कार्यव्यक्तिभेदनियामकतया

(१) स्यादेतत्। वीजादीनां न-पुण० पु० पा०।
(२) मङ्गीकृत्य-पुण० पु० पा०। अयमेव शङ्करमिश्रसम्मतः पाठः।
(३) समवधाननियमात्--कलि० मु० पु० पा०। (४) सर्वेषां-पुण० पु० पा०।
(५) मेकरसतानियमः-पुण० पु० पा०। (६) यत्र-पाठः। (७) जनन-पुण० पु० पा०।
(८) प्रत्यक्षानुपलब्धिविरोध इति शङ्करमिश्रसम्मतः पाठः।
(९) समवहितेष्वप्य-पाठः। (१०) जातिभेद-पुण० पु० पा०। अयमेव दीधितिकृत्सम्मतः।
(११) कार्याजनकत्वा-पुण० पु० पा०। (१२) तिशये-कलि० मु० पु० पा०।
(१३) क्षणिकत्वम्-पुण० पु० पा०। (१४) सामर्थ्यम्-पुण० पु० पा०।
(१५) त्वम्। तदङ्गीका-पाठः।

पि(१) कार्यजन्म सम्भाव्यत इति ॥

दीधितिः।

नुगताङ्कुरजातीयनियामकतया, कार्यव्यक्तिभेदस्य तथोत्पन्न-कारणव्यक्तिभेदादेवोपपत्तेः। जातिश्च नैयायिकानां विधिरूपा व्यावृत्तिरूपा परेषां(२) धर्मिणि वर्त्तमाना जन्यत्वजनकत्व-योरवच्छेदिका अनुगतव्यवहारादिनियामिका चेति। सम्भाव्यत इतीति। अङ्गीकृत्या(३)शङ्क्यत इत्यनुषज्यते। अङ्कुर-कारीणि बीजान्यङ्कुराकरणदशापन्नबीजावृत्तिजातिमन्ति न वा, तादृशबीजावृत्त्यङ्कुरजनकतावच्छेदकजातिमन्ति न वेत्या-दिकां कुर्वद्रूपत्वे विप्रतिपत्तिं वदन्ति। बीजवृत्तिजातित्वं प्रत्य-क्षत्वव्याप्यं न वेति तु(४) न वाच्यम्, कुशूलस्थबीजसाधार-णातीन्द्रियजातिसिद्धावपि कुर्वद्रूपत्वासिद्धेः॥

दीधितिटिप्पणी।

कथं नोक्तमत आह। कार्यव्यक्तिभेदस्येति। व्यावृत्तिरूपेति। अतद्व्यावृत्तिरूपा। अङ्कुरकारीणीत्यादि। अङ्कुराकरणदशापन्नं यत् बीजं तद-वृत्तीत्यर्थः। जातिपदं रूपादिना सिद्धसाधनवारणाय। गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमौदायेदम्। अन्यथा नैयायिकाभावकोटेरप्र-सिद्ध्यापत्तेः, लाघवेन बीजावृत्तिजातित्वस्यैवावच्छेदकत्वात्, न तु अङ्कुराकरणदशापन्नमन्तर्भाव्य, गौरवात्। तादृशजातेरवच्छेद-कत्वं न सिद्धमत आह। तादृशबीजेति। अङ्कुराकारिबीजेत्यर्थः। केषाञ्चिन्मतमाह। बीजवृत्तीति। अत्र विधिकोटिर्नैयायिकानाम्॥

कल्पलता।

स्यादेतदिति। पूर्वं कुर्वद्रूपत्वे साधकाभाव उक्तः, इदानीं विस्तरेण बाधकमभिधीयत इत्य(५)पौनरु-

(१) माश्रित्य-पाठः। (२) विधिरूपा परेषां व्यावृत्तिरूपा-पाठः।
(३) कृत्य-पा० २ पु०। (४) न वेति-पाठः।
(५) इति न—पुण० पु० पा०।

कल्पलता ।

त्वम् बीजं सहकारिसमवहितं सद(१)ङ्कुरं करोति, सहकारिसमवधानमेव कदा भविष्यतीति सन्देहे बीजानां सर्वेषां समानशीलता प्रसक्ता, अतस्तत्सन्देहं(२) निरस्यति । न बीजा(दी)नामिति । शङ्क्यत इति । कदा सहकारिसमवधानं स्यादिति सन्दिह्यत इत्यर्थः । एकरसता(३) बीजत्वेनैव सर्वेषां बीजानामङ्कुरकारणता । अ(४)ङ्गीकृत्येत्यनन्तरं शङ्क्यत इत्यनुषज्यते । प्रत्यक्षानुपलब्धिविरोधः गृहीतान्वयव्यतिरेकभङ्गः । किं नामेति । बीजत्वं वा कारणतावच्छेदकं कुर्वद्रूपत्वं वा तथेति सन्दिह्यते इत्यर्थः ॥

न(५), दृष्टसमवधानमात्रेणै(६)वोपपत्तौ तत्कल्पनायां प्रमाणाभावात(७), कल्पनागौरवप्रसङ्गप्रति(८)-

दीधितिः ।

बीजत्वेन सामर्थ्येपि सहकारिविरहादेव क्षेप उपपद्यत इत्याशयवान्निराकरोति, नेत्यादिना(९) । प्रमाणाभावा-

दीधितिटिप्पणी ।

मूले तत्कल्पनायां मानाभावादिति यदुक्तम्, तत्र समर्थस्य क्षेपानुपपत्तिरेव मानं दातुं पार्यते, अत एवाभावेपि एतदुपष्टम्भकीकृत-मित्यत आशयं पूरयति । बीजत्वेनेत्यादि । ननु अङ्कुराकरणदशापन्नबीजावृत्तीत्यादिविप्रतिपत्तिविषयाभावकोटिर्नैयायिकेन साध-नीया, तच्च प्रमाणाभावादिति हेतुना नायातम्, अनेन हेतुना तस्य

(१) तद-पुण० पु० पा० । (२) तं सन्देहं-पुण० पु० पा० ।
(३) रसतां-कलि० मु० पु० पा० । (४) कारणताम कलि० मु० पु० पा० ।
(५) नेति-पाठः । (६) समवधानेनै-पाठः ।
(७) ल्पनायां मानाभावात्—दीधितिटिप्पणीकृन्मतः पाठः । (८) प्रसङ्गपरा-पाठः ।
(९) नेति-पाठः ।

दीधितिः ।

दिति । परेषां प्रमाणाभावमात्रेणैव प्रमेयाभावा(१)वधारणम्, यद्वक्ष्यति, यो यदर्थमित्यादि(२) । पार(३)मार्थिकं बाधकमाह । कल्पनेति । तादृशजातितदभावान्यतरवत्त्वस्य तादृशजातितदभावान्यतरप्रकारकप्रमाविषयत्वस्य(४) वा साधकात् सत्त्वादेः क्लृप्तजातिबाधादक्लृप्त(५)कल्पना(६)गौरवप्रतिस-

दीधितिटिप्पणी ।

सिद्धिरेव निरसिता, न तु तदभावसिद्धिर्विहितेत्यत आह । परेषामिति । अत एव तैः प्रमाणाभावेन शशशृङ्गाभावसाधनात् सर्वकालावृत्तित्वरूपमलीकत्वं स्वीक्रियते, अस्माकं तु अभावप्रमाणसत्त्व एव प्रमेयाभावावधारणमित्यादि मन्तव्यम् । केचित्तु परेण प्रमाणत्वावच्छिन्नाभावो नाङ्गीक्रियते, अतः प्रमाणस्फूर्त्यभावो हेतूकर्तव्यः, स च न प्रमेयाभावसाधकः, अत आह । परेषामिति । एवं च प्रमाणाभावमात्रेण प्रमाणस्फूर्त्यभावमात्रेणेत्याहुः । तच्चिन्त्यम् । यो यदर्थमितीत्यस्य सहकारि(७)तद्विरहप्रयुक्तकरणाकरणेनैव तादृशजातेरन्यथासिद्धिरेव तदभावबोधिकेत्यर्थः । पारमार्थिकम् उभयमतसिद्धम्, नैयायिकैः प्रमाणाभावेन प्रमेयाभावानवधारणात् । पारमार्थिकत्वं प्रकाशयति । तादृशजातीत्यादि । तादृशजातिः अङ्कुराकरणदशापन्नबीजावृत्तिजातिः । जातितदभावयोरेकेन सम्बन्धेनावर्तमानत्वादन्यतरस्य नैकेन सम्बन्धेन साध्यत्वमत आह । तादृशजातिप्रकारकेति । ननु दृष्टसमवधानेत्याद्यारभ्य यावन्तो हेतवः प्रयुक्तास्तावतां(८) मध्ये अपरेषामेव (अग्रे) प्रत्येकं विवरणं

---

(१) भावमात्रा-पाठः । (२) मिति-पाठः । (३) त्यादि । परेषां पार-पाठः ।
(४) तादृशजातिप्रकारकप्रमाविषयत्वतदभावप्रकारकप्रमाविषयत्वान्यतरस्य-पा० २ पु० । अयमेव पाठष्टिप्पणीकृन्मतः । (५) बाधात् क्लृप्त-कलि० मु० पु० पा० ।
(६) कल्पन-पुण० पु० पा० ।
(७) यदर्थमितीति । सहकारि-इत्यादर्शपुस्तके पाठः ।
(८) प्रयुक्तास्तेषां-इत्यादर्शपुस्तके पाठः ।

हतत्वात्, अतीन्द्रियेन्द्रियादिविलोपप्रसङ्गात्, विकल्पा-

दीधितिः ।

न्धानसहकृतात् तदभावसिद्धिरिति भावः(१)। सम्मिश्रयैव चाग्रे बाधकद्वयविवरणम्। प्रमाणवतो गौरवस्याबाधकत्वात् प्रमाणाभावसहकृतं तद्बाधकत्वेनोपात्तमित्यपरे(२) । अतीन्द्रियेति । न च नेदमनिष्टं परेषामिति वाच्यम् । अपरिदृश्यमानगोलकादिव्यक्तिविलोपप्रसङ्गादित्यर्थात्(३)। न च विना गोलकं कथं रूपोप-

दीधितिटिप्पणी ।

कृतं, कथं नाऽऽद्यहेतुद्वयस्येत्यत आह । सम्मिश्रयैव चेति । तथा चोत्पत्तेरारभ्येत्यादिना एकत्रैव तदुभयविवरणं कृतमिति, तथाहीत्यारभ्य विरूपाः करोतीतिपर्यन्तं दृष्टसमवधानोपपत्तिर्दर्शिता, केन वा प्रमाणेनेति प्रमाणाभावविवरणम्, येनेत्यादि द्वितीयहेतुविवरणम् । मतान्तरमाह । प्रमाणवत इति । तथा चैतन्मते प्रमाणाभावात् कल्पनागौरवेत्याद्येक एव हेतुरिति भावः । उभयस्य मिलित्वा एकहेतुत्वे पञ्चम्यन्तद्वयासङ्गतिः, प्रमाणाभावमात्रस्यैव सम्यक्त्वादित्ययमस्वरसोऽपरे इत्यनेन सूचितः । न चेदमिति(४) । गोलकातिरिक्तेन्द्रियानङ्गीकारादिति भावः । अपरीति । येषां गोलकादि न दृश्यत इत्यर्थः, एवं आकाशादिविलोपप्रसङ्गः, तथा चातीन्द्रियपदेनापरिदृश्यमान उक्तः, इन्द्रियपदेन च गोलक उक्त इति भावः । विलोपप्रसङ्गे हेतुं भङ्ग्या उत्थापयति । न च वि-

(१) सत्त्वादेरिति (पृष्टे ८१ पङ्क्तौ ६)। हेतोरिति शेषः । क्लृप्तजातिबाधेति । तादृशबीजावृत्तिघटत्वधराणित्वादिजात्यभावनिश्चयेत्यर्थः । कुर्वद्रूपत्वस्य सन्देहदशायां तादृशजातिसामान्यबाधासम्भवात् क्लृप्तेत्युक्तम् । अन्यतरान्तर्गतैकविशेषतादृशजातिसामान्याभावनिश्चयं विना तदन्तर्गतापरविशेषस्य तादृशजात्यभावस्य विशिष्य निश्चयासम्भवान्मूलोक्ताक्लृप्तजातिकल्पनागौरवज्ञानोपादानम्, तथा च बीजनिष्ठजातौ तादृशबीजावृत्तित्वस्याक्लृप्तत्वरूपस्य गौरवस्य प्रतिसन्धानसहकृततादृशबीजावृत्तिक्लृप्तजातिबाधः क्लृप्ताक्लृप्तसाधारणतादृशजातिसामान्यबाधनिश्चयकार्यकारीति तदभावरूपापरविशेषासिद्धिर्निष्प्रत्यूहैवेति भावः ।—गदाधरः ।

(२) त्यपरः-कलि० मु० पु० पा० । तथा च सम्मिश्रय प्रमाणाभावगौरवयोर्विवरणं साधु सङ्गच्छत इत्यर्थः ।-गदाधरः ।

(३) प्रसङ्गात्-पाठः ।

(४) न च नेदमिति-इति पाठोपेक्षितः ।

दीधितिः।

लब्धिः, यतो गोलकस्य गोलकत्वेन न हेतुत्वम्, अपि तु कुर्वद्रूपत्वेन, तथा च कुर्व(१)द्रूपत्वशालिनस्तात्कालिककाया(२)देरेव तदुत्पत्तिसम्भवात्, शालिवृत्तेः कुर्वद्रूपत्वस्याशालाविव गोलकवृत्तेस्तस्यागोलकेपि सम्भवात्। अथैवं(३) कार्येण कारणानुमानं विलीयेतेति चेत्(४), किं न विलीयेत भवताम्(५)। तदुक्तम्, 'प्रत्यक्षानुपलम्भगोचरो न कार्ये प्रयोजक इति वदतो बौद्धस्य शिरस्येव(६) प्रहारः'-इति। इन्द्रियादीत्यतद्गुणसंविज्ञानो बहुव्रीहिरित्यन्ये(७)।

दीधितिटिप्पणी।

ना गोलकमिति। तात्कालिकेति। दर्शनादिकालीनेत्यर्थः। ननु गोलकवृत्तिकुर्वद्रूपत्वं यदि तात्कालिकार्थे वर्तते तदेवं स्यात्, न चैवमित्यत आह। शालिवृत्तेरिति। अथैवमिति। तात्कालिकयोग्यव्यक्तेरेव कार्योत्पत्तिसम्भवेन कार्यातीन्द्रियकारणं क्वापि न स्यादित्यर्थः, यदि च स्यात्तदा रूपोपलब्ध्याप्यतीन्द्रियमिन्द्रियमनुमीयेतेति भावः। प्रत्यक्षानुपलम्भः अन्वयव्यतिरेकः, तद्विषयो वीजत्वादिः।

(१) तथा च तत्कुर्व—पाठः। अयं गदाधरसम्मतः। (२) कार्या— [illegible] पा०।

(३) अथैवं वा—पाठः। (४) विलीयेतेति चेन्न, विलीयेत—कलि० [illegible] पा०।

(५) भवता–कलि० मु० पु० पा०। (६) स्येव—कलि० [illegible]।

(७) मूले अतीन्द्रिये(पृष्ठ ८२ पङ्क्तौ १)ति विशेषणं कार्यलिङ्गकानु [illegible] हेतुः। विवरणग्रन्थे, इदम् (पृष्ठ ८२ पङ्क्तौ ६) अतीन्द्रियेन्द्रियादेः प्रसञ्जित [illegible], परेषां [illegible] मिति, परैः प्रत्यक्षसिद्धगोलकादीनामेव कुर्वद्रूपत्वेन प्रत्यक्षहेतुताया [illegible] भावः। [illegible] कार इति क्वाचित्कः पाठः। अपरिदृश्यमानेति प्रत्यक्षप्रमाणागृही [illegible] रणम्, तथा च गोलकस्येन्द्रियग्रहणायोग्यत्वरूपातीन्द्रियत्वविरहे [illegible] भावः। [illegible] दिरूपकार्यैकप्रमाणगम्यानामिन्द्रियत्वेन परैरभ्युपगतानामिन्द्रिय [illegible] समुदायार्थः, गोलकमन्तरेणापि तात्कालिकात् कुर्वद्रूपत्ववतः [illegible] भिप्रेतहेतुं शङ्कोत्तराभ्यां स्पष्टयति, न चेत्यादिना। रूपो [illegible] कथन्ताविरहे हेतुर्यत इत्यादिः। तत्कुर्वद्रूपत्वेति। रूपो [illegible] त्तीति। रूपोपलब्ध्युत्पत्तीत्यर्थः। ननु कतिपयगो [illegible] रादिवृत्तित्वे गोलकविशेषत्वादिजात्या सङ्करप्रसङ्ग [illegible] दुर्वार एवेत्याह। शालिवृत्तेरिति। अशालौ, [illegible] स्यागोलकेपि स्वीकारे। कार्येण, धूमादिना। [illegible]

नुपपत्तेः, विशेषस्य विशेषं प्रति प्रयोजकत्वाच्चेति ।

---

दीधितिः ।

विकल्पानुपपत्तेः सङ्ग्राहकत्वप्रतिक्षेपकत्वविकल्पानुपपत्तेः । विशेषस्येति । बीजगतविशेषस्य बीजकार्यस्या(१)ङ्कुरस्य विशेषं प्रति प्रयोजकत्वं, न तु(२) बीजसामान्ये(३)ङ्कुरसामान्य(४)-

दीधितिटिप्पणी ।

अतीन्द्रियपदस्य यथाश्रुतार्थरक्षिणां मतमाह । इन्द्रियादीत्यादि । सङ्ग्राहकत्वेति । सङ्ग्राहकत्वप्रतिक्षेपकत्वयोर्यो विकल्प(५)स्तेन जातिविशेषस्यानुपपत्तिरित्यर्थः। यद्वा विकल्पः (विविधः) कल्पः, षष्ठीसमासः(६), अत एव मूले विकल्पमेव दर्शयिष्यति, स खल्विति । बीजगतविशेषस्येति प्रयोजकत्वान्वयि । एतावतापि न समीहितसिद्धिरित्यत आह । न त्विति । तथा च बीजगतविशेषाङ्गीकारेपि बीजाङ्कुर-

---

लीयेतेति । वन्ह्यादिवृत्तिधूमादिकुर्वद्रूपत्वस्यावन्हावपि सम्भवज्ञानेन वन्ह्यादिकं विना धूमाद्युत्पत्तावपि वन्ह्यादौ धूमादिहेतुत्वाभावप्रसङ्गासम्भवेन विपक्षबाधकविरहेण व्यभिचारशङ्काया अनिवृत्तेरिति भावः । किं न विलीयेत भवतामिति । कुर्वद्रूपत्वेन हेतुतावादिनां बौद्धानाम्, अन्वयव्यतिरेकग्रहविषयतावच्छेदकवन्हित्वादेर्धूमादिजनकतावच्छेदकत्वानुपगमेन धूमादिना वह्नित्वावच्छिन्नानुमानं विलीयेतेति भावः । उक्तम्, कुसुमाञ्जलौ । प्रत्यक्षानुपलम्भगोचर इति । कारणताग्राहकान्वयव्यतिरेकोपलम्भविषयतावच्छेदक इत्यर्थः, अपि तु कुर्वद्रूपत्वमिति शेषः । अतीन्द्रियपदार्थस्य यथाश्रुतार्थकत्वानुरोधिनामिन्द्रियादिपदस्य कार्यैकप्रमाणकपरमतसिद्धातीन्द्रियान्तरादृष्टादिपरत्ववादिनां मतमाह । इन्द्रियेति ।—गदाधरः ।

(१) कार्या—कलि० मु० पु० पा० । कार्यम्-पाठः । (२) न—कलि० मु० पु० पा० ।

(३) सामान्यस्या—कलि० मु० पु० पा० । (४) न्येङ्कुरमात्र—पुण० पु० पा० ।

(५) विकल्पः विरुद्धः कल्पः, क्लृप्तिः, वृत्तिरिति यावत्, विरुद्धा वृत्तिः, अनुपपत्तिः, तथा च सङ्ग्राहकत्वप्रतिक्षेपकत्वयोरनुपपत्तिरित्यर्थः ।

(६) तथाविधविकल्पयोरनुपपत्तिरिति षष्ठीसमासः कर्तव्य इत्यर्थः ।

दीधितिः।

प्रयोजकतायाः प्रतिक्षेपकत्वं(१) यत इत्यर्थः(२) ॥

दीधितिटिप्पणी।

योः न सामान्यकार्यकारणभावव्याहतिरित्यर्थः। यत इत्यनेन पञ्चम्यर्थस्यापि व्याख्यानं कृतम् ॥

कल्पलता।

दृष्टेति। अन्वयव्यतिरेकाविषयीभूते सति बीजत्वे तदन्यकल्पनायां न प्रमाणमित्यर्थः। तत्र कुर्वद्रूपत्वे विप्रतिपत्तयः। अङ्कुरकारणतावच्छेदकं(३) फलोपहितबीजमात्रवृत्ति न वा, बीजवृत्तिजातित्वं प्रत्यक्षविषयत्व(४)व्याप्यं न वा, अङ्कुरोपहितमात्रवृत्तिधर्मोऽङ्कुरकारणतावच्छेदको न वा। प्रमाणाभावादिति। योग्यानुपलब्धेर्योग्यव्यक्तिवृत्तिजात्यन्तराभाव एव सिद्धो यत इत्यर्थः। दोषान्तरमाह। कल्पनेति। बीजत्वेनैव प्रत्यक्षसिद्धेनाङ्कुरकारणतावच्छेदे सम्भवति तदर्थमतीन्द्रियजातिकल्पना न सम्भवतीत्यर्थः। दोषान्तरमाह। अतीन्द्रियेति। बाह्यालोकादेरेव कुर्वद्रूपात् साक्षात्कारोपपत्ताविन्द्रियकल्पनापि न स्यादित्यर्थः। दोषान्तरमाह। विकल्पेति। शालित्वादि-

(१) चेपकं—पाठः।

(२) विकल्पानुपपत्तेरिति मूलं स खलु जातिविशेषः शालित्वस्य सङ्ग्राहको वा स्यादित्यादिमूलानुसारेण व्याचष्टे। सङ्ग्राहकत्वेत्यादि (पृष्ठे ८४ पङ्क्तौ ३)। अङ्कुरकुर्वद्रूपत्वस्य शालित्वेन समं व्याप्यव्यापकभावो विरोधो वेतिपक्षद्वयस्यैवानुपपत्तेरित्यर्थः। विशेषं प्रतीत्यस्य विशेषमेव प्रतीत्यवधारणपरतया बीजगतविशेषस्याङ्कुरसामान्यप्रयोजकत्वव्यवच्छेदलाभाद्बीजसामान्यस्याङ्कुरसामान्यप्रयोजकताव्याघातकं न विशेषस्येति पर्यवसितमित्याशयेन तदर्थं स्पष्टयति। न त्विति।—गदाधरः।

(३) दकत्वं-कलि० मु० पु० पा०। (४) विषयता-पुण० पु० पा०।

कल्पलता ।

ना परापरभावादिविकल्पवज्जाति(१)विशेषस्यानुपपत्तेरित्यर्थः । दोषा(२)न्तरमाह । विशेषस्येति । बीजत्वसामान्यस्य क्वचित्प्रयोजकत्वमावश्यकं, तच्च निरूप्यमाणमङ्कुरं प्रत्येव स्यादित्यर्थः ॥

तथाहि, उत्पत्तेरारभ्य मुद्गरप्रहार(३)पर्यन्तं घटस्तावज्जात्यन्तरानाक्रान्त एवानुभूयमानः(४) क्रमवत्सहकारिवैचित्र्यात् कार्यकोटीः(५) सरूपा विरूपाः(६) करोति, तत्रैतावतैव(७) सर्वस्मिन् समञ्जसे अनुपलभ्यमानजातिकोटिकल्पना(८) केन प्रमाणेन केन वो(९)-

दीधितिः ।

जात्यन्तरेति । जातेर्योग्यव्यक्तिवृत्तितयैव योग्यत्वात् तदभावस्य सुग्रहत्वात्, (ए)तदतीन्द्रियत्वकल्पनायाश्चाप्रामाणिक(१०)त्वात् । एवकारबललभ्ये जात्यन्तरवत्त्वानुभवाभावे वा तात्पर्यम्, यद्वक्ष्यति, अनुपलभ्यमान(११)जातीति । केन

दीधितिटिप्पणी ।

जात्यन्तराभावः कथं प्रत्यक्ष इत्यत आह । जातेरिति । एवकारेति । अत्रैवकारेण जात्यन्तरेणानुभूयमानत्वाभावे सति जात्यन्तराभावेणानुभूयमानत्वं लब्धम्, तत्र च विशेषण एव तात्पर्यमिति भावः । यद्वक्ष्यतीति । तथा च तत्रापि जात्य(न्तरेणानु-

(१) जातिविकल्पेन —पाठः । विकल्पेन जाति–पुण० पु० पा० ।
(२) दूषणा-पुण० पु० पा० । (३) मुद्गरपात–पाठः ।
(४) जात्यन्तराक्रान्ततयाऽननुभूयमान इत्यर्थः । एतावता प्रमाणाभावो विवृतः ।–गदाधरः ।
(५) कर्मकोटीः–पाठः । (६) सरूपविरूपाः–पुण० पु० पा० ।
(७) करोति, तावत्यैव–पुण० पु० पा० । (८) कल्पनं–पुण० पु० पा० ।
(९) केन चो-पाठः ।
(१०) श्चाप्रमाण– पुण० पु० पा० । (११) अनुपलभ्य–पा० २ पु० ।

पयोगेन, येन (कल्पना)गौरवप्रसङ्गदोषो(१) न स्यात्(२)। यो यदर्थं कल्प्यते तस्यान्यथासिद्धिरेव(३) तस्या(४)भाव इति भवानेवाहेति।

दीधितिः।

वेति(५)। उपयोगस्यापि प्रमाणत्वात् गोबलीवर्दन्यायेन पृथगुपादानम्(६)॥

दीधितिटिप्पणी।

भूयमानत्वा)भाव एव दर्शित इति भावः॥

कल्पलता।

तत्राद्यं विवृणोति। उत्पत्तेरारभ्येति। जात्यन्तरानाक्रान्त इति। यदि तदाक्रान्तः(७) स्यात् तदा तथोपलभ्येत, (न चोपलभ्यते,) तस्मान्न जात्यन्तराक्रान्त

(१) कल्पनादोषप्रसङ्गो-पाठः। (२) न सिद्ध्येत्-पाठः।
(३) रेव हि-पुण० पु० पा०। (४) तद-पाठः।
(५) केन चेति—पा० २ पु०।

(६) जात्यन्तरानाक्रान्त एवानुभूयमान इत्यस्य यथाश्रुतस्य जात्यन्तरशून्यतयानुभूयमान इत्यर्थे तन्मते जातिरूपविशेषस्यापि तैरतीन्द्रियत्वोपगमात्तदभावस्य प्रत्यक्षानुपपत्तेरसङ्गतिरित्याशङ्कां परिहरति। जातेरिति (पृष्ठे ८६ पङ्क्तौ १२)। योग्यवृत्तितयैव योग्यत्वादिति। जातेर्योग्यत्वे योग्यव्यक्तिवृत्तिनामात्रस्य प्रयोजकत्वादित्यर्थः, बीजगतविशेषस्यायोग्यत्वासम्भवादित्यर्थः। तदभावस्य, शाल्यादिबीजत्वाव्यापकजात्यभावस्य। सुग्रहत्वादिति। प्रत्यक्षेण ग्रहीतुं शक्यत्वादित्यर्थः। ननु योग्यवृत्तित्वेपि कुर्वद्रूपत्वजातेस्तादात्म्येन प्रत्यक्षविरोधित्वकल्पनया तत्साधारणनिरुक्तरूपावच्छिन्नाभावस्य दुर्ग्रहत्वमुपपादनीयमित्यत आह। तदतीन्द्रियत्वकल्पनाया इति। तस्या इन्द्रियग्राह्यत्वविरोधिताकल्पनाया इत्यर्थः। एतद्ग्रन्थस्य प्रमाणाभावविवरणरूपतया जात्यन्तरानाक्रान्त एवेत्येवकारबललभ्ये जात्यन्तराक्रान्ततया अनुभूयमानत्वस्य व्यवच्छेदे तात्पर्यस्यावश्यकतया जात्यन्तरशून्यतया अनुभूयमानत्वाविवक्षामाह। जात्यन्तरेति। अग्रे जात्यन्तरस्यानुपलभ्यमानत्वमात्रोक्त्या मूलस्यायमेवार्थोभिप्रेत इत्याह। यद्वक्ष्यतीति। उपयोगेनेति मूलं अन्यथानुपपद्यमानस्य कार्यविशेषस्योपयोगितापरम्, तादृशकार्यमप्यनुमानप्रमाणान्तर्गतमिति प्रमाणसामान्यमभिधायोपयोगाभिधानं पुनरुक्तमित्याशङ्क्याह। उपयोगस्यापीति।—गदाधरः।

(७) क्रान्तं—पुण० पु० पा०।

कल्पलता ।

तृतीयं हेतुं विषदयति । दृष्टं चेति । दृष्टमिति जातिभेदविशेषणम्(१) । स्वीक्रियन्त इत्यनन्तरमनुमन्यामह इति शेषः । तदयमर्थः, अन्वयव्यतिरेकविषयीभूतबीजत्वतिरस्कारे स्वस्य भावो(२) धर्मः कुर्वद्रूपत्वं, तत्कल्पनयैव कार्योपपत्तौ दृष्टत्वात् सहकारिणः स्वीक्रि(३)यन्त इत्यनुमन्यामहे । इन्द्रियं न कल्पनीयम्(४), सहकारिण एव कुतश्चित् कुर्वद्रूपात् कार्योपप(५)त्तेरिति । आदिपदात् समनन्तरप्रत्ययादीनां ग्रहणम् । अत एवाह । मानाभावादिति । अन्यथानुपपत्तिरतीन्द्रियकल्पनायां मानम्, सहकारिण एव कस्यचित् कुर्वद्रूपत्वकल्पनायां सा नास्ती(६)त्यर्थः । गोलकादीनामपी(७)न्द्रियत्वे अदृष्टादिविशिष्टं तदतीन्द्रियमेव । अतद्गुणसंविज्ञानबहुव्रीहिर्वा ॥

---

विकल्पानुपपत्तेश्च । स खलु जातिविशेषः शालित्वसङ्ग्राहको(८) वा स्यात्, तत्प्रति(९)क्षेपको

---

दीधितिः ।

स इति । अङ्कुरसामान्यप्रयोजको बीजमात्रवृत्तिरित्यर्थः । शालित्वस्य(१०) सङ्ग्राहकः व्यापकः । प्रतिक्षे-

---

(१) दृष्टं चेति—कलि० मु० पु० पा० । (२) स्वभावो—पाठः ।
(३) स्वीक्री—कलि० मु० पु० पा० । (४) न सिद्ध्येव्—पाठः ।
(५) कार्योत्प-पुण० पु० पा० । (६) कुर्वद्रूपत्वकल्पनास्त्वि-पुण० पु० पा० ।
(७) दीनामि—पाठः । (८) शालित्वस्य सङ्ग्राहकः-पाठः । अयमेव दीधितिकृत्सम्मतः ।
(९) स्यात्, प्रति-पुण० पु० पा० । अयमेव दीधितिकृत्सम्मतः ।
(१०) त्वस्य जातिविशेषस्य—पुण० पु० पा० । अयं गदाधरसम्मतः । जातिविशेषस्य शालित्वस्य—पाठः ।

वा । आद्ये कुशूलस्थस्यापि शालेः कथं न तद्रूपत्वम(१) । द्वितीये त्वभिमतस्यापि शालेः कथं तद्रूपत्वम्(२)। एवं शालित्वमपि तस्य सङ्ग्राहकं प्रतिक्षेपकं वा । आद्येऽशालेरतत्त्वप्रसङ्गः(३) । द्वितीये

दीधितिः ।

पकः व्यापकीभूताभावप्रतियोगी । एकस्य सङ्ग्राहकत्वे प्रतिक्षेपकत्वे वा लब्धे निरस्ते वाऽन्यस्य सङ्ग्राह्यत्वं प्रतिक्षेप्यत्वं वा लभ्यते निरस्यते चे(४)ति न तदुभयं विकल्प्य निराकृतम् । न तद्रूप(५)त्वम् न तज्जातिविशेषवत्त्वम्(६), तथा च कृतं तेन(७), वीजत्वसम(८)शीलत्वात् । अभिमतस्य अङ्कुरकारिणः । तस्य जातिविशेषस्य । प्रतिक्षेपकं वेति । यद्यप्येकस्या(९) जातेरपरप्रतिक्षेपकत्वविधिनिषेधयोरपरस्या अपि तत्प्रतिक्षेप(१०)कत्वविधिनिषेधावर्थलब्धौ, तथापि स्पष्टत्वा(११)र्थं विकल्प्य क्रमा(१२)नुरोधेनै(१३)तदभिहितम् । अतत्त्वप्रसङ्गः

दीधितिटिप्पणी ।

ननु यथा सङ्ग्राहकत्वं विकल्प्य दूषितं, तथा सङ्ग्राह्यत्वं विकल्प्य कथं न दूषितमत आह । एकस्येति । यथासङ्ख्यमन्वयः । तदा को दोषोऽत आह । तथा चेति । यद्यपीत्यादि । एकस्य

(१) तद्रूपवत्त्वं-पाठः ।
(२) तद्रूपवत्त्वम्-पाठः ।
(३) रतत्त्वापत्तिः-पाठः ।
(४) स्यते वे—कलि० मु० पु० पा० । (५) द्रूव—पाठः ।
(६) वत्त्वामित्यर्थः—पा० २ पु० । (७) तथा च तेन कृतं—पा० २ पु० ।
(८) समान—पाठः । अयं गदाधरसम्मतः ।
(९) स्या एव—पाठः । (१०) तत्क्षेप—पा० २ पु० ।
(११) स्पष्टा—पुग० पु० पा० । (१२) विकल्पक्रमा—पुग० पु० पा० । अन्यत्रापि ।
(१३) नैव—पा० २ पु० ।

तु शालेरेवा(१)तत्त्वप्रसङ्गः(२) ।

दीधितिः ।

**तज्जातिविशेषशून्यत्वप्रसङ्गः(३) ॥**

दीधितिटिप्पणी ।

**सङ्ग्राहकत्वविधिनिषेधेऽपरस्यापि तथात्वं (न) लभ्यत इति प्रतिक्षेपकत्वमात्रस्यैव दर्शितम् ॥**

( १ ) शालेर—पाठः । ( २ ) तत्त्वापत्तिरिति शङ्करमिश्रसम्मतः पाठः ।

( ३ ) विलक्षणशालियवाङ्कुरादिविशेषप्रयोजकावान्तरकुर्वद्रूपत्वानां शालित्वादिव्याप्यतायां बाधकासम्भवात् स इति व्याचष्टे । अङ्कुरसामान्येति । ( पृष्ठे ८९ पङ्क्तौ १९ ) जातिविशेष इत्यस्य व्याख्या, बीजमात्रवृत्तिरिति । शालित्वस्योपाधित्वे वक्ष्यमाणजातिसङ्करासङ्गतेस्तस्य जातित्वमाह । जातिविशेषस्येति । सङ्ग्राहकत्वस्य सामानाधिकरण्यरूपत्वे तत्पक्षे कुशूलस्थस्य शालेः कुर्वद्रूपत्वाभावकथन्ताया असङ्गतेस्तस्य व्यापकत्वरूपतामाह । व्यापक इति । तत्प्रतिक्षेपकत्वस्य तत्समानाधिकरणाभावप्रतियोगितारूपत्वे तत्पक्षे सहकारिसमवहितशालेः कुर्वद्रूपत्वे कथन्ताया असङ्गतेराह । व्यापकीभूतेति । ननु कुर्वद्रूपत्वस्य शालित्वसङ्ग्राहकत्वप्रतिक्षेपकत्वे एव विकल्प्य दूषिते, न तु तत्सङ्ग्राह्यत्वप्रतिक्षेप्यत्वे, एवं शालित्वस्यापि कुर्वद्रूपत्वसङ्ग्राहकत्वप्रतिक्षेपकत्वे विकल्प्य दूषिते, न तु तत्सङ्ग्राह्यत्वप्रतिक्षेप्यत्वे इति न्यूनत्वमिति शङ्कां निराकरोति । एकस्येति । शालित्वकुर्वद्रूपत्वयोरेकतरस्यापरसङ्ग्राहकत्वे लब्धे अपरस्य तत्सङ्ग्राह्यत्वं लभ्यते, एवमेकतरस्यापरप्रतिक्षेपकत्वे लब्धे अपरस्य तत्प्रतिक्षेप्यत्वं लभ्यते, एवमेकस्यापरसङ्ग्राहकत्वे प्रतिक्षेपकत्वे च निराकृते अपरस्य तत्सङ्ग्राह्यत्वप्रतिक्षेप्यत्वे निराकृते भवत इति विकल्प्य तयोः परस्परसङ्ग्राहकत्वप्रतिक्षेपकत्वनिराकरणादेवार्थतः परस्परसङ्ग्राह्यत्वप्रतिक्षेप्यत्वनिराकरणसम्भवान्न तदुभयं विकल्प्य निराकृतमित्यर्थः । स जातिविशेष इत्यस्य प्रक्रान्तत्वात् कुशूलस्थशालेर्न कथं तद्रूपत्वमित्यतस्तादृशशालेः कथं तज्जातिरूपत्वाभाव इत्यर्थलाभे असङ्गतिरतः स जातिविशेषो रूपं धर्मो यस्य स तद्रूप इतिबहुव्रीहिसमासाभिप्रायेण तद्रूपत्वमिति व्याचष्टे । न तज्जातिविशेषवत्त्वमिति । अस्तु कुशूलस्थबीजस्यापि तद्रूपत्वमित्यत आह । तथा चेति । सतीति शेषः । कृतं तेनेति । अलं तज्जातिस्वीकारेणेत्यर्थः । बीजत्वसमानशीलत्वादिति । अकारिसाधारणत्वादित्यर्थः, तथा च तेन रूपेण हेतुत्वेपि सहकारिविरहस्य कार्याभावप्रयोजकताया आवश्यकत्वाद्बीजत्वेनापि हेतुतासम्भव इति भावः । अभिमतस्येत्यस्य व्याख्या, अङ्कुरकारिण इति । तस्येति मूलस्य व्याख्या, जातिविशेषस्येति । ननु कुर्वद्रूपत्वस्य शालित्वविरुद्धत्वरूपतत्प्रतिक्षेपकत्वस्य निराकृतत्वादेव शालित्वे तद्विरुद्धत्वं निराकृतं भवति, स्वं यदविरुद्धं तस्य स्वविरुद्धत्वाप्रसक्तेरिति शालित्वमपि तस्य सङ्ग्राहकं प्रतिक्षेपकं वेति विकल्प्य दूषणाभिधानमर्थपौनरुक्त्यग्रस्तमित्याशङ्कते । यद्यपीति । अतत्त्वप्रसङ्गेत्यस्य न सः असः, तस्य भावोऽतत्त्वमिति व्युत्पत्त्या प्रसक्तस्य तज्जातित्वाभावप्रसङ्गार्थकत्वाभिमानस्य निराकरणाय नास्ति स जातिविशेषो यत्रेति बहुव्रीहिणाऽतच्छब्दो जातिविशेषशून्यार्थकस्तत्त्वमतत्त्वमित्यर्थकतां स्फुटयति । तज्जातिविशेषेति ।—गदाधरः ।

कल्पलता ।

चतुर्थं दूषयति(१)। विकल्पेति । त्व(२)दभ्युपगतानां वि(विधानां)कल्पनानामनुपपत्तेरित्यर्थः। शालित्वसङ्ग्राहकः शालित्वव्यापकः । तत्प्रति(३)क्षेपकः तद्विरोधी । कथमिति । तत्राप्यङ्कुरकुर्वद्रूपत्वस्य सत्त्वादित्यर्थः । तद्रूपत्वमिति । कुर्वद्रूपत्वमित्यर्थः । परस्परविरोधादिति भावः(४) । एवमिति । यद्यपि परस्परप्रतिक्षेपकत्वं विकल्पितमेव, तथापि शालित्वं पुरस्कृत्य विकल्प्यत इत्य(५)पौनरुक्त्यम् । आद्य इति(६) । अतत्त्वापत्तिरि(७)ति । (८) शालित्वस्य(९) कुर्वद्रूपत्वव्यापकत्वे यवादीनामङ्कुरकारित्वं न स्यादित्यर्थः । (अतत्त्वापत्तिरिति । अङ्कुराकुर्वद्रूपत्वापत्तिरित्यर्थः)(१०) ॥

न च नोभयमपीति वाच्यम् । विरोधाविरोधयोः

दीधितिः ।

नोभयमपीति । न सङ्ग्राहकं नापि प्रतिक्षेपकमित्यर्थः । विरोधाविरोधौ सहानवस्थानावस्थाने, तथा च वि-

दीधितिटिप्पणी ।

उभयत्वावच्छिन्नाभावभ्रमनिरासायाह । नोभयमपीति । ननु तदभावव्याप्यत्व(११)रूपविरोधतत्सामानाधिकरण्यरूपाविरोधयोर्भिन्नः प्रकार आकाशादावेवास्तीत्यत आह । विरोधाविरोधाविति । ननु

(१) चतुर्थमिति क्रियाविशेषणम्, चतुर्थदूषणमाहेत्यर्थः ।
(२) विकल्पेति । त—पुण० पु० पा० । (३) व्यापकः । प्रति—पुण० पु० पा० ।
(४) दित्यर्थः—पुण० पु० पा० । (५) इति न—पाठः ।
(६) आद्य इति नास्ति क्वचित् । (७) अतत्त्वप्रसङ्ग इ—पुण० पु० पा० ।
(८) अतत्त्वापत्तिरिति । अङ्कुराकुर्वद्रूपत्वापत्तिरित्यर्थः । द्वितीय इति ।—कलि० मु० पु० पा० । (९) शालित्वं—पाठः । (१०)( ) इति चिन्हितो ग्रन्थः कलि० मु० पु० नास्ति ।
(११) व्यापकत्व—इत्यादर्शपुस्तके पाठः ।

दीधितिः।

रोधे प्रतिक्षेप्यप्रतिक्षेपकभावोऽविरोधे चावश्यं सङ्ग्राह्यसङ्ग्राहकभावः, लाघवेन सामान्यत एव मिथोऽव्यभिचारिजात्योः सामानाधिकरण्यविरहस्य समानाधिकरणजात्योश्च मिथोऽव्यभिचार(१)विरहस्य विशेषतश्च तज्जातिसमानाधिकरणाभाव(२)-प्रतियोगिन्यास्तदभावसमानाधिकरणायाश्च(३) जातेस्तत्सामानाधिकरण्याभावस्य तज्जातिसमानाधिकरणाभावप्रतियोगितत्समानाधिकरणजातेस्तदभाव(४)सामानाधिकरण्याभावस्य तादृशसमानाधिकरणधर्मस्य वा तदभावसमानाधिकरण(५)-जातित्वाभावस्य(६) तत्समानशील(७)नियमानां चावधारणा-

दीधितिटिप्पणी।

अविरोधे कथं सङ्ग्राह्यसङ्ग्राहकभावः, भूतत्वमूर्तत्वयोस्तथाभावादतो जातित्वविशेषणदानेनाह। लाघवेनेति। निखिलषष्ठ्यन्तस्यावधारणादित्यनेनान्वयः, आद्ये प्रतिक्षेप्यप्रतिक्षेपकभावप्रदर्शनं, द्वितीये सङ्ग्राह्यसङ्ग्राहकभावप्रदर्शनम्, एवं विशेषत इत्यत्रापि बोध्यम्; लाघवेनेति सर्वत्र हेतुः, भवता गोत्वाश्वत्वादौ तथावधारणेन कस्याश्चिज्जातिसमानाधिकरणाभावप्रतियोगिन्यास्तदभावसमानाधिकरणजातेस्तत्सामानाधिकरण्याभावः कल्पनीयः, तादृश्याः कस्याश्चित् तत्सामानाधिकरण्यं कल्पनीयं, मया पुनस्तादृशजातित्वावच्छेदेन तत्सामानाधिकरण्याभावमात्रं कल्प्यते, ममैव कल्पनालाघवमित्यर्थः। ननु यादृशजातेर्व्याप्यजातिर्नास्ति, तत्र जातिसाङ्कर्यं न बाधकमायातमित्यत आह। तादृशसमानाधिकरणेति। तज्जातिसमानाधिकरणाभावप्रतियोगितत्समानाधिकरणस्येत्यर्थः। तत्समशीलानामिति। तादृशसमानाधिकरणतदभावसमानाधिकरणध-

(१) व्यभिचारि—पा० २ पु०।

(२) धिकरणात्यन्ताभाव—पाठः। (३) याश्च—कलि० मु० पु० पा०।

(४) तदभावा—कलि० मु० पु० पा०। (५) धिकरणस्य—पाठः।

(६) भावस्यैव—कलि० मु० पु० पा०।

(७) तत्समशीलानां—इति पाठष्टिप्पणीकृन्मतः।

दीधितिः ।

दिति भावः(१) । अथैवं मृत्पाषाणसुवर्णादिघटेषु कथं घटत्व-

दीधितिटिप्पणी ।

मस्य जातित्वाभाव इत्यादीनामित्यर्थः । एवम् जातिसङ्करस्य दो-

(१) मूले, विरोधाविरोधयोः प्रकारान्तराभावादिति । ( पृष्ठे ९४ पङ्क्तौ १४ ) विरोधाविरोधोभयविरोधिरूपान्तराभावादित्यर्थः, विरोधस्याविरोधस्य च विरहिणोऽसम्भवादिति यावत् । अत्र यदि विरोधस्तदभावव्याप्यत्वम्, अविरोधः सहावस्थायित्वमिति विवक्ष्यते, तदा तदुभयमवृत्तावेव नास्तीति प्रकारान्तराभावादित्यसङ्गतमत उभयोर्भावाभावरूपतामाह । विरोधाविरोधाविति । विरोधः तदधिकरणावृत्तित्वम्, अविरोधस्तदधिकरणवृत्तित्वमित्यर्थः । यद्यपि तयोस्तदभावव्याप्यत्वतदभावाव्याप्यत्वरूपत्वेपि प्रकारान्तराभावादिति सङ्गच्छते, तथापि गुरुशरीरतया तयोरुपेक्षितमिति ध्येयम् । ननु विरोधाविरोधयोः प्रकारान्तरासम्भवेपि सङ्ग्राहकत्वप्रतिक्षेपकत्वयोः प्रकारान्तरं सम्भवत्येव, भूतत्वमूर्तत्वादौ तदभावादित्यसङ्गतिमाशङ्क्य विरोधानङ्गीकारेऽविरोधोपगम आवश्यक इति जात्योरविरोधेऽवश्यं सङ्ग्राह्यसङ्ग्राहकभाव इति भावं स्पष्टयति । तथा चेति । ननु व्याप्यव्यापकभावविरहेपि भूतत्वमूर्तत्वयोरिव जात्योरपि सामानाधिकरण्यरूपोऽविरोधः स्वीकरणीय इत्याशङ्कां निराकरोति । लाघवेनेति । मिथोव्यभिचारीति । जातिमात्रस्य स्वव्यभिचारिस्वनिष्ठव्यभिचारप्रतियोगिजातिसामानाधिकरण्याभावस्येत्यर्थः, सामान्यतोऽवधारणादित्यनेन सम्बध्यते । एतावता शालित्वादौ जातित्वेन हेतुना स्वव्यभिचारिस्वाव्यापकजातिसामान्यसामानाधिकरण्याभावसिद्धौ अर्थतस्तत्समानाधिकरणतादृशकुर्वद्रूपत्वजातिनिराकरणनिर्वाहः । न च जातित्वरूपहेतुमत्यां सत्तायां स्वव्यभिचारिजात्यप्रसिद्ध्या तद्घटितसाध्यवत्त्वानिर्वाहः, स्वत्वाननुगमात् सामान्यनियमानिर्वाहश्चेति वाच्यम् । स्वव्यभिचारिस्वाव्यापकजातिसमानाधिकरणं यद्यत् स्वं तद्भेदकूटस्य साध्यतोपगमेन सामञ्जस्यात्, तादृशस्वपदार्थस्य घटपटसंयोगादिव्यक्तीनामेव प्रसिद्धत्वात् । व्याप्यव्यापकभावापन्नं यदुभयं तदवृत्तिजातिमात्रवृत्तिद्वित्वस्याधेयतानवच्छेदकत्वनियमे वा तात्पर्यम्, स्वाश्रयस्वाश्रयव्यापकोभयवृत्ति यद्यत् तदन्यत्वरूपं द्वित्वविशेषणमवृत्त्यन्तार्थः, तादृशद्वित्वत्वेन हेतुना तादृशद्वित्वत्वरूपपक्षतावच्छेदकावच्छेदेनाधेयतानवच्छेदकत्वसाधने सङ्कीर्णजातिनिराकरणं स्फुटमेव, सङ्कीर्णजातिद्वयसत्त्वे तद्वृत्तिद्वित्वस्याधेयतानवच्छेदकत्वव्याघातात् । मिथोव्यभिचारिजात्योः सामानाधिकरण्यविरहनियमवत् मिथःसमानाधिकरणजात्योर्मिथोव्यभिचाराभावनियमादपि सङ्कीर्णजातिखण्डननिर्वाहात्तादृशनियमावधारणमप्याह । समानाधिकरणेति । आधेयतावच्छेदकजातिपर्याप्तद्वित्वे मिथोव्यभिचारिद्वयापर्याप्तत्वस्यावधारणादित्यर्थः । मिथोव्यभिचारिद्वयापर्याप्तत्वं च स्वाश्रयव्यापकावृत्ति यद्यत्स्वं तदन्यत्वम् । व्यापकत्वं भेदगर्भम् । सामानाधिकरण्यसम्बन्धेन प्रतियोगिद्वयविशिष्टो योऽत्यन्ताभावस्तत्प्रतियोगितानवच्छेदकत्वं वा । शालित्वादिजातिं विशिष्य निवेश्य तद्व्यापकतद्व्यभिचारिजातित्वादेस्तत्सामानाधिकरण्याभावादिनियमकल्पनयापि शालित्वादिसङ्कीर्णकुर्वद्रूपत्वनिराकरणसम्भवात्तादृशनियमानपि दर्शयति । विशेषत इति । व्याप्यदल एव तत्सामानाधिकरण्यं प्रवेश्य नियमप्रविष्टव्यभिचारस्याभावे व्यापकत्वावधारणाद्व्याप्यादीशी जातित्वमप्रवेश्य व्यापकाभावप्रतियोगिशरीरे तन्निवेश्य नियमकल्पनयापि समीहितनिर्वाहाच तान्नि-

दीधितिः।

मेका जातिः। न च संस्थानविशेष(१)वृत्त्येव घटत्वं, परम्परासम्बन्धेन च(२) रूपादि(३)सामानाधिकरण्यबुद्धिः(४),तादृशसंस्थानवत्त्वमुपाधिर्वा घटत्वमिति वाच्यम्। तत्राप्यन्यतरकर्मजत्वादिना साङ्कर्येण एकजात्यसम्भवात्। गुणगतजातौ (तु)(५) न साङ्कर्यमिति तु निर्बीजम्। अत्राहुः। सुवर्णत्वादिव्याप्यं नानैव घटत्वम्, घटपदमपि नानार्थमेव, अनुगतव्यवहारस्तु संस्थानवैजात्याग्रहेणैकजातीयसंस्थानग्रहानिबन्धनः, सर्वजनीनानुगतप्रतीतिसिद्धायास्तादृशजातेर्व्याप्यं भिन्नमेवान्यतरकर्मजत्वादिकम्, बाधकबलेन जन्यतावच्छेदकभेदेऽप्यदोषात्, अन्यतरकर्मजत्वादिजात्यनङ्गीकाराद्वा(६)। अपरे तु(७) प्रतिनियतपरस्परविरुद्ध-

दीधितिटिप्पणी।

षत्वे। साक्षात्सम्बन्धेन बुद्ध्युपपादनायाह। उपाधिर्वेति। तत्रापीति। संस्थानस्यावयवसंयोगात्मकत्वादिति भावः। प्राचीनभाषां दूरीकरोति। गुणगतेति। संस्थानेति। संस्थाने वैजात्याग्रहनिबन्धनं यदेकजातीयसंस्थानवत्त्वज्ञानं तन्निबन्धन इत्यर्थः। सर्वजनीनेति। तथा च एकजातीयसंस्थानवत्त्वमेव वास्तवमस्तीति भावः। यद्वा अनेन ग्रन्थेन संस्थानवृत्त्येव घटत्वमिति विवक्षितं, जातिसङ्करोद्धाराय पुनरिदमुक्तम्,अन्यतरकर्मजत्वादीति। न च कर्मजत्वादिमा-

---

यमद्वयमपि दर्शितम्। तत्समानशीलनियमानामिति। तज्जातिसमानाधिकरणतदभावसमानाधिकरणजातेस्तज्जातिव्यापकत्वमित्यादिनियमानामित्यर्थः। यत्र सङ्करेण जातिद्वयमेव न सिद्ध्यति, यथा भूतत्वविभुत्वादिकं, तत्रोक्तसामान्यनियम एव मूलम्।—गदाधरः।

(१) संस्थान—पाठः। अयमेव गदाधरसम्मतः।

(२) सम्बन्धेन—कलि० मु० पु० पा०। (३) रूपादिना—पा० २ पु०।

(४) घटत्वे रूपादिसामानाधिकरण्यबुद्धिरित्यर्थः। (५) जातौ च—पाठः।

(६) एवमिति।(पृष्ठे९४ पङ्क्तौ२) सङ्करस्य जातित्वबाधकत्व इत्यर्थः। कथं घटत्वमेका जातिः, घटपदप्रवृत्तिनिमित्तजातेः कथमैक्यमित्यर्थः, मृत्तिकात्वादिना सङ्करादिति भावः। न च मार्दे एव घटे घटत्वम्, अन्यत्र च घटव्यवहारस्तु तज्जातीयसंस्थानवत्त्वाद्गौण एवेति वाच्यम्। विनिगमकविरहात्। संस्थानवृत्त्येवेति। घटारम्भकविलक्षणावयवसंयोगवृत्त्येवेत्यर्थः, एवकारेण द्रव्यवृत्तित्वव्यवच्छेदः।

(७) अयं पाठष्टिप्पणीकृन्मतः। द्वा। परे तु—पाठः। अयं गदाधरसम्मतः।

सामानाधिकरण्यप्रतीतिरित्यत नन्वेवं कथं नीलो महान् घटश्चलतीत्याकारा घटत्वे रूपपरिमाणचलनादि आह । परम्परासम्बन्धेनेति । घटे तादृशजातेः स्वाश्रयसमवायिसमवेतत्वरूपपरम्परासम्बन्धसत्त्वे- नेत्यर्थः । तादृशपरम्परायाः सम्बन्धत्वमसहमानमाह । तादृशेति । जातिविशेषवदित्यर्थः । संस्थान- यत्त्वम्, संस्थानसमानाधिकरणद्रव्यत्वम् । अन्यतरकर्मत्वादिना क्रियाहेतुत्वे मानाभावादाह, आदीति, कर्मसामान्यजन्यतावच्छेदकपरिग्राहकम्, कपालिकाकपालसंयोगजकपालद्वयसंयोगा- दपि घटोत्पत्त्या तत्संयोगे कर्मजन्यतावच्छेदकजातिविरहेण घटत्वस्य च व्यवहारानुरोधात् स्वीकरणीयत्वेन तयोः सङ्करो बोध्यः । न च संयोगजः संयोगो न द्रव्यारम्भकः, अपि तु कर्मज एव, परमाणुद्वये संयोगजसंयोगासम्भवेन कर्मजतत्संयोगस्यैव द्व्यणुकारम्भकतया विपरीतकल्पनाया असम्भवादिति वाच्यम् । यत्र कपालिकासंयुक्तकपालिकायां कपालिकान्तरसंयोगात् कपालान्तरो- त्पत्तिस्तत्र कपालयोः कर्मजन्यसंयोगासम्भवेन तत्र घटानुभवस्य दुरपन्हवत्वेन संयोगजसंयोग- स्यापि द्रव्यारम्भकतायां दुर्वारत्वात् । ननु गुणगतजातौ सङ्करो न बाधकः, अपि तु द्रव्यगत- जातावेवेति संस्थानवृत्तिघटत्वस्य कर्मजत्वादिना सङ्करेपि न जातित्वानुपपत्तिरित्यत आह । गुणेति । साङ्कर्यमिति । बाधकमिति शेषः । इति चिति । एतादृशविशेषस्त्वित्यर्थः । शङ्कर- मिश्रमतानुसारेण सिद्धान्तं सङ्गमयति । अत्राहुरिति । नानैव घटत्वम्, घटपदप्रवृत्तिनिमित्तं भिन्नभिन्नमेवेत्यर्थः, तथा च सुवर्णत्वादिना न सङ्करः, समानाधिकरणजात्योर्व्याप्यव्यापकभावा- दिति भावः । एवं सति घटपदस्य नानार्थत्वापत्तिरित्यत्रेष्टापत्तिमाह । घटपदमपीति । ननु घटपदस्य नानार्थत्वे मार्द्दपाषाणादिघटेषु इमौ घटौ एते घटा इत्याद्येकघटपदेन व्यवहारानु- पपत्तिः, मार्द्दपाषाणादिनिष्ठद्वित्वाद्यवच्छिन्ने एकजात्यवच्छिन्नाभेदस्य ततः प्रतीतेः, तस्य च बाधादित्यत आह । अनुगतेति । संस्थानवैजात्याग्रहेण एकजातीयसंस्थानग्रहनिबन्धन इति । संस्थानव्यक्तीनां भेदेपि द्वित्वावच्छिन्न एकजातीयसंस्थानवदभेदसत्त्वेन तदभेदपर एव तादृशो व्यवहारः, यत्र एकः कर्मजसंयोगारभ्योऽपरश्च संयोगजसंयोगारभ्यस्तत्र संस्थानगतजात्योः सङ्करभयेन भेदेपि संस्थानवैजात्याग्रहात् संस्थानयोरेकजातीयत्वभ्रमेणाप्रमाणरूप एव तादृशो व्यवहार इत्यर्थः, मार्द्दपाषाणादिघटेष्वयं घटोऽयं घट इति व्यवहारस्य च नानुपपत्तिप्रसक्तिः, घटपदस्य नानार्थतयैव तदुपपत्तेः । वस्तुतोऽयं घटोऽयं घट इति व्यवहारस्य भिन्नधर्म- परत्वे अयं घटोऽयमपि पट इत्यपि व्यवहारः स्यादित्याशङ्क्यानुगतेत्यादिना समाहितम् । संस्थानगतघटत्वाभ्युपगमेन समाध्यन्तरमाह । सर्वजनीनेति । प्रतीतीत्युपलक्षणम्, व्यवहार- स्याप्यनुगतघटत्वसाधकत्वं बोध्यम् । भिन्नमेवेति । घटानारम्भकान्यतरकर्मादिजन्यसंयोगादि- वृत्तितज्जन्यतावच्छेदकजातितोऽन्यदेवेत्यर्थः, एतच्च व्याप्यत्वनिर्वाहकतयोक्तम् । भिन्नत्वकल्प- नाबीजमाह । बाधकबलेनेति । घटपदप्रवृत्तिनिमित्तजातेस्तारत्वादेरिवानुगतानतिप्रसक्तरूपाभावे- नानुगतप्रत्ययानुरोधादेकत्वस्यावश्यकतया प्रसक्तजातिसङ्कररूपबाधकबलेनेत्यर्थः । ननु कर्मा- दिजन्यतावच्छेदकजातेरननुगमे कथं तज्जन्यतावच्छेदकत्वमत आह । जन्यतावच्छेदकभेदेपीति । अदोषादिति । कार्यकारणभावबाधकव्यभिचारादिदोषविरहादित्यर्थः, अवच्छेदकभेदे कार्यकार- णभावभेदेन गौरवस्य गत्यन्तरविरहेणादोषत्वादिति भावः । कर्मजन्यतावच्छेदकजातिमनभ्यु- पगम्य जातिसङ्करमुद्धरति । अन्यतरेति । न चान्यतरकर्मत्वादिना विशेषरूपेण कर्मणो हेतु- त्वस्य निर्युक्तिकत्वे कर्मसामान्यहेतुताया आवश्यकत्वात् तज्जन्यतावच्छेदकजातेरावश्यकतेति तया सह घटत्वस्य सङ्करो दुर्वार एवेति वाच्यम् । जातिस्वीकारेप्युक्तरदेशे व्यभिचारेण स्वा-

दीधितिः ।

संस्थानादि(१)व्यङ्ग्यानां मिथोविरुद्धसामग्रीप्रयोज्यानां(२) जातीनां व्यञ्जकसामग्रीसङ्करासम्भवेन(३) सङ्करो नेष्यते, न पुनः प्रमाणे सत्यपि परासाम्, अत एवानुद्भूतरूपादिवादिनां शुक्लपीतशीतोष्णादिसाधारणं प्रत्यक्षत्वप्रयोजकमेक(४)मुद्भूतत्वम्, अनुद्भूतत्वं च(५) न जातिः,मानाभावात्, शब्दसुखादिव्यावृ-

दीधितिटिप्पणी ।

दाय सङ्कर इति वाच्यम् । तादृशजातेः कर्मजत्वव्याप्यत्वात् । जातिसङ्करं दूषयति । अपरे त्विति । परासाम् जातीनाम् । अनुद्भूतत्वस्य जातित्वमङ्गीकृत्य तादृशजातीनामभावकूट एव प्रत्यक्षत्वप्रयोजकः, न तूद्भूतत्वं जातिरिति ये वदन्ति तेषां मतं दूषयति । अत एवेति । मानाभावादिति । उद्भूतत्ववत् कारणतावच्छेदकत्वाद्यभावात् । नन्वस्म-

व्यवहितोत्तारत्वस्वसामानाधिकरण्योभयसम्बन्धेन क्रियाविशिष्टत्वं कार्यतावच्छेदके निवेश्य उत्तरदेशस्य कार्यतावच्छेदकविशिष्टकार्यानधिकरणत्वेन स्वाव्यवहितप्राक्क्षणावच्छिन्नक्रियाविशिष्टसमवायस्य कार्यतावच्छेदकसम्बन्धत्वमुपगम्य वा व्यभिचारवारणस्यावश्यकतया तत एव संयोगजसंयोगेपि व्यभिचारवारणसम्भवात् कर्मसामान्यजन्यतावच्छेदकजातेरप्रामाणिकता, एवमवयवगगनादिसंयोगस्य सामानाधिकरण्यसम्बन्धेनावयविगगनादिसंयोगहेतोस्तादृशसम्बन्धेनासम्बन्धिनि गगनादावुत्पत्तेर्व्यभिचारस्य वारणायादरणीयेन प्रकारेणैव क्रियाजन्यसंयोगे व्यभिचारवारणसम्भवात्संयोगजन्यतावच्छेदकजातेरप्यप्रामाणिकतेत्याशयात् । अथैवं मृत्तिकादिघटनिष्ठचक्रादिजन्यतायां संस्थानविशेषवन्मृत्तिकात्वादिकमेवावच्छेदकं वाच्यम्, तथा च लाघवान्मृत्तिकात्वादिव्याप्यजातिविशेषाणामेव तत्कार्यतावच्छेदकतया कल्पनमुचितमिति पूर्वमतमेव सम्यगिति वाच्यम् । मृत्तिकात्वादिव्याप्यजातिविशेषाणामुक्तयुक्त्या प्रामाणिकत्वेपि घटपदस्य नानार्थतायां गौरवेण प्रत्यक्षसिद्धसर्वजातीयघटसंस्थानानुगमकजातिविशेषावच्छिन्नसंस्थानस्य घटपदशक्यतावच्छेदकत्वेन तत्तज्जातीनां घटत्वानात्मकतया पूर्वमतस्यासम्यक्त्वात् । वस्तुतस्तु घटनिष्ठजातीनां प्रमाणान्तरशून्यत्वे दण्डादीनां घटहेतुत्वमेवाप्रामाणिकम्, कुतस्तज्जन्यतावच्छेदकतया द्रव्यगतजातिसिद्धिः । न चैवं घटार्थिनो दण्डादिगोचरप्रवृत्त्यनुपपत्तिः, अवयवक्रियाविशेषद्वारा घटजनकविलक्षणसंयोगं प्रति दण्डादीनां हेतुतयैव दण्डादौ घटार्थिप्रवृत्तेरुपपत्तेः, इष्टफलप्रयोजकगोचरप्रवृत्तौ फलप्रयोजकताज्ञानसहकृता प्रयोज्यफलगोचरेच्छा साक्षादेव हेतुः, आन्तरालिकफलसाधनताज्ञानसहकृततत्फलेच्छाद्वारा वेत्यन्यदेतत् ।—गदाधरः ।

(१) संस्थान—पाठः । (२) नाच—पुण० पु० पा० ।

(३) अयमेव गदाधरसम्मतः । सङ्करमन्तरेण—पाठः ।

(४) प्रयोजक—कलि० मु० पु० पा० । (५) अनुद्भूतत्वं तु—पाठः ।

न तु प्रभेति तद्रूपे मूर्तप्रत्यक्षत्वप्रयोजकमुद्भूतत्वं-नैयायिकैर्नेपेयमिति वाच्यम् । प्रभाया अचाक्षुषत्वे तद्गतसंयोगविभागचलनानामचाक्षुषत्वप्रसङ्गेन तन्मतस्यातितुच्छत्वात् । अथैवं प्रत्यक्षे महत्त्वहेतुता न स्यात्, परमाणुरूपादावुद्भूतत्वस्य सङ्कीर्णजातिमङ्गीकुर्वतामनभ्युपगमसम्भवेन परमाण्वादिप्रत्यक्षापत्तेरयोगात् । न चावयविन उद्भूतरूपादौ अवयवोद्भूतरूपादिहेतुता, अन्यथोद्भूतरूपाद्युत्पत्तिनियमासम्भवात्, स्थूलद्रव्येषूद्भूतरूपाद्युत्पत्तये तदारम्भकपरमाणावुद्भूतरूपाभ्युपगम आवश्यक इति वाच्यम् । उद्भूतरूपवद्वह्न्याद्यारम्भैकैरेवाणुभिरनुद्भूतरूपवद्वह्निजनकपालस्थवह्न्याद्यारम्भादवयवोद्भूतरूपस्यावयविनि तदुत्पादनियामकत्वासम्भवादन्यस्यैव तन्नियामकताया आवश्यकत्वात्, तत्र तत्र विभिन्नपरमाणुकल्पने गौरवात् । अस्तु वा प्रत्यक्षत्वप्रयोजकादन्य एव तद्व्यापकः परमाणुरूपसाधारणोद्भवस्तत्प्रयोजक इति चेत्, परमाणुद्व्यणुकानभ्युपगन्तॄणामिव तदुपगमेऽपि महत्त्वकारणता नाभ्युपगन्तव्यैव । वस्तुतो जातिसङ्करस्यादोषत्वे रूपनिष्ठोद्भवो महत्त्वनिष्ठोद्भवो वा चाक्षुषत्वप्रयोजकतया कल्प्यते इत्यत्र विनिगमनाविरहान्महत्त्वस्यापि तत्कारणता दुर्वारैव । जातिसङ्करस्य दोषत्वेऽपि एकत्वोद्भव एव प्रत्यक्षत्वप्रयोजकः, महत्त्वे उत्कर्षापकर्षवत् एकत्वे अवान्तरजात्यन्तरासत्त्वेन सङ्करानवकाशादिति केचित् । चिन्तामणिकृता जातिसङ्करभयेन उद्भूतत्वमुपेक्ष्य नीलत्वादिव्याप्या भिन्नभिन्ना अनुद्भूतत्वजातयः स्वीकृताः, तदवच्छिन्नभेदकूटरूपोद्भव एव प्रत्यक्षताप्रयोजक इत्युपगतम्, तन्मतं निराकरोति । अनुद्भूतत्वमिति । मानाभावादिति । एकस्योद्भवस्य प्रत्यक्षताप्रयोजकत्वसम्भवे तावतैवोपपत्तेरिति भावः । उद्भूतत्वाभावस्यानुद्भूतत्वव्यवहारप्रयोजकत्वे शब्दसुखादावपि तद्व्यवहारप्रसङ्गात्तद्व्यावृत्तमनुद्भूतव्यवहारनियामकमाह । शब्दसुखादीति । अप्रत्यक्षत्वनिमित्तक इति । उद्भवस्य प्रत्यक्षत्वरूपत्वादिति भावः । अत एव, जातिसङ्करस्यादोषत्वादेव । मन्दम्, अपकृष्टम् । अपेक्ष्य, अवधित्वेन विषयीकृत्य । अस्य अनुगत इत्यस्य च उत्कटव्यवहार इत्यनेन सम्बन्धः । अनुगत इत्यनेन सङ्करपरीहाराय नानात्वेन स्वीकृताभिरुत्कर्षजातिभिरुत्कटव्यवहारानुपपत्तिर्दर्शिता । विभिन्नजातीयेष्विति । मधुररसास्वादमधुरशब्दश्रवणादिरूपविभिन्नजातीयहेतुसमुत्थेष्वित्यादिः । एतावता तत्तज्जातीयकारणप्रयोज्योत्कटानुत्कटसुखसाधारणजातिभिः सहोत्कटत्वस्य सङ्करो दर्शितः । ननूत्कटत्वरूपजातीनामननुगमेऽपि शब्दगतकत्वादिव्याप्यनानातारत्वादीनामिव सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकसुखवृत्तिजातित्वेन तासामनुगमसम्भवादनुगतव्यवहारोपपत्तिरित्यत आह । अननुभूतसुख इति । मानाभावेनेति । सुखसत्त्वेऽवश्यं तत्साक्षात्काराभ्युपगमादिति शेषः । सजातीयेति । सुखनिष्ठोत्कटत्वस्य सुखसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वासम्भवादित्यर्थः । यथा तारशब्दे गृह्यमाणे मन्दशब्दो न गृह्यते, तथा उत्कटसुखे गृह्यमाणे मन्दसुखं न गृह्यत इति न, अपि तु उभयसत्त्वे समूहालम्बनसाक्षात्कार एवेत्युत्कटसुखस्य मन्दसुखसाक्षात्काराप्रतिबन्धकत्वादिति भावः । एवञ्चेदं सुखमस्मादुत्कटमितिव्यवहारानुरोधात्पञ्चम्यर्थः सावधिकत्वं जातावपि स्वीक्रियत एव, अयमस्मात्तार इत्यादौ तु सजातीयविषयकसाक्षात्कारत्वाद्यनुगमकरूपप्रविष्टविषयित्वान्वयि प्रतियोगित्वमेव पञ्चम्यर्थ इति तारत्वादिजातीनां न सावधिकत्वमिति ध्येयम् । इत्थञ्चेति । जातिसङ्करस्यादोषत्वेनेत्यर्थः । एकैक एवेति । जातिसङ्करस्य दोषत्वे एकहस्तादिपरिमाणगतजातिविशेषैर्ह्रस्वत्वदीर्घत्वादिभिः सङ्करेण तदैक्यानुपपत्तेरिति भावः ।-गदाधरः ।

प्रकारान्तराभावात्। व्यक्तिभेदेन सङ्ग्रहप्रतिक्षेपावपि न विरुद्धाविति(१) चेत्, विलीनमिदानीं तदतज्जातीयताविरोधेन, परिदृश्यमानकतिपय(२)व्यक्तिप्रतिक्षेपेपि

दीधितिः।

हुः(३)। व्यक्तिभेदे(ने)ति। व्यक्तिविशेषवृत्तित्वावच्छिन्न(४)सङ्ग्राहकत्वव्यक्तिविशेषवृत्तित्वावच्छिन्नप्रतिक्षेपकत्वे(५) इत्यर्थः। तदतज्जातीयेति(६)। तज्जातितत्प्रतिक्षेपकजातिमत्त्वे। मिथोव्यभिचारिजात्योः समावेशे बाधकम्, परिदृश्यमानेति(७)॥

दीधितिटिप्पणी।

स्यात् तदैव तत्साक्षात्कारप्रतिबन्धकत्वेनेदं स्यादित्यर्थः। एकस्यैव सामान्यस्य सङ्ग्राहकत्वं प्रतिक्षेपकत्वं च कथं व्यक्तिभेद इत्यतोवच्छेदकभेदपरतया उपपादयन्नाह। व्यक्तिविशेषेति। यथाश्रुते अतज्जातीयपदेन तज्जातीयभेदस्यैव लाभात्, स चासङ्गतः, साङ्कर्येपि तद्व्यक्तेस्तज्जातीयभेदाभावादत आह। तदतादिति। यद्वा तज्जातितद्भिन्नजातिमत्त्वं न विरुद्धम्, एकस्यैव तद्घटस्य घटत्वपृथिवीत्वोभयजातिमत्त्वादत आह। तदतादिति। विलीनमित्यादिमूलेन सामान्यत

(१) सङ्ग्रहप्रतिक्षेपाववविरुद्धाविति–पाठः। (२) दृश्यमान—पाठः।

(३) यद्यपि सङ्कीर्णजातिस्वीकारे शिंशपात्वादिलिङ्गकवृक्षत्वाद्यनुमाने विपक्षबाधकविरहेण व्यभिचारशङ्कानिवृत्त्यसम्भवाद्भ्रान्तपुरुषीयतदनुमानविलोपप्रसङ्गस्य तथा च गतं स्वभावहेतुनेत्यादिना मूले वक्ष्यमाणस्य दुर्वारतैव, तथापि अप्रामाणिकव्यभिचारिजातिकल्पने गौरवज्ञानस्यैव तत्कल्पनापरिपन्थिनो जागरूकतया तादृशस्थले सङ्कीर्णजातिनिरासः सुकरः, यादृशस्थले तु तादृशजातेः प्रामाणिकत्वं तत्र सतोपि गौरवज्ञानस्य प्रामाणिकपदार्थगोचरत्वेनाकिञ्चित्करतया सङ्कीर्णजातिः स्वीकरणीयेति तात्पर्यम्। अत एव न पुनः प्रमाणे सत्यपि परासामित्यादि स्वयमप्युक्तम्। मिथःसमाविष्टजात्योः सामान्यत एव मिथोऽव्यभिचारानियमो नाभ्युपेयते, विशेषतस्तु वृक्षत्वशिंशपात्वादीनां तादृशनियमः स्वीक्रियत एव, उद्भूतत्वरूपत्वादिजातीनां तु न, व्यभिचारिजातिकल्पनापरिपन्थिनो गौरवज्ञानस्य प्रामाणिकतदन्यपदार्थगोचरत्वाभ्यामेव तादृशनियमसाधकबाधकत्वादिति निगर्वः। (४) वच्छिन्नं—पा० २ पु०।

(५) प्रतिक्षेपकत्वेन—पाठः। (६) तदतज्जातीति—पुण० पु० पा०।

(७) अव्यापकस्याविरोधिनश्च धर्मस्य धर्मिभेदः कथं व्यापकत्वविरोधित्वोपपादक इत्यतः स्वरूपेण सङ्ग्राहकत्वाद्यनिरूपकस्यापि विशेषणविशेषावच्छिन्नस्य तन्निरूपकत्वमविरुद्धमित्यर्थ-

मिथः क्वचित् तुरगविहग(१)योरपि सम्भेदसम्भवात्।

दीधितिटिप्पणी।

उभयत्र दोषदानेपि विशिष्य तद्दानाय परिदृश्यमानेति मूलम्॥

कल्पलता।

नोभयमपी(२)ति। न विरोधो न वा व्याप्यव्यापकभाव इत्यर्थः। व्यक्तिभेदेनेति। कस्याश्चिद्व्यक्तौ क्षेत्रपतितायां शालित्वकुर्वद्रूपत्वयोः समावेशेपि क्वचिदसमावेशः स्यादित्यर्थः। विलीनमिति। परस्परात्यन्ताभावसमानाधिकरणयोरपि जात्योः सामानाधिकरण्ये जातिप्रतिनियमो न स्यादित्यर्थः। एतदेवाह। परिदृश्येति॥

यश्च यस्य जातिविशेषः(३), स चेत् तं व्य-

दीधितिः।

समाविष्टजात्योर्मिथोव्यभिचारे बाधकम्(४), यश्चे-

दीधितिटिप्पणी।

विशेषपदेनैकदेशवृत्तिरुच्यते, न तु व्याप्यं, शालित्वस्य कुर्वद्रूपत्वव्याप्यत्वास्वीकारात्, अत एकदेशवृत्तित्वं वाच्यं, तच्च तत्कतिपयवृत्तित्वम्, न च घटत्वं द्रव्यत्वकतिपयवृत्तिरतो यत्पदस्य

कतां व्यक्तिभेदेनेत्यादेः स्पष्टयति। व्यक्तीति। एवं सति तुरगत्वविहगत्वादीनामविशेषितानामेव सर्वमतसिद्धो विरोधो विलीयेत, तेषां सामानाधिकरण्येपि उक्तदिशा सङ्ग्रहप्रतिक्षेपोपपत्तेरित्याह। विलीनमिति। तदतज्जातीयतापदेन तज्जातितदन्यजात्योर्विवक्षणे तयोरविरोधादसङ्गतिरतस्तत्पदं व्याचष्टे। तदतदिति। जातिसङ्कररूपबाधकस्योक्तनियमानां मध्ये द्वितीयनियमोपपादकतया परिदृश्यमानेत्यादिमूलं प्रथमनियमोपपादकतया च यश्चेत्यादिमूलं व्याचष्टे, मिथ इत्यादि। —गदाधरः।

(१) तुरङ्गमविहङ्गम—पुण० पु० पा०।

(२) नोभयामि–पुण० पु० पा०।

(३) अयं पाठष्टिप्पणीकृन्मतः। यस्य विशेषः—पुण० पु० पा०।

(४) व्यभिचारे च बाधकम्—पाठः। व्यभिचारे—पा० २ पु०।

भिचरेत्, व्यभिचरेदपि शिंशपा पादपम्, अविशेषात्, तथा च गतं स्वभावहेतुना। विपर्यये बाधकं विशेष इति चेन्न, तस्येहापि सत्त्वात्(१), तदभावे स्वभाव-

दीधितिः।

त्यादि(२)। यस्य यज्जातीयस्य। विशेषः एकदेशवृत्तिः। तम् तज्जातीयम्, तां जातिमिति यावत्। शिंशपा शिंशपात्वम्। स्वभावहेतुना तादात्म्यहेतुना। विपर्यय इति। वृक्षस्वभावा वृक्षसामग्र्यन्तर्गतसामग्रीका च शिंशपा यदि वृक्षमतिपतेत् तत्सामग्रीमतिपत्य(३) वा जायेत, तदा आत्मा(४)नमेवातिप-तेत् स्वसामग्रीमेवातिपत्य(५) जायेतेति बाधकम्। तस्येति। अङ्कुरकुर्वद्रूपस्वभावस्तत्सामग्र्यन्तर्गतसामग्रीकश्च शालिरङ्कुर-कुर्वद्रूपं च शालिस्वभावं तत्सामग्र्यन्तर्गतसामग्रीकं च यदि

दीधितिटिप्पणी।

जात्याश्रयपरत्वं, अत आह। यज्जातीयेति। यद्वा तं व्यभिचरेदि-त्यस्य तां जातिमित्यवश्यं व्याख्येयम्, तथा च यस्येत्यस्य व्यक्तिप-रत्वे तां जातिमिति तत्पदेन जातिपरामर्शो विरुध्यत इत्यत आह। यज्जातीयस्येति। विशेषपदेन व्याप्य उच्यते, तच्च न लगति, जाते-र्व्यक्तिव्याप्यत्वाभावादत आह। विशेष इति। एवञ्च जाति-पदस्य परनिपातो बोद्धव्यः, तथा च जातिविशेषः विशेषजा-तिरित्यर्थः, अन्यथानन्वयात्। न च पादपपदं कथं भावपरं न कृतमिति वाच्यम्। तमिति मूलस्य तज्जातीयमिति व्याख्यानेन व्यापकदिशि भावपरत्वासङ्गतेः। तां जातिमिति तु पर्यवसितार्थ-मात्रकथनम्, न तु शब्दार्थकथनम्। स्वभावहेतुना तादात्म्यसम्ब-न्धेन हेतुना, गतमित्यर्थः। शालिवदङ्कुरकुर्वद्रूप(६)मपि पक्षीकृत्या-पि तत् पार्यत इति दर्शयति। अङ्कुरकुर्वद्रूपं चेति। शिंशपावृक्ष-

(१) सम्भवात्—पाठः। समानत्वात्—पाठः। (२) यश्चेति-पाठः।
(३) मतीत्य—पा० २ पु०। (४) तदा स्वात्मा—पुण० पु० पा०।
(५) मेव वातिपत्य-पुण० पु० पा०। (६) कुर्वद्रूपवत्त्व इत्यादर्शपुस्तके पाठः।

त्वानुपपत्तेः। उपपत्तौ वा किं बाधकानुसरणव्यसनेनेति(१)।

दीधितिः।

तदतिपतेत् तत्सामग्रीमतिपत्य वा जायेत, स्वात्मानमेवातिपतेत् स्वसामग्रीमेव चाति(२)पत्य जायेतेत्येवं(३)रूपस्य विपर्यये बाधकस्येत्यर्थः। तदभावे विपर्यये बाधकाभावे ॥

दीधितिटिप्पणी।

योर्न परस्परपक्षत्वं सम्भवतीत्येकमात्रपक्षत्वमेव दर्शितम्। परस्परव्यभिचारिणोरेव द्वयस्य पक्षत्वसम्भवात्। अत्र च तत्सामग्र्यन्तर्गतत्वं तत्सामग्रीसमानाधिकरणाभावप्रतियोगित्वे सति तत्समानाधिकरणत्वरूपं बोध्यम्। साध्यमाह। यदीति। तत्पदेन(४) उभयपक्षीयसाध्यस्यैव परामर्शः, सत्त्वपर्यन्तस्याभावबोधनं निरर्थकमत आह। तदभाव इति ॥

कल्पलता।

यश्चेति। शालित्वव्याप्यं कुर्वद्रूपत्वं यदि यवेपि स्यात्, तदा शिंशपात्वमपि वृक्षत्वं व्यभिचरेदित्यर्थः। किञ्चात इत्यत आह। तथा चेति। विपर्यय इति। यदि शिंशपा वृक्षं व्यभिचरेत् तदात्मानमपि(५) व्यभिचरेदितिविपक्षबाधकबलेन स्वभावहेतुः प्रवर्त्ततामित्यर्थः। तस्येहापीति। कुर्वद्रूपत्वस्यापि शालित्वस्वभावत्वाद्विपक्ष(७)बाधकोऽस्त्येवेत्यर्थः। तदभावे विपक्षबाधकाभावे। उपपत्तौ वेति। [illegible]

कल्पलता ।

पक्षबाधकाभावेऽपि स्वभावत्वो(१)पपत्तौ किं तदुपन्यासेनेत्यर्थः ॥

विशेषस्य विशेषं प्रति प्रयोजक(२)त्वाच्च । तथाहि(३), कार्यगतमङ्कुरत्वं प्रति बीजत्वस्याप्रयोजकत्वेऽबीजादपि तदु(४)त्पत्तिप्रसङ्गः ।

दीधितिः ।

अप्रयोजकत्वे अङ्कुरत्वावच्छिन्नकार्यताप्रतियोगिककारणतानवच्छेदकत्वे । अबीजादपीति । न च वैयधिकरण्यम्, इष्टापत्तिश्च, बीजभिन्न(५)धरण्यादेस्तदुत्पादादिति वाच्यम् । अङ्कुरत्वं यदि जातित्वे जन्यतावच्छेदकत्वे वा सति बीजमात्रवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात्, बीजाजन्यवृत्ति(६)स्यात्, बीजासमवहितसामग्रीजन्यवृत्तिर्वा(७) स्यादित्यत्र तात्पर्यात् । अङ्कुरत्वं यदि बीजमात्रवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात्, अङ्कुरमात्रवृत्तिजातिर्न स्यादित्यत्र तात्पर्यमित्यन्ये ॥

दीधितिटिप्पणी ।

परमते जात्यनङ्गीकारात् अतद्व्यावृत्तेरेव जन्यतावच्छेदकत्वाङ्गीकारादाह । जन्यतेति । अजन्यवृत्तितयापि साध्यपर्यवसानेऽबीजादपीत्यादेर्न सिद्धिरत आह । बीजासमवहितेति । अबीजादपीत्यादेरपदार्थव्याख्यानमेव अन्येतु(८)मतेऽस्वरसः ॥

(१) स्वभावो—पुण० पु० पा० । (२) प्रति हेतु—पाठः ।
(३) तथा च—पाठः । (४) ऽबीजादु—पाठः । (५) बीजान्य—पाठः ।
(६) बीजजन्यान्यवृत्ति—कलि० मु० पु० पा० ।
(७) जन्यवृत्ति वा—पा० २ पु० ।
(८) अत्र तुकारश्चिन्त्यः, दीधितावभावात् । अन्येषामिति पाठः समीचीनः ।

कल्पलता।

**तथाहीति। अङ्कुरत्वावच्छिन्ने कार्ये बीजत्वावच्छिन्नमेव कारणम्, शाल्यङ्कुरत्वावच्छिन्ने (तु) शालिबीजत्वमित्यर्थः ॥**

---

बीजस्य विशेषः कथमबीजे भविष्यतीति चेत्, तर्हि शालेर्विशेषः कथमशालौ स्यादित्यशाले(१)रङ्कुरानुत्पत्तिप्रसङ्गः।

---

दीधितिः।

बीजत्वेनाजनकत्वेपि बीजमात्रवृत्तिना कुर्व(२)द्रूपत्वेन जनकत्वादापादकासिद्धिमाशङ्कते। बीजस्येति। बीजस्य विशेषः बीजै(३)कदेशवृत्तिजातिः(४)। शाल्येकदेशवृत्तेः शालित्वव्यभिचारवद्बीजैकदेशवृत्तेरपि जातेर्बी(५)जत्वव्यभिचारित्व(६)सम्भवान्नाङ्कुरकुर्वद्रूपत्वस्य बीजमात्रवृत्तित्वमित्याशयेनाह। तर्हीति। अशालेः शालिभिन्नबीजात् ॥

दीधितिटिप्पणी।

एवं बीजे तथात्वेपि कथं शालौ तथा स्यादिति यथाश्रुतदोषादन्यथा व्याख्यामाह। शाल्येकदेशेति ॥

---

कल्पलता।

**अशालेः यवादितः ॥**

---

(१) अशालो भविष्यतीत्यशाले-पाठः। अशालौ स्यादिति शाले-कलि० मु० पु० पा०। अशालौ भवेदित्यशाले—पा० २ पु०। (२) वृत्तिनाङ्कुरकुर्व-पुण० पु० पा०।
(३) बीजस्यै-पुण० पु० पा०। (४) वृत्तिः-पा० २ पु०।
(५) वृत्तेरपि बी-पुण० पु० पा०। (६) व्यभिचार-पुण० पु० पा०।

अशालिवदबीजेप्यसौ भवतु विशेषः(१), तथापि बीजत्वैकार्थसमवेत एवासावङ्कुरं प्रति प्रयोजक इति चेन्न, शालित्व(२)व्यभिचारे(३) शालित्वैकार्थसमवायवद्बीजत्वव्यभिचारे बीजत्वैकार्थसमवायेनापि नियन्तुमशक्यत्वात्, अविशेषात्।

दीधितिः।

यत्र कुर्वद्रूपत्वे वस्तुगत्या(४) बीजत्वैकार्थसमवायस्तत्प्रयोजकं किं वा तद्विशिष्टम्, आद्य आह। शालित्वेत्यादि। शालित्वैकार्थसमवायवदिति। तृतीयासमर्थाद्वतिः, शालित्वैकार्थसमवायेनेवे(५)त्यर्थः। द्वितीये तु प्रत्यक्षासिद्धत्वाल्लाघवाद्विशिष्टस्य प्रयोजकत्वे विशेषणस्यापि तथात्वेनावश्यकत्वाद्विशेषणविशेष्यभावे(६) विनिगमकाभावाच्च शुद्धं बीजत्वमेव प्रयोजकमस्तु॥

दीधितिटिप्पणी।

यत्रेति। बीजत्वैकार्थसमवाय इत्युपलक्षणमित्यर्थः। नियन्तुमिति मूलम्, तथा चावीजादपीत्यादिदोषः स्यादित्यर्थः। लाघवादिति शुद्धमित्यन्वयि॥

कल्पलता।

कुर्वद्रूपत्वं यथा शालित्वं व्यभिचरति, तथा बीजत्वमपि व्यभिचरतु(७), न चातिप्रसङ्गः, बीजत्वैकार्थसमवेतस्यैवाङ्कुरकुर्वद्रूपत्वस्याङ्कुरजनक(तावच्छे-

(१) जेप्यसौ विशेषो भवतु--पाठः। जे भवत्वसौ विशेषः-पुण० पु० पा०।
(२) शालित्वस्य-पुण० पु० पा०। (३) व्यभिचारो-पाठः।
(४) वस्तुगत्या-नास्ति क्वचित्। (५) समवायेने-कलि० मु० पु० पा०।
(६) प्रयोजकत्वे विशेषणविशेष्यभावे-पा० २ पु०।
(७) व्यभिचरेत्-णपु० पु० पा०।

कल्पलता ।

दक)त्वमित्याह । अशालि(१)वदिति । यथाऽशालेरङ्कुरस्तथाऽबीजादपि भवन् केन वारणीयः । अत्र यदि बीजत्वं विशेषणं, तदा तस्य प्रयोजकत्वमेव स्यात्, उपलक्षणं चेत्, तदा (तु) न तन्त्र(२)मुपलक्ष्यतावच्छेदकरूपाभावा(३)दित्याह । शालित्वेति ॥

तस्माद्यो यथाभूतो यथाभूतमात्मनोऽन्वयव्यतिरेकावनुकारयति, तस्य तथाभूतस्यैव तथाभूते सामर्थ्यम् । तद्विशेषास्तु(४) कार्यविशेषं प्रयोजयन्ति शाल्यादिवदिति युक्तमुत्पश्यामः ।

दीधितिः ।

करणाकरणे(५) तु सहकारिसाकल्यवैकल्याभ्यामेवोपपन्ने, अन्यथा (सहकारि)समवहितबीजत्वेनापि जनकत्वस्य सुवचत्वादित्याशयवानुपसंहरति । तस्मादिति ।

कल्पलता ।

बीजत्वेन(६) कारणता अङ्कुरत्वेन च(७) कार्यतेत्यवश्यमभ्युपगन्तव्यमित्युपसंहरति । तस्मादिति । बीजे सत्यङ्कुरस्तदभावे तु नाङ्कुर इति बीजमङ्कुरत्वावच्छिन्नमेव कार्यं प्रत्यन्वयव्यतिरेकावनुकारयति दृष्टत्वादित्यर्थः ॥

(१) ह । स्वशालि-पुण० पु० पा० । (२) तदा न तत्तन्त्र-पाठः ।
(३) वच्छेदकैकरूपाभावा-पाठः । वच्छेदकैकस्याभावा-कलि० मु० पु० पा० ।
(४) तद्विशेषाः-पाठः ।
(५) कारणाकारणे-कलि० मु० पु० पा० ।
(६) बीजत्वेनैव-पुण० पु० पा० । (७) अङ्कुरत्वेनैव-पुण० पु० पा० ।

कस्य पुनः प्रमाणस्यायं व्यापारकलाप इति चेत्, तदुत्पत्तिनिश्चयहेतोः प्रत्यक्षानुपलम्भात्मकस्येति(१) ब्रूमः। अथ न्यायेन विना न ते परितोषः, शृणु तमपि तदा(२)। यदङ्कुरं(३) प्रत्यप्रयोजकं न तद्बीजजातीयं, यथा शिलाशकलम्, अङ्कुरं प्रत्यप्रयोजकं च कुशूलनिहितं(४) बीजमभ्युपेतं परैरिति

दीधितिः।

तदुत्पत्तिः, तस्मादुत्पत्तिः कार्यकारणभावः। प्रत्यक्षम् कारणान्वये कार्यस्य प्रत्यक्षम्, अनुपलम्भः(५) कारणव्यतिरेके कार्यव्यतिरेकस्योपलम्भः, तथा चान्वयव्यतिरेकग्रह(६)-सध्रीचीनस्य प्रत्यक्षस्येत्यर्थः। पररीत्यैव परं प्रति सतर्क(७)-न्यायप्रयोगमाह। यदङ्कुरमित्यादि। परैः सौगतैः।

दीधितिटिप्पणी।

मूले, व्यापारकलापः कारणत्वादिनिर्णयरूपः। तदुत्पत्तिपदेन कार्यकारणभाव उच्यते, तस्य च योगार्थमाह। तदुत्पत्तीति। तस्मात् कारणात्। एवं प्रत्यक्षानुपलम्भपदस्यापि योगार्थमाह। प्रत्यक्षमिति। अन्वयव्यतिरेकग्रहस्य प्रमाणत्वं नास्तीत्यतः प्रत्यक्षपदपूरणेनाह। तथा चेति। प्रत्यक्षरूपप्रमाणमेवास्तीति भावः। स्वमतीयन्यायो यदि, तदा कथं द्व्यवयवप्रयोगोऽत आह। पररीत्येति। सतर्केति। विपर्यये किं बाधकमित्यादिना तर्कस्याप्यभिधानादिति भावः। पररीत्यानुमाने परपदेन नैय्यायिकबोधनादाह। परैरिति।

(१) नुपलम्भस्येति-पाठः। (२) तदा-नास्ति क्वचित्।
(३) यथा यदङ्कुरं-पाठः। (४) कुशूलस्थं-पुण० पु० पा०।
(५) अनुपलम्भश्च-कलि० मु० पु० पा०।
(६) व्यतिरेकज्ञान-पाठः। (७) सतर्क-पुण० पु० पा०।

व्यापकानुपलब्धिः प्रसङ्गहेतुः ।

दीधितिः ।

व्यापकस्य बीजत्वव्यापक(१)स्याङ्कुरप्रयोजकत्वस्य अनुपलब्धिः अनुपलब्धिविषयोऽभावः॥ प्रसङ्गहेतुः प्रसङ्गस्य प्रसञ्जको वा हेतुः॥

दीधितिटिप्पणी ।

व्यापकं चात्र विपर्ययानुमाने बोध्यम्। ज्ञानाभावस्य हेतुत्वाकरणादाह। अनुपलब्धीति। षष्ठीतत्पुरुष लक्षणापत्तेः कर्मधारयमाह। प्रसञ्जको वेति॥

कल्पलता ।

परः पृच्छति। कस्येति। प्रमाणं विना हस्तसमाचरणमात्रं सर्व(२)मिदमिति भावः। अयमिति। बीजत्वमेवाङ्कुरं प्रति स्वरूपयोग्यतावच्छेदकं, न त्वङ्कुरे(३) कुर्वद्रूपत्वमिति प्रतिपादनार्थं यः पूर्वोक्तो व्यापारकलाप इत्यर्थः। उत्तरम्, तदुत्पत्तीति। ( तत उत्पत्तिस्तदुत्पत्तिः ) कार्यकारणभावः(४), स च प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकाभ्यामवगम्यते(५), तथा च बीजे सत्यङ्कुरस्तं विना नाङ्कुर इति प्रत्यक्षादेवान्वयव्यतिरेक(६)ग्रहसहकारिणोनुमानाद्वा गृह्यत इति का तत्र कथन्तेत्यर्थः। ननु तथापि कथायां न्याय उपदर्शनीयो भवतीत्यत आह। अथेति। सौगतमतानुसारेणैव न्यायमुपदर्शयति। यदिति। बीजजातीयं नाङ्कुरं प्रति प्रयोजकमिति त्वयाभ्युपगम्यते, तदा त्वदभ्युपगमानुसारेण कुशूलस्थस्य बी-

(१) बीजत्व—कालि० मु० पु० पा०।
(२) मात्र—पुण० पु० पा०। (३) त्वङ्कुर—पुण० पु० पा०।
(४) कारणभावात्—पाठः।
(५) रेकाभ्यामेव गम्यते—कालि० मु० पु० पा०। (६) रेकः।—पाठः।

कल्पलता ।

जस्य(१) बीजजातीयत्वं न स्यादित्यर्थः । यदि कुशूलस्थं बीजमङ्कुरं प्रति प्रयोजकं न स्या(द्वीजं न स्या)दित्यस्मादिशा तर्कोक्तिः । ननु कुशूलस्थस्याङ्कुराप्रयोजकत्वमापादकमेवासिद्धमित्यत आह । अभ्युपेतमिति । पराभ्युपगममात्रेणैव(२) तर्कप्रवृत्तेर्नापादकासिद्धि(३)स्तत्र दोष इत्यर्थः । परैः सौगतैः । प्रसङ्गात्मको(४) हेतुः प्रसङ्गहेतुः । व्यापकानुपलब्धिरिति । बीजत्वस्य व्यापकमङ्कुरप्रयोजकत्वं, त्वया च तथा नाभ्युपगम्यते इति त्वादिशा तदनुपलब्धिरित्यर्थः ॥

विपर्यये(पि) किं बाधकमिति चेत्, अङ्कुरस्य जातिप्रतिनियमाकस्मिकत्वप्रसङ्ग इत्युक्तम् । बीजत्वं तस्य प्रत्यक्षसिद्धमशक्यापह्नवमिति चेत्, अस्तु तर्हि विपर्ययः, यद्बीजं तदङ्कुरं प्रति प्रयोजकं(५), यथा (ऽन्त्य)सामग्रीमध्यमध्यासीनं बीजम्, बीजं चेदं विवादास्पदमिति(६) स्वभावहेतुः ।

दीधितिः ।

आकस्मिकत्वम् निर्निमित्त(क)त्वम् । स्वभावहेतुः अनुमापको हेतुः । तादात्म्यहेतुरित्यन्ये ॥

दीधितिटिप्पणी ।

अनुमापकः पक्षधर्मताशालीत्यर्थः । तादात्म्यहेतुः तादात्म्यसम्बन्धेन हेतुः ॥

(१) बीजस्य—नास्ति क्वचित् । (२) भ्युपगममाश्रित्यैव—पुण० पु० पा० ।
(३) प्रवृत्तेर्नोत्पादकासिद्धि—पुण० पु० पा० । (४) प्रसङ्गात्मा—पुण० पु० पा० ।
(५) प्रति जनकं—पाठः । (६) विवादपदं—पुण० पु० पा० ।

कल्पलता ।

विपर्यय इति । अङ्कुराप्रयोजकमपि बीजं स्यादित्यत्र किं बाधकमित्यर्थः । तर्कमूलव्याप्तौ विपक्षबाधक(१)माह । अङ्कुरस्येति । बीजत्वेन चेदङ्कुरप्रयोजकता न स्यात् तदा कदाचिदबीजादप्यङ्कुरः स्यात्(२), तच्चानिष्टमित्यर्थः । ननु तर्कमात्रमतन्त्रमित्यत आह । अस्तु तर्हीति । बीजत्वमेव स्वभावहेतुः, तच्च(३) कुशूलस्थे(४) स्वरूपासिद्धं मा(५) स्यादिति प्रथमत एव परमङ्गीकारयति । बीजत्वं तस्येति(६) । कुशूलस्थं बीजमङ्कुरप्रयोजकं, बीजत्वात्, क्षेत्रपतितबीजवदित्यर्थः ॥

---

अङ्कुरस्य (हि) जातिप्रतिनियमो न तावन्निर्निमित्तः(७), सार्वत्रिकत्वप्रसङ्गात् । नाप्यन्यनिमि-

---

दीधितिः ।

उक्ते निर्निमित्त(क)त्वेऽनिष्टमाह । सार्वत्रिकत्वेति(८) । सार्वत्रिकत्वम् कार्यमात्रवृत्तित्वम् , तथा चाङ्कुरत्वं यदि किञ्चिद्रूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात् कार्यमात्रवृत्तिजातिर्न स्यादित्यर्थः । नाप्यन्येति(९) ।

दीधितिटिप्पणी ।

उक्त इति । सत्त्वादेस्तथात्वेपि न सर्ववृत्तित्वरूपं, अत आह । कार्यमात्रेति । वैयधिकरण्यादाह । तथा चेति । इतरबाधसत्त्वेन ना-

---

(१) विपक्षे बाधक—कलि० मु० पु० पा० ।

(२) बीजत्वस्याव्यापकमङ्कुरप्रयोजकत्वं यदि स्यात् तदाऽबीजादप्यङ्कुरः स्यात्—कलि० मु० पु० पा० । (३) तस्य च—पुण० पु० पा० । (४) कुशूलस्थ—पुण० पु० पा० ।

(५) स्वरूपासिद्धिर्न—पुण० पु० पा० । स्वरूपासिद्धं—पाठः ।

(६) आर्थक्रमानुरोधेन पाठक्रममनादृत्येदं प्रतीकधारणम् । (७) निर्निमित्तः—पा०

(८) सार्वत्रिकेति—पा० २ पु० । (९) नाप्यन्येति—नास्ति क्वचित् ।

त्तः(१), तथाभूतस्य तस्याभावात्। सेयं निमित्तवत्ता विपक्षान्निवर्तमाना(२) त्त्वव्याप्यमादाय बीजप्रयोजकतायामेव विश्राम्यतीति प्रतिबन्धासिद्धिः।

दीधितिः।

तथा च सनिमित्तकत्वसाधकं कार्यमात्रवृत्तिजातित्वं क्लृप्तशालित्वादिबाधात् क्लृप्त(३)कल्पनागौरवप्रतिसन्धानसहितं बीजत्वस्य निमित्तत्वं साधयतीति(४) सेयं निमित्तवत्ता विपक्षात् निर्निमित्तात् व्यावर्तमाना(५) अङ्कुरत्वव्याप्यम् कार्यमात्रवृत्तिजातित्वमादाय बीजप्रयोजकतायामेव विश्राम्यति, अङ्कुरत्वस्य बीजप्रयोज्यत्वे सिद्ध्यन्ती(६) परिशेषाद् बीजप्रयोजकत्वं सिध्यतीत्यर्थः। बीजं प्रयोजकं यस्येति बहुव्रीहिरित्यन्ये। बीजप्रयोज्यतायामिति पाठस्तु सुगम एव(७) ॥

दीधितिटिप्पणी।

पीति नञो भावमाह। तथा चेति। क्लृप्त(शालित्वादि)बाधेति। प्राचीनमते सामान्यतोदृष्ट एव इतरबाधसहकारेण विशेषबाधको भवेदिति। साधयतीति। साधयति इति कृत्वा सेयं निमित्तवत्ता विश्राम्यतीति सम्बन्धः, तथा च पूर्वं तथा चेत्यादिना विश्रामहेतुकथनम्। ननु इतरबाधसत्त्वेन अङ्कुररूपनिमित्तवत्तासिद्धिरङ्कुरप्रयोज्यत्वसिद्धिरेव, न तु प्रयोजकताया अत आह। अङ्कुरत्वस्येति ॥

कल्पलता।

उक्तमाकस्मिकत्वप्रसङ्गं प्रपञ्चयति। अङ्कुरस्य हीति। (निर्निमित्तत्वम् नियतजातीयकारणाप्रयो·

(१) न्यनिमित्तकः—पाठः।
(२) विपक्षाद्व्यावर्तमाना—कलि० मु० पु० पा०।
(३) शालित्वादिबाधात् क्लृप्त—कलि० मु० पु० पा०।
(४) साधयति—पुण० पु० पा०।
(५) मादाय निवर्तमाना—पाठः।
(६) सिद्ध्यन्तीति—कलि० मु० पु० पा०।
(७) सुगमः—पाठः।

कल्पलता ।

ज्यत्वम् ।) सार्वत्रिकत्वम् अङ्कुरातिरिक्तवृत्तित्वम् । अङ्कुरत्वं यदि बीजत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यादङ्कुरमात्रवृत्तिजातिर्न स्याद् द्रव्यत्वादिवदित्यर्थः । ननु कुर्वद्रूपत्वादिनिमित्तकमेव तत् स्यादित्यत आह । नापीति । तथाभूतस्येति । अङ्कुरमात्रनियामकस्येत्यर्थः । अभावादिति । तस्याप्रामाणिकत्वादित्यर्थः । विपक्षादिति । निर्निमित्तादित्यर्थः । यद्वा बीजाप्रयोज्यादित्यर्थः(१) । स्वव्याप्यं बीजप्रयोज्यतः(व्याप्यं कार्यमात्रवृत्तिजातित्व)मादाय बीजप्रयोज्यतायामङ्कुरस्य(२) विश्राम्यति । प्रयोजकतायामिति पाठे बहुव्रीहिः । प्रतिबन्धेति । यद्यद्बीजं तत्सर्वमङ्कुरप्रयोजकमिति व्याप्तिसिद्धिरित्यर्थः ॥

दीधितिः ।

यद्यपि चैतावतापि(३) बीजत्वस्य प्रयोजकत्वं न सिद्ध्यति(४), क्षितित्वादेरपि तथात्वसम्भवात्, तथाप्यकुर्वाणसाधारणरूपस्य प्रयोजकत्वसिद्ध्यैव(५) सिद्धमीहितम्, व्युदस्ते च बाधके अन्वयव्यतिरेकयोस्तुल्यतया(६) बीजत्वस्यापि प्रयोजकत्वं न दुर्लभमिति हृदयम् । प्रागुक्ते अबीजादङ्कुरोत्पत्ति-

दीधितिटिप्पणी ।

तथापीति । क्षितित्वस्यापि जनकतावच्छेदकत्वेन तस्याफलोपहितेपि वृत्तेर्नाक्षणिकत्वक्षतिरित्यर्थः । एतद्ग्रन्थेन बीजत्वप्रयोजकत्वलाभेन व्याख्यान्तरकारिणां मतमाह । प्रागुक्त इति । तथा चास्य

(१) बीजाप्रयोजनादित्यर्थः—पाठः । (२) प्रयोज्यतायां—पुण० पु० पा० ।
(३) चैतावता—पा० २ पु० । (४) नायाति—पाठः ।
(५) रूपस्य सिद्ध्यैव—पाठः । (६) स्तुल्यत्वात्—पाठः ।

अथवा कृतमङ्कुरग्रहेण(१), बीजस्वभावत्वं क्वचित् कार्ये प्रयोजकं न वा। न चेत्, न तत्स्वभावं बीजम्, तेन रूपेण क्वचिदप्यनुपयोगात्। एवं च प्रत्यक्षसिद्धं बीजस्वभावत्वं नास्ति, सर्वप्रमाणागोचरस्तु विशेषोऽस्तीति विशुद्धा बुद्धिः। क्वचिदप्युपयोगे त्वेकस्य(२) तेन रूपेण सर्वेषाम विशेषः, ताद्रूप्यात, तथा च कथं

दीधितिः।

प्रसङ्गे तात्पर्यमित्यन्ये। इत्यनुशयेनैव वा, अथवेत्यादि(३)। परेषां जातिमात्रस्य जनकतावच्छेदकत्वनैयत्यमभिप्रेत्याह। बीजस्वभावत्वमित्यादि(४)। बीजत्वं किञ्चित्कार्यजनकतावच्छेदकं न वेति फलितार्थः। नेति पक्षे दूषणमाह। न तदिति। तत्रेष्टापत्तावाह। एवं चेत्यादि(५)। विशेषः कुर्वद्रूपत्वम्। प्रयोजकमिति पक्षं दूषयति, क्वचिदित्यादिना(६)। क्वचित् अङ्कुरादौ कार्ये एकस्य कुर्वद्रूपस्य बीजस्य तेन बीजत्वेन रूपेण उपयोगे जनकत्वे सर्वेषाम् अङ्कुराद्यकुर्वद्रूपाणामपि बीजानाम्

दीधितिटिप्पणी।

ग्रन्थस्य बीजत्वं यदि न प्रयोजकं तदाऽबीजादपि अङ्कुरोत्पत्तिप्रसङ्ग इत्यर्थे तात्पर्यमित्यर्थः, तथा च बीजत्वं प्रयोजकं स्यात्। अन्यदप्याह। इत्यनुशयेनेति। अनुशयात्(७) रुचिविरहात्। अजनकतावच्छेदकस्यापि जातेरङ्गीकारात् स्वमते न लगतीत्यत आह। परेषामिति। स्वभावत्वभागस्य वैयर्थ्यात् निष्कृष्टमाह। बीजत्वमि-

(१) किमङ्कुरग्रहेण-पाठः। (२) क्वचिदुपयोगेप्येकस्य—कलि० सु० पु० पा०।
(३) अथवेति—पाठः। (४) बीजस्वभावत्वमिति—पाठः।
(५) एवं चेति—पाठः। (६) क्वचिदिति—पाठः।
(७) अनुशयादिति दीधितिपाठमनुसृत्य व्याख्यातम्। अनुशयेनेति वाच्यम्।

किञ्चिदेव बीजं स्वकार्यं कुर्यात्, नापराणि । न च वस्तुमात्रं तत्कार्यम्, अबीजात् तदनुत्पत्तिप्रसङ्गात् । नापि बीजमात्रम्, अङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गात् ।

दीधितिः ।

अविशेषः(१) अङ्कुरादिकारणत्वेन न विशेषः(२), ताद्रूप्यात् अङ्कुरादिजनकतावच्छेदकबीजत्व(३)शालित्वात् । स्वकार्यम् अङ्कुरादि(४) । अपराणि अङ्कुराद्यकुर्वद्रूपाणि बीजानि कथं न कुर्युर्यदि समर्थस्यापि सहकारिविरहान्नाकरणम् । अथ वस्तुमात्रं बीजत्वावच्छिन्नकार्यम्, अस्माकं वस्तुमात्रस्यैव क्षणिकत्वेन कार्यत्वात्, न च वस्त्वकारि किञ्चिदपि बीजमित्याशङ्क्य(५) निराकुरुते(६), न चेत्यादिना(७) । अबीजात् बीजशून्यकारणकलापात् तस्य वस्तुनः अनुत्पत्तेः प्रसङ्गात्(८) । नापि बीजमात्रमिति(९) । परेषां पूर्वपूर्वबीजक्षणेनोत्तरोत्तरबीजक्षणजननात्(१०) । तदुत्पत्तीति । बीजोत्पत्तीत्यर्थः । प्राथमिकबी-

दीधितिटिप्पणी ।

ति । शेषं पूरयति । कथं न कुर्युरित्यादि । ननु वस्तुमात्रं कथं कार्यम्, अत आह । अस्माकमिति । यथाश्रुते अन्यतमत्वस्य कार्यताव-

(१) अङ्कुराकुर्वद्रूपाणाम् अविशेषः—पा० २ पु० । बीजत्वेन सर्वेषामविशेषे न विवादः, कुर्वद्रूपत्वेनाविशेषो निराकृत इत्यतः पूरयति । अङ्कुरादिकारणत्वेनेति । तृतीयार्थोऽभेदः, कुर्वद्रूपाद्विशेषो वैलक्षण्यम् अङ्कुराद्यकारणत्वम्, तदभावे तृतीयार्थभेदान्वयो बोध्यः ।—गदाधरः ।

(२) अविशेषपदेऽभावप्राधान्ये नञ्तत्पुरुषासम्भवः, अव्ययीभावोपगमेऽविशेषमित्येवं स्यात्, अतो वादिनाम विवाद इत्यत्रैव अकारो नञ्समानार्थक इति सूचयितुं नञ्पदेन अशब्दार्थं कर्षन् व्याचष्टे । नेति ।—गदाधरः ।

(३) बीजत्वादि—पाठः ।

(४) अङ्कुरादिः—पाठः ।

(५) मित्याशङ्क्—पाठः ।

(६) निराकरोति—पाठः ।

(७) न चेति—पाठः ।

(८) तत्पदस्यानुत्पत्तिपदेनैव षष्ठीसमासो न तु प्रसङ्गान्तेनेति स्पष्टयितुमनुत्पत्तिप्रसङ्गादित्यसमासेन लिखनम् ।—गदाधरः । अनुत्पत्तिप्रसङ्गात्—पुण० पु० पा० ।

(९) बीजमात्रवृत्ति—पाठः ।

(१०) बीजजननात्—पाठः ।

नाप्यङ्कुराद्यन्यतममात्रम्, प्रागपि तदुत्पत्तिप्रसङ्गात् । यदा यदुत्पन्नं सत् यत्कार्यानुकूलसहकारिमध्यमधिशेते तदा तदेव कार्यं प्रति तस्य प्रयोजकत्वमिति चेत्, तत् किमवान्तरजातिभेदमुपादाय, बीजत्वमात्रेणैव वा । आद्ये स एव जातिभेदस्तत्र प्रयोजकः(१), किमायातं बीजत्वस्य । द्वितीये तु समानशीलानामपि सहकारिवै-

दीधितिः ।

... प्रसङ्गोऽपि द्रष्टव्यः(३)। अङ्कुजानुत्पाद(२)बीजसन्तानानुपरमप्रसङ्गोऽपि ... कदाचिद्बीजं कदाचिच्चानुभवराद्यन्यतममात्रम् कदाचिदङ्कुरः कदाचिद्बीजं कदाचिच्चानुभव इत्यर्थः । प्रागपीति । प्रागङ्कुरस्य पश्चाच्च बीजस्योत्पत्तिप्रसङ्गादित्यर्थः, बीजत्वेनाङ्कुरादि(४)जननसामर्थ्यादिति भावः । अथाङ्कुराद्यन्यतमअवान्तरजातिभेदम् तत्तत्कार्यकुर्वद्रूपत्वम् । अङ्कुरादयस्तु व्यक्तिस्थानीया इति(५) मतम्, त्वेन कार्यता,

दीधितिटिप्पणी ।

... कारणसत्त्वे कार्यतावच्छेकावच्छेदकपरत्वे प्रागपीत्याद्यसङ्गतिः, यावदापादकाभावादत आह । ... च्छिन्नयत्किञ्चिदुत्पादस्यैवोपगमात्, ... वस्तुतस्तु मूलमित्थमपि कदाचिदिति । एतत् यद्यपीत्याद्युक्तम् । ? विशेषसामग्र्यन्तरयोजयितुं पार्यते, अन्यतमत्वस्यावच्छेदकत्वेऽपि विशेषसामग्र्यन्तरमुच्यते न वा, अन्त्ये प्रागपीति । आद्ये यदेत्यादि । तथा च प्रत्येकमेव जन्यतावच्छेदकं त्रयमिति भावः । प्राक् कुशूलस्थतादशायाम्, अङ्कुरस्योत्पादप्रसङ्ग इत्यर्थः । अपिशब्दस्वरसादाह । पश्चादिति । पश्चात् अङ्कुरोत्पत्तिदशायाम्, बीजस्योत्पत्तिप्रसङ्गादित्यर्थः । अन्यतमत्वस्य कार्यतावच्छेदकत्वमभिप्रेत्य स्वातन्त्र्येण फक्किकामवतारयति । अथेति । व्यक्तिस्थानीया इति । यथा दण्डसत्त्वे तद्घटव्य-

(१) जातिभेदप्रयोजकः—पाठः । (२) बीजानुत्पादे—पाठः ।
(३) प्रसङ्गोऽपि बोध्यः—पाठः । (४) बीजत्वेनाङ्कुर—पाठः ।
(५) इति तु—पा० २ पु० ।

कल्यादकरणमित्यायातम्, तत्तत्सहकारिसाहित्ये(१) सति तत्तत्कार्यं प्रति प्रयोजकस्य(२) बीजस्वभावस्य(३) सर्वसाधारणत्वादिति(४)।

---

दीधितिः।

नैतदपि, प्राथमिकबीजानुत्पत्तिप्रसङ्गात्, अङ्कुरत्वावच्छिन्नं प्रत्यपि प्रयोजक(त्व)स्य वक्तव्यत्वात्, अन्यतमत्वेन जन्यत्वे मानाभावाच्चेति॥

दीधितिटिप्पणी।

क्तिरापादयितुं न शक्यते, तद्वदित्यर्थः। अङ्कुरत्वावच्छिन्नं प्रत्यपीति। तथा च त्वन्मते कार्यमात्रवृत्तेः किञ्चिन्निरूपितकार्यतावच्छेदकत्वानियमरक्षार्थं इतराभावाद्बीजत्वमेव जनकतावच्छेदकं वक्तव्यमिति भावः॥

---

कल्पलता।

कृतमङ्कुरेति(५)। अङ्कुरत्वावच्छिन्नं कार्यं प्रति बीजानां बीजत्वेनैव कारणतेति किं विशिष्य व्यवस्थापनग्रहेण, प्रकारान्तरेणापि परि(६)शेषादिना तथैव पर्यवस्यतीत्यर्थः(७)। बीजत्वेन क्वचित् कार्ये बीजं यदि प्रयोजकं न(८) भवेत् तदा तेन रूपेण तदसत् स्यादिति(९), तच्च(१०) कार्यं परिशेषादङ्कुररूपमेव सेत्स्यतीति प्रघट्टकार्थः। बीजस्वभावत्वमि-

---

(१) सहकारिसाकल्ये—पाठः। (२) तत्तत्कार्यप्रयोजकस्य—पाठः।
(३) स्वाभाव्यस्य—पाठः। (४) साधारण्यात्—पाठः।
(५) किमङ्कुरेति—पुण० पु० पा०। (६) प्रकारान्तरेणापि वि—पुण० पु० पा०।
(७) पर्यवस्यतीति—पुण० पु० पा०। (८) यदि न प्रयोजकं—पाठः।
(९) स्यादित्यर्थः—पुण० पु० पा०। (१०) तत्—पाठः। तस्य—पुण० पु० पा०।

कल्पलता ।

ति(१)। बीजत्वं किञ्चित्कार्यं प्रति कारणतावच्छेदकं न वेति विकल्पार्थः। न तत्स्वभावमिति। तर्हि बीजत्वं जातिरेव न स्यादित्यर्थः। ननु बीजत्वं मास्तु, अङ्कुरकुर्वद्रूपत्वमेव तथा स्यादित्यत आह। एवं चेति। कश्चिदिति। बीजत्वेन रूपेण बीजानां किञ्चित्कार्यं प्रति जनकत्वाभ्युपगमे सर्वाण्येव(२) बीजानि तथा स्युः, बीजत्वा(३)विशेषादित्यर्थः। वस्तुमात्रमिति। कार्यमात्रमित्यर्थः। यद्वा सर्वं वस्तु क्षणिकमेवेति तदभिप्रायेणोक्तं वस्तुमात्रमिति। एवं सति बीजासमवधाने घटपटाद्यपि न स्यादित्याह। अबीजादिति। ननु बीजाद्बीजमेव कार्यमस्तु, सभागसन्तानस्यैव मया क्षणिक(४)त्ववादिनाभ्युपगमादित्यत आह। नापीति। तर्हि चरमादपि बीजाद्बीजमेवोत्पद्येत, नाङ्कुरः(५), अङ्कुरस्याप्युत्पादे वा समानदेशताविरोधः, बीजसन्तानानुपरमः, प्राथमिकबीजानुत्पत्तिश्चेति भावः। ननु बीजमङ्कुरो बीजानुभवश्च कार्याणि बीजत्वावच्छिन्नकारणाज्जायन्तामित्यत आह। नापीति। कार्यमिति शेषः। तर्ह्युत्पन्नमात्रादपि बीजादेतानि कार्याणि स्युरित्याह। प्रागपीति। सहकारिसमवधानादिति शेषः(६)। सहकारिसमवधानं शङ्कते। यदेति। अत्रान्तरेति। अङ्कुरकुर्वद्रूपत्वादीत्यर्थः। आद्य इति।

(१) प्रघट्टकार्थः। स्वभावत्वमिति—पाठः। (२) सर्वाण्यपि—पुण० पु० पा०। (३) बीजत्व—पुण० पु० पा०। (४) समान—कलि० मु० पु० पा०। (५) न त्वङ्कुरः—पाठः। (६) सहकारिसमावेशादित्यर्थः—पुण० पु० पा०।

कल्पलता ।

बीजत्वेन बीजानि क्वचित् कार्ये प्रयोजकानीति(१) प्रस्तुते जात्यन्तरमतन्त्रमनुपलम्भबाधितं चेति भावः। द्वितीय इति। एवं सत्यङ्कुरमपि प्रति बीजत्वेनैव कारणत्वमायातमिति सिद्धं नः समाहितमित्यर्थः। अङ्कुरं प्रति बीजं बीजत्वेनैव(२) निमित्तकारण(३)-मित्यभिप्रायेणापि प्रकृतासिद्धौ यद्यपि बीजस्येत्यादिशङ्का कैश्चित्कृतानादेया(४)। समानशीलानामिति। बीजत्वेनैव(५) कारणानामित्यर्थः ॥

---

अत्रापि प्रयोगः। यद्येन रूपेणार्थक्रियासु नोपयुज्यते न तत् तद्रूपम्, यथा बीजं कुञ्जरत्वेन किञ्चिदप्यकुर्वन्न कुञ्जरस्वरूपम्, तथा च शाल्यादयः सामग्रीप्रविष्टा बीजत्वेनार्थक्रियासु नोपयुज्यन्त इति व्या-

---

दीधितिः ।

येन रूपेणेति। रूपमिह परेषां जातिमात्रम्। सामग्रीति।

---

(१) कार्यप्रयोजकानीति—पुण० पु० पा०।

(२) बीजत्वेनैव बीजं—पुण० पु० पा०।  (३) निमित्त—पुण० पु० पा०।

(४) भगीरथठक्कुरकृता शङ्कानादेयेत्यर्थः। अत्रैवं भगीरथठक्कुरेणाशङ्क्य समाहितम्— 'यद्यपि बीजस्यान्त्यावयवित्वान्नाङ्कुरजनकत्वम्, तदवयवानां च न बीजत्वम्, घटत्ववत्तस्याप्यवयवावयव्यवृत्तित्वात्, तथापि बीजपदं लक्षणया तदवयवपरम्' इति। इयमाशङ्कैव नोपपद्यते, बीजस्यैव परमतेऽङ्कुरकारणत्वोपगमात्तन्मतानुसारेणैवोक्तग्रन्थसङ्गतेः, स्वमतेऽपि बीजस्याङ्कुरनिमित्तकारणत्वाभ्युपगमेनैवोपपत्तेरुपादानत्वव्यवस्थापनस्यानावश्यकत्वादिति शङ्करमिश्राणामाशयः। दीधितिकृन्मते तु बीजत्वेनाङ्कुरं प्रति कारणत्वाभिधानं परमतानुसारेणैव, स्वमते तु पीलुपाकरीत्यभ्युपगमे बीजारम्भकद्व्यणुकपर्यन्तविनाश एव परमाणावङ्कुररूपादिसजातीयरूपाद्युत्पत्त्या तादृशपरमाणुभ्यो द्व्यणुकादिक्रमेणाङ्कुरोत्पत्त्या बीजारम्भकस्थूलावयवानामङ्कुराजनकत्वात् परमाणुषु च द्रव्यत्वव्याप्यव्याप्यजात्यनभ्युपगमात् रूपविशेषादिमद्द्रव्यसामान्यादेवाङ्कुरोत्पादाभ्युपगमस्यावश्यकतया बीजावयवत्वेन हेतुत्वमप्रामाणिकमेवेति बोध्यम्। स्पष्टं चेदं ४२ पृष्ठे ११ पङ्क्तौ।   (५) बीजत्वेन च—कलि० मु० पु० पा०।

पकानुपलब्धिः प्रसङ्गहेतुः, तद्रूपतया अर्थक्रियां प्रति योग्यतया व्याप्तत्वात्, अन्यथातिप्रसङ्गात्।

दीधितिः।

यत्किञ्चित्कार्यसामग्रीप्रविष्टाः, कुशूलस्थादय इति यावत्। नोपयुज्यन्ते, परमते। अतिप्रसङ्गात् बीजादेरपि कुञ्जरत्वादिप्रसङ्गात्॥

दीधितिटिप्पणी।

ननु कारणतानवच्छेदकातद्व्यावृत्तौ व्यभिचार इत्यत आह। रूपमिहेति। कुशूलस्थादय इति। न च कथं सङ्कोचः कृतः, तेन कुर्वद्रूपशालेरपि बीजत्वेनोपयोगास्वीकारादिति वाच्यम्। विपर्ययानुमाने मूले कुशूलस्थादय इति लिखनात् तस्यैव पक्षत्वं कृतम्, अत्रापि तथा कृतं, प्रसङ्गविपर्ययोरेकपक्षकत्वनियमात्। नोपयुज्यन्त इत्यनन्तरं पूरणमाह। परमत इति॥

कल्पलता।

यद्येनेति। यज्जात्यवच्छेदेन यस्य किञ्चित्कार्यं प्रति न कारणता तत् तज्जातीयं (च) न भवति, यथा बीजं न कुञ्जरत्वव(१)दित्यर्थः। त्वया च क्षेत्रपतितानामपि शाल्यादीनां बीजत्वेनाङ्कुरं प्रति कारणता, नाभ्युपगम्यत इति ते बीजजातीया न भवेयुः। यद्यपि गुणानां गुणत्वेन न किञ्चित् प्रति कारणता न च ते न गुणजातीयाः, तथापि परमताभिप्रायेणायं प्रयोगः। व्यापकेति। तज्जात्यवच्छेदेनार्थक्रियाकारित्वं(२) तज्जातीयत्वव्यापकम्, तस्यानुपलब्धिः तद्विपरीतोपलब्धिस्त्वदभ्युपगमेनेत्यर्थः। प्रसङ्गमूलभूतां व्याप्तिमाह। तद्रूपतया इति। अन्यथेति। अन्यथा बीजमपि कुञ्जरजातीयं स्यादित्यर्थः॥

(१) यथा न बीजं कुञ्जरत्वजातिम्—कलि० मु० पु० पा०।

(२) व्यापकेति। जात्यवच्छेदेनार्थक्रियाकारित्वं—पुण० पु० पा०।

तद्रूपत्वमेतस्य(१) प्रत्यक्षसिद्धत्वाद(२)शक्यापह्नवमिति चेत्, अस्तु तर्हि विपर्ययः, यद्यद्रूपं तत् तेन रूपेणार्थ(३)क्रियासूपयुज्यते, यथा स्वभावेन सामग्रीनिवेशिनो भावाः, बीजजातीयाश्चैते(४) कुशूलस्थादय इति स्वभावहेतुः, तद्रूपत्वमात्रानुबन्धित्वाद्योग्यतायाः, ततश्चास्ति किञ्चित् कार्यं यत्र बीजत्वेन बीजमुपयुज्यत इति ।

दीधितिः ।

स्वभावेनेति । स्वीयो भावो धर्मो(५) जातिभेदः, परेषां कुर्वद्रूपत्वम्, अस्माकं तु बीजत्वादिकम्, सामान्यतश्च दृष्टान्तता ॥

कल्पलता ।

**ननु कुशूलस्थस्यापि बीजजातीयत्वमनुभवसिद्धत्वादशक्यापह्नवमित्याह । तद्रूपत्वमिति । कुशूलस्थं बीजं बीजत्वेनैवार्थक्रियाप्रयोजकम्, बीजत्वात्, यन्नैवं तन्नैवं यथा कुञ्जर इति व्यतिरेकी । त्वयापि कुर्वद्रूपत्वजातेरङ्कुरप्रयोजकतायामेवं प्रयोक्तव्यमित्याह । यथा स्वभावेनेति । कुर्वद्रूपत्वेनेत्यर्थः । तथाहि, सामग्रीमध्यगतं बीजमङ्कुरकुर्वद्रूपत्वजातीयम्, अङ्कुरप्रयोजकत्वात्, यन्नैवं तन्नैवं यथा शिलाशकलमिति भावः । स्वानुमाने(६) उपनयावयवमाह । बीजजातीयाश्चैत इति(७) । आदिपदात् कृषीवलनीयमानबीज-**

(१) तद्रूपत्वमस्य—पाठः । (२) सिद्धम—पाठः । (३) तेनार्थ—पाठः ।
(४) बीजरूपाश्चैते—पाठः । (५) स्वीया भावाः धर्माः—पाठः ।
(६) भावः । अनुमाने—कलि० मु० पु० पा० ।
(७) बीजजातीयं चैतादिति—पुण० पु० पा० ।

कल्पलता ।

सङ्गृह्णः । यद्वा यत्कुर्वद्रूपमिति सामान्यव्याप्तावेव, तन्मते कुर्वद्रूपत्वं(१) दृष्टान्तोन्वयेनैव । उपदर्शितव्याप्तौ बीजमाह । तद्रूपत्वेति ॥

बीजानुभव एवासाधारणं कार्यम्, यत्र बीजत्वं प्रयोजकम्, तच्च सर्वस्मादेव बीजाद्भवतीति किमनुपपन्नमिति चेन्न । यौगिकतदनुभवस्य तदन्तरेणाप्युपपत्तेः । लौकिक इति चेत्, सत्यमेतत(२), न त्विदमवश्यं सर्वस्माद्बीजाद्भवति, इन्द्रियादिप्रत्यासत्तेरसदातनत्वात्, असार्वत्रिकत्वाच्च, ततश्च योग्यमपि सहकार्यसन्निधानान्न(३) करोतीत्यर्थसिद्धम् ।

दीधितिः ।

अनुभवः साक्षात्कारः । इन्द्रियेति । प्रत्यासत्तेरित्यस्मन्मते ॥ परमते तथोत्पादविशेषस्य ॥

दीधितिटिप्पणी ।

परमते प्रत्यासत्तेर्न हेतुत्वं, तात्कालिककुर्वद्रूपेन्द्रियमात्रादेव प्रत्यक्षसम्भवात्, अत आह । प्रत्यासत्तेरिति । तथोत्पादेति । कुर्वद्रूपतयोत्पादेत्यर्थः ॥

कल्पलता ।

तदेवं सामान्यतः सिद्धौ बीजत्वेनाङ्कुरं प्रति प्रयोजकत्वसाधनाय परिशेषमुपक्रममाणः शङ्कते । बीजानुभव एवेति । अनुभवः निर्विकल्पकम् । यो-

(१) कुर्वद्रूपत्व—कलि० मु० पु० पा० ।
(२) इति चेन्न । सत्यमेतत—कलि० मु० पु० पा० ।
(३) सन्निधेर्न—पुण० पु० पा० ।

कल्पलता ।

गिनिर्विकल्पकं न विषयजन्यमित्याह । यौगिकेति । लौकिकं तु निर्विकल्पकं न सर्वकार्यमिति(१) शङ्कोत्तराभ्यामाह(२) । लौकिक इति । ननु यद्वीजमिन्द्रियप्रत्यासन्नं तन्निर्विकल्पकं जनयत्येवेत्यत आह । ततश्चेति । तावतापि स्थैर्यसिद्धिरिति भावः ॥

---

कार्यान्तरमेवातीन्द्रियं सर्वबीजाव्यभिचारि भविष्यतीति चेत्, तन्न तावदुपादेयम्, अमूर्तस्य मूर्तानुपादेयत्वात्, परिदृश्यमानमूर्तघटिततया(३) मूर्तान्तरस्य तद्देशस्यानुपपत्तेः । नापि सहकार्यं, मिथः सहकारिणा-

---

दीधितिः ।

उपादेयमप्यमूर्तं मूर्तं वा । आद्ये, अमूर्तस्येति । एतच्च परमतेन, तेषां रूपाद्यतिरिक्तस्य द्रव्यस्याभावाद्रूपादेरेव मूर्तत्वात् । अन्त्ये(४), परिदृश्येति । परिदृश्यमानम् परेषामुत्तरोत्तरबीजम् । सहकार्यम् उपादानसाहित्येन यत् क्रियते । मिथ

दीधितिटिप्पणी ।

यथाश्रुतस्य सहकार्यपदस्य सहकारिविधया नोत्पद्यते इत्यर्थकतया पूर्वेण सहाभेदः, उपादेयमपीतरकरणेन सहकारिभूतेनात्मनोत्पाद्यत अत आह । सहकार्यमिति । तथा चात्माभिन्नं यत्र यदुपादानं तत्साहित्येन बीजेन क्रियत इत्यर्थः । मिथ इति मूलम्, यदभावप्रयुक्तः कार्याभावः स एव सहकारी, तथा च सहकारिणामुपादानानां व्यभिचारोनुपपन्नः, सहकारिलक्षणासङ्गतेः । ननु

---

(१) न सर्वबीजकार्यमिति—पाठः । (२) शङ्कोत्तराभ्यामिति—पुण० पु० पा० ।
(३) मूर्तप्रतिहततया—पाठः । (४) अन्ते—पाठः ।

मव्यभिचारानुपपत्तेः(१)।

दीधितिः।

इति। तथा चोपादानसहकारिणोर्विरहेपि सहकार्युपादानसत्त्वे कार्यस्योत्पादे व्यभिचारात् तयोरकारणत्वम्(२), अनुत्पादे च सिद्धं समर्थस्यापि सहकारिविरहादकरणमिति। न च ध्वंस एव साधारणं कार्यमिति(३), कार्यातिरिक्तस्य तस्य तवालीकत्वात्, कार्यस्य च विवेचितत्वादिति भावः॥

दीधितिटिप्पणी।

परस्परं व्यभिचारे को दोषोऽत आह। तथा चेति। उपादानेति। यथासङ्ख्यमन्वयि, उपादानविरहे सहकारिसत्त्वे सहकारिविरहे चोपादानसत्त्वे इत्यर्थः। साधारणम् सर्ववीजसाधारणम्। विवेचितत्वादिति। अङ्कुरत्वेन वीजत्वेनेत्यादि प्रत्येकं कार्यतयोक्ते अन्यतमत्वादिना उक्तौ दत्तदोषत्वादित्यर्थः इति॥

कल्पलता।

सर्वबीजाव्यभिचारि(४) सर्वबीजजन्यम् उपादेयम् समवेतम्। तन्मते दोषमाह। अमूर्तस्येति। द्रव्यस्येति स्वमते(५) विशेषणम्। परिदृश्यमानो (मूर्तो)ङ्कुरः, तथा चाङ्कुरेण तस्य कार्यस्य समानदेशत्वं प्रसज्येतेत्यर्थः। ननु तदतीन्द्रियकार्यं प्रति बीजत्वावच्छिन्नं निमित्तकारणमेव स्यादित्यत आह। नापीति। सहकार्यम् सहकारिसमवहितबीजानिमित्तकमित्यर्थः। स्यादेवं यदि बीजेषु सकलेषु(६) सहकारिसमवधान(७)ध्रौव्यं भवेत्, तथा च यदेव बीजं

(१) नुपपत्तिरिति—पुण० पु० पा०। (२) रकरणत्वम्—पाठः।
(३) साधारणम्—पाठः। (४) व्याभिचारी—कलि० मु० पु० पा०।
(५) द्रव्यस्येति भासकं—पाठः। (६) बीजस्य—कलि० मु० पु० पा०।
(७) समवधानं—कलि० मु० पु० पा०।

कल्पलता ।

तदसम्भवहितं तस्यैव तत् कार्यं न भवेदित्याह । मिथ इति । अव्यभिचारानुपपत्तेः । (कार्याव्यभिचारानुपपत्तेः) । न हि सर्वेषां(१) सहकारिणामेकं किञ्चित् सार्वत्रिकं(२) कार्यमिति नियमोऽस्तीत्यर्थः ॥

अपि चैवं सति प्रयोजकस्वभावो नान्वयव्यतिरेकगोचरः, तद्गोचरस्तु न प्रयोजकः, दृश्यं च(३) कार्यजातमदृश्येनैव स्वभावेन क्रियते, दृश्येन त्वदृश्यमेवेति, सोऽयं यो ध्रुवाणीत्यस्य विषयः ।

दीधितिटिप्पणी ।

अथावलृप्त(४)कार्यतदुपादानवदुपादानाविनाभावो(५)पि सहकारिणः कल्पयिष्यते तत्राह । अपि चेति ।

'यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते(६) ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥' इति ॥

दीधितिटिप्पणी ।

विना धूर्त्वैव यो ध्रुवाणीति व्याचष्टे । य इति ॥

कल्पलता ।

अपि चैवमिति । यदि बीजत्वावच्छेदेनैवा(७)-तीन्द्रियं कार्यं, यदि च कुर्वद्रूपत्वमतीन्द्रियमङ्कुरकारणतावच्छेदकं न तु बीजत्वमित्यर्थः । कारणतावच्छेदकस्य बीजत्वस्य कार्यतावच्छेदकस्याङ्कुरत्वादेः(८)

(१) सर्वेषामेव—पुण० पु० पा० । (२) सार्वदिकं—कलि० मु० पु० पा० ।
(३) दृश्यं—पाठः । (४) अथ क्लप्त—पाठः ।
(५) विनाभावे—पाठः । (६) यि तु सेवते—पाठः ।
(७) वच्छेदेना—पुण० पु० पा० ।
(८) ङ्कुरत्वस्य—पुण० पु० पा० ।

कल्पलता ।

प्रत्यक्षसिद्धत्वेन ध्रुवत्वम्, तथा च
'यो ध्रुवाणि परित्यज्य अध्रुवाणि च सेवते(१) ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥'
इति सर्वप्रकारिका(२)ऽनुपपत्तिरित्यर्थः ॥

अथवा व्यतिरेकेण प्रयोगः । विवादाध्यासितं बीजं सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्यवैकल्यं, तदुत्पत्तिनिश्चयविषयीभूतबीजजातीयत्वात्, यत् पुनः सह-

दीधितिः ।

विवादाध्यासितमिति स्वरूपकथनम्, स्थैर्यपक्षे फलोपहितस्यापि प्राक्कार्यवैकल्यात् । अङ्कुरादीत्यादिपदेन सामान्यव्याप्तिः सूचिता । एवं च हेतावपि बीजादीति बोध्यम् । विशेषव्याप्त्यादरे तु आदिपदमनुपादेयम्, हेतौ च तदुत्पत्तिरङ्कुरनिरूपिता वक्तव्या । वैकल्पिकं च भूतान्तर्बीजपदयोरुपादानम् ।(३) तदुत्पत्तीति । यद्यपि परेषां सहकारिविरहितं

दीधितिटिप्पणी ।

सामान्यहेतौ वैयर्थ्यमाशङ्क्याह । सामान्येति । सामान्यमुखीत्यर्थः । वैयर्थ्यादेतद्द्वयमाह । वैकल्पिकं चेति । ननु भूतान्तहेतुः कुशूलस्थे न सम्भवति, एकहेतुश्चेत् व्यभिचारी । तथा चायमर्थः(४), तदुत्पत्तिनित्याशङ्क्य । यद्यपीति

(१) णि निषेवते- पुण० पु० पा० ।

(२) सर्वप्रकारा—पुण० पु० पा० ।

(३) रुपादानम् । कार्यवैकल्यं कार्योपधायकत्वाभावः । क्षणिकत्वपक्षे कारणमात्रस्यैव कार्यकालवृत्तित्वेन यावत्सत्त्वमेव कार्याभाववत्त्वात्, शिलादौ, सहकारिसाकल्येपि कार्यवैकल्यात् स्वरूपयोग्यत्वविरहप्रयुक्तमेतदिति भावः—पुण० पु० पा० ।

(४) तथा चायसमर्थः—इत्यादर्शपुस्तके १ पु० न्न पाठः ।

कारिवैकल्यप्रयुक्ताङ्कुरादिकार्यवैकल्यं न भवति न तदेवम्भूतबीजजातीयं, यथा शिलाशकलमिति ।

---

दीधितिः ।

न(१) तदुत्पत्तिनिश्चयविषयः, कारणतावच्छेदकरूपेण तत्साजात्यं चासिद्धं, रूपान्तरेण त्वतिप्रसक्तं(२), तथापि तदुत्पत्त्या तन्निश्चायकाव(३)न्वयव्यतिरेकावुपलक्षितौ । नियतान्वयव्यतिरेकितावच्छेदकरूपवत्त्वं तु फलितार्थः । यथेति ( । शिलादौ सहकारिसाकल्येपि कार्यवैकल्यात् स्वरूपयोग्यत्वविरहप्रयुक्तमेव तदिति भावः ) ॥

दीधितिटिप्पणी ।

श्चयविषयीभूतो यत इत्यर्थेन शङ्क्यते, तैः कुशूलस्थे तदनङ्गीकारात् । अथ योऽन्वयव्यतिरेकविषयस्तज्जातीयत्वं वक्तव्यमिति चेत, कया जात्या साजात्यम् । न तावत्कारणतावच्छेदकेन, तैः कुशूलस्थे तदनङ्गीकारात्, जात्यन्तरेण घटादेरप्यस्तीति भावः । फलितार्थ इति । तैर्बीजत्वस्यान्वयव्यतिरेकविषयतावच्छेदकत्वस्वीकारात्(४) । ननु शिलादौ कार्यवैकल्यमुभयसिद्धम्, तच्च कथं सहकारिवैकल्यप्रयुक्तं न भवतीत्यत आह । सहकारिसाकल्येति ॥

---

कल्पलता ।

सोऽयं वादी प्रघट्टकार्थी(५) वा प्रथमप्रघट्टकार्थमेव सिंहावलोकितन्यायेन व्यतिरेकमुखेन प्रयोगमारोप्य दर्शयति । अथवेति । पूर्वतन(६)प्रयोगापेक्षयैव विकल्पः । विवादाध्यासितमिति(७) क्षेत्रपतितबीजे(८) भागबाधवारणार्थम्, सामर्थ्यासामर्थ्याभ्यां कुशूलस्थस्य विवादाध्यासितत्वात् । सहकारि-

( १ ) विरहितं—पाठः। ( २ ) त्वव्यभिचारि—पाठः। ( ३ ) [illegible]
( ४ ) वच्छेदकत्वाङ्गीकाराद्—पा० २ पु०। ( ५ ) [illegible]
( ६ ) पूर्व-पाठः। पूर्वतर—पुण० पु० पा०। ( ७ ) [illegible]

कल्पलता ।

ति । सहकारिवैकल्यप्रयुक्तमङ्कुरादि(रूप)कार्यवैकल्यं यस्येति बहुव्रीहिः, प्रयुक्तं परिपालितं तदुत्तर(१)-कालसम्बद्धी(२)कृतं कार्यवैकल्यं कार्यप्रागभावः, दण्डादीनामपि निमित्तकारणानां कथञ्चित् कार्य-प्रागभावनिरूपणात् । साध्येऽङ्कुरपदप्रक्षेपात् साधने-ऽपि बीजजातीयत्वादित्युक्तम् । साध्यान्यथासौ तु नोभयत्रापि विशेषोपादानम् । तदुत्पत्तिनिश्चयः कार्य-कारणभावनिश्चयः । पुनःपदं च स्फुटार्थम् ॥

न च किमुक्तसाध्यव्यावृत्तेरुक्तसाधनव्यावृत्तिरुदा-हृतात् किं वा परम्परयापि तथाविध(३)प्रसवसामर्थ्य(४)-विरहादिति(५) व्यतिरेकसन्देह इति वाच्यम् ।

दीधितिः ।

उदाहृतात् शिलाशकलात् । किं वेति । तथा चोक्तसाध्या-सत्त्वेपि साक्षात्परम्परया वा अङ्कुरप्रसवसमर्थे बीजत्वसत्त्वं न विरुध्येत(६) इति हेतोर्व्यतिरेकस्य(७) विपक्षव्यावृत्तत्वस्य

दीधितिटिप्पणी ।

तथा चेति । उक्तहेत्वभावे उक्तसाध्याभावप्रयुक्तत्वं यदि स्या-त्तदा प्रयोजकसत्वे प्रयुक्तसत्त्वस्यावश्यकतया हेतुरव्यभिचारी स्यात् । यदि च न प्रयुक्तत्वं, तदा तत्सत्त्वे तदनावश्यकतया व्य-भिचारसन्देहः स्यादित्यर्थः । विपक्षे बाधकाभावात् । इति कृत्वा ?॥

(१) तं उत्तर—पुण० पु० पा० । (२) सम्बद्धं—पुण० पु० पा० ।

(३) तथाभूत—पाठः । तथाविधकार्य—पुण० पु० पा० ।

(४) सामर्थ्यस्य—पाठः ।

(५) तथा च साध्यव्यतिरेको न साधनव्यतिरेकप्रयोजक इति न साधनस्य साध्यव्याप्यत्व-मिति भावः । विरहात्साधनव्यावृत्तिरित्यन्वयः ।

(६) अङ्कुरप्रसवसमर्थबीजत्वं विरुध्यते—पा० २ पु० ।

(७) हेतौ व्यतिरेकस्य—पाठः ।

प्रागेव शङ्काबीजस्य निराकृतत्वादिति(१)।

दीधितिः।

सन्देह इति। प्रागेव बीजत्वस्याङ्कुरप्रयोजकत्वव्यवस्थापनेनेति(२)॥

कल्पलता।

उदाहृतादिति। शिलाशकलादित्यर्थः। बीजं परम्परयापि कुर्वद्रूपं बीजं जनयति, न तु शिलाशकलं, तथा च व्यतिरेकसन्देहः व्यतिरेकव्याप्तिसन्देह इत्यर्थः, अन्यथासिद्धेरिति भावः॥

स्यादेतत्। माभूत् सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गः(३), अस्तु बीजत्वमेव प्रयोजकं, भवतु

दीधितिः।

स्यादेतत्, बीजत्वमतद्व्यावृत्तिरूपं व्यावृत्तित्वादेवासत्, न चासतः सता स्वलक्षणेन समं सम्बन्धः सम्भवति, न च कारणेनासम्बद्धं कारणतावच्छेदकं नाम(४)। अथैवं कुर्वद्रूपत्वमपि तादृशं कथं कारणतावच्छेदकं, कुतश्चानुरोधात् कल्पनीयमङ्कुरत्वादेरप्यलीकत्वात्, तत्तद्व्यक्ति(५)विश्रान्ते च कार्यकारणभावे लोकयात्राविलोपप्रसङ्ग(६)श्चेति चेत्सत्यम्, स्वकारणसामर्थ्यादिति-

दीधितिटिप्पणी।

तादृशम् अतद्व्यावृत्तिरूपम्, तन्मते अनेकवृत्तिधर्ममात्रस्यैवातद्व्यावृत्तित्वात्। ननु तत्तद्व्यक्तिसमवेतमेव कुर्वद्रूपत्वमत आह। तत्तदिति। स्वकारणसामर्थ्यादिति। बीजोत्पन्नबीजेन हि कथं बीजमेव जन्यते न

(१) निराकृतत्वात्—पाठः। (२) व्यवस्थापनेन भाति—कलि० मु० पु० पा०।

(३) धर्माध्यासः—पाठः। (४) सम्बद्धकारणतावच्छेदकं वा -पाठः।

(५) सत्तद्व्यक्ति-पाठः। तत्तत्कार्य-पुण० पु० पा०।

(६) एकस्मिन् बीजे यत्किञ्चिदङ्कुरजनकत्वं गृहीत्वा पश्चाद्बीजान्तरादपि चाङ्कुरोत्पत्तिमवलोकयतो बीजत्वावच्छिन्नस्याङ्कुरत्वावच्छिन्नजनकत्वग्रहो भवति, तादृशग्रहाधीना च बीजसामान्येऽङ्कुरार्थिनः प्रवृत्तिर्भवतीति सर्वसिद्धम्, तथाविधप्रवृत्तिरूपाया लोकयात्राया विलोपप्रसङ्ग इत्यर्थः।

च(१) सहकारिसमवधाने सति(२) कर्तृस्वभावत्वं भावस्य, तथा च तदसन्निधानेऽकरणमप्युपपद्यताम्, तथापि तज्जातीयमात्र एवेयं व्यवस्था, न त्वेकस्यां व्यक्तौ, करणाकरणलक्षण(३)विरुद्धधर्मसंसर्गस्य प्रत्यक्षसिद्धतया तत्र दुर्वारत्वादिति चेन्न,(४)विरोधस्वरूपानवधारणात्(५)।

दीधितिः।

श्यासादितस्वभावविशेष एवोत्पद्यमानः क्षणिको भाव(६)स्तत्तत्कार्य(७) कुर्वाणः कुर्वद्रूप इत्यभिधीयते, क्षणिकत्वं च भावानां करणाकरणत्व(८)लक्षणविरुद्धधर्माध्यासात्, लौकिकस्तु व्यवहारोऽनादिविकल्पवासनावशात् कल्पितैरेवानुगतरूपैः कार्यकारणभावस्यापि(९) कल्पनादिति चेन्मैवम्, तादृशविरुद्धधर्माध्यासस्य निरसनीयत्वात्, अपाकरणीयत्वाच्च विधिरूपतया प्रतिभासमानेषु सामान्यादिषु बाधकानामिति। इयम् सहकारिणां लाभे करणमलाभे चाकरणमिति व्यवस्था॥

दीधितिटिप्पणी।

घटादिरतः स्वकारणेति। स्वकारणेन बीजेन बीज एव जनितोऽनः स्वयमपि तथेत्यर्थः। क्षणिकत्वसिद्धैव तव सर्वाभिमतं स्यात्(१०), तदेव तु नास्तीत्याह। मैवमिति। अपाकरणीयत्वाच्चेति परान्वयि। बाधकानाम् अतद्व्यावृत्तित्वसाधकरूपाणाम्। इदमः पूर्वोक्तद्वयपरार्शेन द्विवचननपुंसकतापत्तिः, अतस्तदर्थमित्यन्तर्भावेणाह। इयमिति॥

(१) भवतु वा—इति शङ्करमिश्रसम्मतः पाठः। (२) समवधाने—पाठः।
(३) करणाकरण—पाठः। (४) चेन्नैवम्—पुण० पु० पा०।
(५) पानवबोधात्—पाठः। पापरिज्ञानात्—पुण० पु० पा०।
(६) क्षणिकोऽभाव—कलि० मु० पु० पा०। (७) स्तत्कार्य—पाठः।
(८) करणाकरण—पाठः। (९) कार्यकारणरूपस्यापि—पाठः। कार्यकारणभावस्य—पाठः।
(१०) वासंभिमसग्रहे—इत्यादर्शपुस्तके पाठः।

कल्पलता ।

वक्ष्यमाणप्रघट्टकार्थानुक्तप्रघट्टकत्रयस्यार्थं विवेक्तुं तत्त्रयार्थानुवादपूर्वकं प्रघट्टकान्तरमवतारयति । स्या-देतदिति । माभूदिति । कुशूलस्थस्यापि बीजत्वेन सा-मर्थ्यस्यैव साधनादिति भावः । अस्त्विति । तथा च कुशूलस्थस्यापि सामर्थ्यमेवेति भावः । कुर्वद्रूपत्वा-कुर्वद्रूपत्वलक्षणविरुद्धधर्माध्यासोऽपि नास्तीति (वा) भावः । भवतु वेति । तथा च क्षेपकारित्वा-क्षेपकारित्वलक्षणोऽपि न विरुद्धधर्माध्यास इति भावः । क्रमोऽत्र न विवक्षितः, तथा च(१) पूर्वसाधि-तार्थानु(२)वादमात्रमेतदिति व्युत्क्रमाभिधानदोषो नात्र । कर्तृस्वभावत्वम् जनकस्वभावत्वम् । तथापी-ति । बीजत्वजात्यवच्छिन्नं किञ्चिज्जनयति, (किञ्चिन्न जनयति,) तत्र सहकारिलाभालाभौ तन्त्रमास्ताम्(३), न त्वेकैकव्यक्तिः कदाचिज्जनिका कदाचिदज-निकेति व्यवस्था सहकारिलाभालाभतन्त्रेत्यर्थः । यद्यपि पूर्वमपि व्यक्तिमेवादाय सामर्थ्यासामर्थ्यादिकं चिन्तितं, क्षणभङ्गानुकूलत्वात्, तथापि व्यक्तेरेक-स्याः फलोपधानानुपधानलक्षणविरुद्धधर्माध्यासः प्र-त्यक्ष(४)त्वादुरपह्नव इ(५)त्यभिप्रायेण शङ्कत्य-पौनरुक्त्यम् ॥

(१) विवक्षितः, किं तु—पुण० पु० पा० ।
(२) साधितार्थवि—पुण० पु० पा० ।
(३) तन्त्रं च मास्ताम्—पाठः । तन्त्रम्-कालि० मु० पु० पा० ।
(४) प्रत्यक्षसिद्ध—पुण० पु० पा० ।
(५) दुरपह्नवते-पुण० पु० पा० ।

स खलु धर्मयोः परस्पराभावरूपत्वं वा स्यात्, नित्यत्वानित्यत्ववत्, धर्मिणि तदापादकत्वं वा, शीतोष्णत्ववत्, तद्वत्ता वा, दण्डित्वकुण्डलित्ववत्(१)।

दीधितिः।

सः विरोधः। इह नित्यत्वानित्यत्वे ध्वंसाप्रतियोगित्वप्रतियोगित्वे। तस्य परस्परविरहस्यापादकत्वं तद्व्याप्यतया। तद्वत्ता परस्परभेदवत्ता, अभावत्वेन भेदस्याप्यभावपदस्मारितत्वेन तदा परामर्शसम्भवात्। तद्वत्ता परस्परं परस्परात्यन्ताभाववत्ता, दण्डित्वे न कुण्डलित्वं कुण्डलित्वे न दण्डित्वमित्यन्ये॥

दीधितिटिप्पणी।

स इत्यनेनाव्यवहितोक्तस्वरूपशब्दपरामर्शे नपुंसकता स्यादतः स इति। ध्वंसाप्रतियोगित्वविशिष्टप्रागभावाप्रतियोगित्वरूपनित्यत्वस्य निवेशे एतदभावो ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं च, तथा च धर्मयोरिति द्विवचनमसङ्गतम्, एवं परस्परविरहरूपत्वमित्यप्यसङ्गतम्, ध्वंसप्रतियोगित्वत्वाद्यवच्छिन्नाभावानात्मकत्वान्नित्यत्वस्येत्यत आह। इहेति। प्रागभावप्रतियोगित्वं तु न निवेशितम्, प्रागभावस्य सर्वासम्मतत्वात्। भेदस्य पूर्वानुक्तत्वेन परामर्शासम्भवादाह। अभावत्वेनेति। करणाऽकरणात्यन्ताभावासत्त्वात् प्रकृतासङ्गतिरन्य इत्यत्रास्वरसः॥

कल्पलता।

स खल्विति। धर्मयोः करणाकरणयोः परस्परविरहरूपत्वमित्यर्थः। नित्यत्वानित्यत्ववदिति। यद्यपि ध्वंसावच्छिन्नसत्त्वमनित्यत्वम्(२), न तु नित्यत्वाभाव एव, तथापि नञर्थसम्बन्धासम्बन्धमात्रविवक्षयैवैतद्द्रष्टव्यम्। तदापादकत्वमिति। परस्परवि-

(१) कुण्डलित्ववदिति—पुण० पु० पा०। (२) वच्छिन्नसत्ताऽनित्यत्वम्-पाठः।

कल्पलता ।

रहापादकत्वम् । तच्च परस्परविरहव्याप्यतया निर्वहति, यथा शैत्यं जले औष्ण्याभावमाक्षिपति, औष्ण्यं च तेजसि शैत्याभावमित्यर्थः । (तद्वत्ता वेति । ) धर्मयोः परस्परभेदमात्रं वा विरोध इत्यर्थः ॥

न प्रथमः, निर्विशेषणस्यासिद्धेः(१), यावत्सत्त्वं कि-

दीधितिः ।

निर्विशेषणस्य कार्यविशेषानियन्त्रितस्याकरणस्य, वस्तुनि क्षणभङ्गवादिनां, असिद्धेः विरोधस्य अ(२)सिद्धत्वात्, यावत्सत्त्वं, किञ्चित्करणात् किञ्चित्करणाभ्युपगमात्, अस्माकं तु तत्सिद्धावपि कालभेदादेव न विरोध इति भावः । यत्त्वस्माकमपि यावत्सत्त्वं संयोगादि(३)जननसम्भवादिति तदसत् । कदाचिदवयविनस्तथात्वसम्भावनायामपि गुणकर्मणोर्नित्यमात्रस्य च तदसम्भवात् । प्रक्रान्तत्वाद्बीजमात्रमधिकृत्येदमित्यपि कश्चित् ।

दीधितिटिप्पणी ।

व्याख्यानमपि करोति । निर्विशेषणस्येति । कार्यविशेषेति । सामान्यतोऽकरणमात्रस्येत्यर्थः । स्वमतेऽसिद्धिरेवेत्यतः, क्षणेति । असिद्धेः अप्रसिद्धेः । स्वमतेऽनुक्तौ न्यूनता स्यादत आह । अस्माकमिति । तत्सिद्धावपि निर्विशेषणाकरणप्रसिद्धावपि । नित्यमात्रस्येति । महाप्रलयावच्छेदेन नित्यस्य जनकत्वासम्भवात् । बीजमात्रेत्यादौ हेतुः, प्रक्रान्तत्वादिति । तथा चास्माकं मतेपि बीजे सदैव परमाण्वादिसंयोगजननसम्भवान्निर्विशेषणाकरणस्य बीजेऽप्रसिद्धेरिति भावः । मूले सविशेषणेत्यस्य कार्यविशेषितस्येत्यर्थकतया विरोधसिद्धावपीत्यसङ्गतम्, कालामिश्रितस्य तस्यैकधर्मिण्यङ्गीकारादतः

(१) असिद्धत्वात—फलि० मु० पु० पा० ।  (२) विरोधस्य अप्र पा०२ पु० ।
(३) यावत्संयोगादि-पाठः ।

श्चित्करणात् । सविशेषणस्य तु(१) विरोधसिद्धावप्यध्यासानुपपत्तेः । यदा यदकरणं हि तदा तत्करणस्याभावो न त्वन्यदा तत्करणस्य, न चैतयो(२)रेकध-

दीधितिः ।

तत्कार्यकरणस्य तदभावस्य च परस्परविरहरूपत्वेऽपि स्वरूपतो न विरोधः, एकस्मिन् कालेऽङ्कुरकरणाकरणयोः समर्थबीजक्षणशिलाशकलात्मकदेशभेदेनेव एकस्मिन् धर्मिणि कालभेदेन वृत्तेरनुभवसिद्धतया दुरपह्नवत्वात्, किन्त्वेककालावच्छेदेन, न चैककालावच्छिन्नं तदुभयमेकत्राभ्युपगच्छाम इत्याह, सविशेषणस्येत्यादिना । सविशेषणस्य कार्यविशेषविशेषितस्य एककालावच्छेदेन विरोधसिद्धावपि अध्यासस्य एकधर्मि(३)समावेशस्यानुपपत्तेः, अनभ्युपगमात् । यदा हि यत्र यत्कार्याकरणं तदा तत्कार्यकरणस्य तत्राभावः तद्धर्मिवृत्तित्वाभावः, न त्वन्यदा तत्कार्यकरणस्य तद्धर्मिवृत्तित्वाभावः, न चैतयोरेककालावच्छि-

दीधितिटिप्पणी ।

कालमिश्रणेन भावं पूरयति । तत्कार्यकरणस्येत्यादि । मूले, अध्यासेति । एतादृशविरुद्धधर्माध्यासस्य त्वन्मतेऽप्यनुपपत्तेरित्यर्थः । उपवर्णितभावार्थस्यैव किञ्चित्पूरणेन पदतो लाभं दर्शयति । सविशेषणस्येति । इदमध्यासस्येत्यनेनाप्यन्वयि । अनुपपत्तौ हेतुः, अनभ्युपगमात् । यदा हीति(४)मूले यदेत्यस्यानुयोगिनि दाने यदा यत्र यदकरणं तदा तत्र तत्करणस्याभाव इत्यर्थकतायां साध्याविशेषः । अथ प्रतियोगिनि यदेत्यस्य दानम्, तथा च यत्र यत्कालीनकरणस्याभावः तत्र तत्कालीनकरणस्याभावः, यत्तदर्थयोर्भेदादेव साध्यभेद इति चेत्, तदा न त्वन्यदेत्यसङ्गतम्, तत्रान्यकालीनतत्करणाभावस्यासम्भवात्, करणसामान्याभावकाल एव तत्स-

(१) सविशेषणस्य च—पाठः । (२) न चानयोः—पाठः ।
(३) एकत्र—पाठः । (४) यदा हि यदकरणमिति मूलपाठाभिप्रायेणेदम् ।

र्मिसमावेशमातिष्ठामहे ।

---

दीधितिः ।

न्तत्कार्यकरणाकरणयोरिति(१) ॥

दीधितिटिप्पणी ।

म्भवात्, एवं प्रकृतासिद्धिश्च, करणप्रतिक्षेपकत्वालब्धेः, संयोगतदभावन्यायेनापि सम्भवात्, अतो वृत्तित्वाभावकथनपरतयाह । यदेत्यादि । इतिः वाक्यसमाप्तौ । अन्यथा(२) न चैतयोरित्यस्यागृह्यव्याख्याऽसङ्गतेः ॥

---

कल्पलता ।

निर्विशेषणस्येति । अकरणत्वमात्रस्य बीजव्यक्तावसिद्धेः । तदेवाह । यावदिति । अन्ततः संयोगादेरपि(३) जननादित्यर्थः । सविशेषणस्येति । यदा तदेतिविशेषणसहितस्येत्यर्थः । तदेवाह । यदेति । अनयोर्विरोधसम्भवेप्यध्यासो नास्तीत्याह । न चेति । न हि यद्बीजं यदैवाङ्कुरं करोति तदैव न करोतीत्यभ्युपगच्छाम इत्यर्थः ॥

---

न द्वितीयः, भावाभावव्यतिरिक्तयोः करणाकरण-

---

दीधितिः ।

भावाभावेति । अभेदे आक्षेप्याक्षेपकभावानुपपत्तेरिति

दीधितिटिप्पणी ।

असिद्धेः को दोष आगत इत्याह । अभेदेति । सहकारिपर्यन्तस्य

---

(१) करणाकरणयोः-पाठः । परन्तु टिप्पणीकृतामनभिमतः, तत्र इतिशब्दस्यापि व्याख्यानदर्शनात् ।

(२) अन्यथा, इतिशब्दस्य मूलस्थप्रतीकधारणार्थकत्वे, न चैतयोरित्यस्यागृह्यव्याख्याऽसङ्गतेः, इतिशब्दघटितप्रतीकमधृत्वैव न चैतयोरितिमूलोपरि क्रियमाणाया न चैतयोरित्यादिकाया दीधितिव्याख्याया असङ्गत्यापत्तेरित्यर्थः । (३) संयोगादीनामपि- पुण० पु० पा० ।

योरसिद्धेः, व्यापारापरव्यपदेशसहकारिभावाभावौ हि करणाकरणे कार्यभावाभावौ वेति(१)। अतिरेकसिद्धावपि स्वकाल एव स्वाभावप्रतिक्षेपवत् अकरणाभावमाक्षिपेत् करणं न त्वन्यदा। न हि यो यदा नास्ति स तदा स्वाभावं प्रति क्षेप्तुमर्ह(ती)ति, विरोध्य-भावं वा आक्षेप्तुम्(२)। तथा(३) सति न कदापि तन्न स्यात् न वा(४) कदापि तद्विरोधी भवेदिति ना-

दीधीतिः।

भावः। व्यापारापरव्यपदेशः सहकारी(५) चरमो व्यापारः। हि यस्मात्। एतावेतौ वा परस्परविरहरूपावेव करणाकरणे। करणाभावातिरिक्ताकरणाभ्युपगमेपि दोषमाह। अतिरेकेति। अन्यदा स्वानधिकरणकाले। प्रति क्षेप्तुम् प्रतिक्षेपात्मीभवितुम्(६), अभावाभावस्य प्रतियोगिरूपत्वात्। विरोध्यभावम् विरोधिनोऽभावम्। तथा सतीति। स्वासत्त्वकालेऽपि स्वाभावप्रतिक्षेपे तदापि तदभावो न स्यात्, स एव स्यात्, स्वासत्त्वकालेऽपि-च स्वविरोधिनोऽभावाक्षेपे तदानीमपि तद्विरोधी न स्या-

दीधितिटिप्पणी।

विग्रहवाक्यप्रदर्शनपूर्वकमर्थमाह। व्यापारेति। एतत्पङ्क्त्यर्थमाह। हीति। यस्मात् सहकारिभावाभावौ कार्यभावाभावौ वा करणाकरणे अतः कारणाद्भावाभावव्यतिरिक्तयोरतयोरसिद्धिरित्यर्थः। प्रतिक्षेपात्मीभवितुमिति। न चैवं स्वाभावमित्यस्य कर्मतानुपपत्तिः, तदा प्रतीत्यस्य कर्मप्रवचनीयार्थकत्वात्। सङ्क्षिप्य पङ्क्तिद्वयस्यार्थमाह। तथा सतीति। तत्पदेन यच्छब्दोपन्यस्तस्यैव विपर्यीकर्तुमुचितत्वादाह। स एवेति। ननु स्वाधिकरणे तदभावस्याक्षेपे स्वा-

(१) वा—पाठः। (२) विरोध्यभावं चाक्षेप्तुम्—पाठः।
(३) तथा च—पाठः। (४) न च—पुस्त० पु० पा०। (५) व्यपदेशसहकारी-पा०पु०२।
(६) प्रतिक्षेपार्थीभवितुम्-पाठः। प्रतिक्षेपात्मीभवितुमित्यर्थः-पुस्त० पु० पा०।

सतो विद्यते भावो नाभावो विद्यते सत(१) इत्याया-तम्, न वा विरोधः(२)।

दीधितिः।

दित्यर्थः। न वेति(३)। स्वासत्त्वकालेऽपि विरोधिनोऽभावाक्षेपे तुल्यन्यायतया स्वानाधिकरणदेशेऽपि तथात्वे सर्वदा सर्वत्र तस्यासत्त्वेन विरोध एव न सिद्ध्येदित्यर्थः (४)॥

दीधितिटिप्पणी।

नाधिकरणे तस्य सत्त्वेन विरोधोस्त्येवात आह। स्वेति। तुल्यन्यायतयेति। स्वावृत्तिकाल इव स्वावृत्तिदेशेपि प्रतिक्षेपस्यौचित्यान्न्यायस्य तुल्यत्वम्। तस्य विरोधिनः॥

कल्पलता।

भावाभावेति। परस्परविरहव्याप्यत्वं वि(रो)धिरूपयोः सम्भवत्यपि, प्रकृते करणाकरणयोर्न तादृशत्वमित्यर्थः। व्यापारपरेति। अन्त्यतन्तु(५)संयोगादिचरमसामग्रीनिवेशित(६)सहकारिभावाभावौ फलोपधानानुपधाने वा करणाकरणे(७) परस्परविरहात्मनी एव, न तु परस्परविरहव्याप्ये इत्यर्थः। अभ्युपगम्याह। अतिरेकेति। यथा घटः स्वावच्छिन्न एव काले स्वाभावं प्रतिक्षिपति न तु स्वानवच्छिन्नेऽपि काले, तथा करणमपि स्वावच्छिन्न एव काले स्वविरोधिनोऽकरणस्याभावमाक्षिपेत्, न तु स्वानवच्छिन्नेऽपि काले, न हि नैल्यं स्वाकालेऽपि रक्तत्वाभावमा-

(१) नासतो विद्यते भाव—पुण० पु० पा०। (२) न चाविरोधः—पाठः।
(३) न चेति-पा० २ पु०। (४) विरोध एव न स्यादित्यर्थः—पाठः।
(५) अन्यतन्त्र-कलि० मु० पु० पा०। (६) निवेश-पुण० पु० पा०।
(७) कारणाकारणे—कलि० मु० पु० पा०।

कल्पलता ।

क्षिपति, तथा सत्यामद्याप्यामो घटः पाके सत्यपि रक्तो न स्यादित्यर्थः । दृष्टान्तमुपपादयति । न हीति । प्रति क्षेप्तुमर्हति प्रतिक्षेपात्मा भवति । दार्ष्टान्तिकमाह । विरोधीति । उभयत्र विपक्षे दण्डमाह । तथा सतीति । स्वानवच्छिन्नेऽपि काले यदि स्वाभावं प्रतिक्षिपेत् तदा यदा न स्यात् तदैव स्यादित्यापातं, यदा स्वयं न स्यात् तदा तद्विरोध्यपि न स्यादिति स्वयमेव स्यादिति विचित्रो विरोध इत्यर्थः । ततः किमित्यत आह । नासत इति । तथा च क्षणिकत्वसाधने प्रवृत्तस्य तव नित्यत्वमेव भावानां पर्यवसितमिति भावः । न वेति । स्वाभावकाले स्वविरोधिकाले ॥

---

नन्वेवं सति परिमाणभेदोऽपि कालभेदेन न विरुध्येत, तत्राप्येवं वक्तुं सुकरत्वात् । न । बाधकबलेन तत्र कालभेदस्य विवक्षितत्वात्, तथाहि, नारब्धद्रव्यै-

दीधितिः ।

आरब्धद्रव्यैः आरब्धद्रव्यवद्भिः । एकदेति फलतः समान-

दीधितिटिप्पणी ।

अल्पपरिमाणचैत्रादेः कालभेदेन बहुपरिमाणोपलम्भस्थले फक्किका मूले, नन्वेवमिति । आरब्धद्रव्यैरपि द्रव्यनाशानन्तरं द्रव्यान्तरारम्भाभ्युपगमादसङ्गतिरतः, आरब्धद्रव्यवद्भिरिति । मतुप् वर्तमानत्वे । अन्यथा समवायेनोक्तौ आरब्धपदवैयर्थ्यापत्तेः । विरोध एककालीन(२)समानदेशत्वस्यैककालीनत्वनिबन्धनमत आह । फलत

---

(१) विरुध्यते—कलि० मु० पु० पा० ।

(२) एककालीनत्वं—इत्यादर्शपुस्तके पाठः ।

रेव द्रव्यावयवैर्द्रव्यान्तरमारभ्यते, मूर्तत्वसमानदेशत्वयोरेकदा विरोधात्, तथा चारम्भपक्षे पूर्वद्रव्यनिवृत्तिः, अनिवृत्तावनारम्भ इति(१), तत्र निवृत्तावाश्रयभेदादेव

दीधितिः ।

देशत्वविशेषणम्, तथा च एककालावच्छेदेन मूर्त्तान्तरेण सममेकधर्मिसमवेतत्वमर्थः । न चैकतन्तुकपटे अंशुसंयोगानामेवासमवायिकारणत्वात् कार्यैकार्थसमवेतस्यैव संयोगस्य द्रव्यासमवायिकारणत्वात् पटस्याप्यंशुदेशत्वमिति वाच्यम् । तन्तुत्वेन पटसमवायिकारणत्वादंशूनां तथात्वायोगात्, वेमाद्यभिघातेन महातन्तुविनाश एव खण्डतन्तुभ्यः पटोत्पादात्, अन्यथा तु पटसंस्थानसारूप्याद्भ्रान्त एव पट(२)प्रत्ययः। अवयवान्तरावच्छेदेनावयविसंयोगोऽवयवे न विरुध्यते, शिरसि शरीरसंयुक्तः पाणिरिति प्रत्ययात्, तथा चांश्वन्तरावच्छेदेन तन्तुसंयोगोऽसमवायी,समवायी तन्तुरेव पटस्येत्यपि केचित्(३)। अनारम्भ इति। पूर्वद्रव्यसत्त्व एव द्रव्यान्तरोत्पत्तौ युगपत्तादृशद्रव्यद्वयोपलम्भा-

दीधितिटिप्पणी ।

इति । पटस्यांशुदेशत्वे हेतुः, कार्यैकार्थेति । तथा चांशुतन्त्वोर्मूर्तयोः कथं समानदेशत्वमिति भावः । तन्तुत्वेनेति । अत्र व्यभिचारापन्नानामंशूनां न तथात्वमिति भावः ।.नन्वेवं कथमेकतन्तोः पट इत्यत आह । वेमेति। अन्यथा यदि वेमाभिघातेन महातन्तोरनाशः स्यात् । एकतन्तुकं पटमङ्गीकृत्य तन्तुत्वेन कारणताया अपि रक्षकस्य मतमाह । अवयवान्तरेति । अनेन च समवायिकारणमात्रावृत्तेरपि संयोगस्य समवायित्वमङ्गीक्रियत इति भावः। अनिवृत्तावप्यारम्भे स्वयमपि दोषान्तरं ददाति । पूर्वद्रव्यसत्त्व इत्यादि ।

(१) रम्भः -पाठः। (२) पर—कलि० मु० पु० पा०। (३) त्यपि कश्चिद्-पाठः।

परिमाणभेदः, अनिवृत्तौ संयोगिद्रव्यान्तरानुपचये क्व परिमाणभेदोपलम्भो(१) यो विरोधमात्रहेतुः, तदुपचये तु(२) क्व परिमाणान्तरोत्पत्तिः, आश्रयानुपपत्तेः(३), अत एव स्थौल्यातिशयप्रत्ययोऽपि(४) तत्र भ्रान्तः, तस्मात् कालभेदेनापि न परिमाणभेद एकस्मिन् धर्मिण्युपसंहर्तुं शक्यत इत्यादि पदार्थचिन्ताचतुरैः सह विवेचनीयम्(५)।

दीधितिः।

पत्तिः, उत्तरद्रव्य एव परिमाणान्तरोत्पत्तौ क्वैकधर्मिसमावेशः, पूर्वद्रव्य एव च परिमाणान्तरोत्पत्तौ द्रव्यान्तरोत्पादाभ्युपगमवैयर्थ्यमित्यपि द्रष्टव्यम्। एतेनारभ्यारम्भकवादानुसरणमपि प्रत्युक्तम्। आश्रयानुपपत्तेरिति। न चावस्थितद्रव्य एव संयोगिद्रव्योपचयात् पूर्वपरिमाणनाशः परिमाणान्तरोत्पादश्च स्यादिति वाच्यम्। परिमाणस्याश्रयनाशैकनाश्यत्वात्, अवयवमात्रसंयोगविशेष(६)बहुत्वादेरेवावयविपरिमाणोत्पादकत्वाच्च। अन्यथा धरण्यादिपतितमृत्पिण्डादेरवयवान्तरसंयुक्तावयवस्य च पूर्वपरि-

दीधितिटिप्पणी।

संयोगिद्रव्यान्तरानुपचय इति मूलम्, एतन्मते इतरसंयोगिद्रव्योपचये सति सङ्कर्षणात् पूर्वद्रव्यासमवायिकारणसंयोगनाशोऽवश्यं भवति, नियमबलात्, पूर्वद्रव्यानिवृत्तिस्थले उपचय एव न भवतीत्यर्थः। आश्रयानुपपत्तेरिति मूलम्, तथा च तदर्थमाश्रयान्तरमवश्यं कल्पनीयमिति भावः। तन्नियममनङ्गीकृत्य स्वयं देशयति। न चेति। आश्रयनाशैकेति। अन्यथा नानाकार्यकारणभावकल्पना स्यादिति भावः। अन्यथा द्रव्योपचये परिमाणनाशे। सर्वत्रैवाह। अवयवान्तरेति। अवयवान्तरेण संयुक्तस्यावयवस्य

(१) लम्भेपि—पाठः। (३) आश्रयानुत्पत्तेः—कालि० मु० पु०. पुण० पु० पा०।
(२) तदुपचयेऽपि च—पाठः। (४) तिशयोपि—पाठः। (५) सह चिन्तनीयम्—पाठः।
(६) अवयवसंयोग-पा० २ पु०।

दीधितिः ।

माणनाशः प्रकृष्टतरपरिमाणान्तरोत्पादश्च स्यादिति भावः ॥

दीधितिटिप्पणी ।

परिमाणनाशादिः स्यादित्यर्थः, आरम्भकतया संयोगित्वरूपोपचयस्यावश्यकत्वात् ॥

कल्पलता ।

एवं सति दीर्घत्वह्रस्वत्वे अपि परिमाणे कालभेदेन विरुद्धे न स्याताम्, तथा च कालादिप्रत्यभिज्ञापि प्रमैव स्यादित्याह । नन्वेवमिति । एवमिति (१)। स्वकाल एव स्वविरोधिपरिमाणं प्रतिक्षिपेत् न तु स्वाकालेऽपीति वक्तुं सुकरत्वादित्यर्थः । तन्न(२), भिन्नकालयोरपि परिमाणयोरेकत्र धर्मिणि विरोधस्य प्रमाणसिद्धत्वादित्याह । नेति । तत्र परिमाणभेदो द्रव्यनाशे सत्येव भवेन्न तु पूर्वद्रव्ये सतीति तथाहीत्यादिना विवेचनीयमित्यन्तेनोपपादयति । तथाहीति । अविनष्ट एव पूर्वद्रव्ये यदि तेष्ववयवेषु द्रव्यान्तरमुत्पद्येत तदा मूर्तयोः समानदेशत्वमापद्येतेत्याह(३) । नारब्धेति । ननु घटादौ चक्षुरालोकयोर्मूर्तयोरेकदेशवृत्तित्वं स्वीकृतमेवेति चेन्न । तत्र चालनीन्यायेनोभयवृत्त्यभ्युपगमात्, निबिडावयवमूर्तद्वयाभिप्रायेण(४) वा विरोधस्योक्तत्वात् । ननु तथाप्येकतन्तुकपटे तन्तूनां पटस्य चांशुवृत्तित्वमेव स्यात्, तथा च कथं न तत्र मूर्तद्वयसमानदेशताविरोध इति चेन्न । तत्र पट एव नोत्पद्यते, किं तु संस्थानविशेषाधीनः

(१) नन्वेवमिति—कलि० मु० पु० पा० । (२) तत्र—कलि० मु० पु० पा० ।
(३) आपद्येतेत्यर्थः-पाठः । (४) न निरवयमूर्तद्रव्याभिप्रायेण—पाठः ।

कल्पलता ।

पटव्यवहार इत्यभ्युपगमात् । ( यद्वा ) अंशुतन्तुसंयोगस्तत्र पटा(१)समवायिकारणम् । न च तत्रैवांशौ पटवृत्तित्वामिति ( तथापि ) तन्तुना समानदेशत्वमेवेति वाच्यम् । अन्यूनदेशयोरेव तथाभ्युपगमात् । अनिवृत्ताविति । पूर्वद्रव्यं यदि न निवर्तते तदा समवायि(२)कारणान्तरानुप्रवेशोऽपि नास्तीति कथं दीर्घत्वोपलम्भ इत्यर्थः । ननु स्थूलप्रत्ययो दृश्यते, संयोगिद्रव्यान्तरानुप्रवेशं विना कथं स्यादित्यत आह । तदुपचये(ऽपी)ति । द्रव्यान्तरं चेन्नोत्पद्यते तदा तत्र स्थौल्यप्रत्ययो धान्यादिराशाविव भ्रान्त इत्यर्थः । तर्हि य एव कृश आसीत् स एवेदानीं स्थूल इति प्रत्यभिज्ञा कथमत आह । अत एवेति । पदार्थचिन्ताचतुरैः वैशेषिकैः ॥

अस्तु तर्हीहापि बाधकं बलम्, प्रसङ्गतद्विपर्य-

दीधितिः ।

प्रसङ्गेति । ताभ्यामकारिणोऽसामर्थ्यसाधकाभ्यां कार्यकारिभेदसिद्धिपर्यवसिताभ्यामर्थतः करणाकरणयोः स्वरूपेणैव विरो-

दीधितिटिप्पणी ।

मूले प्रसङ्गविपर्ययोरसाधकत्वेनोपन्यस्तत्वात तत्तु साक्षात्तयोर्न सम्भवीत्यतः पर्यवसानेनाह । ताभ्यामिति । भेदसिद्धीति । अकारित्वेन फलोपधानरूपकारित्वात्यन्ताभावेनासामर्थ्यसिद्धिरेव कारिभेदसिद्धिः, असामर्थ्यस्य कारिभेदव्यापकत्वादिति भावः । भेदलाभेपि न विरोधसिद्धिरत आह । अर्थत इति । स्वरूपेण

( १ ) तत्रा—पुण० पु० पा० ।

( २ ) तदात्मसमवायि—पुण० पु० पा० ।

ययोरुक्तत्वादिति चेन्न । तयोः सामर्थ्यासामर्थ्यविषयत्वात्, तत्र च उक्तत्वात् । स्तां वा, न तथापि ताभ्यां

दीधितिः ।

धस्य सिद्धे(१)रिति भावः । यद्यपि ताभ्यामेव भेदसिद्धौ कृतमनुना विरोधेन तदुपजीविना, तथापि तावेव न सम्भवत इत्याह । तयोरिति । प्रसङ्गे सामर्थ्यस्य हेतुतया विपर्यये चासामर्थ्यस्य साध्यतया विषयत्वम्, सामर्थ्यप्रसञ्जनीयं करणं चेह(२) सामर्थ्यम्, तत्र च सामर्थ्यं हीत्यादिना दूषणस्योक्तत्वात् । ननु योग्यतावच्छेदकं रूपमेव सामर्थ्यमभिधित्सितम्, तत्र च न साध्यावैशिष्ट्यादेर्दोषस्यावकाश इत्यत आह । स्तां वेति ।

दीधितिटिप्पणी ।

भेदप्रतियोगितावच्छेदकयोर्विरोधस्यार्थत एव लब्धत्वादित्यर्थः । तदुपजीविना प्रसङ्गविपर्ययोपजीविना । यद्यपीत्यादि । कार्यकारिणोर्भेदसिद्धिरेव तस्योद्देश्या सामर्थ्यानुल्लेखेनैव प्रसङ्गविपर्ययतः संलब्धा, तथा च अग्रे तत इत्यादिना भेदसिद्धिस्ततो विरोधसिद्धिर्विरोधसिद्धा च पुनर्भेदसिद्धिरिति शिरोवेष्टनन्यायेनेदं व्यर्थम, तथा च यद्यप्येतावतैवेदंमतदूषणे प्रसङ्गविपर्ययदूषणानुसरणमफलम्, तथापि तददूषणे ताभ्यामपि तन्मतासिद्धिः स्यादतस्तावपि न सम्भवत इति समुदायार्थः । सामर्थ्यासामर्थ्यविषयत्वं यथासङ्ख्येन सङ्गमयति, प्रसङ्ग इत्यादिना । प्रसङ्गे सामर्थ्यस्य विषयत्वमेव न, तत्र कारित्वस्यैव साध्यत्वात्, अत आह । हेतुतयेति । हेतुतया विषयस्यापीदृशभाषया लिखनमविरुद्धमिति भावः । तद्विषयत्वलिखनं साध्य एव दृश्यते प्राचाम् (३), न तु हेतौ, इत्यरुचेराह । सामर्थ्यप्रसञ्जनीयमिति । इदं च लक्षणानियामकसम्बन्धप्रदर्शनम, तथा चाद्यसामर्थ्यपदेन प्रसङ्गीयसाध्यं कारित्वमेवोक्तमिति भावः । तयोरित्यादिना मूलेनानुवादः कृतः,

(१) सिद्धि—पुण० पु० पा० । (२) करणं चेह—कलि० मु० पु० पा० ।
(३) दृश्यते—पा ०२ पु० ।

शक्त्यशक्त्योरविवक्षित(त्वात्)कालभेद एव विरोधः साध्यते, तथोपसंहर्तुमशक्यत्वात्। यदा तदेत्युपेक्ष्य यत्

दीधितिः।

शक्त्यशक्त्योः करणाकरणयोः, न विवक्षितः व्याप्तिघटकः, कालभेदः साधको यस्य सोऽविवक्षितकालभेद इत्यग्रिमग्रन्थस्वरसेन नेयम्। तथा व्याप्तौ कालभेदानुप्रवेशमन्तरेण। उपसंहर्तुमशक्यत्वात्, कुशूलस्थे सामर्थ्येन करणप्रसञ्जन इष्टापत्तिः(१), उत्तरकालं तत्रैव करणाभ्युपगमात्, विपर्यये च हेत्वसिद्धिः(२), व्यापकविरोधिन एवाभावस्य व्याप्याभावसाधकत्वात्, अन्यथातिप्रसङ्गात्(३), करणस्य च सर्वथैवाकरणं विरुद्धम्(४), अन्यथा तवापि सामग्रीनिवेशिनो बीजस्य देशान्तरे अकरणादसामर्थ्यापत्तेः, न चेह तथा(५), तस्यैव सहकारिसमवधाने करणस्य प्रत्यक्षसिद्धत्वात्, तत्प्रामाण्यसन्देहेऽपि हेतोः सन्दि-

दीधितिटिप्पणी।

तथा च तौ सामर्थ्यासामर्थ्यविषयावेवोच्येते, अत एव दूषणमुक्तमित्यर्थः। पूर्वोक्तदोषमुद्धरति। नन्विति। ननु व्याप्तिघटकत्वेनेति कुतः प्राप्तमत आह। अग्रिमेति। तथा च कालनियमाविवक्षायामिति ग्रन्थेन कालस्य व्याप्तिघटकताप्रदर्शकेनात्रापि तथैवाविवक्षितत्वं लभ्यते, अन्यथाऽग्रिमग्रन्थेनानुवादासम्भवात्। तथाशब्दार्थ(कथन)मन्तरेणपर्यन्तम्। विरोधः कथं कुत्रापि स्थले उपसंहर्तुं न पार्यत इत्यत आह। कुशूलस्थ इति। व्यापकेति। प्रतियोगिविरोधिनो व्यापकाभावस्य व्याप्याभावसाधकत्वादित्यर्थः। ननु प्रतियोगिविरोध्यभाव एव(६) कथं नास्तीत्यत आह। करणस्य चेति। तथोपसंहर्त्तुमित्या-

(१) इष्टापत्तेः—पुण० पु० पा०। (२) हेत्वसिद्धेः—पुण० पु० पा०।

(३) अतिप्रसङ्गादिति। द्रव्यत्वव्यापकसंयोगाभावादिना द्रव्यत्वाभावानुमानापत्तेरित्यर्थः।

(४) अकरणमिति। करणसामान्याभाव इत्यर्थः, प्रतियोगिविरोधीति यावत्।

(५) इह, कुशूलस्थबीजे। तथा, सर्वथैवाङ्कुराकरणम्।

(६) भावः—पा० २ पु०।

समर्थं तत्करोत्येवेत्युपसंहर्तुं शक्यमिति(१) चेन्न। कालनियमाद्विवक्षायां यत् समर्थं तत्करोत्येव कदाचिदिति(२)

दीधितिः।

ग्धासिद्धत्वात्(३), मूलशैथिल्याच्चे(४)ति भावः। यदेति। कालभेदमुपेक्ष्यापि एवकारार्थान्तर्भावेन व्याप्तेरादरे इष्टापत्त्यादेरभावादुपसंहारः शक्य एवेति भावः(५)। करोत्येवेत्यत्र यावत्सत्त्वमिति विवक्षितं न वा(६)। नाद्यः, व्याप्त्यसिद्धेः, अङ्कुरकारिणोऽपि बीजस्य प्राक् तदकरणस्य प्रत्यक्षसिद्धत्वात्। एतेनायोग(७)व्यवच्छेदेन नियमो(८)ऽपि निरस्तः। द्वितीये त्वाह। कालेति। एवं च जातनष्टस्य स्वरूपायोग्यत्वप्रसङ्गो-

दीधितिटिप्पणी।

दिना दत्तदोषात् कालमुपेक्ष्य करणत्वोक्ति(९)सम्भव एव नेत्यत उक्तिसम्भवमेव करोति। कालेति। तथा चैतद्वादिनोऽयमभिप्रायः, स्वातन्त्र्येण कालभेदो न प्रवेशनीयः, तत्प्रवेशकार्यं तु एवकार एव करिष्यति, तस्य तदर्थकत्वादित्यभिमानः। एवकारस्य कालभेदादिवाचकत्वं नास्ति, किन्तु क्रियासङ्गतस्यात्यन्तायोगव्यवच्छेदार्थकत्वम्, तथा च तद्दोषतादवस्थ्यमित्यभिप्रायेण कालनियमेत्यादि मूलम्। न्यूनत्वादाह। विवक्षितं न वेत्यादि। जातनष्टस्य सर्वथा

(१) शक्यत इति—पुण० पु० पा०। (२) तत्करोत्येवेति कदाचित्—कालि० मु० पु० पा०।

(३) तत्प्रामाण्येत्यादि। तस्य, प्रत्यक्षस्य। प्रामाण्यसन्देहेऽपि, तेन विषयेऽपि सन्देहात्, हेतोः, सर्वथाऽकरणस्य।

(४) ननु देशभेदावच्छेदेन सामग्रीमध्यानिवेशिनि भावे करणाभावो निवेशनीयः, तस्य तद्देशासम्बन्धेन तद्वृत्तिकरणाभावस्य तद्देशानवच्छिन्नत्वात्, तथा च करणाभावमात्रं करणविरोधि, अस्तु वा देशानवच्छिन्नेत्यस्यापि प्रवेश, तत्राह। मूलेति। प्रत्यभिज्ञयाऽभेदभानात् क्षणिकतायाश्चासिद्धेरिति भावः।

(५) एवेत्यर्थः—पुण० पु० पा०।

(६) न चा—कालि० मु० पु० पा०। (७) एतेनान्ययोग—पुण० पु० पा०।

(८) यत्समर्थं तत्कारित्वाभावाधिकरणं न भवतीति नियमाकारः, अत्रापि प्रत्यक्षविरोधादिरेव दोषः पूर्वोक्तोऽनुसन्धेय इति भावः।

(९) करणत्वायुक्ति—पा० २ पु०। करणत्वयुक्ति—इत्यादर्शपुस्तके पाठः।

स्यात्, तथा च सम्भवविधेरत्यन्तायोगो विरुद्धः, न त्वयोगः, नीलं सरोजं भवत्येवेतिवत् ।

दीधितिः ।

वशिष्यते, वक्ष्यते(१) च तत्र । यद्यदा यत्समर्थं(२) तत् तदा तत्(३) करोतीति स्यात् । न स्यात् । समर्थस्यापि सहकारिविरहेणाकरण(त्व)स्योपपत्तौ मूलशैथिल्यादिरयुक्तत्वात् । केचित्तु(४) करणाकरणविषयावेव प्रसङ्गविपर्ययौ स्यातामत आह । एतां वेति । करणेनाकरणाभावप्रसञ्जने स्वरूपतोऽकरणेन करणाभावसाधने च प्रकारतोऽप्यवैशिष्ट्यात् कालभेदेनोभयोपपत्तेर्मूलशैथिल्याच्चोपसंहर्तुमशक्यत्वम्, यदा यत्कारि तदा न तदकारी(५)त्यादिप्रसङ्गविपर्ययोश्चापादकासिद्धिसिद्धसाधने चेति भावः । यत्स-

दीधितिटिप्पणी ।

कार्याजनकस्य, अन्यथा न्यूनता स्यात् । अवशिष्यत इति । तत्र कदाचिदित्याद्यभावात् । स्वयमाशङ्कते । यदिति । केचित्तु करणाकरणेति । तथा चैतन्मते तयोः सामर्थ्यासामर्थ्यविषयत्वं, न तु करणाकरणविषयकत्वमिति मूलार्थः । करणाकरणेति(६), तथा च करणाकरणविषयौ, नोक्तातिरिक्तौ तौ कर्त्तव्यावित्यर्थः । उपसंहर्त्तुमित्यस्य व्याख्यानमाह । करणेनेति । साध्याविशेषवारणायेत्यादिः । करणेनाकरणाभावप्रसञ्जने स्वरूपतः साध्यावैशिष्ट्यात्, अभावाभावस्य भावस्वरूपत्वात्, अकरणेन करणाभावरूपविपर्ययानुमाने प्रकारतोपि साध्यावैशिष्ट्यमस्तीत्यर्थः । अपिना स्वरूपस्यापि समुच्चयः(७) । ननु यदेत्यादिरूपयोर्मूलशैथिल्यादिदोषो नास्तीत्यत आह । यदेति । तथा च प्रसङ्गे कुशूलस्थबीजस्य पक्षतायां तदाऽङ्कुरकारित्वस्य मयाप्यनङ्गीकारादित्यर्थः ॥

(१) प्रत्यक्षसिद्धबीजत्वेनैकस्य कल्पनमित्यादि वक्ष्यते ।—गुणानन्दः ।

(२) यत्सम्बद्धं—कलि० मु० पु० पा० । (३) तत् तदा—कलि० मु० पु० पा० ।

(४) शङ्करमिश्रस्येदं मतम् ।      (५) तत् कारी—कलि० मु० पु० पा० ।

(६) इदं च केचित्तुकल्पीयव्याख्यानविशेषदर्शनाय पुनः प्रतीकधारणम् ।

(७) समुच्चीयते—पा० २ पु० ।

दीधितिः ।

मर्थमिति यत्कारी(१)सर्थ इत्याहुः। अत्र करणाकरणविरोधमुप-जीव्य प्रवृत्तयोस्तयोः कथं तत्साधकत्वाशङ्के(२)ति चिन्तनीयम् ॥

कल्पलता ।

अस्त्विति(३) । यदीदं द्रव्यं दीर्घं स्यात् ह्रस्वं न स्यादितिवत् यदि बीजं कारि स्यादकारि न स्यात्, अकारि चैतत्, तस्मान्न कारीति प्रसङ्गतद्विपर्ययौ स्यातामिहापीत्यर्थः । कारित्वाकारित्वे यदि साम-र्थ्यासामर्थ्ये एव, तत्र प्रसङ्गतद्विपर्ययौ पूर्वमेव निर-स्तावित्याह । नेति । (तत्रेति । ) ननु सामर्थ्यासामर्थ्ये प्रति प्रसङ्गतद्विपर्ययौ नोच्येते येन पूर्वनिरस्तत्वं स्यात्, किं तर्हि, कारित्वाकारित्वे (प्रति, ते) च ताभ्यामन्ये एवेत्यत आह । स्तां वेति । शक्त्यशक्त्योरिति । कारि-त्वाकारित्वयोरित्यर्थः । तथेति । कालभेदमनन्तर्भा-व्य सामान्यतस्तयोरेक( त्र )धर्मिण्युपसंहाराभावात् । एतदेव शङ्कापूर्वकं(४) दर्शयति । यदा तदेति । उभ-योरेककालत्वं तिरस्कृत्येत्यर्थः । यत्समर्थमिति । तथा च प्रसङ्गे इष्टापत्तिरित्यर्थः । तदेव स्फुटयति । सम्भ-वेति । समर्थस्य करणं सम्भवतीत्यत्यन्तायोगव्यव-च्छेदस्याभिमतत्वादेवेत्यर्थः । अत्र कार्यविशेषाङ्कुरा-द्युपधानं ( न ) विवक्षितम्, अन्यथैकस्यां व्यक्तौ तथा-भ्युपगमेऽपसिद्धान्तापत्तेः । यत् समर्थमिति(५) यज्जा-तीयं समर्थं तज्जातीयं करोत्येवेति वा विवक्षितम् ॥

( १ ) यत्र यत्कारी–पुण० पु० पा० । ( २ ) करणाकरणयोर्विरोधसाधकत्वाशङ्केत्यर्थः ।
( ३ ) अस्तीति—पुण० पु० पा० । ( ४ ) शङ्कापूर्वं—पुण० पु० पा० ।
( ५ ) यत्समर्थमित्यादिमूलेनेत्यर्थः ।

ननु यदसमर्थं प्रथममासीत् तस्य सामर्थ्यं पश्चादपि कुत आगतम्(१), प्रथमं समर्थस्य वा पश्चात् (२) कुत्र गतम् । नैतदेवम् । तत्तत्सहकारिमतस्तत्तत्कारकत्वं(३) हि सामर्थ्यम् , अतद्वतस्तदन्यवतो वा तदकर्तृत्वमसामर्थ्यम् । इदं चौत्पत्तिक(४)मस्य रूपम्, ते च सहकारिणः स्वोपसर्पणकारणवशाद्भिन्नकाला इत्यर्थात् कार्याणामपि भिन्नकालतेति ।

---

दीधितिः ।

सामर्थ्यप्रयुक्तं करणम् , सामर्थ्यं च जनकतावच्छेदकं रूपमित्याशयेना(५)शङ्कते, नन्वित्यादि(ना) । कुत्र गतमिति । सामर्थ्यमित्यनुषज्यते, तथा च तस्योपगमापगमविरहाद्यावत्सत्त्वमकरणं करणं वा प्राप्तमिति भावः ; जनकतावच्छेदकरूपवत्त्वं करणप्रयोजकमिति सत्यम्, परं तु सहकारिसाकल्यविशिष्टमित्याशयेनाह । नैतदिति । तदन्यवतः तद्विरोधि(६)मतः ॥

दीधितिटिप्पणी ।

इदं चेति मूलम्, तथा च इदमेतस्य स्वभावरूपमित्यर्थः ॥

---

कल्पलता ।

ननु प्रथममसमर्थमपि क्रमेण समर्थं भवति, प्रथमं ( वा ) यत् समर्थं तदपि क्रमेणासमर्थमिति किंनिबन्धनमित्याह । नन्विति । सामर्थ्यं यदि योग्यत्वं वि-

---

( १ ) तस्य पश्चादपि सामर्थ्यं कुत आयातम्—पुण० पु० पा० । ( २ ) पश्चादपि—पाठः ।
( ३ ) तत्तत्करणं—पाठः । ( ४ ) इदं चोत्पत्तिक—कलि० मु० पु० पा० ।
( ५ ) शयेन—कलि० मु० पु० पा० । ( ६ ) तच्च प्रतिबन्धकं कारणाभावश्च ।

कल्पलता ।

वक्षित्वा प्रोच्यते(१), तदा सर्वदैव तत् समर्थमेव(२) । अथ कारित्वं विवक्षितं, तदा तदुभयं सहकारिलाभालाभतन्त्रमित्यसकृदावेदित(व्य)मित्यत आह(३) । तत्तदिति । अतद्वत(४) इति । सहकारिविनाकृतस्येत्यर्थः । तदन्यत्रतो चेति । एककार्यसहकारिसत्त्वे-(ऽपि) बलवत्कार्यान्तरसहकारिमतः(५), यथानुमितिसामग्रीतः प्रत्यक्षसामग्री बलवतीत्यर्थः । तदकर्तृत्वम् तदजनकत्वम् । औत्पत्तिकमिति । एतत्स्वभाव एव भावो जायत इत्यर्थः । ननु तर्हि सहकारिसमवहित एव भावो जायतां तत्तत्कार्याणि प्रति(६)त्यत आह । ते चेति । सहकारिणः स्वकारणाधीनसन्निधयो न भावस्वरूपान्तर्गता(७)स्तेषां चानियतकालोपसर्पणत्वात् कार्याणामिव(८) कालानियम इत्यर्थः । उपसर्पणम् सन्निधानम् ॥

---

दीधितिः ।

स्यादेतत् ! अस्तु सहकारिसम्पत्तिः कार्योत्पत्तिनियामिका, तथापि यथैकदेशस्थो विषयादिर्देशान्तरे सहकारिसम्पत्तौ तत्र ज्ञानादिकं जनयति, तथैककालस्थो भावः स्वनाशोत्तरकाले(९) तत्सहकारि(१०)सम्पत्तौ तत्कार्यं(११) जनयेत् , अवश्यं चैतत्

दीधितिटिप्पणी ।

स्यादेतदिति समुदायवाक्ये । पूर्वोक्तस्वकालस्थस्यैव सहका-

---

(१) विवक्षित्वा पृच्छ्यते-पुण० पु० पा० ।

(२) समर्थमिव-पुण० पु० पा० । (३) मित्याह-पुण० पु० पा० ।

(४) अत-कलि० मु० पु० पा० । (५) सहकारतः-कलि० मु० पु० पा० ।

(६) प्रभवती-पुण० पु० पा० । (७) स्वरूपान्तर्भूता-पुण० पु० पा० ।

(८) कार्याणामपि-कलि० मु० पु० पा० ।

(९) स्वानुत्पत्तिकाले तु पूर्वकालवृत्तित्वाभावादेवाप्रसङ्ग इति भावः ।

(१०) तत्तत्सहकारि-पुण० पु० पा० । (११) तत्तत्कार्यं-पुण० पु० पा० ।

तथाप्येककालस्थ एव भावो जातनष्टस्तदा तदा(१) तत्कार्यं(२) करोतु, उत्पन्नमात्रस्य तत्स्वभावत्वात्, एकदेशस्थवदिति चेत्, सेयमेककालस्थता स्वरूपापेक्षया सहकारिसान्निध्या(३)पेक्षया वा। आद्ये न किञ्चिदनुपपन्नम्, नित्यानामप्येवंरूपत्वात्, वर्तमानैकस्वभावत्वात् (सर्व-)(४) भावानाम्, तदेव तु क्वचित् सावधि क्वचिंन्निरवधीति विशेषः। सावधित्वेऽपि व्यापारफलप्रवाहप्रकर्षाप्रक-

दीधितिः।

त्वयाऽभ्युपगन्तव्यम्, कथमन्यथा चिरध्वस्तस्य यागानुभवादेः स्वर्गस्मरणादिजनकत्वमिति शङ्कते। तथापीति। एककालस्थ इति कोऽर्थः, किं स्वाधिकरणकालस्थ इति, किं वा (तत्त)त्कार्यानुगुणतत्तत्सहकारिसाकल्याधिकरणकालस्थ इतीत्याह। सेयमिति। न किञ्चिदिति। स्वकालस्थस्यैव सहकारिसाकल्ये कार्यजनकताया अस्माभिरुपगमात्। तदेव वर्तमानत्वमेव(५)। क्वचित् सावधि कार्योत्पद्यमानतापूर्वकालमात्रावधि(६), क्वचिन्निरवधि कार्योत्पद्यमानताकालस्थायि। ननु कार्याव्यवहितपूर्वकालेऽसतोपि यागादेः कार्यजनकत्वे कदाचिदेव कार्यं जायते नान्यदेत्यत्र किं नियामकमत आह। सावधित्वेऽपीति। व्यापारेति। व्यापारस्य फलप्रकर्षाप्रकर्षाभ्याम् फलानुगुणसहकारिला-

(१) जातनष्टस्तदा—पाठः। (२) तदा कार्यं–पुण० पु० पा०।

(३) सहकारिसन्निधाना–पाठः।

(४) ( ) मूलेष्वेतच्चिन्हाङ्कितो ग्रन्थः पुणतामकरसम्मतो न भवतीति सर्वत्र ज्ञेयम्।

(५) वर्तमानत्वम्–पुण० पु० पा०।

(६) कार्योत्पद्यमानता, कार्याव्यवहितपूर्वकालः, तत्पूर्वकालमात्रावधि कार्याव्यवहितपूर्वकाले न वर्तते, ततः पूर्वमेव वर्त्तते इति तदर्थः।

र्षाभ्यां(१)विशेषः । द्वितीयस्तु स्यादपि यदि तेषां यौग-पद्यं भवेत्, क्रमिणस्तु सहकारिण इत्युक्तम्। सहकारि-सहितः स्वभावेन(२) करोतीति वक्तरि (तु) जातनष्ट एव करोत्वित्युत्तरप्रसङ्गो निरर्गलशैशवस्येत्यलमनेन ।

दीधितिः ।

भालाभाभ्याम्, विशेषः कार्योत्पादानुत्पादरूपः । व्यापाररूपस्य फलस्य सहकारिलाभालाभाभ्यामित्यर्थ इत्यन्ये(३) । तदय-मर्थः, साक्षात्कार्यजनकत्वे स्वस्य व्यापारद्वारा जनकत्वे च व्यापारस्य सहकारिसाकल्यं तन्त्रम्(४), न चेदं निरन्वय(५)ध्व-स्तस्यास्ति, नियतान्वयव्यतिरेकशालिन एव च समवधा-नस्य नियामकत्वान्नातिप्रसङ्ग इति । सहकारिसहित इत्यस्याग्रे स्वतो(६) व्यापारतो वेत्यादिः । जातनष्टः निरन्वयध्वस्तः(७) ॥

दीधितिटिप्पणी ।

रिसाकल्य इत्यादेर्योगे व्यभिचारादाह । तदयमर्थ इति । निरन्वयः निर्व्यापारः । न्यूनत्वादाह । सहकारीत्यादि ॥

कल्पलता ।

ननु यथा स्वानवच्छिन्नेऽपि देशे आत्मनि(८) इ-

(१) प्रकर्षापकर्षाभ्यां-कलि० मु० पु० पा० । प्रकर्षनिकर्षाभ्यां—पुण० पु० पा० ।
(२) सहितस्वभावेन-पुण० पु० पा० ।
(३) अरुचिबीजं तु व्यापारस्य फलत्वोपवर्णनवैयर्थ्यम् ।
(४) तन्त्रम्, प्रयोजकम्, फलोत्पाद इति शेषः ।
(५) निर्णय—कलि० मु० पु० पा० ।   (६) इत्यस्य स्वतो-पुण० पु० पा० ।
(७) निर्णयध्वस्तः—कलि० मु० पु० पा० । (८) देशे स्वात्मनि-कलि० मु० पु० पा० ।

कल्पलता ।

न्द्रियादि ज्ञानसुखादिकं(१) यथा वा मृदङ्गाद्याकाशे शब्दं जनयति, तथा स्वा(२)नवच्छिन्नेऽपि काले क्षणिको(३) भावः कार्याणि जनयतु, न ह्येकं(४) वस्तु क्षणद्वयसम्बद्धं भवितुमर्हतीत्याह । तथापीति । जातनष्टः क्षणिकः । एककालस्थ इति, स्वसम्बन्धिकालस्थ इति विवक्षायामिष्टापत्तिः, स्थैर्येऽपि(५) भावानां स्वावच्छिन्न एव (काले) स्थितेरित्याह । स्वरूपापेक्षयेति । क्वचित्सावधी(कृ)त्यानित्यभावानां, क्वचिन्निरवधीति नित्यभावानाम् । नन्वेवं यागाद्यपि स्वानवच्छिन्ने(६) काले स्वर्गादि न जनयेदित्यत आह । सावधित्वेऽपीति । यागादीनामपि व्यापाररूपं यत्फल(७)मपूर्वादि तस्य प्रकर्षः(८) परिपाक(९)स्तद(धीनश्च स्वर्गादिफल)सम्बन्ध इति नोक्तदोष इत्यर्थः । तर्हि यागवद्बीजाद्यपि स्वानवच्छिन्ने काले कार्यजनकं स्यादत आह । अप्रकर्षेति(१०) । तेषां न तादृशो व्यापार इत्यर्थः । ननु य एव सहकारिकालः स एव बीजादेरपि काल इति कथं कार्याणि जातनष्ट एव न करोतीत्यत आह । द्वितीयस्त्विति । किंच(११) तथाप्येककालस्थ एव भाव इत्यादि त्वदभिधानमपि मां प्रत्यसम्बद्धमित्याह । सहकारीति ॥

---

(१) ज्ञानं सुखादिकं–कलि० मु० पु० पा० । (२) तथार्था–पुण० पु० पा० ।
(३) क्षणिकोपि–पुण० पु० पा० । (४) ह्येवं–पुण० पु० पा० ।
(५) स्थैर्येमि–पुण० पु० पा० । (६) नवच्छिन्नेपि–पुण० पु० पा० ।
(७) व्यापाररूप–कलि० मु० पु० पा० । (८) प्रकर्षश्च–कलि० मु० पु० पा० ।
(९) परीपाक–पुण० पु० पा० । (१०) अपकर्षेति–कलि० मु० पु० पा० ।
(११) द्वितीयस्त्विति । कथञ्चित्–पुण० पु० पा० ।

**तस्मात् कार्यस्य स एव कालः, कारणस्य तु स चान्यश्चेति सम्बन्धिकालापेक्षया पूर्वकालताव्यवहारः(१)।**

दीधितिः ।

कार्यकारणयोरेककालत्वेऽपि पूर्वापर(भाव)व्यवहारं व्यवस्थापयति(२)। तस्मादिति । स एव सहकारिसमवधानोत्तर एव । सम्बन्धीति । सम्बन्धिनोः कार्यतत्प्रागभावयोर्यौ कालौ तदपेक्षया, तद्वृत्तित्वप्रतिसन्धानेन(३) कारणकार्ययोः पौर्वापर्यव्यवहार इत्यर्थः(४) ॥

दीधितिटिप्पणी ।

ननु सेयमेककालस्थतेत्यादिना कार्यकारणयोरेककालस्थताऽङ्गीकृता, एवञ्च कथं पूर्वापरव्यवहार इत्याशयेनावतारयति । कार्यकारणयोरिति । सहकारिसमवहितेन(५) करोतीत्यत्रोत्तरकाल इत्यस्यार्थतो गम्यतया पूर्वोपस्थितत्वादाह । स एवेति । सम्बन्धिनोरिति । उभयकालवृत्तित्वेनास्य पौर्वापर्यमिति(६) भावः ॥

कल्पलता ।

नन्वेतावता कार्यकारणयोर्यौगपद्ये(७) कारणस्य पूर्वकाल(ता)विरहात् कारणतैव न स्यादित्यत आह । तस्मादिति। स एव सामग्र्यव्यवहितोत्तर एव । कारणस्येति । किञ्चित् कारणं तन्त्वादि सामग्र्यनन्तरमप्यनुवर्तते, किञ्चित्तु(८) व्यापारं जनयित्वा कार्यात् पूर्वमेव नश्यती(९)त्यनियम एवेत्यर्थः ।सम्बन्धीति । य-

(१) पेक्षया पूर्वापरकालताव्यवहारः—पुण० पु० पा० । पेक्षया व्यवहारः-पाठः ।
(२) पूर्वापरव्यवहारनियामकं व्युत्पादयतीत्यर्थः ।
(३) व्यवहारे विषयस्याहेतुत्वादाह । तद्वृत्तित्वप्रतिसन्धानेनेति ।
(४) इति—पुण० पु० पा० । (५) समवहितस्वभावेन—इति तु युक्तः पाठः स्यात् ।
(६) पौर्वामिति—इत्यादर्शपुस्तके पाठः ।
(७) कार्यकारणयौगपद्ये-पुण० पु० पा० । (८) केचित्तु—पुण० पु० पा० ।
(९) पूर्वमेव विनश्यन्ती-पुण० पु० पा० ।

कल्पलता ।

स्मिन् काले यत् सम्बध्यते स एव तस्य काल इत्यर्थः । प्रथमप्रकरणार्थप्रपञ्चोऽयम् ॥

अपि च यदा तदेति(१) स्थाने यत्र तत्रेति प्रक्षिप्य तयोरेव प्रसङ्गतद्विपर्ययोः को दोषः ।

दीधितिटिप्पणी ।

मूले यदा तदेत्युपेक्ष्येति विशेषणबाहुल्यभयादुक्तम्, वस्तुत एतत्सत्त्वेपि प्रकृतस्य क्षणिकबीजनानात्वस्य निर्वाहात् ॥

कल्पलता ।

परस्मै यद्विरोधदानाय, तमिदानी(२)माह । अपि चेति । क्षेत्रपतितं बीजं यदि तस्मिन्नेव काले कुशूलेऽप्यङ्कुरजननसमर्थं स्यात् तदा(३)ङ्कुरं जनयेत्, न तु जनयति, तस्मान्न तदा तत्समर्थ(४)मिति क्षणिकमपि सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेण भिन्नं स्यादिति प्रघट्टकार्थः ॥

न कश्चिदिति चेत्, तर्हि देशाद्वैतं वा कारणभेदो वा

दीधितिः ।

तर्हीत्यादि । बीजादेरेकस्मिन् देश इव देशान्तरेऽप्यङ्कुरादिजननसामर्थ्ये तत्राप्यङ्कुरादिजननात् सर्वेषां देशानां सर्वकार्यसत्त्वरूपमद्वैतमापद्येत, तथा च कार्याणां भिन्नकालाशेषदेश(५)वृत्तित्वे-

दीधितिटिप्पणी ।

सामर्थ्ये, स्वीक्रियमाणे । अभेदरूपमद्वैतं बाधितमत आह । सर्व-

(१) तदेत्यस्य-पुण० पु० पा० । तदेत्युपेक्ष्य( तत्स्थाने ) इति टिप्पणीकृन्मतः पाठः ।
(२) तदिदानी-पुण० पु० पा० । (३) तत्रा-पुण० पु० पा० ।
(४) तत्र समर्थ-पुण० पु० पा० । (५) देशारोप—कालि० मु० पु० पा० ।

आपद्येत । आपद्यताम्, तदादाय योगाचारनयनगरं प्रवे-

दीधितिः ।

ऽनादित्वमेव(१) पर्यवस्येदिति साधु क्षणिकत्वम्, असामर्थ्ये तु सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाद्बीजादिव्यक्ते(२)र्भेद आपद्येत, तथा च तस्या अपि(३) पूर्ववदेव पुनर्भेदापत्तौ बीजादिशून्यत्वमेवा(४)पद्येतेति भावः । भावार्थे(५) कृतनिर्भर आशङ्कते । आपद्यतामिति । आपद्यतां वाह्यशून्यत्वम् । योगाचारः विज्ञानवादी । तन्नयानुसरणं हि हेतुफलभावमुपेत्य अपोह्य वा । आद्ये

दीधितिटिप्पणी ।

कार्यवत्त्वेति । साध्विति सोपालम्भम् । असामर्थ्ये अङ्गीक्रियमाणे तु । बीजादिशून्यत्वमिति । न च कथमेतावता शून्यत्वम्, एकदा बहुतरबीजभेदस्यैवागमनादिति वाच्यम् । एवमेकस्य जगतीत्यादिना मूलकारेण यद्वाच्यं तदेवानेन कथितम्, तच्च मूलेनैवोक्तम् । केचित्तु एकस्यैवैतत्कालवृत्तित्वपूर्वकालवृत्तित्वरूपविरुद्धधर्मवत्त्वाद्बीजत्वमेव न स्यादित्यर्थः । न च तत्र भेदोऽङ्गीकर्तव्यः, तथापि तद्दोषात् । आपद्यतामित्यत्र देशाद्वैतं वक्तुं न पार्यते, विज्ञानवादिमतेपि विभिन्ने विज्ञाने सर्वकार्यवत्त्वरूपाद्वैताङ्गीकारात्, अतः कारणभेदो वेत्येतत्परतया सङ्गमयति । भावार्थ इति । बीजादिरूपवाह्यशून्यत्वस्य योगाचारमतस्य पूर्वं शब्दानुक्त-

(१) आपत्तावनिष्टान्तरमाह । अनादित्वमेवेति । अनादित्वमित्युपलक्षणम्, अनन्तत्वमित्यपि महाप्रलयानभ्युपगमे बोध्यम् । (२) अङ्कुरकारिबीजादिव्यक्तेरित्यर्थः । (३) भिन्नत्वेन सिद्धाया अपि ।

(४) बीजादेः शून्यत्वमेव, अङ्कुराद्यर्थक्रियाऽकारित्वमेव, तथा चार्थक्रियाकारित्वरूपसत्त्वहेतोः क्षणिकत्वसाधनस्य पक्षेऽसिद्धिरिति भावः ।

(५) वाह्यशून्यत्व इत्यर्थः । यद्यपि विज्ञाननयप्रवेशेपि विज्ञानस्य कालान्तरे देशान्तरे च सामर्थ्यमसामर्थ्यं वेत्यादिप्रसङ्गतद्विपर्ययाभ्यामापद्यत एव कालाद्वैतं देशाद्वैतं च, तथापि तद्देशजनकत्वाजनकत्वादिप्रसङ्गतद्विपर्ययाणां कार्यकारणभावोपजीवकत्वम्, विज्ञाननये तु परेण परस्यावेदनात् स्वमात्रमग्नमूर्तिकतया इदमस्य कार्यमिदमस्य कारणमिति ग्राह्यभेदोल्लेखसाध्यो न कार्यकारणभावनिश्चयो न वा वस्तुतः स सम्भवी, तस्यापि ज्ञानविशेषत्वात्, न च तदेवापाद्यम्, ज्ञानाद्वैतपक्षे एकज्ञानविषयीकृतानां देशानामप्यभेदेनेष्टापत्तेः । नन्वेवमर्थक्रियाकारित्वरूपं सत्त्वमपि तन्नये विज्ञानस्य न स्यात् । न स्यादेव । प्रामाणिकत्वरूपस्यैव सत्त्वस्य तैरुपगमात्, स्वप्रकाशतया च तस्य विज्ञानेपूपपत्तेरिति ध्येयम् ।

क्ष्याम इति चेन्न । हेतुफलभाववादं(१) वैरिणमनपोद्य तत्र प्रवेष्टुमशक्यत्वात् । तदपवादे वा सत्त्वाख्यसाधनशस्त्रसंन्यासिनस्तव बहिर्वादसङ्ग्रामभूमावपि कुतो भयम् ।

दीधितिः ।

एकस्मिन् ज्ञानात्मनि काले देशे वा(२) ज्ञानजननसमर्थस्य विज्ञानस्य ज्ञानात्मकेषु देशान्तरेषु कालान्तरेषु च तत्सामर्थ्ये तेषु(३) सर्वेषु तज्ज्ञानोत्पत्तिप्रसङ्गः, असामर्थ्ये तु विरुद्धधर्मसंसर्गेणैकस्यापि(४) भेदापत्तौ पूर्वोक्तन्यायेन शून्यत्वमेव स्यादिति क्व विज्ञानवादः । द्वितीये तु सामर्थ्यासामर्थ्ययो(५)र्विरुद्ध(धर्म)योरसिद्ध्या भेदासिद्धावसिद्धव्याप्तिकतया अर्थक्रियाऽकारित्वरूपतया वा सत्त्वस्य(६) क्षणिकत्वसाधनस्य परित्यागे बाह्यस्थिराभ्युपगमेऽप्यविरोधात्कथं तन्मतानुसरणमिति भावः । हेतुफलेति ।

दीधितिटिप्पणी ।

त्वादाह । भावार्थ इति । तथा चेत्यादिना एतस्यैव भावार्थतयोक्तत्वात् । शून्यत्वमेव विज्ञानशून्यत्वमेव । द्वितीये अपोद्येति पक्षे । अर्थक्रियेति । नञ्प्रश्लेषेणार्थक्रियाऽकारित्वरूपतयैवेत्यर्थः । तन्मते सत्ता द्विविधा, एका सत् सदित्यनुगतव्यहारस्य जनिकाऽपरा च जनकत्वरूपा । अन्त्यायाश्च तेन हेतूकरणात्, तथा च व्याप्त्यसिद्धिनिबन्धनं हेतुतावच्छेदकावच्छिन्नहेतोरभावनिबन्धनं वा क्षणिकत्वसाधकं सत्त्वं नास्तीत्यर्थः । इतरव्याख्यानं च वाकारासम्बद्धमित्युपेक्षितम् । अविरोधात् भवता समं(७) नैयायिकस्य विरोधाभावात् । आपद्यता-

(१) वाद—कलि० मु० पु० पा० । (२) ज्ञानात्मनि देशे काले वा—पुण० पु० पा० ।
(३) तत्सामर्थ्येषु—कलि० मु० पु० पा० । (४) एकस्यापि, क्षणिकत्वेनाभिमतविज्ञानस्यापि ।
(५) प्रामाणिकत्वरूपसत्त्वस्य हेतुत्वाभिप्रायेणाह । सामर्थ्यासामर्थ्ययोरिति । तथा च सत्त्वाख्यसाधनं सत्त्वाख्यव्याप्तिग्रहोपायाविरुद्धधर्माध्यासपरम् । अर्थक्रियाकारित्वरूपसत्त्वस्य हेतुत्वपक्षे त्वाह । अर्थक्रियेत्यादि ।—गुणानन्दः ।
(६) अर्थक्रियाकारित्वरूपतया वाह्यत्वस्य—कलि० मु० पु० पा० । अर्थक्रियाकारित्वरूपसत्त्वस्य—पुण० पु० पा० । (७) भवता मम—पा० २ पु० ।

दीधितिः।

केचित्तु विज्ञानवादिनये सर्वेषामेव कार्याणां ज्ञानाभिन्नदेशत्वं देशानां च ज्ञानत्वेनाभिन्नत्व(१)मिष्यत एवेत्याह। आपद्यतामिति। तन्नये परेण परस्यावेदनादेकेन कार्यकारणा(२)भिमतज्ञानद्वयाग्रहणान्न कार्यकारणभावसिद्धिरित्याह, हेतुफलेतीत्याहुः(३)॥

दीधितिटिप्पणी।

मित्यनेन देशाद्वैतपक्ष एवापाद्यत इति व्याख्यातॄणां मतमाह। केचित्त्विति। विज्ञानवादिनये अभिन्नकार्यवत्त्वरूपं वा देशाद्वैतं परस्पराभेदो वा, उभयमपीष्यत एवेत्यर्थः। ननु कथं तत्र हेतुफलभावो वैरी, एकविज्ञानेनान्यविज्ञानजननसम्भवादतः, तन्नय इत्यादि। तन्मते एकेन विज्ञानेन स्वभिन्नाग्रहणात् कार्यकारणभावग्रहासम्भवात्, उभयग्रहण एव तद्ग्रहणात्, तथा च तदादायेत्यसङ्गतमिति भावः। अत्र च ज्ञानत्वेनैक्ये प्रमेयत्वादिनाप्यैक्यसम्भवात् आद्यवादिनयेऽपि देशाद्वैतापादनं कर्तुं पार्यत इति व्यर्थं योगाचारानुसरणमित्यस्वरसः॥

---

कल्पलता।

अत्र प्रसङ्गे, दोषाभिधाने कालगर्भप्रसङ्गेऽपि(४) दोषः स्यादित्यभिप्रायेणाह। न कश्चिदिति। ननु बीजदेशादन्यो देशो(५) यदि भवेत्, तदा तत्र तत्राजनननिबन्धनमसामर्थ्य(६)मापद्येत, तथा च सर्व(त्र) देशे समर्थमेव बीजमिति नास्माकं विरुद्धधर्माध्यास इत्यत आह। तर्हीति। यद्येक एव देशो भवेत् तदैवं सम्भाव्ये-

---

(१) ज्ञानत्वेनाभिन्नत्वं—कलि० मु० पु० पा०।

(२) कार्यकरणा—कलि० मु० पु० पा०।

(३) आहुरित्यरुचिबीजं तु तज्ज्ञानवत्त्वापादने तत्रेष्टापत्त्यसम्भवेन हेतुफलेत्यादिदोषान्तराभिधानमनुपयोगि। एवमेकस्य जगतीत्यादिविरोधः।—गुणानन्दः।

(४) प्रसङ्गापि-पुण० पु० पा०। (५) दन्योपदेशो-पुण० पु० पा०।

(६) निबन्धनासामर्थ्य-पुण० पु० पा०।

कल्पलता ।

न, यदि वा देशनानात्वेऽपि सर्वो देशो वीजाधार एव स्यात् तदा स्यात्, आद्ये देशाद्वैतम्, अन्त्ये कारणस्याप्येकस्यैव वीजस्य तावद्देशवृत्तितया भेदः(१) स्यादित्यर्थः। ननु क्षेत्रकुशूलाद्यात्मापि देशो ज्ञानस्वरूपमेव, बाह्यस्यास्माभिरनङ्गीकारात्, ज्ञानं चैकदेशमेवेति(२) देशभेदेन(३) सामर्थ्यासामर्थ्यापादनं मां प्रति निरवकाशमित्याह। आपद्यत।मिति। ज्ञानमात्रं क्षणस्थायि, न बाह्यं किञ्चिदस्तीति योगाचारनयः, तदेव नगरमित्यर्थः। भेदेन ग्राह्यग्राहकभावो नास्ति, किं तु स्वप्रकाशज्ञानमेव(४) जगदिति योगाचारमताश्रयणे कार्यकारणभावोऽपि त्वया नैष्टव्यः(५), इदमस्य कारणमिदमस्य कार्यमिति भेदेन ग्राह्यग्राहकभावे सत्येव सिद्ध्येत्, तथा च मां प्रति सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासेन(६) यत् सत् तत् क्षणिकमिति यत्(७) त्वया साधयितुमुपक्रान्तं, तत् सर्वं भग्नमेवेत्याह। हेतुफलेति(८)। ननु हेतु(९)फलभावो(पि) मास्तु, को दोष इत्यत आह(१०)। तदपवाद इति। तर्ह्यर्थक्रियाकारित्वलक्षणेन सत्त्वेन हेतुना यत् क्षणिकत्वं त्वया साधयितुमुपक्रान्तं, तच्चेद्वि-

---

(१) वृत्तितयाऽभेदः–कालि० मु० पु० पा०।
(२) चैकदेश एवेति–पुण० पु० पा०। (३) ज्ञानस्यैव देशभेदेन–पाठः।
(४) स्वप्रकाशात्मकं–पाठः। स्वप्रकाशज्ञानात्मकं–पुण० पु० पा०।
(५) नेष्टव्यः–कालि० मु० पु० पा०। (६) धर्माध्यासे–कालि० मु० पु० पा।
(७) धर्माध्यासेन यत् क्षणिकत्वं–पा० २ पु०। (८) फलभावेति–पुण० पु० पा०।
(९) ननु दृष्ट–पुण० पु० पा०। (१०) इत्याह–पा० २ पु०।

कल्पलता ।

ह्याय दूरं(१) पलायितेन त्वया संन्यस्तमेव, तदा सिद्धं नः समीहितम्, यतः पराजितोऽस्येव, तथा च केन भयेन योगाचारनय(२)नगरप्रवेशस्तवेत्यर्थः ॥

ननु यावत्योऽर्थक्रिया भिन्नदेशा(३)स्तावद्भेदं कारणमस्तु, को विरोध इति चेन्न । तेषामपि प्रत्येकं तत्प्रसङ्गस्य तदवस्थत्वात् । एवमेकस्य जगति वस्तुत-

दीधितिः ।

भिन्नदेशकार्यद्वयजनकस्य एककार्यदेशे कार्यान्तरसामर्थ्ये तत्रापि तत्कार्यजननमसामर्थ्ये च कारणभेद आपद्येतेत्याशयं(४) मन्यमानो भ्रान्त आशङ्कते । नन्विति । आशयं प्रकाशयति । तेषामिति ॥

दीधितिटिप्पणी ।

हेतुफलेत्यादिना कारणभेदो वेत्यस्य दूषितत्वात् पुनरुत्थानं न घटत इत्यत आशयाबोधनिबन्धनोत्था(५)नमाह । भिन्नदेशेति । येन कारणेन देशद्वये कार्यद्वयं जनितं तत्रैककार्याधिकरणेऽपरकार्याजनकत्वरूपविरुद्धधर्मेण तयोर्भेद एवापाद्यत इत्येव बुद्ध्वा, तत्र च बाह्यार्थशून्यत्वं कथं स्यात् । कार्यानधिकरणदेशादिकमादाय (हि) भेदापादनं तद्भेदापत्त्या शून्यत्वमित्याशयेन फक्किकेत्यर्थः । आशयमिति । तथा(६) बोध एव भ्रान्तत्वम् । (आशयम्) वास्तवाशयम् प्रकाशयति । तेषामपीति मूलम्, तेषाम् भिन्नानाम् ॥

(१) तच्चेदियद्दूरं-पुण० पु० पा० । (२) योगाचार-कलि० मु० पु० पा० ।

(३) देशस्था—पुण० पु० पा० ।

(४) स्वदेशे स्वोपादेयकार्यं प्रति शक्तो भावस्तत्रैव सहकार्यं ज्ञानसुखाद्यपि प्रति समर्थश्चेत् तत्रापि जनयेत्, तथा चोपादेयसहकार्ययोर्देशाद्वैतमभिन्नदेशता स्यात्, यद्यत्र जननसमर्थं तत् तत्र जनयतीति प्रसङ्गस्यादुष्टत्वात्, विपर्ययस्यादुष्टत्वे कारणभेदः क्षणिकस्यापि कारणस्य तदतद्देशसामर्थ्यासामर्थ्यरूपविरुद्धधर्मसंसर्गाद्भेदो नानात्वं स्यादित्याशयमित्यर्थः ।

(५) त्थाप —इत्यादर्शपुस्तके पाठः । (६) आशयस्येतरथा—इत्यादर्शपुस्तके पाठः ।

त्वस्याऽलाभे साध्वी क्षणभङ्गसाधनपरिशुद्धिः(१)।

---

कल्पलता।

द्वितीयं(२) पक्षमाशङ्क्य निराकरोति। नन्विति। यावत्य इति। यत्र यत्र देशे त्वया कारण(३)मापाद्यते तत्र सर्वत्र तद्बीजमस्ति समर्थं च करोति चेति क विरोध इत्यर्थः। तेषामपीति(४)। कारणानां देशभेदेन (भेदे) यत् क्षेत्रपतितं तत्कुशूले करोति न वा, यत् कुशूलस्थं तच्च दूरे(५) करोति न वेति तत्तदेवाधिकृत्य प्रसङ्गतद्विपर्ययौ वक्तव्याविति किमप्येकं(६) जगति न स्यादिति किंधर्मिकं क्षणिकत्वं साधनीयमित्यर्थः॥

---

(१) न चैकस्य जगति वस्तुतत्त्वस्यालाभेपि अविवक्षितैकत्वानेकत्वकबीजसामान्यपक्षकप्रसङ्गविपर्यययोर्न कश्चिद्दोष इति वाच्यम्। पूर्वक्षणवर्ती भावस्तदव्यवहितोत्तरक्षणवर्तिभावभिन्नो विरुद्धधर्माध्यस्तत्वादित्यनुमाने यतः कुतश्चित् भेदमादाय सिद्धसाधनम्, मिथःप्रतियोगिकभेदासिद्धेरर्थान्तरं च, न च मिथःप्रतियोगिकभेदाश्रयत्वं साध्यम्, यतः कुतश्चिद्भेदस्यापि मिथोभेदत्वेन पुनस्तद्दोषतादवस्थ्यात्। अतः सामर्थ्याश्रयो धर्म्यसामर्थ्याश्रयाद्भिन्नः इति साध्यम्, अलीकमादाय परमते प्रतियोगिप्रसिद्धिः, बीजान्तरमादायैव वा, तस्यापि तदङ्कुरं प्रत्यसमर्थत्वादिति वस्तुस्थितिः, तत्र चैकस्य जगति वस्तुतत्त्वस्यालाभ इत्यादिना पक्षाप्रसिद्धिः स्वरूपासिद्धिर्वोद्भाव्यते, सामर्थ्यस्य पक्षतावच्छेदकत्वे आद्यापि, उपलक्षणीभूय तद्व्यक्तित्वादिस्वरूपपक्षतावच्छेदकान्तरपरिचायकत्वे तु द्वितीयैव, सर्वस्यैव जगतो देशान्तरे कार्याजनकत्वेनासामर्थ्यस्योपगन्तव्यत्वात्, एवञ्चावृत्तित्वव्याघातादिकमेव दोषः। यद्यपि स्वमते परमते चाऽवृत्तित्वं सामर्थ्यस्य नास्तीति दोषाप्रसिद्धितादवस्थ्यम्, तथापि ग्रन्थस्य दोषप्रसञ्जन एव तात्पर्यान्न तदप्रसिद्धावपि काचित् क्षतिः, आपाद्यव्यतिरेकस्य तर्कानुकूल्यात्, एवञ्च तद्देशकार्यकारित्वं यदि देशान्तरकालान्तरीयकार्यकारित्वाभावविरुद्धं स्यात् अवृत्ति स्यादित्यत्र प्रघट्टकतात्पर्यम्, अवृत्तावापाद्यापादकयोः प्रसिद्धिः।

(२) द्वितीय—पुण० पु० पा०। (३) त्वया कारण—कलि० मु० पु० पा०।
(४) तेषामिति-पुण० पु० पा०। (५) तच्चत्वरे-पुण० पु० पा०।
(६) किमप्येवं-कलि० मु० पु० पा०।

अस्तु तर्हि कश्चिद्दोष एवा(१)नयोरिति चेत्, स पुनः कस्मिन् साध्ये। किं सामर्थ्यासामर्थ्ययोः(२), किं

दीधितिः।

अनयोः देशगर्भप्रसङ्गविपर्ययोः। सः दोषः। साध्ये(३) विषये। सामर्थ्येति। साध्ययोरिति विपरिणतेनान्वयः। केचित्तु विरुद्धधर्मसंसर्गा(४)द्भेदापत्तिभयेन यदि कश्चित् कारिणोऽपि सामर्थ्यं नोपेयात् तदा तं प्रति तदपि साध्यम्, यद्वक्ष्यति, सर्वत्राशक्ताविति। अशक्तौ असामर्थ्ये। भेदोपि (च) परम्परया प्रसङ्गादिसाध्यः, विरोधस्तु भेदसिद्ध्यनुगुणः प्रमाणान्तर-

दीधितिटिप्पणी।

सामर्थ्यस्य(५) प्रसङ्गहेतुत्वमेव, न तु साध्यत्वमत आह। साध्य इति। साध्यपदस्य यथाश्रुतार्थरक्षकस्य मतमाह। केचित्त्विति। तदा, तत्, सामर्थ्यमपि, तथा चेतरानुमानसाध्यत्वमादाय साध्यपदार्थो विवक्षितः। यद्वक्ष्यतीति। तथा चैतन्मतेनैव तत्साधनादित्यर्थः। ननु तत्र शक्तिसाधनमेवोक्तमतस्तमपि व्याचष्टे। अशक्ताविति। द्वितीये सङ्गमयति। भेदोपि चेति। तृतीयावितर्के सङ्गमयति। विरोधस्त्विति। किमर्थं साधनीयोऽत आह। भेदसिद्ध्यनुगुण इति। तथा च प्रकृतोपयुक्ततया तस्य साध्यत्वमवश्यमिति भावः। करणाकरणरूपशक्त्यशक्त्योर्विरोधविधया कथं प्रसङ्गविपर्ययोरिष्टत्वम्, तदविरोधेपि तयोरक्षतेः, सामर्थ्यासामर्थ्ययोर्विरोधस्य तदुपजीव्य-

(१) तर्हि दोष एव कश्चिद्— पुण० पु० पा०।

(२) तथा च बीजदेशादन्यो देशो यदि भवेत् तदा तत्राजननिबन्धनमसामर्थ्यमापद्येत, अस्माकं तु सर्वत्र देशे समर्थमेव बीजमिति न विरुद्धधर्माध्यासः, अथ वा बीजदेश एव यदि कश्चिद्भवेत् तदा तत्र जनननिबन्धनं सामर्थ्यमादाय विरुद्धधर्माध्यासो भवेत्, अस्माकं तु सर्वत्र देशेऽसमर्थमेव बीजमिति न विरुद्धधर्माध्यास इत्याशयः।

(३) सामर्थ्यस्य भेदस्य विरोधस्य च प्रसङ्गविपर्ययासाध्यत्वादाह। साध्य इति।

(४) विरुद्धधर्मसंसर्गात्, तद्देशसामर्थ्यदेशान्तरासामर्थ्यरूपात्, कारिणोपि, एकदेशकार्यकारिणोपि कार्यं प्रति सामर्थ्यं नोपेयात्, नाभ्युपगच्छेत् तदा, तम्, वादिनं, प्रति, तदपि, सामर्थ्यमपि, तत्र स्वरसमाह। यदिति।

(५) साम्यमूलभिन्नासामर्थ्यस्य- इत्यादर्शपुस्तके पाठः।

मस्य(१) स्वभावः स्वकारणादायातो न नियोगपर्यनुयोगावर्हतीति चेत्, तर्हि सर्वकालसमानस्वभावत्वेऽपि तत्तत्सहकारिकाल एव(२) करोतीत्ययमस्य स्वभावः स्वकारणादायात इति(३) किं न रोचयेः।

दीधितिः।

क्षणिकत्वेन कारणस्य कार्याधिकरणत्वायोगात्॥

दीधितिटिप्पणी।

जन्यते तद्देश इत्यर्थः॥

कल्पलता।

सामर्थ्यासामर्थ्ययोः साध्यत्वे यदि प्रसङ्गतद्विपर्ययौ दुष्टौ स्याताम्, तदा सर्वत्र सामर्थ्यमेव स्यात्, असामर्थ्यमेव(४) वा, आद्ये आह(५)। प्रसङ्गेति। अन्त्ये आह(६)। सर्वत्रेति। देशभेदेन सामर्थ्यासामर्थ्ये नैकस्य विरुद्धे इति यदि, तदा कालावच्छेदभेदेनापि(७) न विरोध इति कुतः क्षणिकत्वमिति शङ्कोत्तराभ्यामाह। सर्वदेशेति॥

न द्वितीयः, विरुद्धधर्माध्यासेनाप्यभेदे भेदव्यवहारस्य(८) निर्निमित्त(क)त्वप्रसङ्गात्। अनैकान्तिकश्च

दीधितिः।

निर्निमित्तकत्वस्य निर्विषयत्वस्य(९), प्रसङ्गात्, क्वचिदपि

(१) करोतीत्यस्य—पाठः। (२) तत्तत्सहकारिलाभ एव—पाठः।
(३) स्वकारणदोषादिति—पुण० पु० पा०। (४) स्यात्, किमसामर्थ्यमेव—पुण० पु० पा०।
(५) आद्ये त्वाह—पुण० पु० पा०। (६) अन्त्ये त्वाह—पुण० पु० पा०।
(७) कालभेदेनापि—पाठः। (८) व्यवहारस्यापि—पाठः।
(९) व्यवजिहीर्षादेर्निमित्तान्तरस्य सम्भवादाह। निर्विषयत्वस्येति।

हेतुः कालतोपि न भेदं साधयेत्।

---

दीधितिः।

भेदस्यासिद्धत्वात्(१)। अनैकान्तिक इति भेदप्रसिद्धिमभ्युपेत्य। तदप्रसिद्धौ तु व्याप्यत्वासिद्धिर्द्रष्टव्या॥

दीधितिटिप्पणी।

प्रसङ्गादिति(२) हेतुः, क्वचिदिति। भेदस्य, कुत्रापि स्थले, प्रसिद्धिमभ्युपेत्य, उक्तम्॥

---

कल्पलता।

ननु सामर्थ्यासामर्थ्ये विरुद्धे अप्येकत्र विद्यमाने अपि न धर्मिणं भिन्त(३) इत्याह। न द्वितीय इति। अनैकान्तिकश्चेति। देशभेदेन ताभ्यां विरुद्धाभ्यामपि भेदासाधनादित्यर्थः॥

---

न तृतीयः, विरोध(४)लक्षणयोगे बाधकसहस्रेणापि विरोधस्यापनेतुमशक्यत्वात्, अयोगे वा तदेव

---

दीधितिः।

अयोगे वा विरोधलक्षणस्य(५), तदेव विरोधलक्षणमेव,

दीधितिटिप्पणी।

विरोधलक्षणपदस्य निर्विभक्त्यन्तत्वादत्रान्वयो न भवतीत्यत आह। अयोगे वेति। भिन्न उपात्तः स्पष्टबोधार्थम्(६)। उक्तविरोधो

---

(१) न च व्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वादिदमयुक्तमिति वाच्यम्। भेदत्वज्ञानमन्तरेण भेदविशेष्यिकाया अप्यनुमितेरसम्भवात्, तज्ज्ञानस्य च क्वचिदपि भेदप्रसिद्ध्यभावे दुरुपपादत्वमित्यत्रैव ग्रन्थतात्पर्यात्। केचित्तु अप्रसिद्धसाध्यकव्यतिरेकिणमनभ्युपगम्यैवेदमुक्तमित्याहुः।

(२) इति, इत्यत्र, तथा च पूर्वग्रन्थोक्तप्रसङ्गसाधनायोत्तरग्रन्थ इत्यर्थः।

(३) भिन्ते—कलि० मु० पु० पा०।  (४) विरोधि—पाठः।

(५) विरोधलक्षणपदस्य समासनिविष्टत्वादनुषङ्गासम्भवादाह। विरोधेति।—गुणानन्दः।

(६) विरोधलक्षणस्य इति न मूलप्रतीकधारणम्, अलीकत्वात्, किन्त्वध्याहृत्य स्पष्टाववोधार्थमुपात्तमिति भावः।

न्विन्त्यम् । यद्विधाने यस्य निषेधो यन्निषेधे वा यस्य विधानं(१) तयोरेकत्र धर्मिणि परस्परपरीहारस्थितत-

दीधितिः ।

चिन्त्यम् । यद्विधान इति भावाभावविरोधविवेचनम् । यद्विधाने क्रियमाणे यस्य निषेधः सिद्ध्यति, यन्निषेधे च क्रियमाणे यद्विधानं सिद्ध्यति(२) । यद्विधानं(३) यन्निषेधो यन्निषेधो यद्विधानमिति तु फलितार्थः । केचित्तु विधाननिषेधौ ज्ञानाज्ञाने, तथा च यज्ज्ञाने यदज्ञानं(४) यदज्ञान एव यज्ज्ञानमित्यर्थात्(५) गोत्वाश्वत्वादि(६)साधारण्यमित्याहुः(७)।तयोः(८) परस्परपरीहा-

दीधितिटिप्पणी ।

गोत्वाश्वत्वयोरव्यापकः, गोत्वविधानेऽश्वत्वनिषेधस्याविधाने जातेः समव्याप्त्यभावात् ? । अत इदं भावाभावमात्रे विरोधलक्षणमाह । यद्विधाने इत्यादि । यथाश्रुतस्य भावाभावमात्रविरोधलक्षणं भावत्वाभावत्वादिकेऽतिव्याप्तमत आह । यद्विधाने इत्यादि । तथा च यद्विधाने क्रियमाणे यन्निषिध्यत इत्यर्थः । एतच्च न भावत्वाभावत्वयोः, भावत्वविधाने क्रियमाणेऽभावत्वनिषेधस्य सिद्ध्यभावात्, अभावत्वनिषेधे क्रियमाणे भावत्वविधानस्य सिद्ध्यभावात्, भावत्वाभावत्वयोर्भेदात् । लाघवादाह । यद्विधानमिति । अत्र यद्यप्येकदलमेव प्रकृतसम्पादकम्, तथाप्युक्तस्थले उभयस्योक्तत्वात्तथा लिखनम् । भावयोर्विरोधस्यापि एतल्लक्षणसङ्ग्राह्यत्वमाह । केचित्त्विति । एकधर्मि-

(१) यन्निषेधे च यद्विधानं—पुण० पु० पा० ।

(२) यद्विधाने क्रियमाणे, यस्मिन् यत्र ज्ञायमाने, सिद्ध्यति, ज्ञायते । यज्ज्ञानं यन्निषेधज्ञानमिति यावत् । एवमग्रेऽपि ।—गुणानन्दः ।

(३) उभयत्र ज्ञानमपास्य लाघवादाह । यद्विधानमिति ।—गुणानन्दः ।

(४) यदज्ञाने यज्ज्ञानं—कलि० मु० पु० पा० ।

(५) मित्यर्थे—पुण० पु० पा० ।

(६) गोत्वाश्वत्वादीति । एतच्च तदभावव्याप्यत्वादिज्ञानदशायाम् ।—गुणानन्दः ।

(७) एवं सति भ्रमात्मकावच्छेदकधर्मदर्शनविषये पाषाणमयत्वादावपि वन्ह्यादिविरोधिताप्रसङ्गोऽत्रारुचिबीजम् ।

(८) तयोरेकत्र परस्परपरीहारस्थिततया विरोध इति मूले एकत्र परस्परपरिहारेणावस्थितेस्तादृशावस्थित्या विरोधस्य च कथनस्यायुक्तत्वाद्योजनया लभ्यमर्थं प्रकाशयितुं क्रियापदादिपूरणेन योजनामाह, तयोरित्यादिना । एकधर्मिणीति एकत्रेत्यस्य विवरणम् ।

या विरोधः(१), स चेह नास्ति, तद्देशकार्यकारित्वं (हि) तद्देशकार्याकारित्वेन विरुद्धम्, तद्विधौ तस्यैव(२) नियमेन निषेधात्, न पुनर्देशान्तरे तत्कार्याकारित्वेन, तस्यानिषेधात्, न ह्यन्यत्र तदकरणमतत्करणं वा तत्र तत्करणस्याभावोऽपि तु तत्र तदकरणमिति चेत्(३)। ह-

दीधितिः।

रस्थिततया एकधर्मिणि विरोधः सहानवस्थानं(४) सिद्ध्यतीति। तद्विधौ तद्देशकार्य(५)कारित्वविधौ। तस्यैव तद्देशकार्याकारित्वस्यैव। तद्विधौ(६), तस्यानिषेधात्, तस्य देशान्तरे तत्कार्या(७)कारित्वस्यानिषेधात्। अतत्करणम् कार्यान्तरकरणम्, दृष्टान्तार्थं(८) चेदम्। अभाव इति। अभाव इति(९) व्य-

दीधितिटिप्पणी।

णीत्यस्य स्थितेत्यनेनान्वयेऽसङ्गतं स्यादतोऽस्वरसात्, तयोरिति। सिद्ध्यतीत्यन्तेन वाक्यसमापनं च बोध्यम्। अन्यथा विरोध इत्यन्तस्य नास्तिक्रियान्वयेऽन्विष्टे विरोधपरामर्शकतत्पदवैयर्थ्यप्रसङ्गात्। पूरयित्वा शङ्कां दर्शयति। तद्विधावित्यादि। इदानीमेतदन्तर्गतस्यानिषेधादित्यस्य व्याख्यामाह। तस्येति। अतत्करणमित्यस्य तत्करणाभावार्थकत्वे पूर्वोक्ताभेदः स्यादत आह। कार्यान्तरेति। प्रकृतानुपयोगमा(शङ्क्या)ह। दृष्टान्तार्थमिति। ननु तयोः स्थितौ कथं विरुद्ध-

(१) परिहारास्थितिकतया विरोधः--पुस्त० पु० पा०। परीहारावस्थितयोर्विरोधः—पाठः।

(२) तस्य--कालि० मु० पु० पा०। (३) विरोधलक्षणयोगसमर्थकत्वेनात्राभावत्वमुपात्तम्।

(४) तदभावव्याप्यत्वरूपविरोधस्याकाशाद्यव्यापकत्वादाह। सहानवस्थानमिति।

(५) तद्देशकार्येत्यत्र कार्यपदं तत्तत्कार्यलाभाय, अत एव तेषामपि प्रत्येकमिति प्रागुक्तम्। —गुणानन्दः। (६) इदं पूर्वमूलादनुवर्तितम्। (७) देशान्तरकार्या—कालि० मु० पु० पा०।

(८) कार्यान्तरकरणस्य तदभावरूपत्वाप्रसक्तेराह। दृष्टान्तार्थमिति।—गुणानन्दः।

(९) दृष्टान्तार्थं चेदम्। अभाव इति।—कालि० मु० पु० पा०।

न्त । एवम्भूतविरोधलक्षणव्यावृत्तिर्भिन्नकालशक्त्यश-क्त्योरपीत्युक्तप्रायम्, तत्प्रतिसन्दधीथाः । तस्मात् प्रसङ्ग-तद्विपर्यय(१)स्थितावपि असिद्धो विरुद्धधर्माध्यासः(२) ।

दीधितिः ।

वहिर्यत इत्यर्थः । अतो नोत्तरोद्देश्य(३)विधेयावैशिष्ट्यम्(४) । उपसंहरति । तस्मादिति । देशभेदेनेव कालभेदेनापि साम-

दीधितिटिप्पणी ।

धर्माध्यासोऽसिद्धः, तयोरेव तत्साधकत्वादत आह । देशभेदेनेति ।

---

( १ ) प्रसङ्गविपर्यय—पाठः ।

( २ ) अत्र रत्नकीर्तिः, 'न वयं परिभाषामात्रादेकत्र कार्ये देशभेदादविरुद्धे शक्त्यशक्ती ब्रूमः; किन्तु विरोधाभावात्, तद्देशकार्यकारित्वं हि तद्देशकार्याकारित्वेन विरुद्धम्, न पुनर्देशान्तरे कार्याकारित्वेनान्यकार्यकारित्वेन वा । यद्येवं, तत्कालकार्यकारित्वं तत्कालकार्याकारित्वेन विरुद्धम्, न पुनः कालान्तरे तत्कार्याकारित्वेन कार्यान्तरकारित्वेन वा, तत् कथं कालभेदेपि विरोध इति चेत्, उच्यते । द्वयोर्हि धर्मिणोरेकत्रानवस्थितिनियमः परस्परपरिहारस्थितिलक्षणो विरोधः, स च साक्षात्परस्परप्रत्यनीकतया भावाभाववद्वा भवेत्, एकस्य वा नियमेन प्रमाणान्तरेण बाधनान्नित्यत्वसत्त्ववद्वा भवेदिति न कश्चिदर्थभेदः, तदत्रैकधर्मिणि तत्कालकार्यकारित्वाधारे कालान्तरे तत्कार्याकारित्वस्यान्यकार्यकारित्वस्य वा नियमेन प्रमाणान्तरेण बाधनाद्विरोधः । तथाहि, यत्रैव धर्मिणि तत्कालकार्यकारित्वमुपलब्धं तत्रैव कालान्तरे तत्कार्याकारित्वमन्यकार्यकारित्वं वा न क्षणाप्युपसंहर्तुं शक्यते येनानयोराविरोधः स्यात्, क्षणान्तरे कथितप्रसङ्गविपर्ययहेतुभ्यामवश्यम्भाविन धर्मिभेदप्रसाधनात् । न च प्रत्यभिज्ञानादेकत्वसिद्धिः, तत्पौरुषस्य लूनपुनर्जातकेशनखादावप्युपलम्भतो निर्दलनात्, लक्षणभेदस्य च दर्शयितुमशक्यत्वात् । न चैवं समानकालकार्याणां देशभेदेपि धर्मिभेदो युक्तः, भेदसाधकप्रमाणाभावात्, इन्द्रियप्रत्यक्षेण निरस्तविभ्रमाशङ्केनाभेदप्रसाधनाच्च, इति न कालभेदेपि शक्त्यशक्त्योर्विरोधः स्वसमयमात्रादपहस्तयितुं शक्यः, समयप्रमाणयोरप्रवृत्तेः—'इति स्वसिद्धान्तरक्षागृहीतदीक्षः पक्षमुत्प्रैक्षत । तच्च बाधकाभावे प्रत्यभिज्ञाया अप्यभेदसाधकत्वस्य पूर्वमुक्तत्वात्, निरासिष्यमाणत्वाच्च प्रत्यभिज्ञाप्रामाण्ये बाधकानां, तदतद्देशकार्यकारित्वाकारित्वयोः तदतत्कालकार्यकारित्वाकारित्वयोश्च वैलक्षण्यानुपपत्तौ सिद्धायां न निरवद्यतया विद्योतते, सन्दिग्धाभ्यां प्रसङ्गतद्विपर्ययाभ्यां च तस्यैव भेदव्यवस्थापनवैयात्यं पुनरधिकं मूर्धानमधिरोहतीति विपश्चितो विचिन्वन्तु ।

( ३ ) नोत्तरत्र उद्देश—कलि० मु० पु० पा० ।

( ४ ) उत्तरत्र, तत्र तदकरणमित्यत्र ग्रहे । उद्देश्यविधेययोः, उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः । अवैशिष्ट्यम्, अभेदः ।—गुणानन्दः ।

दीधितिः।

र्थ्यासामर्थ्ययोः करणाकरणयोश्चाभ्युपगमे(१) विरुद्धधर्मसंस-
र्गोऽसिद्ध इत्यर्थः ॥

नन्वेकदेशे समर्थस्य देशान्तरे किमिदमसामर्थ्यं यद्विरुद्ध्य-
ते(२), किं सामर्थ्याभावविशिष्टस्य देशान्तरे ( तत्कार्याकारि-
त्वस्यानिषेधात् ) सत्त्वम्, देशान्तरावच्छेदेन तस्य सामर्थ्या-
भाववैशिष्ट्यम्(३), किं वा सामर्थ्यविशिष्टस्य(४) ( तस्य ) त-
न्निष्ठसामर्थ्यस्य वा देशान्तरेऽभावः। नाद्यं(५) द्वयम्, अनभ्यु-
पगमात्(६)। नेतरत्(७), अविरोधात्। एतेनाकरणं व्याख्यातम्।
न चैकदेशकालसतो देशान्तरे कालान्तरे वा(८) कथमसत्त्वमिति
वाच्यम्। तत्रासत्त्वं हि तद्वृत्तित्वाभावः(९), तन्निष्ठाभावप्रतियो-
गित्वं वा, न चेदमन्यत्र सत्त्वेन विरुध्यते, अतद्विरहत्वात्,
अतदाक्षेपकत्वाच्चेति(१०)। मैवम्। एवमपि नैमित्तिकसुखादिसम-

दीधितिटिप्पणी।

अभ्युपगम इति। तथा चानयोरभ्युपगमे कथं विरुद्धधर्माध्यास
इति भावः ॥

अनभ्युपगमात् देशान्तरस्थबीजादेर्देशान्तरेऽनभ्युपगमात्। ए-
तेनाकरणमिति। एकदेशकारकस्य किमिदं देशान्तरेऽकरणमित्या-
दिरूपमित्यर्थः। इदानीं सत्त्वासत्त्व(११)रूपविरुद्धधर्माध्यासमाशङ्क्य
निषधाति। न चेति। एकेति कालेऽप्यन्वयि। अतदाक्षेपकत्वा(त् तदा-
क्षेपकत्वा)भावात्। मैवमिति। आत्म(१२)निष्ठसुखादिजनकघटादि-

---

(१) अभ्युपगम इत्यन्तं प्रसङ्गविपर्ययस्थितावपीत्यस्यार्थकथनम्। एकत्रेत्यादिः।—गुणानन्दः।
(२) यद्विरुद्ध्येत—पुण० पु० पा०। (३) वैशिष्ट्यं वा—पुण० पु० पा०।
(४) विशेषितस्य—पुण० पु० पा०। (५) नाद्यः—कलि० मु० पु० पा०।
(६) क्षणिकपरमाण्वात्मकस्य तस्य देशान्तरवृत्तित्वस्यासम्भवात् तदसम्बद्धदेशस्य तन्नि-
ष्ठाभावाधिकरणतावच्छेदकत्वासम्भवाच्चेति भावः।—गुणानन्दः। (८) कालान्तरे च—पुण० पु० पा०।
(७) न चेतरः—कलि० मु० पु० पा०। (१०) तद्विरहाक्षेपकान्यत्वाच्चेत्यर्थः।—गुणानन्दः।
(९) तद्वृत्त्यभावः—कलि० मु० पु० पा०। इदानीं साध्यासङ्क्यु-इत्यादर्शपुस्तके पाठः।
(११) इदानीं साध्यसत्त्व-पा० २ पु०।
(१२) मैवमिति। निष्ठ-पा० २ पु०।

दीधितिः ।

र्थस्य रूपादेरुपादेयकार्यदेशे(१) सुखादिकारित्वं स्यात्, सामर्थ्याविशेषात्(२), असामर्थ्ये च विरुद्धधर्माध्यासाद्भेदापत्तिः। यदि च सामर्थ्याविशेषेऽपि स्वभावादेव प्रतिनियतदेशकार्यकारित्वम्(३), तदा तथैव प्रतिनियतकालकार्यकारित्वमस्त्वित्युक्तत्वात्(४)। अभिहितं च(५) देशभेदावच्छेदेनैकस्य कालस्येव कालभेदावच्छेदेनैकस्यापि देशस्य करणाकरणादिक(६)मविरुद्धमिति ॥

दीधितिटिप्पणी ।

रूपादेः स्वजन्यक्षणिकापररूपादिदेशे तत्रैव घटादौ सुखादिजनकता स्यादिति भावः। न तु स्वदेश इत्येवास्त्विति वाच्यम्। नैमित्तिकदेशस्य स्वदेशत्वात्, एवं च स्वाधिकरणदेशयोर्भेददर्शनार्थमेव (उपादेय)नैमित्तिकपदयोरुपादानमिति बोध्यम्। फक्किका तु पूर्वं स्वाधिकरणस्वानधिकरणदेशानादरे कृता(७)?। विरुद्धधर्मेति। सामर्थ्याभावविशिष्टस्य देशान्तरे सत्त्वरूपमित्यर्थः॥

---

कल्पलता ।

ननु सामर्थ्यासामर्थ्ये विरुद्धे एव न भवत इत्यत आह(८)। न तृतीय इति। विरोधेति। परस्परविरहात्मनोः परस्परविरहव्याप्ययोर्वा विरोध(९)ध्रौव्यमित्यर्थः। नन्वेकदेशावच्छेदेन कारित्वाकारित्वे

---

(१) उपादेयं कार्यं रूपादे रूपान्तरम्, तादृशि देश इत्यर्थः।—गुणानन्दः।

(२) तादृशसुखादिसामर्थ्यस्य तद्देश इव स्वोपादेयकार्यदेशेऽप्यविशेषात।—गुणानन्दः।

(३) प्रतिनियतदेशः सुखादेरात्मा, स चातिरिक्तो न वेत्यन्यदेतत्।—गुणानन्दः।

(४) तथैव, स्वभावादेव। प्रतिनियतकालः, सहकारिसमवधानोत्तरकालः।—गुणानन्दः।

(५) ननु मास्तु तद्देशावच्छेदेन सामर्थ्याभाव इव तत्कालावच्छेदेन सामर्थ्याभावः, तत्कालावच्छेदेन कारित्वाभावेनैव समं विरोधोऽस्त्वित्याशङ्क्याह। अभिहितमिति।—गुणानन्दः।

(६) करणाकरणादीति। आदिपदात् सामर्थ्यासामर्थ्यपरिग्रहः।—गुणानन्दः।

(७) कृतम्-इत्यादर्शपुस्तके पाठः।

(८) इत्याह—कलि० मु० पु० पा०।　　(९) व्याप्ययोर्विरोधे—पुण० पु० पा०।

कल्पलता।

विरोध(१)लक्षणाक्रान्ते, न तु देशभेदेनापीत्याह(२)। अयोगे चेति। तदेव साम्यापादनाय परद्वारा चिन्तयति। यद्विधान इति(३)। तद्देश(कार्य)कारित्वमिति। यदि तद्देशे(४) करोति तत्रैव न कुर्यात्, तदा विरोधः स्यादित्यर्थः। देशान्तरे तत्कार्याकारित्वेनेत्यत्र(५) तद्देशकारित्वं विरुद्धमित्यनुषञ्जनीयम्। तस्येति। देशान्तरे तदकरण(६)स्यानिषेधादित्यर्थः। न हीति। अन्यत्र यत् तदकरणं(७) तद्विरुद्धकार्यकरणं वा, न तदेव (तत्र) तत्करणस्याभावो येन विरोधः स्यात्, अपि तु तत्रैव देशे तदानीमेव तदकरणम्, तत्करणस्याभाव इत्यर्थः। साम्यमापादयति। हन्तैवमिति। (तदा तदकरणं) तदा(८) तत्करणस्य विरोधि, न त्वन्यदा(पि) तदकरणं, येन विरोधः स्यादित्युक्तमित्यर्थः। पूर्वं प्रसङ्गतद्विपर्यययोरेवासिद्धिरुक्ता, सम्प्रति तत्सिद्धावपि विरुद्धधर्माध्यासाभावमुपसंहरति। तस्मादिति॥

दीधितिः।

प्रसङ्ग(९)विपर्ययस्थितावपीत्यपिना सूचितं प्रसङ्गवि-

दीधितिटिप्पणी।

ननु तस्मादित्यादिना उक्तप्रसङ्गविपर्यययोरेवापिना लाभः(१०) स्थाप्यते, कथमन्यावित्यत आह। सूचितमित्यादि। तथा च सामान्या-

(१) विरुद्ध—पाठः।

(२) भेदेनापीति—पुण्य० पु० पा०। (३) चिन्तयति—कलि० मु० पु० पा०।

(४) यद्देशे—कलि० मु० पु० पा०। (५) देशान्तरे कार्यकारित्वेनेत्यत्र—कलि० मु० पु० पा०।

(६) तदकरणस्य—कलि० मु० पु० पा०। (७) तत्करणं—कालि० मु० पु० पा०।

(८) तदकरणं—कलि० मु० पु० पा०।

(९) पूर्वोक्तप्रसङ्गविपर्यययोरपिनाऽनुपपादनादन्यथाऽवतारयति। प्रसङ्गेति।—गुणानन्दः।

(१०) रेवापेक्षा कृत-इत्यादर्शपुस्तके पाठः। रेवापेक्षालाभः—पा० २ पु०।

ननु यदेकदा यत् करोति तद्यावत्सत्त्वं तत् करोत्येव, यथा कश्चिच्छब्दः(१) शब्दान्तरमिति प्रसङ्गो-

दीधितिः ।

पर्ययसामान्यासम्भवमसहमानोऽन्तरा प्रसङ्गविपर्ययान्तरमाशङ्कते । नन्विति । कश्चित् अनन्त्यः । स्वमतेनेदम् । अन्त्यशब्दक्षणिकतामते तु यथान्त्यः (शब्दः) स्वनाशमिति(२) द्रष्टव्यम् । यावत्सत्त्वमित्यत्र कार्यप्रागभावावच्छिन्नत्वेन सत्त्वं विशेषणीयमित्यपि कश्चित्(३) । यत्तु कश्चिदित्यनेनाविनश्यदवस्थोऽपि

दीधितिटिप्पणी ।

सम्भवस्योक्तत्वात् तद्भङ्गाय यत्किञ्चित्सामान्यप्रदर्शनं कृतमिति भावः । अपिना चैतदर्थोऽवगम्यते, यदि च तत्स्थतिरङ्गीक्रियते तदापीत्यर्थः, अतः सूचितमित्युक्तम् । अनन्त्य इति । अन्त्यशब्देन शब्दान्तराकरणात् तस्य दृष्टान्तत्वासम्भव इतीदमुक्तम् । नन्वनन्त्यशब्दादि कथं यावत्सत्त्वं शब्दान्तरं करोति, विनश्यदवस्थकालेऽपराजननात्, (अ)जनने वाऽत्र कः शब्दस्तवापि यावत्सत्त्वं जनयतीति साध्यवैकल्यम्, अत आह । स्वमतेनेदमिति । स्वः(४) बौद्धः । इदम्, दृष्टान्तः(५) । तन्मते सर्वस्य क्षणिकत्वाद्यावत्सत्त्वं शब्दस्य शब्दजनकत्वमिति । नन्वेवमुभयासिद्धदृष्टान्तोलाभ इत्यतः स्वयं तदा(ह । अ)न्त्यशब्देति । तुः पुनरर्थे, तथा चान्त्यशब्दक्षणिकतावादिनैयायिकैकदेशिनमादायान्त्यशब्दे उभयवादिसिद्धसाध्यकत्वमिति भावः । अनन्त्यशब्दे नैयायिकमतेपि साध्यमस्तीति वादिनो मतमाह । यावदिति । अविनश्यदवस्थोपीति । अपिनाऽनन्त्योपीति सूचितम् । अन्त्यशब्दस्य द्विक्षणस्थायि(ता)वा-

(१) अविनश्यदवस्थः—इत्यधिकं शङ्करमिश्रकृतटीकानुसारेणेति क.लि॰मु॰पु॰ टिप्पन्याम् ।

(२) स्वनाशमिति । शब्दान्तरमित्यस्य कयाचिद्व्युत्पत्त्या ध्वंसपरत्वमिति भावः ।—गुणानन्दः ।

(३) कश्चिदित्यनेनोक्तविवक्षायामपि द्वितीयक्षणावच्छिन्नध्वंसजनकावारणमस्वरसः ।

(४) स्वम्—इत्यादर्शपुस्तके पाठः ।

(५) दृष्टान्तम्—इत्यादर्शपुस्तके २ पुस्तके च पाठः ।

ऽस्तु, विपर्ययस्तु यदेकदा यन्न करोति तत् सर्वदैव तन्न करोति, यथा शिला(शकलमङ्कुरम्), न

दीधितिः।

बोध्य इति कश्चित्, तन्न, स्वतोऽसिद्धेः(१), यत्किञ्चिद्रूपविशिष्टस्य यावत्सत्त्वकरणेनैव साध्यसत्त्वे च सहकारिविशिष्टस्य तथात्वादिष्टापादनाच्च। इति अनेन प्रकारेण, प्रसङ्गो(२)ऽस्तु, तेन कुशूलस्थबीजस्य पराभ्युपगतमेकदाङ्कुरकारित्वरूपहेतुमत्त्वं(३) लभ्यते(४)। एकदा कदाचित्(५)। भवतश्च(६) कदा-

दीधितिटिप्पणी।

दिमते आद्येनापि वारयितुमशक्यत्वादिदम्। स्वतः बौद्धमते, तन्मते सर्वस्य विनश्यदवस्थत्वात्। उभयमते दोषमाह। यत्किञ्चिदिति। कार्याभावेत्यादियादृशतादृशविशेषणेन भवता यदि साध्यरक्षणं क्रियते, तदा मयाप्यत्रैवानुमाने सहकारीत्यादियत्किञ्चिद्विशेषणदानेन साध्यरक्षणं करिष्यत इति व्यावृत्तिः स्यादित्यर्थः। एकदाकारित्वमभ्युपेयते कुशूलस्थबीजे परैरित्यदर्शनादेतन्मात्रस्य प्रसङ्गपदा(७)वाच्यत्वमत आह। इतीति। इदमेवाह। अनेनेति। केचित्तु प्रसङ्गस्यापवादतर्करूपस्य वाचकं स्यादित्यादिपदमेव, स चात्र नास्तीत्यत आह। इतीति। तथा चानेन व्याप्तेः प्रदर्शनेनेत्यर्थः। तेनेत्यादि एकदेशकीर्तनपरमिति वदन्ति। एकदेशरूपप्रसङ्गहेतोर्लिखनात् एकदा न करोतीत्येकदाशब्देन विपर्ययहेतुकथनं सङ्गतम्। प्र-

(१) सन्मात्रस्य क्षणिकत्वेन अविनश्यदवस्थकारणत्वासिद्धेरिति भावः।—गुणानन्दः।

(२) प्रयोगो—कालि० मु० पु० पा०।

(३) हेतुमत्त्वम्, आपादकस्याभ्युपगतत्वम्।—गुणानन्दः।

(४) उपनयोऽप्युक्त इति लभ्यत इति भावः।

(५) एकपदस्याभेदार्थकत्वे तत्प्रतियोगिनोऽलाभान्न निराकाङ्क्ष प्रतिपत्तिरत आह। कदाचिदिति। देशावच्छेदेन कारित्वाभावव्यावृत्तये चैतत्कालावच्छेदेन [illegible] चैतत्।—गुणानन्द।

(६) प्रसङ्गे येन यत्साध्यते तस्याभावस्तदभावे यदि [illegible] तदा विपर्ययव्यवहारः, [illegible] च एकदा तत्कारित्वं तत्कारित्वमात्रं वा, आपाद्यं [illegible] तत्कारित्वम्, तथा [illegible] पायाभावयोः साध्यसाधनरूपत्वं वाच्यम्, [illegible]। भवतश्चेति।—[illegible] भवतः—कालि० मु० पु० पा०। (७) [illegible] २ पुस्तके च [illegible]

करोति चैकदा कुशूलस्थं बीजमङ्कुरमिति चेत्, तदेतज्जात्यभिप्रायेण वा स्यात्, व्यक्त्यभिप्रायेण वा (स्यात्)।

दीधितिः।

चिदकरणसार्वदिकाकरणे(१) यावत्सत्त्वकरणकदाचित्करणव्यतिरेकाविति न विपर्ययासङ्गतिः(२)॥

दीधितिटिप्पणी।

सङ्गीयहेतोरितरस्य च सन्दिग्धासिद्धत्वादत आह। कदाचिदिति। केचित्तु नैयायिकमते कुशूलस्थबीजादेरेकदा करणाभाव एवासिद्धः, तदधिकरणस्थूलकालस्यैकत्वादत आह। कदाचिदिति। एतत्पदस्य(३) तत्क्षणस्यापि वाचकत्वावधारणादिति। प्रसङ्गसाध्यस्यैव विपर्ययहेतुकरणमुचितमत आह। भवतश्चेति। इदं च क्रियापदम्॥

कल्पलता।

सत्त्वक्षणिकत्वयोर्व्याप्तिसाधनाय प्रसङ्गविपर्ययान्तरमवतारयति। नन्विति। (यथा) कश्चिच्छन्द (इति।)(४) अविनश्यदवस्थोऽनन्त्य(५) इत्यर्थः। अन्यथा द्वितीयक्षणेऽकरणाद्यावत्सत्त्वं(६) करणानुपपत्तेः। स्वमतेनैव वा दृष्टान्तः। विपर्यय इति(७)। यद्यावत्सत्त्वं यन्न करोति तदेकदापि तन्न(८) करोति, यथा शिलाशकलम्, न करोति च(९) कुशूलस्थं(१०) बीजं यावत्सत्त्वमङ्कुरम्, अत एकदापि न तत्(११)

(१) कदाचिदकरणसर्वदाऽकरणे—पुण० पु० पा०।
(२) न व्यतिरेकासङ्गतिः—पुण० पु० पा०।
(३) एतत्पद ए—पा० २ पु०। (४) नन्विति। शब्द इति। कश्चिदिति।—पा० २ पु०।
(५) नन्त—कलि० मु० पु० पा०। (६) क्षणेऽकरणे यावत्सत्त्वं—कलि० मु० पु० पा०।
(७) दृष्टान्तविपर्यय इति—पुण० पु० पा०। (८) तदेकदापि न—कलि० मु० पु० पा०।
(९) न करोति—कलि० मु० पु० पा०। (१०) कुशूलस्थं—कलि० मु० पु० पा०।
(११) मङ्कुरम्, स च कदापि तन्न—कलि० मु० पु० पा०। मङ्कुरम्, स च एकदापि तन्न—पा० २ पु०।

कल्पलता ।

कुर्यादिति विपर्यये दर्शनीये एकदाऽकरणस्यापि यावत्सत्त्वाकरणरूपतया व्यत्यासेनैव (विपर्ययो) दर्शित इत्यदोषः। तदेतदिति। प्रसङ्गतद्विपर्ययोपदर्शनमित्यर्थः। जातीति। यज्जातीयमेकदा न करोति तज्जातीयं यावत्सत्त्वं न करोतीति वा, या व्यक्तिरेकदा न करोति सा यावत्सत्त्वं न करोतीति वा विवक्षितमित्यर्थः॥

दीधितिः ।

यज्जातीयमेकदा(१) यत् करोति तज्जातीयं किञ्चि(२)द्यावत्सत्त्वं तत् करोति, यज्जातीयं किञ्चिदपि यावत्सत्त्वं यन्न करोति तज्जातीयं किमपि कदाचिदपि तन्न करोतीति यदि विवक्षितम्, तदा आद्ये कस्यचिद्बीजस्य यावत्सत्त्वमङ्कुरकारित्वापत्तावपीतरेषामेकदाङ्कुरकारिणां कालान्तरे तदकरणमविरुद्धम्(३)। द्वितीये च स्वतो(४) हेत्वसिद्धिः, समर्थबीजक्षणस्य यावत्सत्त्वमङ्कुरकारित्वोपगमात्(५), बाधश्च(६), बीजजातीयस्यैव सहकारिसम्पन्नस्याङ्कुरकारित्वात्। अथ यज्जातीयमेकदा यत्करोति तज्जातीयं सर्वं यावत्सत्त्वं तत् करोति, यज्जातीयं किञ्चिद्यावत्सत्त्वं यन्न करोति तज्जातीयं किमपि

दीधितिटिप्पणी ।

जात्यभिप्रायेण द्विविधप्रसङ्गविपर्ययौ सम्भवतः, तत्र मूलोक्तदोष एकविषय एव सङ्गच्छते, अतोऽपरत्र को दोषः स्यात्, अतस्तदप्युट्टङ्क्य दूषयति। यज्जातीयमिति। किञ्चिदिति। न च विपर्यये

(१) एकदेति सम्पातायातं यावत्सत्त्वकारित्वस्य व्याप्यताभ्रमनिराकरणाय।—गुणानन्दः।

(२) किञ्चिदिति तज्जातीयमात्रस्य यावत्सत्त्वकारित्वभ्रमनिराकरणाय।—गुणानन्दः।

(३) तथा च न सत्त्वेन क्षणिकत्वं, तत्रैव व्यभिचारादिति भावः।—गुणानन्दः।

(४) च ततो—कलि० मु० पु० पा०।

(५) कुर्वद्रूपबीजव्यक्तेस्त्वया यावत्सत्त्वमङ्कुरकारित्वोपगमादित्यर्थः।—गुणानन्दः।

(६) बाधकाभावे—पाठः।

प्रथमे द्वयमप्यनैकान्तिकम्, अनियमदर्शनात् । द्वितीये द्वयमप्यन्यथासिद्धम्, एकान्तासामर्थ्यप्रयुक्तत्वादत्यन्ताकरणस्य, सामर्थ्ये सति सहकारिसन्निधिप्रयुक्तत्वात् करणनियमस्य ।

---

दीधितिः ।

कदापि तन्न करोतीति, तत्राह । द्वयमपीति । द्वयम् प्रसङ्गस्य विपर्ययस्य च साधनम् । अनियमेति । अङ्कुरकारिणामङ्कुराकारिणां च वीजजातीयानां भवताप्यङ्गीकारादिति भावः । अन्यथासिद्धम् व्याप्यत्वासिद्धम् । एकान्तेति । सामर्थ्यम्(१) स्वरूपयोग्यता सहकारियोग्यता च, अत्यन्ताकरणम् यावत्सत्त्वमकरणम्, तथा च शिलादेः सहकारिसहितस्याप्यकरणं स्वरूपायोग्यत्वात्, स्वरूपयोग्यस्य च वीजादेरकरणं सहकारिवैकल्यात्, तस्य चात्यन्तिकत्वकादाचित्कत्वाभ्यामकरणस्याप्यात्यन्तिकत्वकादाचित्कत्वे इत्यर्थः ॥

दीधितिटिप्पणी ।

प्रसङ्गसाध्याभावस्यैव हेतुतया उभयत्रैव यज्जातीयं सर्वमित्यादिसर्वात्मनैव(२) कर्तुमुचितमिति वाच्यम् । सर्वपदं विनापि प्रसङ्गीयसाध्याभावप्राप्तौ तत्पदाप्रवेशात् यत्किञ्चित्करणाभावमेव सर्वकरणाभावं ब्रूमः । असामर्थ्यपदस्य करणस्वरूपयोग्यत्वाभावपरत्वे जातविनष्टादेरत्यन्ताकरणस्य तत्प्रयुक्तत्वाभावाद्व्यभिचारः स्यादतस्तत्रापि तत्प्रयुक्तत्वं रक्षयति । सामर्थ्यमिति । स्वरूपयोग्यतेत्यादि । तथा च उभयाभावो विवक्षितः । उभयाभावं दर्शयति । शिलादेरिति । एक......माह ? । तस्य चेति ॥

---

(१) एकान्तासामर्थ्येत्यत्र सामर्थ्यपदं स्वरूपयोग्यतापरं सहकारियोग्यतापरं च, सामर्थ्ये सतीत्यत्र तु स्वरूपयोग्यतापरमिति भावः ।—गुणानन्दः ।

(२) सर्वात्मि- इत्यादर्शपुस्तके पाठः । सर्वत्राप्येष—पा० २ पु० ।

कल्पलता।

अनियमेति। विजातीय एव करणाकरणयोर्दर्शनान्नेयं व्याप्तिरित्यर्थः। द्वयमपीति। प्रसङ्गस्तद्विपर्ययश्चेत्यर्थः। अन्यथासिद्धिमाह। एकान्तेनेति। शिलाशकलादावेकदाऽकारित्वे सत्यन्यदाप्यकारित्वं(१) स्वरूपा(२)योग्यत्वप्रयुक्तम्(३), स्वरूपयोग्यस्य त्वेकदाऽकरणं(४) सहकारिवैकल्यप्रयुक्तं यावत्सत्त्वं च करणं सहकारिलाभप्रयुक्तमित्यर्थः॥

---

एतेन यद्यत्करोति तत्तदुत्पन्नमात्रम्, यथा कर्म विभागम्, यदुत्पन्नमात्रं यन्न करोति तन्न कदाचिदपि, यथा शिलाशकलमङ्कुरमिति निरस्तम्। अत्रापि पूर्ववदनेकान्तान्यथासिद्धी दोषा(५)विति।

---

दीधितिः।

एतेनेत्यादि। उत्पन्नमात्रम्, करोति(६)। तन्न कदाचिदपि, तत् करोति। उदाहरणाभ्यां(७) तदनुरूपावुपनयावपि सूचितौ। पूर्ववदिति। जात्यभिप्रायेऽनेकान्तः, व्यक्त्यभिप्राये चान्यथासिद्धिर्दोष इत्यर्थः(८)॥

दीधितिटिप्पणी।

एकान्तपदस्य च यावत्सत्त्वमलघुत्वादाह। उदाहरणाभ्यामिति। कर्मशिलादिभ्यामित्यर्थः ?॥

---

(१) शिलादावकारित्वे सत्यन्यदाप्यकारित्वं–पा० २ पु०। शिलाशकलादावेकदाऽकारित्वे-न्यदाप्यकारित्वं–पुण० पु० पा०। शिलाशकलादावेकदाकारित्वे सत्यन्यदाप्यकारित्वं–कालि० मु० पु० पा०। (२) स्वरूप–पुण० पु० पा०। (३) योग्यमुक्तम्–पुण० पु० पा०।

(४) स्वरुपयोग्यत्वे एकदाकरणं—कालि० मु० पु० पा०।

(५) न्यथासिद्धिदोषा –पुण० पु० पा०। न्यथासिद्धदोषा–पाठः।

(६) उत्पन्नमात्रमित्यत्र करोतीत्यनुषज्य योजयति। उत्पन्नमात्रमिति।—गुणानन्दः।

(७) न्यूनत्वमाशङ्क्याह। उदाहरणाभ्यामिति। अनुरूपावित्यनेन हेतुतावच्छेदकावच्छिन्नस्य पक्षधर्मतामात्रप्रतिपादकौ तन्मतसिद्धावित्युक्तं भवति।—गुणानन्दः। (८) दोषः—पुण० पु० पा०।

कल्पलता ।

सत्त्वक्षणिकत्वव्याप्तिग्रहानुकूलमेव प्रसङ्गविपर्ययान्तरमाशङ्क्य निराकरोति । एतेनेति । पूर्ववदिति । जात्या अप्रायेणानैकान्तिकत्वम्, न हि बीजजातीयमुत्पन्नमात्रमेव करोति । या च व्यक्तिरुत्पत्त्यनन्तरमेव करोति तत्र तत्तत्सह(१)कारिलाभस्तन्त्रमित्यभिप्रायेणान्यथासिद्धिरित्यर्थः(२) ॥

नापि तृतीयः, कृतकत्वानित्यत्वादेरपि(३) परस्पराभाववत्तामात्रेण(४) विरोधप्रसङ्गादिति ।

दीधितिः ।

तद्वत्तेति(५) पक्षं दूषयति । नापीति ॥

कल्पलता ।

तद्वत्ता वा दण्डित्वकुण्डलित्ववदिति (यत्) पूर्वं (वि)कल्पितम्, तद्दूषयति (। नापीति । विरोधप्रसङ्गादिति । तथा च तदुभयाध्यासाधिनधर्मिभेदप्रसङ्गादित्यर्थः) ॥

अस्तु तर्हि तस्यैव(६) तेनैव सहकारिणा सह(७) सम्बन्धोऽसम्बन्धश्चेति विरोधः । न । विकल्पानुपपत्तेः ।

दीधितिः ।

वारि(८)बीजादीनां हि(९) सम्बन्धः संयोगोऽभ्युपेयते,

(१) तत्र तदा तेन सह–पुण० पु० पा० । (२) स्तन्त्रमित्यर्थः–कलि० मु० पु० पा० ।
(३) कृतकत्वानित्यत्वयोरपि—पाठः । (४) मात्रेणैव–कलि० मु० पु० पा० ।
(५) तद्वत्ता वेति—पुण० पु० पा० । (६) तत्रैव–पुण० पु० पा० । तर्हि–पाठः ।
(७) सहकारिणा सह तस्यैव–पाठः । सहकारिणा–कलि० मु० पु० पा० ।
(८) संयोगाव्याप्यवृत्तित्वस्याग्रे व्यवस्थाप्यत्वात्तदनुसारेणाह । वारीति । तन्मतमाह । स चेत्यादि । संयुक्तेति । तेनैव रूपेण तस्य व्याप्यवृत्तित्वोपगमे दोषोऽत आह । अभावोऽपि चेति ।–गुणानन्दः । (९) वारिबीजादीनां—कलि० मु० पु० पा० ।

तथाहि, सम्बन्धिनः सम्बन्ध्यन्तरे स्वाभावस्वाभाव्यं वा विरुद्ध्येत(१), अभाव(२)प्रतियोगित्वं वा, तदैवेतिस-

दीधितिः ।

स च सम्बन्धिस्वरूपः, निरन्तरोत्पन्न(३)क्षणिकाभ्यां ताभ्यामेव मिथः संयुक्तप्रत्ययादिसम्भवेऽतिरिक्ते मानाभावात्, अभावोऽपि चाधिकरणस्वरूप एव(४), एकत्र च सम्बन्धतदभावोपगमे सम्बन्धात्मकस्य (तस्य) सम्बन्धाभावात्मकत्वं स्यात्, न च स्वं स्वस्याभावो भवितुमर्हतीत्याह । सम्बन्धिन इति । सम्बन्ध्यन्तरे, कदाचिदसत्त्वे तस्य । अभावेति । नाभावो विद्यते सत इति न्यायादिति भावः । अभावप्रतियोगित्वमिति परत्र

दीधितिटिप्पणी ।

स च संयोगः । स्वरूप(त्वे )हेतुमाह । निरन्तरेति । ताभ्याम् सम्बन्धिभ्याम् । अतिरिक्ते संयोगे । एकत्र चेति । तथा चेत्यादिः । एकदण्डे कदाचित् चक्रसम्बन्धः कदाचित्तदभावः स्वीक्रियते, तथा च चक्रसम्बन्धस्वरूपे(५)दण्डे यश्चक्रसम्बन्धाभावः सोपि दण्डस्वरूप एव, तथा च एकस्यैव दण्डस्य चक्रसम्बन्धाभावरूपपरतया···?एतदेवाह मूले, सम्बन्धिन इत्यादि । विरुद्ध्यत इत्यनेन यथाश्रुतमूले(न) सम्बन्ध्यन्तरनिष्ठस्य सम्बन्धिनः स्वाभावस्वाभाव्यमित्यर्थो लभ्यते, तच्चासङ्गतम्, चक्रस्य दण्डनिष्ठस्वा(भाव)स्वाभाव्यस्य ? तन्मतेप्यविरुद्धत्वात्, तेनाप्यधिकरणस्यैवाभावात्मकत्वाङ्गीकारात्, न तु प्रतियोगिन इत्यतः पूरणेन सङ्गमयति । सम्बन्ध्यन्तर इति । स्वपदस्य सम्बन्ध्यन्तरवाचकत्वार्थं तस्येति पूरणम्, तथा च सम्बन्धिनः सम्बन्ध्यन्तरे कदाचित् सम्बन्धात्तस्य सम्बन्ध्यन्तरस्य यः स्वाभावस्तत्स्वाभाव्यं विरुद्ध्यत इत्यर्थः । सम्बन्धिनोऽभावप्रतियोगित्वविरुद्धहेतुत्वेनाभावो विरुद्ध इति ? ॥

(१) विरुद्ध्येत-पुण० पु० पा० । (२) अभावो ध्वंसः प्रागभावश्च ।

(३) सम्बन्धिस्वरूपं निरन्तरोत्पन्नम्—पुण० पु० पा० ।

(४) स्वरूप मेव—पुण० पु० पा० । (५) स्वरूपयोग्य—इत्यादर्शपुस्तके पाठः ।

हितं वा, तत्रैवेतिसहितं वा, उभयसहितं वा, तथैवेति-सहितं वेति ।

दीधितिः ।

सर्वत्रानुषज्यते । तदा स्वकाले(१) । तत्र स्वदेशे । उभयेति । स्वकाल एव स्वदेश एवेति(२) । तथैव स्वकाले स्वदेशे स्वावच्छेदकावच्छेदेनेति(३) ॥

कल्पलता ।

सहकारिसमवधानासमवधानाधीने(४) करणाकरणे इति यत् समाहितं तत्रा(पि विरोध इत्या)ह । अस्तु तर्हीति । सम्बन्धिन इति(५) । सहकारिसमवधानं तावन्न सम्भवति, यत एकस्य(६) सहकारिणः सहकार्यन्तरमभाव(स्व)रूपमेव, न च भावाभावयोः(७) समवधानसम्भावनेत्यर्थः । असमवधाने विरोधमाह । अभावेति । विरुध्यत इति सम्बध्यते । सहकारिणो यद्यभावः स्यात् तदा तदसमवधानं स्यात्, तदेव तु नास्ति, न हि भावस्याप्यभावप्रतियोगित्वं सम्भाव्यते, विरोधादिति द्वितीयविकल्पार्थः । (भवतु वा भावस्याप्यभावप्रतियोगित्वम्(८), तथापि स्वावच्छिन्न

( १ ) स्वकाले, प्रतियोगिमत्त्वेनाभिमतकाले ।—गुणानन्दः ।

( २ ) स्वकाल एव स्वदेश इति—२ पु० । स्वाकाल एव स्वदेश इति–कलि० मु० पु० पा० ।

( ३ ) अत्रावच्छेदकत्वद्वयं सप्तमीनिर्देश्य विलक्षणं बोध्यम ।

( ४ ) सहकारिसमवधानात् समवधानाधीने—कलि० मु० पु० पा० । सहकारिसमवधानासमवधानाभ्यां यत्—पुण० पु० पा० ।

( ५ ) तर्हीति । सहकारिणा सहोत्पादानियमादसम्बन्ध एव नेति भावः । विरोधमूलं विकल्प्य दूषयति । नेति । ससम्बन्धिन इति । सम्बन्धिभूत —पुण० पु० पा० ।

( ६ ) यत्रैकस्य—पुण० पु० पा० । यत एवास्य—पा० २ पु० ।

( ७ ) न चाभावाभावयोः—पुण० पु० पा० । ( ८ ) प्यभावः—पुण० पु० पा० ।

कल्पलता ।

एव काले स्वाभावः कथं भवेत्, येन विद्यमानेनापि क्षेत्रेण वीजस्य समवधानं न भवेदिति तृतीयविकल्पार्थः । ननु भवतु विद्यमानस्यापि तत्, कोऽप्यभावोऽस्तु, तथापि यत्रैव प्रतियोगी तत्रैव तदभावो विरुद्ध इति चतुर्थविकल्पार्थः । यत्र काले यत्र देशे यः प्रतियोगी तस्य तत्र तदानीमभावो विरुद्ध इति पञ्चमविकल्पार्थः । यदवच्छेदेन यदा यत्र प्रतियोगी तदवच्छेदेनैव तदैव तस्यैवाभावो विरुद्ध इति षष्ठविकल्पार्थः । सम्बन्धिन इति । सहकारिसमवधानं तावन्न सम्भवति, यत एकस्य सहकारिणः सहकार्यन्तरमभावस्वरूपमेव, न च भावाभावयोः समवधानसम्भावनेत्यर्थः । समवधाने विरोधमाह । अभावेति । विरुद्ध्यत इति सम्बद्ध्यते । सहकारिणो यद्यभावः स्यात् तदा तदसमवधानं स्यात्, तदेव तु नास्ति, न हि भावस्याप्यभावः, विरोधादित्यर्थः ।) (१) भवतु वा भावस्याप्यभावस्तथापि यदैव भावस्तदैव तद(२)भावो विरुद्ध इत्याह । तदैवेति । अ(त्रा)भावप्रतियोगित्वं विरुद्ध्यत इत्यनुषङ्गः । एवं परत्रापि । भवतु वा भावसमानकालीनोऽप्यभावः, तथापि यत्रैव भावस्तत्रैव तदभावः कथं स्यात, विरोधादित्याह । तत्रैवेति । कालभेदेनैकदेशत्वसम्भवेऽपि यदा यत्र यत्सत्त्वं(३) तदैव तस्य तत्रासत्त्वं विरुद्धमित्याह । उभय-

(१) कुण्डलीस्थं पाठान्तरं तृतीयादर्शपुस्तकेऽधिकं दृश्यत इति कलि० मु० पुस्तके टिप्पण्यां सूचितम् ।

(२) भावस्याप्य—कलि० मु० पु० पा० । (३) यदा तत्र तत्सत्त्वं---पुण० पु० पा० ।

कल्पलता ।

सहितमिति । येनावच्छेदेन प्रतियोगी(१) तेनैवावच्छेदेन तदैव तत्रैव(२) तदभावो न सम्भवतीत्याह । तथैवेति ॥

न प्रथमः, अनभ्युपगमात् ।

दीधितिः ।

अनभ्युपगमादिति । निरन्तरोत्पाद(३)क्षणिकत्व(४)योरसिद्ध्या संयोगस्य, धर्मिवृत्तित्वानुगत(५)प्रतीत्या चाभावस्यातिरिक्तस्य सिद्धेरिति भावः ॥

दीधितिटिप्पणी ।

मूले, अनभ्युपगमात् । स्वाभावस्वाभाव्यस्येति शेषः । एतदेवोपपादयति । निरन्तरेति । यदि निरन्तरोत्पादः क्षणिकत्वं (च) सिद्धं स्यात् तदा तत्कालीनेनैव संयोगकार्य(६)निर्वाहेऽतिरिक्तसंयोगो न सिद्ध्येत्, न चैवम् । असिद्ध्येति संयोगस्यातिरिक्तत्वे हेतुः । प्रतीत्येत्यभावस्यातिरिक्तत्वे हेतुः ॥

कल्पलता ।

अनभ्युपगमादिति । सम्बन्ध्यन्तरमेव सम्बन्ध्यन्तरस्याभाव इति नाभ्युपगम्यते, अधिकरणस्वभावस्था(७)भावो न भवतीति(८) निषेत्स्यत एवेति भावः ॥

(१) प्रतियोगं— कलि० मु० पु० पा० । (२) तत्रैव—कलि० मु० पु० पा० ।
(३) अनन्तरोत्पाद—कलि० मु० पु० पा० । (४) क्षणिकत्वद्र—पुण० पु० पा० । अनु[...]
(५) स्वरूपात्मकप्रतियोगित्वादेरिव तेन रूपेण तद्वृत्तित्वादिकमपि स्यादत आह । अनुग[...]तेति । इदमुभयात्मकत्वानिराकरणोपयोगि । अतिरिक्तस्येति । स्वस्य स्वाभावात्मकत्वाविरोधे स्व[...]स्मिन् स्वं नास्तीति प्रत्ययस्यापि दुर्घटत्वमवसेयम् ।—गुणानन्दः ।
(६) संयोगव्यवहार—पा० २ पु० । (७) स्वरूपं चा-पुण० पु० पा० । (८) भावो-पा[...]

न द्वितीयः, सत्कार्यप्रतिषेधात्(१)।

दीधितिः।

प्रागसत एव कार्यस्योत्पत्तेः प्रामाणिकतया त्वयापि सत्कार्यत्वनिषेधादित्याह। सत्कार्येति॥

दीधितिटिप्पणी।

त्वया क्षणिकत्ववादिना॥

कल्पलता।

सत्कार्येति। अभावप्रतियोगित्वं भावस्य नास्तीत्यभ्युपगमे तव साङ्ख्यमतप्रवेशो(ऽप)सिद्धान्तः क्षणिकत्वसाधनविरोधोनुभवविरोधश्चेत्यर्थः॥

न तृतीयः, प्राक्प्रध्वंसाभावयोर्भावसमानकालत्वानभ्युपगमात्।

दीधितिः।

प्रागित्यादि। संयोगिनि संयोगस्य प्रागभावध्वंसयोः कालभेदेनैव वृत्त्युपगमात्, अत्यन्ताभावस्य चा(२)वच्छेदभेदेन वृत्तौ विरोधाभावादिति भावः॥

दीधितिटिप्पणी।

संयोगिनीति। चक्रसंयोगिनि दण्डे तदैव(३) चक्रसंयोगाभावो विरुध्यते इतीदृशाभावः कः, प्राग्ध्वंसादिः, (स) संयोगादिकाले यद्यङ्गीक्रियते तदा विरोधो दातव्यः, न चैवम्। नाप्यत्यन्ताभावः, तस्याव्याप्यवृत्तितया विरोधाभावादित्यर्थः॥

कल्पलता।

प्रागिति। प्रागभाव(प्र)ध्वंसयोः प्रतियोगिसमानकालत्वानुपपत्तावप्यत्यन्ताभावमादाय सहकार्य-

(१) प्रतिक्षेपात्—पाठः। (२) न्यूनत्वमुद्धरति। अत्यन्ताभावस्य चेति।—गुणानन्दः।
(३) तदैव दण्डे—पा० २ पु०।

कल्पलता ।

समवधानसम्भवात् सहकारिप्रागभाव(प्र)ध्वंसावपि प्रतियोगिभिन्नकालावादाय तथा सम्भवाद्वे(१)त्यर्थः ॥

न चतुर्थः, स हि न तावत् स्थितियौगपद्यनियमेन सम्बन्धिनोः, तदसिद्धेः। इत एव(२) तत्सिद्धावितरेतराश्रयत्वम्, नियमसिद्धौ हि विरोधसिद्धि(३)स्तत्सिद्धौ च भेदे सति नियमसिद्धिरिति(४)। न चान्यतस्तत्सि-

दीधितिः ।

स हीति। सः विरोधः(५), सम्बन्धिनोरेकतर(सम्बन्धि)-सत्त्वकाले नैरन्तर्येणापरस्य सम्बन्धिनो(६)ऽवश्यं सत्त्वमित्येवं-रूपेण नियमेन तावन्न सिद्ध्यति(७), यतः तदसिद्धेः उक्तरूप-नियमासिद्धेः। इत एव विरोधादेव, नियमसिद्धौ उक्तरूपनि-यमासिद्धौ, (तत्सिद्धिः विरोधसिद्धिः,) तत्सिद्धौ विरोध-सिद्धौ, भेदे सति सम्बन्धासम्बन्धलक्षणविरुद्धधर्माध्यासाद्धर्मि-भेदे सिद्धे सतीत्यर्थः। (एतावता) चक्रके(ऽपि) परस्पराश्रय-

दीधितिटिप्पणी ।

न चतुर्थ इत्यत्र हेतुः, स हीति, तच्चासङ्गतम्, अतो न सिद्ध्यती-त्यस्य पूरणेनाह। स इत्यादि। यत इति हिशब्दार्थकथनम्। अत्रैव हेतुः, तदसिद्धेरिति। विरोधसिद्धिः कथं(८) नियमसिद्धिकारिणी-त्यतो भेदे सतीत्युक्तम्, तथा च विरोधाच्चक्रे(९) भिन्नः सम्बन्धो दण्डे च भिन्न एवेति नियमसिद्धिरिति ?। चक्रकेऽपीति। परस्परा-

(१) सम्भवादि—कालि० मु० पु० पा०। सम्भवान्ते—पाठः।

(२) तदसिद्धेः। अत एव—पुण० पु० पा०।

(३) हि तत्सिद्धि—पाठः।

(४) सिद्धिः—पुण० पु० पा०।

(५) स चतुर्थ इति भ्रमं निराकरोति। स विरोध इति।—गुणानन्दः।

(६) नैरन्तर्येणापरस्या—पुण० पु० पा०।

(७) तृतीयार्थस्य धर्मिण्यनन्वयात् पूरयति। सिद्ध्यतीति। हेतोरर्थमाह। यत इति। नियमरूपस्यानुक्तत्वादाह। उक्तरूपेति।—गुणानन्दः।

(८) कथनं—इति सर्वत्र पाठः।

(९) चक्रे दण्डे—पा० २ पु०।

द्धिः, तदभावात्, अनियतोपसर्पणापसर्पणकारणप्रयुक्तत्वाच्च सम्बन्धासम्बन्धयोः । नापि विनाशस्याहेतुकत्वादयं विरोधोऽर्थात् सिद्ध्यति, तस्याप्यसिद्धेः । ध्रुवभावित्वे तु वक्ष्यामः ।

दीधितिः ।

त्वमक्षतम् । मानान्तरा(१)न्नियमसिद्धिं(२)निराकरोति । न चेति । ननु प्रथमं सम्बद्धस्यासम्बद्धस्य वा पश्चात् कथमसम्बद्धत्वं सम्बद्धत्वं चेत्यत(३) आह । अनियतेति । अहेतुकत्वात् प्रतियोग्युत्तर(४)भाविहेत्वनपेक्ष(५)त्वात् । अर्थात् उत्पत्त्यनन्तरमेव भावानां नाशादेकस्य कालभेदेनापि सम्बन्धासम्बन्धा(६)योगात् । तस्य अहेतुकत्वस्य(७) । ननु यद्यस्य ध्रुवभावि(८) तत्तदुत्पत्त्यनन्तरमेव जायते, यथास्माकं समर्थस्य कार्यम्, भवतां च(९) द्रव्यादेः परिमाणादि, ध्रुवभावी च भावस्य विनाश इत्यतोऽर्थाद्विरोधः सेत्स्यतीत्यत आह । ध्रुवेति ॥

दीधितिटिप्पणी ।

श्रयत्वस्य चक्रकत्वादिव्यापकत्वादित्यर्थः । नन्विति । प्रथमं सम्बद्धस्य पश्चादसम्बद्धत्वं प्रथममसम्बद्धस्य वा कथं पश्चात्सम्बद्धत्वमिति सम्बन्धः । अर्थादित्यादि(१०) । भावस्य क्षणिकतया विभिन्नकालेऽवृत्तौ कालभेदेन सम्बन्धासम्बन्धयोरेकत्रासम्भवात् सहानवस्थानरूपाविरोधः सिद्ध इत्यर्थः । इत्यतोऽर्थादिति(११) । इदानीमुक्तन्यायेन एकत्र सम्बन्धासम्बन्धयोर्विरोधः सेत्स्यतीत्यर्थः(१२) ॥

(१) अव्यवहितोपक्रान्तत्वात्तत्पदं नियमपरमित्यवतारिकाव्याजेनाह । मानान्तरादिति ।—गुणानन्दः । (२) सिद्धं-कलि० मु० पु० पा० । (३) द्धत्वं वेत्यत—पुण० पु० पा० ।

(४) अहेतुकत्वे सदातनत्वमसत्त्वं वा स्यादित्यत आह । प्रतियोगीति । प्रतियोग्यधिकरणकालध्वंसाधिकरणक्षणोत्पत्तिकेत्यर्थः ।-गुणानन्दः । (५) नपेक्षित-कलि० मु० पु० पा० ।

(६) सम्बन्धासम्बन्धवत्त्वा—पुण० पु० पा० ।

(७) विरोधपरत्वभ्रमनिरासायाह । अहेतुकत्वस्येति ।—गुणानन्दः । अहेतुत्वस्य-कलि० मु० पु० पा० । (८) ध्रुवेति प्रामाणिकत्वसूचनाय, भावीत्यनेनैव सामञ्जस्यात् ।—गुणानन्दः ।

(९) भवतां वा—पुण० पु० पा० । (१०) अर्थादित्यादिमूलम्—पा० २ पु० ।

(११) इत्याहार्थादिति-इत्यादर्शपुस्तके पाठः । (१२) विरोधः । यस्येत्यर्थः-इति सर्वत्र पाठः ।

कल्पलता ।

स हीति । सः विरोधः(१)। यदि सहकारिणो(२) स्थितियौगपद्यनियमो भवेत् तदैक(३)सहकारिदेशे सहकार्यन्तराभावो न भवेत्, स च नास्तीत्यर्थः। ननु प्रतियोगितदभावयोः समानदेशत्वाविरोधादेव स्थितियौगपद्यनियमः स्यादित्यत आह। इत एवेति(४)। तदेव स्फुटयति(५)। नियमेति । तत्सिद्धौ विरोधसिद्धौ, भेदे सति क्षणभङ्गे सति, नियमसिद्धिरित्यर्थः । क्षणभङ्गे सति सहकारिणां तथोत्पादनियमाद्यौगपद्यं सिद्ध्येत्, स एवाद्यापि न सिद्ध इति भावः(६)। ननु विरोधात्(७) स्थितियौगपद्यं मा सैत्सीत्(८), अन्यत एव कुतश्चित्प्रमाणात् सिध्यतु तदित्यत आह। न चेति । तदभावादिति। प्रमाणान्तराभावादित्यर्थः। ननु(९) सहकारिणां यौगपद्यमेव कथं न भवतीत्यत आह। अनियतेति(१०)। ननु ध्वंसस्य प्रतियोगिभिन्नं कारणं नास्ति, तथा च स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वे क्षणिकत्वे सिद्धे पुञ्जात् पुञ्जोत्पत्तिसिद्धावर्थादेव सहकारिणां स्थितियौगपद्यनियमः सेत्स्यतीत्यत आह(११)। नापीति। तस्यापीति । विनाशा(१२)हे-

(१) स हीति। विरोधे-कलि० मु० पु० पा०। (२) सहकारिणा कलि० मु० पु० पा०।
(३) तत्रैव-पा० २ पु०। (४) आह। अत एवेति-पुण० पु० पा०।
(५) तदेव स्पष्टयति—पाठः। एतदेव स्पष्टयति-पुण० पु० पा०।
(६) इत्यर्थः—कलि० मु० पु० पा०। (७) विरोधादेव-कलि० मु० पु० पा०।
(८) पद्यमसैत्सीत्-पुण० पु० पा०। (९) नन्व-पुण० पु० पा०।
(१०) अनियन्तेति-पुण० पु० पा०। नियतेति-पा० २ पु०।
(११) इतीत्याह-कलि० मु० पु० पा०। (१२) विनाशस्या-कलि० मु० पु० पा०।

कल्पलता ।

तुकत्वस्येत्यर्थः। ननु विनाशो भावानां ध्रुवभावी, तथा च कुतो हेत्वन्तरापेक्षेत्यत आह। ध्रुवभावित्व इति ॥

नापि पञ्चमः, न हि तदैव(१) तत्रैव स एव सहकार्यस्ति नास्ति चेत्यभ्युपगच्छामः ।

दीधितिः ।

न हीत्यादिकं व्याप्यवृत्त्यभिप्रायेण(२) ॥

दीधितिटिप्पणी ।

उत्तरग्रन्थे स च तेभ्योऽतिरिक्तोऽव्याप्यवृत्तिश्चेत्यपीति लिखितम्, अत्र च सहकार्यस्तीति लिखनात् तत्रातिरिक्तापादनं सङ्गमि, अव्याप्यवृत्तित्वापादनमपि तदैव सङ्गतं यद्यत्र(३) व्याप्यवृत्तित्वाभिप्रायः स्यात्, अत आह । व्याप्यवृत्त्यभिप्रायेणेति ॥

कल्पलता ।

उभयसहितं वेति दूषयति । नापीति ॥

ननु समवधानं नाम सहकारिणां धर्मः संयोगो भवद्भिरिष्यते, स च तेभ्यो( व्य)तिरिक्तोऽव्याप्यवृत्तिश्चेत्यपि, तथा च स एव तदैव तत्रैवास्ति नास्ति चे-

दीधितिः ।

षष्ठमपि प्रतिबन्दिमुखेनानभ्युपगमादेव निरसितुमाशङ्कते । नन्विति(४) । इत्यपि(५), भवद्भिरिष्यते । नास्ति चेतीत्यस्या-

दीधितिटिप्पणी ।

प्रतिबन्दिमुखेनेति(६) । अयं भावः । प्रतिबन्द्यावादिनाप्रथमप-

(१) तदेव-कालि० मु० पु० पा० ।

(२) एकस्यैव कालभेदेन रूपतदभाववत्त्वोपगमादाह । व्याप्यवृत्तीति ।—गुणानन्दः ।

(३) सङ्गतं इत्यत्र—इति सर्वत्र पाठः । (४) नन्वित्यादि-पुरा० पु० पा० ।

(५) इत्यपीत्यस्यार्थो-कालि० मु० पु० पा० । अपिकारदर्शनादनुषज्याह । इत्यपीति ।—गुणानन्दः ।

(६) प्रतिपन्नं सामर्थ्येनेति—इति सर्वत्र पाठः ।

ति । अनतिरेके स्थिरवादिनो व्यस्तान्यपि बीजवारिध- रणिधामानि तान्येवेति तेभ्योऽपि कार्योत्पत्तिप्रसङ्गः । व्याप्यवृत्तित्वे च सर्वत्र रक्तादिविभ्रमः शब्दादिकार्यो- त्पत्तिप्रसङ्गश्च(१) । तस्मादसंयुक्तेभ्योऽन्य एव संयुक्त- स्वभावाः परमाणवो जाता इत्येव न्यायः । नैतदेवम् । क्षणिकपरमाणावप्यस्य(२) विरोधस्य दुर्वारत्वात् । तथा- हि । पूर्वदिगवस्थितः परमाणुर्यथा परदिगवस्थितेन पर- माणुना पर(३)दिगवच्छेदेनावृतरूप उत्पन्नः, तथैव किं पूर्वदिगवच्छेदेनापि, न वा, उभयथा वा । आद्ये उभ-

दीधितिः ।

ये(४) विरोध इति शेषः । सर्वत्रेति । तत्त(५)त्कार्योत्पत्तिनिया- मकानां महारजनभेर्यादिसंयोगानां सकलावयव(६)दिग्देशाद्य- वच्छेदेन वृत्तौ तत्तत्कार्याणामपि तथैवोत्पत्तिप्रसङ्गादित्यर्थः । परमाणवः क्षणिक(७)परमाणुपुञ्जरूपा वारिबीजादयः कार्यवि- शेषसमर्था जाता इति । न वेति(८) । परदिग(९)वच्छेदेनाप्य-

(१) प्रसङ्गः– पुण० पु० पा० । (२) परमाणोरप्यस्य—पुण० पु० पा० ।

(३) परमाणुनाऽपर–कलि० मु० पु० पा० ।

(४) त्यस्य-पुण० पु० पा० । एतावता किमायातमित्यत आह । विरोध इतीति ।-गुणानन्दः ।

(५) सर्वत्रेत्यस्य समवायेन देशभ्रमं निराकुर्वन् विभ्रमादिपदं कार्यान्तरस्याप्युपलक्षकतया व्याचष्टे । तत्तदिति ।-गुणानन्दः ।

(६) अवयवेति महारजनसंयोगाभिप्रायेण । दिग्देशेति शब्दजनकसंयोगमधिकृत्य ।-गुणानन्दः ।

(७) असंयुक्तेभ्योऽन्ये स्थिरा एव परमाणवः सन्तु, नैतावता प्रकृतसिद्धिरत आह । क्षणिकेति ।-गुणानन्दः ।

(८) न चेति–कलि० मु० पु० पा० ।

(९) न वेत्यस्य प्रतियोगिसाकाङ्क्षतयाऽग्रिमदोषानुसारेण निष्कृष्य तमाह । परदिगिति ।

यतोप्यनुपलब्धि(१)प्रसङ्गः। द्वितीये तु उभयतोप्युपलम्भापत्तिः(२)। तृतीये पुनः स एव(३) दुरात्मा विरोधः, स एव तेनैव तदै(४)वावृतोऽनावृतश्चेति। प्रकारभेदमुपादायाविरोध इति चेत्, कः पुनरसौ। दिगन्तरावच्छेदः, यदि हि यद्दिगवच्छेदेनैव(५) संयुक्तस्तद्दिगवच्छेदेनैवा(६)संयुक्तोपि, ततो विरोधः स्यात्, इह तु नैवमिति चेत्, हन्त संयोगसंयोगिनोर्भेदपक्षेऽपि यद्ययं सिद्धान्तवृत्तान्तः स्यात्, कीदृशो दोष इति(७)।

दीधितिः।

(८)नावृत(रूप) इत्यर्थः। उभयथा वेति। पर(९)दिगवच्छेदेनावृतरूपः पूर्वदिगवच्छेदेन चानावृतरूप इत्यर्थः। पृच्छति(१०)। कः पुनरिति। उत्तरयति। दिगन्तरेति॥

दीधितिटिप्पणी।

क्षेविरोधादेरदर्शनकृतेनभेदोऽइत्यातन्मतेपीदृशविरोधप्रसङ्गात्मध्यपक्षरूपोत्पादकमादायैवविरोधित्वक्षतेः तच्चसहानवस्थानमित्यादिनाअभ्युपगमवादेचविरोधेनयौगपद्यापादनक्षणिकतयैवपर्यवसन्नात्(११)॥

अत्र यद्यपि द्वितीय इत्यादिना वक्ष्यमाणदोषे उभयत इति व्यर्थम्, परदिगवच्छेदेनापीत्यस्यैव प्रकृतत्वात्, तथापि दृष्टान्तार्थं पूर्वदिगवच्छेदोपग्रह इति ध्येयम्।–गुणानन्दः।

(१) नुपलम्भ–पाठः। (२) पत्तेः–पुण० पु० पा०।

(३) तृतीये तु—पाठः। (४) तत्रै—पुण० पु० पा०।

(५) वच्छेदन—पुण० पु० पा०। (६) वच्छेदेना—पुण० पु० पा०।

(७) दोषः—पुण० पु० पा०। (८) च्छेदेनापि–पुण० पु० पा०।

(९) उभयथा वेत्यस्योभयदिगवच्छेदेनावृतपरत्वे पूर्वस्मादभेदः, अनावृतपरत्वे तु द्वितीयात्, न वाऽग्रिमदोषसङ्गतिरत आह। परेत्यादि।–गुणानन्द।

(१०) फक्किकाव्यवच्छेदमवतारिकाव्याजेन स्फुटयति। पृच्छतीत्यादि।–गुणानन्दः।

(११) इयं पङ्क्तिर्व्याकुलाचरा पुस्तकद्वयेपि।

कल्पलता ।

एतावता प्रघट्टकेन सहकारिसमवधानासमवधानाधीने करणाकरणे इति यदुक्तं तत्समाहितम्, तथैवेतिसहितं चेति षष्ठं(१) पक्षं परप्रतिबन्दिमुखेन समाधित्सुः प्रतिबन्दि(न)मुत्थापयितुं पीठं(२) रचयति । नन्विति । न हि तत्रैव तदैव(३) स एवास्ति नास्ति चेत्यभ्युपगच्छाम इति यदुक्तम्, तत्संयोगशब्द(४)ज्ञानादावभ्युपगमेन तवापसिद्धान्त इति पूर्वपक्षिणोऽभिसन्धिः । तेभ्य इति । सहकारिभ्य इत्यर्थः । इत्यपीत्यतो(५) भवद्भिरिष्यते इत्यनुषङ्गः । नास्ति चेति । अतो विरोध इति शेषः । तवापसिद्धान्त इति वा शेषः(६) । व्यस्तान्यपीति । विशकलितान्यपी(७)त्यर्थः । रक्तादीति । अरक्तेऽपि भागे महारजनसंयोगस्य व्याप्यवृत्तितया(८) रक्तधी(९)प्रसङ्ग इत्यर्थः । भेर्याकाशसंयोगस्य च सकलाकाशवृत्तितया सर्वत्र शब्दोत्पत्तिप्रसङ्गः, विभुकार्याणामसमवायिदेशानुरोधित्वात् । आदिपदेन सुखदुःखादिसङ्ग्रहः(१०) । स्वसिद्धान्तानुसारेणोपसंहरति । तस्मादिति । यद्वा, तस्मादिति । अतिरिक्तसंयोगपक्षे विरोधादुक्ता(११)दित्यर्थः । संयुक्तस्वभावा इति । अविरलदेशोत्पन्नाः(१२) क्षणिकपरमाणव एव तथोत्पादाद् घटप-

(१) वेति पूर्वं—पाठः । (२) पीठमा—पा० २ पु० ।
(३) तदेव तत्रैव-कलि० मु० पु० पा० । (४) तत्संयोगे शब्दे-कलि० मु० पु० पा० ।
(५) इत्यतोपीत्यतो—पा० २ पु० । (६) इत्यनुषङ्गः ।—कलि० मु० पु० पा० ।
(७) विशकलितानी—पुण० पु० पा० । (८) संयोगस्य सर्ववृत्तितया—पीठः ।
(९) रक्तत्व— पाठः । (१०) सुखदुःखादिपरिग्रहः-पुण० पु० पा० ।
(११) पक्षे उक्ताद्विरोधा-पुण० पु० पा० । (१२) सन्ना-कलि० मु० पु० पा० ।

कल्पलता।

टादिभावमापन्ना इत्यर्थः। अस्य विरोधस्येति। आवृतानावृतरक्तारक्तादिविरोधस्येत्यर्थः। आद्य इति। उभयदिगवच्छेदेना(ना)वृतत्व(१) इत्यर्थः। द्वितीय इति। उभयदिगवच्छेदेनानावृतत्व इत्यर्थः। तृतीय इति(२)। क्वचिदावृतः क्वचिदनावृत उत्पन्न इत्यत्रेत्यर्थः। विरोधमाह। स एवेति(३)। कः(४) पुनरसाविति प्रश्नः। दिगन्तरावच्छेदेन(५) इत्युत्तरम्। अविरोधमेवोपपादयति। यदि हीति(६)। अयं सिद्धान्तवृत्तान्त इति। अञ्चलावच्छेदेन महारजनसंयोगेऽपि दशावच्छेदेन तदभावान्न सर्वत्र रक्त(वि)भ्रम इत्यर्थः। एतावता तथैवेतिसहितं वेति(७) षष्ठः पक्षोऽभ्युपगमेन(८) निरस्त इति सिद्धं सहकारिसमवधानासमवधानप्रयुक्ते करणाकरणे एकस्यामेव व्यक्ताविति॥

---

एतेन व्यतिरेकपक्षोऽपि निरस्तः।

---

दीधितिः।

एतेन व्याप्तिविरहेण। व्यतिरेकपक्षः यत् क्रमयौगपद्यर-

दीधितिटिप्पणी।

एतेनेत्यादिना क्षणिकत्वसत्त्वयोर्व्यतिरेकव्याप्तिदूषणे क्रमादि-

---

(१) च्छेदेन तत्त्व-पा० २ पु०। (२) द्वितीय इति-कालि० मु० पु० पा०।

(३) उत्पन्न इत्यर्थः-कालि० मु० पु० पा०।

(४) कश्च—कालि० मु० पु० पा०। प्रकारभेदेत्यादि इह तु नैवमित्यन्तेनैकः पूर्वपक्षग्रन्थः। कः—पुण० पु० पा०।

(५) दिगन्तरावच्छेद इति तु मूलप्रतीकपर्यालोचने युक्तमिव प्रतिभाति।

(६) इत्युत्तरम्।—कालि० मु० पु० पा०। (७) सहितत्वेति— पुण० पु० पा०।

(८) भ्युपगमनियमेन—पा० २ पु०। अनभ्युपगमेनेति तु युक्तम्।

दीधितिः ।

हितं तदसत्, यथा शशविषाणम्, क्रमयौगपद्यरहितश्च स्थिरो भाव इति स्थिराणां सत्त्वव्यतिरेकसाधनम् ॥

दीधितिटिप्पणी ।

विपर्ययहेतोरग्रहणेऽसङ्गतिः स्यात्, क्षणिकत्वाभावस्यैव हेतुतया तदुपन्यासस्यैवोचितत्वात्, एतदुपन्यासस्याप्रस्तुतत्वात्, अतः क्रमादिविरहमेव हेतूकृत्य सङ्गमयति । व्यतिरेकेति । न चैतदप्रस्तुतम्, एवं पूर्वापरा(न)ङ्गं, कुतः, सत्त्वाश्रये हि क्षणिकत्वं साधितम्, इदानीं स्थिरतया पूर्वाङ्गीकृतेषु सत्त्वाभावसाधनस्योचितत्वात् । क्रमयौगपद्यरहितमिति । क्रमेण कारित्वस्य तत्र युगपत् सह कार्यकारित्वस्य च अन्यतरहेत्वभावोऽत्र हेतुः प्रत्येकस्य सामर्थ्येऽपि उभयस्य मूलोक्तत्वादुक्तः, मूले तद्वत्त्वानुरोधादुक्तम् ? ॥

---

कल्पलता ।

एतेनेति । सत्त्वक्षणिकत्वयोरन्वयव्याप्तिभङ्गेनेत्यर्थः । यन्न क्षणिकं तन्न सत्, यथा शशविषाणमिति व्यतिरेकव्याप्तिस्त्वया वाच्या, केवलान्वयिनोऽनभ्युपगमात्, व्यतिरेकव्याप्तिश्चान्वयव्याप्तिव्याप्ता, सा चेन्नास्ति, तदा व्यतिरेकव्याप्तिरपि नास्तीति भावः ॥

---

अधिकश्च तत्राश्रयहेतुदृष्टान्तासिद्धौ प्रमाणाभावः,

---

दीधितिः ।

आश्रयः(१) पक्षः स्थिरो भावः, तस्यासिद्धिः, तत्स्वरूपस्य परेण(२) प्रामाणिकत्वानभ्युपगमात्, य(त् त)द्व(३)क्ष्यति,

---

(१) आश्रयेण हेतोः सामानाधिकरण्यभ्रमं निराकरोति । पक्ष इति ।—गुणानन्दः ।

(२) स्वनये तस्य प्रामाणिकत्वादाह । परेणेति ।—गुणानन्दः ।

(३) पक्षपदस्य स्थिरभावपरत्वे बोधकमाह । यद्वक्ष्यतीति । अत्र स्थिर इति भाविप्यति प्रकृतोपष्टम्भकम् ।—गुणानन्दः ।

अवस्तुनि प्रमाणाप्रवृत्तेः, प्रमाणप्रवृत्तावलीकत्वानुप-

दीधितिः ।

न हि विरोधसहस्रेणापीत्यादि, तद्विशेषणस्या(१)सत्त्वलक्षणस्य साध्यस्याप्रसिद्ध्या च । हेत्वसिद्धिः हेतोः क्रमादिविरहस्याप्रसिद्धिः, सति त्वया तदनभ्युपगमात्, असतः(२) प्रमाणागोचरत्वात्, पक्षस्य(३) हेतोश्चाप्रसिद्ध्या पक्षधर्मत्वासिद्धिश्च । दृष्टान्तासिद्धिः दृष्टान्तस्य अलीकस्याप्रसिद्धिः, तस्य साध्य(४)साधनयोश्चाप्रसिद्ध्या (च) तत्र तदुभयवत्त्वाप्रतीतिः(५) । अलीकत्वा(६)न्नास्त्येवासति पक्षादौ प्रमाणम्, अनुमानं पुनरसत्ख्यात्यैव व्यवहारवत् प्रवर्तते(७), अथ व्यवहारोपि

दीधितिटिप्पणी ।

नैयायिकमते सिद्धत्वादाह । परेणेति । बौद्धेनेत्यर्थः । यद्वक्ष्यति, परमतेनेति शेषः, अन्यथा नैयायिकमतेन न हीत्युक्तावसङ्गतं स्यात्, स्थिरे नैयायिकैः प्रत्यक्षाङ्गीकारात्, एवं च मूले दर्शयितुमित्यनन्तरं त्वयेति शेषः । पक्षासिद्धिरित्यत्र हेत्वन्तरमप्याह । तद्विशेषणस्येति । तथा च सन्दिग्धसाध्यधर्मिणः पक्षस्यात्रोभयथाऽसिद्धिः, विशेष्याभावात्, साध्यरूपविशेषणाभावाच्च, एवं चाद्ये हेतुः प्रामाणिकत्वानभ्युपगमादिति, द्वितीये हेतुस्तद्विशेषणस्येति । तस्य दृष्टान्तस्य । व्यवहारवदिति । यथाऽलीके व्यवहारः प्रवर्त्तते तद्वदनुमा-

(१) साध्याप्रसिद्धेरनुक्तत्वान्न्यूनतामाशङ्क्य परिहरति । तद्विशेषणस्येति । अप्रसिद्ध्या चेत्यत्राश्रयासिद्धिरिति प्रागुक्तमनुषज्यते ।—गुणानन्दः ।

(२) असतश्च—पुण० पु० पा० ।

(३) ननु साध्यस्याप्रसिद्धावपि यथाऽप्रसिद्धसाध्यको व्यतिरेकी, तथा हेत्वप्रसिद्धावपि स्यादत आह । पक्षस्येत्यादि ।—गुणानन्दः ।

(४) तस्य साध्य—कलि० मु० पु० पा० ।

(५) प्रतीतिश्च—पुण० पु० पा० । तत्र, दृष्टान्तत्वेनाभिमते शशविषाणादौ ।

(६) प्रतिबन्दिमात्रस्य प्रकृतानुपपादकत्वादाह । अलीकत्वादिति ।—गुणानन्दः ।

(७) ख्यात्यैव प्रवर्तते व्यवहारवत्—पुण० पु० पा० । असति प्रमाणाभाव इनिवचनवादित्यर्थः ।

पत्तेः। एवं तर्ह्य(१)व्यवहारे स्ववचनविरोधः स्यादिति चेत्, तत् किं(२) स्ववचनविरोधेन तेषु प्रमाणमुपदर्शितं भवेत्(३), व्यवहारनिषेधव्यवहारोपि(४) वा खण्डितः (स्यात्)(५), अप्रामाणिकोऽयं(६) व्यवहारोऽवश्याभ्युपगन्तव्य इति वा भवेत्।

दीधितिः।

प्रमाणाधीन एव,तत्राह। एवं तर्हीति। स्ववचनम् असत्या(७) श्रयादौ प्रमाणाभाव इति वचनम्। व्यवहारेति। तेष्वित्य(८) नुपपद्यते॥

दीधितिटिप्पणी।

नमपि भविष्यतीति भावः। प्रमाणाधीन एव, त्वया उच्यत इति शेषः॥

कल्पलता।

अधिक इति। अन्वयव्याप्त्यपेक्षयात्र बहूनि दूषणानीत्यर्थः। तान्येवाह। आश्रयेति। आश्रयपदं साध्याभावपरम्, तदाश्रित्य व्यतिरेकव्याप्तिप्रवृत्तेः,

(१) ननु साध्यज्ञानमात्रं तद्व्यतिरेकग्रहौपयिकं, न तु साध्यप्रमा, शशशृङ्गं नास्तीति व्यवहारात्, अन्यथा न तत्र व्यवहार इत्यपि वचनं व्याहतम्, अस्यैव व्यवहारस्य सत्त्वात्, तथा चाश्रयादौ प्रमाणाप्रवृत्तावपि नोक्तदोष इत्याह। एवं तर्हीति।—भगीरथठक्कुरः।

(२) तत् किमिति। न हि तत्र व्यवहारः प्रामाणिकः सम्भवति, अलीकानामकारणतया प्रत्यक्षाविषयत्वात्, व्याप्तिग्राहकतादात्म्यतदुत्पत्त्योरभावेऽनुमानासम्भवादित्यर्थः।—भगीरथठक्कुरः। (३) भवति—कालि० मु० पु० पा०। (४) व्यवहारो-कालि० मु० पु० पा०।

(५) व्यवहारनिषेधेति। अवस्तुविषयकस्य व्यवहारस्य यो निषेधरूपो व्यवहारः सोऽपि खण्डितः, तथा च व्यवहारनिषेधोपि तत्र न कर्तव्य इत्यर्थः।—भगीरथठक्कुरः।

(६) अप्रामाणिकोपि—पुण० पु० पा०। अप्रामाणिक इत्यस्य प्रमाणाविषयगोचर इत्यर्थः।

(७) स्वपदस्य बौद्धपरत्वे इष्टापत्तिराह। असतीत्यादि।—गुणानन्दः।

(८) विषयाकाङ्क्षायामाह। तेष्विति। मौलव्यवहारनिषेधव्यवहारपदं चासत्याश्रयादौ प्रमाणाभाव इतिवचनपरमित्यवधेयम्। एवमग्रेपि यथायथमवसेयम्।—गुणानन्दः।

कल्पलता।

हेतुपदं साधनाभावपरम्, तद्विपर्ययस्य हेतुत्वोपगमात्, दृष्टान्तपदं स्फुटार्थमेव, तथा च न(१) शशविषाणादौ साध्याभावो न(२) साधनाभावो न वा शशविषाणादि प्रमाण(३)गम्यमित्यर्थः। यद्वा अक्षणिकमसत्, क्रमयौगपद्याभ्यामर्थक्रियारहितत्वात्, कूर्मरोमवदित्याश्रयासिद्धिः, सन्देहसिषाधयिषयोरभावात्। अत एव हेत्वसिद्धिः, व्याप्तिपक्षधर्मताविशिष्टस्यैव हेतुत्वात्(४)। एवं तर्हीति। प्रमाणसाध्य(५) एव व्यवहारस्तदेत्यर्थः, तथा च ज्ञानमात्रं व्यवहाराङ्गं, न तु प्रमैवेति भावः। अलीके कोऽपि व्यवहारो न सम्भवतीति वदतस्तव स्ववचनविरोधः, अस्यैव(६) व्यवहारस्याभ्युपगमादित्याह। स्ववचनेति। तत्किमिति। प्रमाणाधीन एव व्यवहारः, त्वया च व्यवहारनिषेधव्यवहारः(७) क्रियते, तन्नूनं(८) शशविषाणाद्यपि प्रामाणिकमित्यायातमित्यर्थः। व्यवहारनिषेधेति। प्रमाणमन्तरेण(९) व्यवहारनिषेधव्यवहारोऽप्ययमनुपपन्न इत्यर्थः। अप्रामाणिकोऽपीति। अप्रामाणिकोऽपि व्यवहारश्चेत् त्वया(१०) नैष्टव्य(११)स्तदा तव(१२) स्ववचनविरोधो भवेदित्यर्थः॥

(१) तथा च—कलि० मु० पु० पा०। (२) साध्याभावे—पुण० पु० पा०।
(३) प्रमाणगण—कलि० मु० पु० पा०। (४) अक्षणिकत्वरूपसाध्यप्रसिद्ध्या पक्षविशेषणसंशयासिषाधयिषाद्यभावादाश्रयासिद्धिः, अत एव हेत्वभावः, व्याप्तपक्षधर्मस्यैव हेतुत्वादिति भावः। उपलक्षणं चैतत्। दृष्टान्तासिद्धिरप्यत एव, साध्याप्रसिद्ध्या साध्याभावव्यापक[illegible]प्रतियोगित्वग्रहस्थलाभावादित्यप्यूह्यम्। (५) प्रमाणे साध्य—पुण० पु० पा०।
(६) विरोधः, तस्यैव—पुण० पु० पा०। (७) निषेधव्यवहारश्च-पुण० पु० पा०।
(८) तन्मूलं-पुण० पु० पा०। (९) प्रमाणान्तरेण—पा० २ पु०।
(१०) व्यवहारस्त्वया-पा० २ पु०। (११) नेष्टव्य—कलि० मु० पु० पा०। (१२) [illegible]

न तावत् प्रथमः, न हि विरोधसहस्रेणापि स्थिरे तस्य क्रमादिविरहे वा शशशृङ्गे वा प्रत्यक्षमनुमानं वा दर्शयितुं शक्यम, तथात्वे वा कृतं भौतकलहेन।

दीधितिः।

शशशृङ्गे वेति। तस्य क्रमादिविरहे, असत्त्वे च(१)त्यपि द्रष्टव्यम्। तथात्वे वेति। प्रमाणप्रवृत्तावसत्त्वानुपपत्तेरिति भावः॥

दीधितिटिप्पणी।

द्रष्टव्यमिति। परन्त्वसत्त्वरूपसाध्यं पक्षे न दर्शितम्, पक्षे साध्यप्रसिद्धेरनङ्गत्वादिति॥

कल्पलता।

अक्षणिकमसत्, क्रमयौगपद्यरहितत्वात्, कूर्मरोमवदित्यनुमाने पक्ष(२)साध्यहेतुदृष्टान्तेषु प्रमाणानुपपत्तिमाह। न हीति। इन्द्रियसन्निकर्षाभावात् प्रत्यक्षानुपपत्तिः, व्याप्त्यभावा(३)दनुमानानुपपत्तिरिति भावः। तथात्व इति(४)। प्रमाणोपदर्शने इत्यर्थः। भौतः बर्बरः, भूताविष्टो वा॥

द्वितीयस्त्विष्यत(५) एव प्रामाणिकैः। अवचनमेव तर्हि तत्र(६) प्राप्तम्, किं कुर्मो यत्र वचनं सर्वथैवानुपपन्नं तत्रा-

दीधितिः।

अवचनमेवेति। तथा चाप्रतिभेति भावः। उत्तरार्द्धे उत्त-

दीधितिटिप्पणी।

मूले अलीके व्यवहारस्य निषेधव्यवहारोपि नास्तीति स्व-

(१) न्यूनतां परिहरति। असत्त्वे चेति। (२) दित्यनुमानपक्षे—पा० २ पु०।
(३) व्याप्तिग्रहाभावात्—पुण० पु० पा०। (४) तथात्वे वेति—कलि० मु० पु० पा०।
(५) द्वितीयं त्विष्यत—पाठः। (६) तर्हि—कलि० मु० पु० पा०।

वचनमेवश्रेयः, त्वमपि परि(१)भावय तावत्, निष्प्रमाणके(२)ऽर्थे मूकवावदूकयोः कतरः श्रेयान्(३)।

दीधितिः ।

राप्रतिपत्तिरप्रतिभा, न चेदमुत्तरार्हमित्याह । त्वमपीति ॥

दीधितिटिप्पणी ।

मते(४) उच्यते । तदुक्तम्, अत्र सचेतनानां मूकतैव शरणमिति भावः ? ॥

कल्पलता ।

द्वितीयस्त्विति । व्यवहाराभाव(५)व्यवहारखण्डनपक्ष इत्यर्थः । अप्रतिभानिग्रह(स्थान)मुद्भावयति । अवचनमेव तर्हीति । निरनुयोज्यानु(६)योगमाह सिद्धान्ती, किं कुर्म इति। उत्तरार्हे उत्तराप्रतिपत्तिरप्रतिभा, इदं तूत्तरार्हमेव न(७) भवतीति नाप्रतिभेति भावः(८)। (ए)तदेवाह । त्वमपीति ।(९) अवचनमेवात्र(१०) श्रेय इत्यर्थः । निष्प्रमाणक(११)इति । वचनस्यापि(१२) मूलभूतप्रमाणसापेक्षत्वादिति भावः(१३)॥

एवं(१४) विदुषापि भवता न मूकीभूय स्थितम्,

(१) श्रेयः, स्वयमपि वि—पाठः । (२) निष्प्रामाणिके—कालि० मु० पु० पा० ।
(३) कतरः प्रामाणिक इति—पुण० पु० पा० । (४) नास्तीति त्वया-पा० २ पु० ।
(५) व्यवहाराभावः ।—कालि० मु० पु० पा० । व्यवहाराभावाभाव-पा० २ पु० ।
(६) निरनु—कालि० मु० पु० पा० । (७) मेव—कालि० मु० पु० पा० ।
(८) न वा त्वया साधनं किञ्चिदुक्तं यत्रानुत्तरादप्रतिभा स्यादित्यपि बोध्यम् ।
(९) भावः ।—पा० २ पु० ।
(१०) मेव—पुण० पु० पा० । (११) निःप्रामाणिक—कालि० मु० पु० पा० ।
(१२) इति । स्ववचनस्यापि—पुण० पु० पा० । इति । अवचनस्यापि-पा० २ पु० ।
(१३) वचनहेतुविवक्षाकारणीभूतप्रमाणसापेक्षत्वादिति भावः ।
(१४) ननु नावस्तुनि कस्यचिद्धर्मस्य विधिनिषेधव्यवहाराविति जानतापि तत्र व्यवहारो निषिध्यते, न तु मूकत्वमालम्ब्यत इत्याह । एवमिति । —भगीरथठक्कुरः ।

एव स्ववचनविरोधः स्वीक्रियते(१) । यदि तूभयत्रापि भवान् समान(२)दृष्टिः स्यादस्माभिरपि तदा(३) न किञ्चिदुच्यत इति ।

दीधितिः ।

स्यात् सोऽप्रामाणिकोऽर्थो मा प्रसाङ्क्षीत् अस्तीतिभ्रमविषयो मा भूत्, एतदर्थं यथा तत्रासत्त्वानुमित्यर्थमप्रामाणिको व्यवहारस्त्वया स्वीकृतस्तथा प्रमितादेव लिङ्गात् सत्यानुमितिर्भवतीति शिष्यबोधनायास्माभिरपि स्ववचनविरोधोऽङ्गीकृत इत्यर्थ इत्याहुः(४) । यदि त्विति । असति व्यवहारनिषेध इवासतो दृष्टान्तत्वादिकमपि न सम्भवति, प्रमाणविरहादिति प्रतिसन्धाय यदि भवानुक्तरूपमनुमानं न प्रयुङ्क्त इत्यर्थः ॥

दीधितिटिप्पणी ।

स्ववचनस्य व्यवहाररूपस्य विरोधोऽत्रेत्यर्थः । मा प्रसाङ्क्षीदित्यस्यार्थमाह । अस्तीति । अत्र हेतुगर्भं मूले विरुद्धान्तं विशेषणम् । व्यवहारदृष्टान्तेनैवानुमितिसम्भृतेः सम्भवादाह । प्रमितादेवेति(५) । तावता च सत्यानुमितिवत् प्रमितलिङ्गसम्भव(६)त्खण्डनमिति भावः । असतीति । सन्मत इत्यादिः ॥

(१) ननु परेणाप्रामाणिकार्थाभिधानेऽप्रामाणिकार्थप्रसक्तिपरिजिहीर्षयापि कृते स्वयमपि अप्रामाणिकार्थप्रसक्तिपरिजिहीर्षयाप्यप्रामाणिकव्यवहारप्रवर्त्तनं कथमुचितम्, तत्र स्वयमभ्रान्तत्वे परं भ्रामयितुमेव तथाविधशब्दप्रयोगे स्वानुभूतविपरीतार्थबोधेच्छया शब्दप्रयोक्तृस्वरूपप्रतारकत्वस्य, स्वयमपि भ्रान्तत्वे तु तन्मूलकानिग्रहस्य च स्वास्मिन् दुर्वारत्वादिति चेन्न । स्वयमभ्रान्तस्यापि यदि निर्वह्निः स्यात् तर्हि निर्धूमः स्यादित्यादितर्काभिलापकशब्दप्रयोगवत् प्रमाणबाधितार्थपरकीयमत प्रसक्तिनिराचिकीर्षयाऽऽहार्यारोपमूलकस्यैव शशशृङ्गादौ व्यवहारनिषेधव्यवहारस्यापि प्रवर्तने कथकसम्प्रदायप्रसिद्धनियमातिक्रमस्यापादयितुमशक्यत्वात्, तर्काभिलापकशब्दस्थल इवात्रापि पर्यवसितार्थस्य प्रामाणिकतयैव द्वारभूतभ्रमप्रयोजकशब्दप्रयोगेऽपि प्रयोक्तुः प्रतारकत्वादिदोषाप्रसक्तेः, पर्यवसितार्थस्याप्राणिकत्व एव तत्प्रसक्तिसम्भवादित्यवधेयम् ।

(२) सम—पुण० पु० पा० । (३) स्यात्तदास्माभिरपि—पुण० पु० पा० ।

(४) तत्रासति व्यवहारनिषेधे एतस्यासत्त्वानुमानं तैर्नोपक्रान्तमित्यरुचिबीजम् ।—गुणानन्दः । (५) दाह । सत्यानुमितादेवेति—पा० २ पु० । आदर्शपुस्तकेऽप्ययमेव पाठः ।

(६) प्रमितलिङ्गकेचि—पा० २ पु० । आदर्शपुस्तकेऽप्ययमेव पाठः ।

कल्पलता।

एवं विदुषापीति। अप्रामाणिकेऽर्थे(ऽत्र) मूकतैव शरणमिति विदुषापीत्यर्थः। यथेति। सत्त्वं क्षणिकत्वव्याप्यमिति युष्माकं(१) स्ववचनम्, तद्विरुद्धोऽर्थः सत्त्वे सत्यपि(२) शशविषाणादौ न क्षणिकत्वमिति विपक्षगामित्वप्रसङ्गः(,स) मा भूत्, ए(३)तदर्थं क्षणिकत्वव्यावृत्त्या सत्त्वव्यावृत्तिरप्रामाणिक्येव(४) त्वया यथा व्यवह्रियते तथास्माभिरपि(५) क्षणिकत्वे किं प्रमाणमिति चिन्तायां त्वदुप(६)दर्शितः शशविषाणादौ व्यतिरेकग्रहव्यवहारो मा प्रसक्तः स्यादित्येतदर्थं स्वाशेष्यादय एवं बोध्यन्त इत्यर्थः। यदि त्विति। त्वं चेत्तत्र व्यतिरेकव्याप्तिं न दर्शयसि तदा तत्र व्यतिरेकभङ्गाय मयापि न यतनीयमित्यर्थः॥

---

दीधितिः।

सुदृढनिरूढत्वम् इदमित्थम्भूत(७)मेवेतिप्रमाविषयत्वम्, तत् किं स्वरूपत एव, विषयतोपि वा। आद्ये जबगडदशा(८)दिवदभ्युपगम्यन्त(९) एव शशविषाणं नास्तीत्यादि(१०)प्रत्यक्ष-

दीधितिटिप्पणी।

मूलसिद्धान्तीयन्यूनतां परिहरति। तत् किमिति। तत् प्रमाविषयत्वम्, शब्दप्रयोगरूपतादृशव्यवहारविषयस्य किं स्वरूपतोदृश्यविषयत्वादेव किं वा स्वविषयस्यार्थस्य प्रमाविषयत्वाधीनमित्यर्थः। श्रोत्र-

---

(१) व्याप्यमित्यस्माकं—कलि० मु० पु० पा०।

(२) सत्वेऽसत्यपि—कलि० मु० पु० पा०।

(३) विपक्षगामित्वप्रसङ्गात्। स मा भूदे—कलि० मु० पु० पा०। विपक्षगामित्वप्रसङ्गः, समानमे—पा० २ पु०। (४) रप्रामाणिक्येवेति—पुण० पु० पा०।

(५) तथास्माभिरपि।—कलि० मु० पु० पा०। (६) चिन्तायां उप—पुण० पु० पा०।

(७) मित्थ—कलि० मु० पु० पा०। (८) जडगवदवशा—कलि० मु० पु० पा०।

(९) भ्युपगम्यत—कलि० मु० पु० पा०। (१०) त्यादयः—पुण० पु० पा०।

तृतीये त्वप्रामाणिकश्चापय(१)वश्याभ्युपगन्तव्यश्चेति कस्येयमाज्ञेति भवानेव प्रष्टव्यः। व्यवहारस्य सुदृढनिरूढत्वादिति चेत्, अप्रामाणिकश्च सुदृढ(निरूढ)श्चेति व्याघातः। कथञ्चिदपि व्यवस्थितत्वादिति चेत्, अप्रामाणिकश्चेन्न कथञ्चिदपि व्यवतिष्ठते। प्रामाणिकश्चेत्, तदेवोच्यतामिति वादे व्यवस्था।

---

दीधितिः।

सिद्धाः शब्दाः। द्वितीये त्वाह। अप्रामाणिक इति। प्रमाणाविषयार्थक(२) इत्यर्थः। कथञ्चिदिति। सम्वृतिसिद्धत्वा(३)दित्यर्थः। न कथञ्चिदिति। अप्रामाणिकस्य सम्वृति(४)सहस्रेणापि वास्तवीकरणायोगादित्यर्थः। तदेव प्रमाणमेव(५)। वाद इति। स्ववचनविरोधेऽप्यसिद्धेन हेतुना निर्णयाजननात्। वक्ष्यमाणा जल्पादिरीतिरिहापि न निवार्यत इति तात्पर्यम्॥

दीधितिटिप्पणी।

रूपप्रमाणाविषयत्वादर्थघटितं तदाह। प्रमाणाविषयेति। सम्वृतिः असत्ख्यातिः। तत्त्वबुभुत्सोः कथा वादः। स्ववचनेति। स्ववचनविरोधस्थलेऽपि स्वरूपासिद्धेन हेतुना भवता साधयितुं न शक्यत इति भावः। ननु जल्पवितण्डयोरित्यादिना यद्वक्ष्यति, तदपि वक्तुं पार्यते, तथा च वादे तस्यानुक्तौ न्यूनता स्यादतः, वक्ष्यमाणेति। तथा च तदप्यत्र बोध्यमिति॥

---

(१) त्वप्रामाणिक अ-पुस्त० पु० पा०। (२) प्रमाणविषयार्थकभिन्न इत्यर्थः।

(३) संवृतिसिद्धत्वादिति। अस्य तदर्थस्येत्यादिः।—गुणानन्दः।

(४) सवृति—कलि० ख० पु० पा०।

(५) तद्धितार्थविशेषणप्रमाणशब्दानुकर्षस्यावश्यकत्वादाह। प्रमाणमेवेति—गुणानन्दः।

कल्पलता ।

अभ्युपगन्तव्यश्चेति । अभ्युपगमस्य प्रमाणमूलक-त्वस्थिते(१)रित्यर्थः । नन्वभ्युपगमे न प्रमाणमूलत्वं(२) तन्त्रम्, किन्तु निश्चयमूलत्वमात्रम्, निश्चयश्चास-त्ख्यातिरूपोऽपि, ततस्तदधीनो(३) व्यवहारोऽपि प्रकृते स्यादित्याह । व्यवहारस्येति । (अत्र) विरोधमाह(४)। अप्रामाणिकश्चेति । सुदृढत्वम् असङ्गृहीत(५)संवाद-त्वम्?। निरूढत्वम् इदमित्थमेवेतिगृहीतप्रामाण्यत्वम् । कथञ्चिदिति ।(६) सम्वृतिसिद्धत्वेनेत्यर्थः । अप्रामाणि-कश्चेदिति । सम्वृतिरप्रमैव चेत्, तदा तन्मूलोऽपि व्य-वहारः कथं व्यवतिष्ठताम् । प्रमारूपैव चेत् संवृतिः, तदा तन्मूलं प्रमाणमेवोच्यताम्, तच्च(७) नास्तीति भावः । ननु जल्पवितण्डयोः परपरा(८)जयार्थमप्रमा-णेनापि व्यवह्रियत एव, तत्कथं व्याघात इत्यत आह । वाद इति । वाद एव त्वया सहायमुपक्रान्तः स्थिरं वा चिरं(९) क्षणिकं वेति तत्त्वनिर्णीषया, तत्र कथमप्रमाणेन व्यवहरिष्यसीत्यर्थः । यद्वा वादकथा-यां स्ववचनविरोधो न निग्रहस्थानम्, नाप्यप्रतिभा, किं तु न्यूनाधिकापसिद्धान्त(१०)हेत्वाभासपञ्चका-नामेव तत्रोद्भावनीयत्वादित्यर्थः ॥

---

(१) मूलकत्वमस्ति ते-पा० २ पु० ।
(२) नन्वभ्युपगमे प्रमामूलत्वं न-कालि० मु० पु० पा० । नन्वभ्युपगमे मूलत्वं न-पा० २ पु० ।
(३) श्चासत्ख्यातिरूपोपि, यतस्तदधीनो-पा० २ पु० । (४) दित्याह-पा० २ पु० ।
(५) असद्गृहीत—पुण० पु० पा० । (६) कथञ्चित् —पा० २ पु० ।
(७) तत्तु-पुण० पु० पा० । (८) परस्पर-कलि० मु० पु० पा० ।
(९) वा चिरं—पुण० पु० पा० । (१०) पमिद्धान्त —कलि० मु० पु० पा० ।

जल्पवितण्डयोस्तु पक्षादिषु प्रमाणप्रश्नमात्रप्रवृत्तस्य न स्ववचनविरोधः, तत्र प्रमाणेनोत्तरमानिष्टमशक्यं च। अप्रमाणेनैव तूत्तरे(१) स्ववचनेनैव भङ्गः, मदुक्तेषु पक्षादिषु प्रमाणं नास्तीति स्वयमेव स्वीकारात्। अनुत्तरे त्वप्रतिभैवेति।

दीधितिः।

जल्पेति। शशशृङ्गादिशब्दा हि पदविधया(२) नार्थभेदबोधकाः, असामयिकत्वात्(३), वाक्यविधया(४) तु तथात्वे(५) शृङ्गादौ शशादिसंसर्गं बोधयेरन्, तथा च नित्यः शब्द इत्यत्र शब्दे नित्यत्व(६) इव शृङ्गादौ शशादिसंसर्गे प्रमाणप्रश्नो न व्याहन्यत इति भावः। अनिष्टम्, प्रकृत(७)पक्षादेः प्रामाणिकत्वानभ्युपगमात्। अशक्यम्, शृङ्गादौ शशादिसंसर्ग(८)साधकप्रमाणाभावात्॥

दीधितिटिप्पणी।

पदविधयेति। तथा चाखण्डं शशशृङ्गपदं यदि सङ्केतितं स्यात्, तदा शशशृङ्गं नास्तीति मयोच्यमानेऽखण्डाप्रसिद्ध्या मम स्ववचनविरोधः स्यात्, न चैवम्। प्रश्नः, नैयायिकस्य॥

कल्पलता।

ननु न त्वया समं तत्त्वनिर्णयार्थमहं प्रवृत्तः, किन्तु विजयार्थमेव, तत्र च स्ववचनविरोधेनाप्रति-

(१) माणेनोत्तरे–पुण० पु० पा०। (२) पदविषया—कलि० मु० पु० पा०।
(३) अर्थासामयिकत्वात्—पुण० पु० पा०। असामयिकत्वात्, असङ्केतितत्वात्। इदमुपलक्षणम्। विशिष्टे सङ्केतेपि विभज्य प्रश्नसम्भवो बोध्यः।—गुणानन्दः।
(४) वाक्यविषया—कलि० मु० पु० पा०। (५) विधया तथात्वे च—पुण० पु० पा०।
(६) शब्दनित्यत्व—पुण० पु० पा०।
(७) हेत्वाकाङ्क्षायामुभयत्र हेतू पूरयति। प्रकृतेति।—गुणानन्दः।
(८) शृङ्गादौ संसर्ग—कलि० मु० पु० पा०।

कल्पलता।

भया वा निगृहीत एवास्मीत्यत आह। जल्पेति। अनिष्टमिति। शशविषाणादेरपि प्रामाणिकत्वप्रसङ्गादित्यर्थः। तत्र च(१) स्ववचनाविरोधमङ्गीकृत्यापि प्रमाणमवश्यं प्रष्टव्योसि, तत्र चोत्तरानुत्तरयोस्त्वमेव निग्राह्य इत्यर्थः। एतदेवाह। मदुक्तोष्विति(२)॥

यदि च व्यवहारस्वीकारे विरोधपरिहारः स्यात्, असौ स्वीक्रियेतापि, न त्वेवम्, न खलु सकलव्यवहाराभाजनं च तन्निषेधव्यवहारभाजनं चेति वचनं परस्परमविरोधि।

दीधितिः।

व्यवहाराभाजनत्वेन स्वयम(३)भ्युपगते अलीके क्रमाद्यभावं(४) व्यवहरता(५) त्वयापि स्ववचनविरोधः स्वहस्तित एवेत्याह। यदि चेति॥

कल्पलता।

नन्वलीके स्ववचनविरोधभयेन मूकत्वमङ्गीकृत्याप्रतिभा स्वीकृता, व्यवहार एव कथं तत्र नाङ्गीकृत(६) इत्यत आह। यदि चेति। सकलविधिनिषेधव्यवहाराभाजनेऽलीके(७) व्यवहारस्वीकारेऽपि विरोधस्य तादवस्थ्यादित्यर्थः। एतदेवाह। न खल्विति॥

(१) दित्यर्थः। तेन—कलि० मु० पु० पा०।
(२) मदुक्तोरिति—पुण० पु० पा०। यदुक्तमिति—पा० २ पु०।
(३) स्वयमं, बौद्धेन।—गुणानन्दः। (४) द्यभाव—कलि० मु० पु० पा०।
(५) व्यवहारता—कलि० मु० पु० पा०।
(६) व्यवहार एव तत्र कथं न स्वीकृत–पा० २ पु०। (७) ऽलीक–कलि० मु० पु० पा०।

विधिव्यवहारमात्राभिप्रायेणाभाजनत्ववादे कुतो विरोध इति चेत्, हन्त, सकलविधिनिषेधव्यवहाराभाजनत्वेन किञ्चिद् व्यवह्रियते न(१) वा, उभयथापि स्ववचनविरोधः, उभयथाप्यवस्तुनैव तेन भवितव्यम्, वस्तुनः सर्वव्यवहारविरहानुपपत्तेः। नेति पक्षे सकलविधिनिषेधव्यवहारविरहीत्यनेनैव व्यवहारेण विरोधात्,

दीधितिः।

विविध(२)विधिव्यवहाराभाजनत्वमेवावस्तुनो वयमभ्युपगच्छाम इत्याशङ्कते। विधीति। तेनेति। सकल(३)व्यवहाराभाजनेनेत्यर्थः। उभयथा(४) विरोधं व्युत्पादयति, नेतीत्यादि(ना)। सकलेति। सकलव्यवहारशून्यत्वं यत्र प्रतीतं(५) तत्रैव तद्व्यवहारात् कथं सर्वत्र तद्व्यवहारनिषेधः। अथ न क्वापि तत्प्रतीतं तदा तद्व्यवहारस्या(६)प्यप्रत्ययात् कथं निषेध इत्या-

दीधितिटिप्पणी।

मूले नेतीत्यर्थेऽसङ्गतम्, नेति पक्षे तादृशव्यवहारस्यानङ्गीकारात्, अतः प्रतियोगिप्रसिद्धिरूपतया व्यवहारं सङ्गमयति। सकलेति। नन्वेवमलीके प्रतियोगिप्रसिद्ध्याऽन्यत्रानलीके(७) निषेधो भविष्यतीत्याह। सर्वत्रेति। ज्ञानमात्रादेवाभावग्रहणे न(८) व्यवहा-

(१) भाजनत्वेन व्यवह्रियते किञ्चिन्न-पुण० पु० पा०।

(२) विविधेति सामान्याभावस्फोरणाय।-गुणानन्दः।

(३) विरोधानुकर्षणभ्रमं निराकरोति। सकलेति।-गुणानन्दः।

(४) विप्रकृष्टत्वात् स्पष्टयति। उभयथेति।-गुणानन्दः।

(५) यत्र प्रतीतमिति व्यवहारेपि सामग्रीविघटनपरम्।-गुणानन्दः।

(६) तद्व्यवहारस्य, सकलव्यवहारशून्यत्वव्यवहारस्य। अप्रत्ययादिति। तादृशव्यवहर्त्तव्य-ज्ञानाभावेन तादृशव्यवहाराभावे तस्य प्रत्यक्षं न स्यात्, प्रत्यक्षाभावे परोक्षमपि न स्यादिति भावः

(७) न्यत्र कालिकेन-पा० २ पु०। आदर्शपुस्तकेप्ययमेव पाठः।

(८) ग्रहणे तु-इत्यादर्शपुस्तकद्वितीयपुस्तकयोः पाठः।

अव्यवहृतस्य निषेद्धुमशक्यत्वात्। व्यवह्रियत इति पक्षेऽपि विषयस्वरूपपर्यालोचनयैव विरोधात्, न हि सर्वव्यवहाराविषयश्च व्यवह्रियते चेति।

दीधितिः।

ह। अव्यवहृतस्येति। अज्ञातस्येत्यर्थः(१)। विषयेति। सकलव्यवहाराभाजनस्य व्यवहाराभावव्यवहाराभ्युपगमादित्यर्थः। तदेवाह(२)। न हीति॥

दीधितिटिप्पणी।

रापेक्षेत्यत आह। अज्ञातस्येति। सकलेति। तादृशव्यवहाराभाजनत्वेन व्यवह्रियत इत्यस्य तादृशव्यवहाराभाववत्त्वेन व्यवह्रियत इत्यर्थकतयाऽभावव्यवहारमादायैव विरोधादित्यर्थः॥

कल्पलता।

**ननु येन सकलव्यवहाराभाजनत्वमलीकस्याङ्गीक्रियते, तस्य तव (निषेधव्यवहारं मया क्रियमाणं) निषेधतः(३) स्यात् स्ववचनविरोधः, मया तु विधिव्यवहाराभाजनत्वमात्रमङ्गीक्रियते (तत्र), तथा च सत्त्वक्षणिकत्वादिनिषेधव्यवहारं कुर्वतो मम कुतः स्ववचनविरोध इत्याह। विधीति। विधिव्यवहारमात्रेति वदता त्वया विधिनिषेधोभयव्यवहाराभाजनत्वेन (न) किञ्चिदङ्गीक्रियत इति मात्रपदस्वरसात् प्रतीयते(४), तथा च तावतापि तव स्ववचनविरोध एवे-**

(१) निषेधज्ञाने व्यवहारस्याप्रयोजकत्वादाह। अज्ञातस्येति।–गुणानन्दः।

(२) पौनरुक्त्यमाशङ्क्याह। तदेवेति। विरोधस्वरूपमेव स्पष्टयतीत्यर्थः।–गुणानन्दः।

(३) इदमेव युक्तम्। तस्य तव निषेधव्यवहारं क्रियमाणं निषेधः—पा० २ पु०। तस्य तव निषेधव्यवहारं मया क्रियमाणं निषेधः–कलि० मु० पु० पा०। तस्य तव निषेधतः–पुण० पु० पा०।

(४) त्वया विधिनिषेधव्यवहाराभाजनत्वेन न किञ्चिदङ्गीकरोमीति मात्रपदस्वरसः। तथा प्रतीयते—कलि० मु० पु० पा०।

व्हारगोचरतापि किं न स्यात्, प्रमाणाभावस्योभयत्रापि तुल्यत्वात्। वन्ध्या(१)सुतस्यावक्तृत्वेऽचेतनत्वादिकमेव प्रमाणम्, वक्तृत्वे तु न किञ्चिदि(२)ति चेन्न। तत्रापि सुतत्वस्य विद्यमानत्वात्। न हि वन्ध्यायाः सुतो न सुतः, तथा सति स्ववचनविरोधात्(३)। वचनमात्र(४)मेवैतत्(५), न तु परमार्थतः सुत एवासा-

---

दीधितिः।

ति। उभयत्र निषेधे विधौ च। निषेधे प्रमाणमाशङ्कते। वन्ध्येति। प्रमाणप्रवृत्तावलीकत्वानुपपत्तौ सत्यामेवाह। तत्रापीति। वक्तृत्वं वचनकरणयोग्यता(६) मूकस्यापि, मूकत्ववि-

दीधितिटिप्पणी।

इति भावः।(७) तत्रापीति मूलम्, तत्रापि सुतत्वस्य प्रमाणस्य विद्यमानत्वात्, तथा च वक्तृत्वे तु न किञ्चिदिति यदुक्तं तदनुपपन्नमित्यर्थः। नन्विदं भवतो नैयायिकस्यानुक्तिसम्भावितम्, न हि भवता अलीके (सु)तत्वादिकं वर्तत इत्यङ्गीक्रियते इत्यत आह। प्रमाणप्रवृत्ताविति। तथा च एतद्दोषसत्त्वेपि दोषान्तरमाहेत्यर्थः। नन्विदं सुतत्वं मूक एव वक्तृत्वव्यभिचारीत्यत आह। वक्तृत्वमिति।

---

(१) तुल्यत्वात्। अथ वन्ध्या-पुण० पु० पा०।

(२) किञ्चिदपी-पुण० पु० पा०। (३) विरोधाद्-कलि० मु० पु० पा०।

(४) वचनमात्रम्, निरर्थकं वचनम्। एतत्, वन्ध्यासुत इति। अचैतन्यस्यापि, अचैतन्यप्रतिपादकत्वेनाभिमतस्यापि। एवंरूपत्वात्, निरर्थकत्वात्। चेतनादिति। चेतनावृत्तिधर्मवद्विशेष इत्यर्थः।

(५) मेव तत्-पुण० पु० पा०। (६) योग्यता।-कलि० मु० पु० पा०।

(७) सुतत्वे वक्तृत्वे चेति प्रत्येकं वक्ष्यमाणत्वात्तथैव व्याचष्टे। उभयत्रेति। निषेध इति। व्यवहार इति शेषः।--पा० २ पु०।

दीधितिः ।

सुतेतरस्वभावत्वम्, तन्निवृत्तिरसति निःस्वभावे न विरुध्यत इति भावः(१) ॥

दीधितिटिप्पणी ।

कृतिं प्रति सामर्थ्यादिति भावः ॥

---

कल्पलता ।

यथा(२) चालीके(३) सत्त्वं क्षणिकत्वं च व्यतिरेकसिद्ध्यर्थं निषि(४)ध्यते, तथा तयोर्विधिरेव कथं न क्रियते, विधिवन्निषेधस्यापि प्रमाणाधीनत्वात्। निषेधव्यवहारे प्रमाणं शङ्कते। वन्ध्यासुतस्येति। अत्राश्रयासिद्धिः स्वरूपासिद्धिश्च द्वयोरपि प्रमाणाविषयत्वादिति यद्यपि, तथापि पर(५)परिहासाय सत्प्रतिपक्षमाह। तत्रापीति। वक्तृत्वेपीत्यर्थः। स्वरूपासिद्धिं निरस्यति। न हीति। तथा सतीति। असुतत्वे सतीत्यर्थः। वन्ध्यासुतो न वक्तेति वदता त्वयैव तत्सुतत्वाभ्यु(६)पगमादिति भावः। वचनमात्रमिति। अर्थशून्यमित्यर्थः, त्वया तु साधनत्वेनोपात्तं सुतत्वं(७) न वचनमात्रं भवितुमर्हतीति स्वरूपासिद्धिरिति भावः। पर्युदासाभिप्रायेणाह। अचैतन्यस्यापीति। पर्युदासमेव विवृणोति। चेतनादिति। तथा च तवापि(८) स्वरूपासिद्धिरेवेति भावः। प्रसज्यप्रतिषेधाभिप्रायेण शङ्कते। चैतन्येति। तथा

---

(१) विरुध्यते—पुण० पु० पा० ।

(२) अयं ग्रन्थोऽधृत्वैव प्रतीकं यदि चेत्यादिमूलस्य व्याख्याने प्रवृत्त इति बोध्यम्।

(३) थालीके—पा० २ पु० । (४) निषे—कालि० मु० पु० पा० ।

(५) तथापि—पा० २ पु० । (६) तत्सुतत्वाद्यु—पा० २ पु० ।

(७) सुतरां—कालि० मु० पु० पा० । (८) तथा च—पा० २ पु० ।

कल्पलता ।

चाभावस्यापि तुच्छत्वात्तुच्छे(१) च तत्सम्भवान्न स्वरूपासिद्धिरिति भावः । तत्रापीति । अस्मत्प्रयोगेऽपीत्यर्थः । त्वन्मतेऽन्यापोहस्यैव पदार्थत्वा(३)दिति भावः ॥

असुतत्वनिवृत्तिमात्रस्य स्वरूपेण कृतिज्ञप्त्योरसामर्थ्ये समर्थमर्थान्तरमध्यवसेय(४)मनन्तर्भाव्य कुतो

दीधितिः ।

असुतत्वेति । निवृत्ते(५)स्तुच्छत्वादिति भावः । स्वरूपेण स्वतः(६) । कृतिर्वचनस्य । ज्ञप्तिर्वक्तृत्वस्य(७) । अवसेयम् परिचेयम्(८) । अवसायजनकं निर्विकल्पकं वात्रावसायः(९), तद्विषयं स्वलक्षणम् । स्वलक्षणमपि सविकल्पकविषय इति मते नेदमित्यपि कश्चित् । वन्ध्यासुतस्त्वलीकत्वादसमर्थ इति भावः ।

दीधितिटिप्पणी ।

परिचेयमिति । निर्विकल्पकविषय इत्यर्थः । अवसेयपद एव शक्यसम्बन्धं दर्शयित्वा लक्षणामाह । अवसायेति । इयप्रत्ययार्थमाह । तद्विषय इति(१०) । स्वलक्षणम् पारमार्थिकं वस्तु । अध्यवसेयपदं निरर्थक-

(१) तुच्छत्वातुच्छत्वे—कलि० मु० पु० पा० । (२) न्यापोह—पाठः ।

(३) स्यैवा—कलि० मु० पु० पा० । (४) मवसेयमिति पाठो दीधितिकृत्सम्मतः ।

(५) असामर्थ्ये हेतुमाह । निवृत्तेरिति ।—गुणानन्दः ।

(६) स्वस्य रूपमित्यर्थभ्रमं निराकरोति । स्वत इति । हेतुत्वमित्यस्य हेतुतानिरूपकत्वमित्यर्थः, तथा च परमार्थसन्निष्ठहेतुतायास्तदवच्छेदकं वाच्यम्, न च वन्ध्यासुतः समर्थ इति भावः ।—गुणानन्दः ।

(७) ज्ञप्तिर्वचनस्य—पुण० पु० पा० ।

(८) अवसायपदस्य सविकल्पकपरत्वे परमार्थसतस्तद्विषयत्वासम्भवादसङ्गतेराह । परिचेयमित्यादि । अवसायजनकमिति । कारणे कार्योपचारादिति भावः ।—गुणानन्दः ।

(९) निर्विकल्पकं वा । अत्रावसायः—कलि० मु० पु० पा० । निर्विकल्पकं चात्रावसायः—पुण० पु० पा० ।

(१०) तद्विषयमिति—इति पाठो दीधित्यनुरोधादपेक्षितः ।

हेतुत्वमिति चेन्न। अचैतन्येऽप्यस्य न्यायस्य समानत्वात्। व्यावृत्तिरूपमपि तदेव गमकं यदतस्मादेव, यथा शिंश-

दीधितिः।

अस्य न्यायस्य तुच्छत्वेनासमर्थतया ज्ञप्तिजनकत्वविरहस्य। वक्ष्यते च(१) वन्ध्यासुतादेरप्यसामर्थ्ये प्रमाणाभावः। आशङ्कते। व्यावृत्तीति। सैव व्यावृत्तिस्तद्धर्मावलीढस्य धर्मं साधयति या तद्धर्मशून्यत्वावच्छिन्नाद्व्यावृत्ते(२) तद्धर्मावच्छिन्नाच्चा(३)व्यावृत्ते वर्तते, यथा(४) शिंशपात्वमशिंशपानात्मनि शिंशपात्मनि वर्त्तमानं शिंशपाधर्मं वृक्षत्वम्। अत्रैवकारबललभ्ये

दीधितिटिप्पणी।

मित्यस्वरसः कश्चिन्मते। न च भवन्मते समर्थपदेनैव तद्वारणे तत्पदं निरर्थकमिति वाच्यम्। समर्थ एव क इत्याकाङ्क्षायामेतत्पददानात्। वक्ष्यते चेति। तथा च ममासंमततया कृतिज्ञप्त्योरि(५)त्यादिदूषणमेव नास्तीति भावः। व्यावृत्तिरूपमित्यादि मूलं न सङ्गतम्, प्रकृतेऽसुतत्वनिवृत्तिरूपा(६) व्यावृत्तिरसुतत्वावच्छिन्नाद्यावर्त्तत एव, तस्यैव हेतूकरणात्, वन्ध्या(सुत)प्रदर्शनमपि न सङ्गतम्, तस्याहेतूकरणात्, इत्यत आह। सैवेति(७)। तद्धर्मावच्छिन्नाच्चेति(८) वास्तवमेतद्दलद्वयमस्तीति लिखितम्। वस्तुतः पुनरन्त्यदलस्य वैयर्थ्यमेव, अत एवाह। अत्रैवकारेत्यादि। [लक्षणत्वमिति साधयति। इतीति। तत्र वन्ध्यात्वरूपसाध्यतदभाववन्ध्यावृत्ताकस्य च दर्शयितुमुचितत्वात्। न तु तदुत्तरतदभावव्यावृत्तत्वस्य हेतुत्वमिति भावः। इत्यन्वयि। न चेति। न वेत्यर्थः। तथा च तद्दृष्टान्तेन वक्तृत्व-

(१) सोयं केवलैरेव वचनैरित्याद्यग्रिमग्रन्थे। असामर्थ्ये, तुच्छत्वे।

(२) च्छिन्नाद्व्यावृत्ते–कालि० मु० पु० पा०।

(३) च्छिन्नाद्व्या–कालि० मु० पु० पा०। (४) वर्त्तते, तथा—कालि० मु० पु० पा०।

(५) तथा चासमर्थतया प्रतिज्ञास्ती–इत्यादर्शपुस्तके पाठः।

(६) प्रकृतेऽर्थत अव्युत्पत्तिरूपा-इत्यादर्शपुस्तके पाठः।

(७) इत्यादिदोष इत्येचोति–पा० २ पु०। इत्यादिदोषहनैवामिति—इत्यादर्शपुस्तके पाठः।

(८) तद्धर्मावच्छिन्नोतिमथ—पा० २ पु०। आदर्शपुस्तकेऽप्ययमेव पाठः।

पात्वम्, वन्ध्यासुत(१)स्त्वसुतादिव घटादेः(२) सुतादपि देवदत्तादेर्व्यावर्तते, अतो न हेतुरिति चेत्, नन्वचैतन्य-मेवंरूपमेव(३), न हि वन्ध्यासुतश्चेतनादिव देवदत्ता-

दीधितिः ।

तद्धर्मावलीढमात्रवृत्तित्वे(४) तात्पर्यम् । वन्ध्यासुतस्तु सुतासुतोभयव्यावृत्तोऽतो न तद्वृत्तिरसुतत्वनिवृत्तिः सुतधर्मस्य साधिका(५) । न च यैवासुतमात्रव्यावृत्तमैत्रादिवृत्तिरसुतत्वनिवृत्तिः सैव वन्ध्यासुतेऽपीति वाच्यम् । सदसतोरेकधर्मवत्त्वायोगात् । याऽतन्मात्र(६)व्यावृत्ते(७) पक्षे वर्त्तत इति वार्थः, तथा चा(८)तन्मात्रव्यावृत्तपक्षधर्मतासम्पत्त्यैव व्यावृत्तिर्गमिकेति फलितार्थः । सैव व्यावृत्तिर्गमिका, याऽतस्मादेव विपक्षादेव व्यावर्तते, वन्ध्यासुतस्तु वन्ध्यासुतवृत्तिरसुतत्वनिवृत्तिस्तु, सपक्षविपक्षव्यावृत्तत्वेनासाधारणतया न हेतुरिति तु व्याख्यानम् असुतादिव(९) चेतनादिवे(१०)त्याद्यग्रिमग्रन्थस्वरसाविरुद्धमिव प्र-

दीधितिटिप्पणी ।

साधनं शक्यत इति भावः । ](११) मतान्तरमाह । सैवेति । वन्ध्यासुतस्त्वित्यस्य व्याख्यानमाह । वन्ध्यासुतस्त्विति(१२)[ । श्रुति इती-

(१) वन्ध्यासुत—कलि० मु० पु० पा० । (२) ादिव पटादेः—पुण० पु० पा० ।
(३) नन्विदमचैतन्यमपि अस्यैवंरूपमेव—कलि० मु० पु० पा० ।
(४) लीढवृत्तित्वमात्रे–पुण० पु० पा० ।
(५) कारकत्वभ्रमं निराकरोति । साधिकेति ।—गुणानन्दः ।
(६) या तन्मात्र–कलि० मु० पु० पा० । (७) व्यावृत्त-पुण० पु० पा० ।
(८) तथा च—कलि० मु० पु० पा० ।
(९) असुतादेरिव–कलि० मु० पु० पा० । (१०) चेतनादेरि–कलि० मु० पु० पा० ।
(११) [.] एतच्चिन्हान्तर्गतो ग्रन्थो व्याकुलाक्षरः प्रतिभाति ।
(१२) वन्ध्यासुतवृत्तिरिति–पा० २ पु० ।

देरचेतनादपि(१) काष्ठादेर्न व्यावर्तते।

दीधितिः।

तिभाति(२)॥

दीधितिटिप्पणी।

ति(३)। वन्ध्यात्वरूपसाध्यम् ](४)॥

कल्पलता।

असुतत्वनिवृत्तेरलीकत्वेन वक्तृत्वं साधयितुमयोग्यतया(५)ध्यवसेयमालोचनीयं(६) वस्तुस्वरूपमन्तरेण हेतुत्वं न सम्भवतीत्याशङ्कते। असुतत्वेति। परिहरति। अचैतन्येपीति। व्यावृत्तिरूपतया द्वयोरपि हेत्वोरविशेष(७) इत्यर्थः। अस्य न्यायस्येति। व्यावृत्तिरूपतया तुच्छत्वरूपस्येत्यर्थः। वन्ध्यासुतस्त्विति। वन्ध्यासुतनिष्ठं सुतत्वमित्यर्थः। तेन न पूर्वविरोधः। अतस्मादेव स्वावच्छिन्नप्रतियोगिकान्योन्याभाववत एवेत्यर्थः। यथा शिंशपात्वमिति। शिंशपात्वं हि पनसादेरेव व्यावर्तते, न तु शिंशपातोऽपीत्यर्थः, तथा चातन्मात्रव्यावृत्तिरूपतया(८) शिंशपात्वादिवत् सद्धेतुत्वम्, तदतदुभयव्यावृत्ततया(९)

(१) रचेतनादि—कलि० मु० पु० पा०।

(२) असाधारण्यनिर्वाहायावक्तुरिव वक्तुरिवेत्येव वक्तुमुचितमिति भावः।

(३) श्राति भातीति-पा० २ पु०। (४) [ ] एतचिन्हान्तर्गतो ग्रन्थो व्याकुलाचरः।

(५) योग्यतयासा-पुण० पु० पा०। (६) लोचनीय—कलि० मु० पु० पा०।

(७) द्वयोरपि बुद्ध्योरपि विशेष—पाठः। द्वयोरपि बुद्ध्योरविषय-पा० २ पु०। द्वयोरपि हेत्वोरपि विशेष-कलि० मु० पु० पा०।

(८) तथा च तन्मात्रवृत्तिरूपतया—पाठः। तथा च तन्मते व्यावृत्तिरूपतया—कलि० मु० पु० पा०।

(९) तदुभयव्यावृत्तिरूपतया--कलि० मु० पु० पा०। तदा तदुभयव्यावृत्तरूपतया—पुण० पु० पा०।

कल्पलता ।

ऽतितुच्छत्व(१)मिति ( भावः )। अतस्मादिति विपक्षादेवेत्येके । तथा (च) सपक्षविपक्षोभयव्यावृत्ततयाऽसाधारण्यमिति भावः । परोक्तेपि(२) हेतौ दोषमिम(३)मतिदिशति। नन्विदमिति(४) । न हि वन्ध्यासुत इति । वन्ध्यासुतनिष्ठमचेतनत्वमित्यर्थः । वन्ध्यासुते यदचेतनत्वं वर्त्तते तदेव न(५) काष्ठादौ वस्तुनि, तथा च तुल्यमसाधारण्यमिति भावः(६) ॥

वक्तृत्वं वस्त्वेकनियतो धर्मः स कथमवस्तुनि साध्यो विरोधादिति चेत्, स पुनरयं विरोधः कुतः प्रमाणात् सिद्धः । किं वक्तृत्व(७)विविक्तस्यावस्तुनो

दीधितिः ।

स पुनरित्यादि । वक्तृत्वस्यावस्तुत्वेन समं विरोधो हि अवस्तुत्वाभाववस्तुत्वव्याप्यत्वं, तच्च किमवस्तुनि नियमेन वक्तृत्वाभावोपलम्भात् सिद्धम्, अवस्तुनि वक्तृत्वस्यानुपलम्भमात्राद्वेत्यर्थः । वक्तृत्वविविक्तस्य वक्तृत्वामसंसृष्टस्य, वक्तृत्वशून्य·

दीधितिटिप्पणी ।

अवस्तुत्वाभावेत्यादि । तदभावव्याप्यत्वस्यैव विरोधत्वादिति भावः । सामानाधिकरण्याभावरूपविरोधस्तु नोक्तः, मूलानुरोधात्, वस्त्वेकनियतो धर्म इत्यनेन मूलेन अवस्तुत्वाभावरूपवस्तुत्वव्याप्यत्वहेतुना तद्विशेषधर्म(त्व)स्य दर्शितत्वाच्च। तच्च किमिति। अन्वयव्याप्तिप्रदर्शनं कृतं व्यतिरेकव्याप्त्याऽन्वयव्याप्तिर्गृह्यत इति मते। द्वितीयेऽन्वयव्यतिरेकज्ञानाभावरूपहेतुप्रदर्शनमिति तद्व्याप्तिबोधार्थम् ? । विविक्त(पद)स्यार्थमाह । वक्तृत्वेति । वक्तृत्वं वस्त्वसंसृष्टत्वेपि आका·

(१) ऽतितुच्छ—पा० २ पु० । (२) परोक्ते— पा २ पु० ।
(३) दोष— पा० २ पु० । (४) नान्विति —पा० २ पु० ।
(५) वर्त्तते न तदेव—पुण० पु० पा० । (६) मसाधारण्यमित्यर्थः—पुण० ० पा०
(७) किं वक्तृत्व—कलि० मु० पु० पा० ।

नियमेनोपलम्भात्, आहोस्विद् वस्तुविविक्तस्य वक्तृत्वस्यानुपलम्भादिति। न तावदवस्तु केनापि(१) प्रमाणेनोपलम्भगोचरः, तथात्वे वा नावस्तु। नाप्युत्तरः, समानत्वात्। न हि वक्तृत्वमिव अवक्तृत्वमपि वस्तुविविक्तं कस्यचित् प्रमाणस्य विषयः। तद्विविक्तविकल्पमात्रं तावदस्तीति चेत्, तत्संसृष्टविकल्पनेऽपि को वारयिता।

दीधितिः।

स्येति यावत्। वस्तुविविक्तस्य वस्त्वसंसृष्टस्य, वस्तुभिन्नसंसृष्टस्येति यावत्। समानत्वादिति। यथाऽवस्तुनि वक्तृत्वस्यानुपलम्भेन वस्तुत्वव्याप्यत्वं तद्वदवक्तृत्वस्याप्यवस्तुन्यनुपलम्भेन वस्तुत्वव्याप्यत्वं स्यात्, तथा च अवक्तृत्वमपि विरोधादवस्तुनि न सिद्ध्येदित्यर्थः। मा भूदवस्तुनि वक्तृत्वाभावस्य प्रमाणजन्मा नि(२)र्णयो विकल्पमात्रं तु स्यादिति सिंहावलोकितेन शङ्कते(३)। तद्विविक्तेति। वक्तृत्वविविक्तावस्तुविकल्पन(मात्र)मित्यर्थः। तत्संसृष्टेति। वक्तृत्वसंसृष्टावस्तुविकल्पन इत्यर्थः(४), तथा च विपक्षवृत्तित्वग्रहान्न व्याप्तिबुद्धिरित्यर्थः। अपरे पुनः

दीधितिटिप्पणी।

शादिवत् स्यादतः वस्तुभिन्नेत्यादि। तदेवावस्तुनीत्यादिप्राप्तेः। सिंहावलोकिते(ने)ति। प्रस्तुतं द्वितीयविकल्पप्रतिबन्धिनं(५) विहाय विविक्तस्येत्यादिरूपस्याद्यविकल्पस्यानेन रक्षणादिति भावः। विना(६) सिंहावलोकितन्यायेन व्याख्यातॄणां मतमाह। (अ)परे पुनरि-

(१) केनचित्—पुण० पु० पा०। (२) प्रमाणजननान्नि—कलि० मु० पु० पा०।
(३) वलोकितेनाशङ्कते—पुण० पु० पा०। (४) इत्यर्थ—कलि० मु० पु० पा०।
(५) त्पमतिवादिदुःख—पा० २ पु०।
(६) विपक्षं —इत्यादर्शपुस्तके पाठः। विपक्ष—पा० २ पु०।

दीधितिः ।

सन्निधिमनुरुन्धाना वर्णयन्ति, तद्विविक्तेति । वस्तुविविक्तावक्तृत्वविकल्पनं वन्ध्यासुतो न वक्तेत्येवमाकारमित्यर्थः । तत्संसृष्टेति । वक्तृत्वसंसृष्टावस्तुविकल्पन इत्यर्थ इति ॥

दीधितिटिप्पणी ।

ति । सन्निधिमिति । तथा चैतन्मते न हीत्यादिना तत्समानत्वमापादितम्, तदेव तु तद्विविक्तेत्यादिना उक्तमिति भावः। वक्तृत्वसंसृष्टेति । तथा च समानत्वमापादितमिति भावः । मूले तत्पदद्वयेन विभिन्नयोः परामर्शोऽत्रास्वरसबीजम् ॥

---

कल्पलता ।

स्वरूपासिद्धिं निरस्य बाधमाशङ्क्य साम्यापादनेन निराकरोति । वक्तृत्वमिति । विविक्तस्य शून्यस्य, यदलीकं तन्न वक्तृ इति(१) तावन्न केनचित्प्रमाणेनो(२)पलभ्यते यतो विरोधः स्यादित्यर्थः(३) । आहोस्विदिति । वस्तुत्व(४)शून्ये वक्तृत्वं क्वापि नोपलब्धमित्ययं विरोध इत्यर्थः । ( तदयमर्थः । ) किं वक्तृत्व(५)शून्यस्यालीकस्य नियमेनो(६)पलम्भाद्विरोध उत वस्तुत्व(७)शून्ये वक्तृत्वस्यानुपलम्भाद्विरोध इत्यर्थः(८) । आद्य आह । न तावदिति । द्वितीय आह । समानत्वादिति । अत्रापि प्रमाणापेक्षा(९)या आवश्यकत्वादित्यर्थः । अनुपलम्भस्याप्यभावग्राहकत्वे प्रमाणमेव मूलम्, अनुपलम्भमात्रं(१०) तु के·

---

(१) यदलीकं न वक्तृ तदिति—पुण० पु० पा० । (२) प्रमाणेन नो—पा० २ पु० ।
(३) स्यात्—पुण० पु० पा० । (४) वस्तु—कलि० मु० पु० पा० ।
(५) वक्तृ—कलि० मु० पु० पा० । (६) नियमो—पुण० पु० पा० ।
(७) वस्तु—कलि० मु० पु० पा० । (८) इति—पुण० पु० पा० ।
(९) प्रामाण्यापेक्षा—पुण० पु० पा० । प्रमाणापेक्ष—कलि० मु० पु० पा० ।
(१०) मान—पुण० पु० पा० ।

कल्पलता।

वलमतन्त्रं स्वादृष्टिसर्वा(१)दृष्टिविकल्पकवलितत्वादिति(२) भावः। तद्विविक्तेति। वन्ध्यासुतो न वक्तेति वस्तुविवेकेनावक्तृत्वं गृह्यत एवेत्यर्थः। तत्संसृष्टेति। वन्ध्यासुतो वक्तेति वक्तृत्व(३)संसृष्ट(मप्य)वेदनमप्यसत्ख्यातिरूपं त्वन्मते(४) स्यादेवेत्यर्थः॥

ननु वक्तृत्वं वचनं प्रति कर्तृत्वम्, तत् कथमवस्तुनि, तस्य सर्वसामर्थ्यविरहलक्षणत्वादिति चेत्, अत्र-

दीधितिः।

तत्कथमिति। कर्तृत्वं हि कारित्वविशेषो वा तत्सामर्थ्यं वा, द्वयमपि सर्वसामर्थ्यविरहिण्यवस्तुनि न सम्भवतीत्यर्थः। अवक्तृ(५)-त्वमित्यत्र नञर्थस्य धात्व(६)र्थेनान्वयः, तद्धितार्थेन वा। आद्ये वचनाभावो वचनभिन्नं वाऽर्थः, निषेधविधौ प्राभाकराणां क्रियाविरहवत्(७), अप्रमाणमित्यत्र प्रमाभिन्नज्ञानवद्वा, उभयथापि वचनेतर-

दीधितिटिप्पणी।

सामर्थ्यविरहेऽपि वचनं प्रति कर्तृत्वस्य किमायातमत आह। कर्तृत्वं हीति। अवक्तृत्वपदेन वक्तृत्वाभाव एव बोध्यते, वचनेतरकर्तृत्वं तु कुत इत्यत आह। अवक्तृत्वमित्यत्रेति। नञो धात्वर्थान्वयस्थले धात्वर्थाभावस्य धात्वर्थभेदस्य च वाचकत्वं क्व दृष्टमित्यतो यथासङ्ख्येन दर्शयति। प्राभाकराणामिति। उभयथापीति। वचनाभावपक्षेऽपि वचनाभावस्य वचनेतरत्वादेव तत् प्रतीयत इति भावः। एकस्य कर्तृत्वनिषेधे तदितरस्य कर्तृत्वमवगम्यत इति न्या-

(१) सर्व—कलि० मु० पु० पा०। (२) करम्बितत्वादिति—कलि० मु० पु० पा०।
(३) वक्तृत्वं--पुण० पु० पा०। (४) रूपं तन्मते—कलि० मु० पु० पा०।
(५) अवक्तृ-कलि० मु० पु० पा०। (६) धात्य-कलि० मु० पु० पा०।
(७) न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणाभावविषयकं कार्यमित्यन्वयस्वीकारादिति भावः।

क्तृत्वमपि कथं तत्र, तस्य वचनेतरकर्तृत्वलक्षणत्वादिति(१)। सर्वसामर्थ्यविरहे वचनसाम(२)र्थ्यविरहो न विरुद्ध इति चेत्, अथ सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः प्रमाणात् सिद्धः। अवस्तुत्वादेवेति(३) चेत्, नन्वेतदपि कुतः सिद्धम्। सर्वसामर्थ्यविरहादिति(४) चेत्, सोऽयमितस्ततः केवलैर्वचनैर्निर्धना(५)धमर्णिक इव साधून् भ्रामयन् परस्पराश्रयदोषमपि न पश्यति।

दीधितिः।

कार्यकर्तृत्वं पर्यवस्यतीत्याह। तस्येति। द्वितीयं(६) शङ्कते। सर्वेति। केचित्तु विशेष(७)निषेधस्य शेषा(८)भ्यनुज्ञाफलकतया औत्सर्गिकत्वाद्वचनकर्तृत्वनिषेधेऽनुज्ञातं वचनेतरकर्तृत्वं दूषयति। अवक्तृत्वमपीति। आपवादिकनिषेध(मात्र)परत्वाभिप्रायेण शङ्कते, सर्वेत्यादीत्याहुः। वचनेत्यादि। उपलक्षणमेतत्। वचनकारित्वविरहोपि द्रष्टव्यः। अवस्तुत्वात् काल्पनिकत्वात्, अर्थक्रियाकारित्वशून्यत्वाद्वा॥

दीधितिटिप्पणी।

येन वचनेतरकर्तृत्वं लिखितमिति वादिनां मतमाह। केचित्त्विति। आपवादिकेति। निषेधमात्रविशेषणं तत्। अतोऽपवादस्य बलवत्त्वादिति भावः। वस्तुत्वनिर्वचने सत्वे एव पर्यवसानात् तदभावस्यासिद्ध्याह। अवस्तुत्वादिति। काल्पनिकत्वमपि वस्तुव्यावृत्तं दुर्वचमत आह। अर्थक्रियेति॥

(१) लक्षणत्वात्—पुण० पु० पा०। (२) सामा—कलि० मु० पु० पा०।
(३) अवस्तुत्वादिति—पुण० पु० पा०। (४) विरहादेवेति—पुण० पु० पा०।
(५) सोयं केवलैर्वचनैरितस्ततो निर्धना—पुण० पु० पा०।
(६) द्वितीयं, तद्धितार्थे नञर्थान्वयम्।—गुणानन्दः।
(७) विशेषः, वचनम्।—गुणानन्दः। (८) शेषः, वचनेतरत्।—गुणानन्दः।

कल्पलता।

प्रत्यनुमाने(१) बाध(क)माशङ्कते । नन्विति। पर्युदासपक्षे तवापि तुल्यमिदमित्याह(२)। अवक्तृत्वमपीति। स्वसाध्ये(३) प्रसज्यप्रतिषेधमाशङ्क्याह। सर्वेति(४)। अवक्तृत्वं वचनसामर्थ्या(५)भाव एव मया साध्य(त)इति न विरोध इति भावः। सर्वसामर्थ्यविरहात् वचनसामर्थ्यविरहस्तदा(६) स एव कुतः सिद्ध इत्याह। अथेति। एतदपीति।(७) अवस्तुत्वमपीत्यर्थः। केवलैरिति।(८) अर्थशून्यैरित्यर्थः। परस्पराश्रयेति(९)। अवस्तुत्वात् सामर्थ्यविरहस्तत एव चावस्तुत्वमित्यर्थः(१०)॥

क्रमयौगपद्यविरहादिति चेन्न(११)। तद्विरहासिद्धावपि प्रमाणानुयोगस्यानुवृत्तेः। सुतत्वे च परामृष्य-

दीधितिः।

क्रमादिविरहादवस्तुत्वसिद्धिरित्याशङ्कते। क्रमेति। शङ्कां निरस्यति। नेति। न वा क्रमादिविरहः साधयितुमपि शक्य

दीधितिटिप्पणी।

मूले तद्विरहसिद्धाविति विषयसप्तमी। अविनाभूतपदस्य व्याप्यमात्रवाचकत्वात् न प्रकृते लगतीति बहुव्रीहिणा व्यापकत्वं सङ्ग-

(१) प्रत्यक्षमाने-कलि० मु० पु० पा०। (२) तुल्यमिदमा-कलि० मु० पु० पा०।
(३) मपीति। असाध्ये-पुण० पु० पा०। (४) मासृत्याह-कलि० मु० पु० पा०।
(५) वचनसामान्या—पा० २ पु०।
(६) सर्वसामर्थ्यविरह एव चनसामर्थ्यविरहः—पुण० पु० पा०।
(७) एतदपि—पुण० पु० पा०। (८) केवलैः—पुण० पु० पा०।
(९) परस्परेति—पुण० पु० पा०।
(१०) चावस्तुत्वमिति प्रवसति-कलि० मु० पु० पा०।
(११) दिति। न—पुण० पु० पा०।

माणे तदविनाभूतसकलवक्तृत्वादिधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरहसाधनस्यावकाशः, कुतस्तरां चावस्तुत्वसाधनस्य, कुतस्तमां चावक्तृत्वादिसाधनानाम् ।

दीधितिः ।

इत्याह । सुतत्त्वे चेति । तत्(१) सुतत्त्वमविनाभूतं येन, सुतत्त्वव्यापकमिति(२) यावत् । वक्तृत्वादीत्यादिपदात् सामर्थ्यवस्तुत्वक्रमादीनां परिग्रहः । क्रमादिविरहावस्तुत्वसामर्थ्यविरहावक्तृत्वादीनां पूर्वपूर्वस्यासिद्ध्या तत्साध्योत्तरोत्तरासिद्धिरित्यर्थः ॥

दीधितिटिप्पणी ।

मयति । तदित्यादि । पूर्वपूर्वस्येत्यादि । यदि क्रमादिविरहः सिद्ध्येत् तदा तेनावस्तुत्वं साध्यं यदि चा(वस्तु)त्वं सिद्ध्येत् तदा तेन सामर्थ्यविरहः सिद्ध्येत, इत्यादिक्रमेणेत्यर्थः । अत एव मूले कुतस्तमामित्यादि वक्ष्यति ॥

कल्पलता ।

क्रमेति ।(३) क्रमयौगपद्यविरहात् सामर्थ्यविरहे साध्ये क्वान्योन्याश्रय इत्यर्थः । न तद्विरहेति ।(४) क्रमयौगपद्यविरहात् सर्वसामर्थ्यविरहः ततश्चावस्तुत्व(५)(मवस्तुत्वाच्च) क्रमयौगपद्यविरह इति चक्रकमिति भावः । सुतत्त्वेनैव हेतुना वक्तृत्वं क्रमयौगपद्यं(६) वस्तुत्वं च सर्वमेकवारमेव(७) मया साधनीयमिति त्व(८)त्साधनानामनवसरपराहतत्वमित्याह । सुतत्त्वे चेति(९) ॥

(१) तत्—कलि० मु० पु० नास्ति । (२) व्यापक इति—पुण० पु० पा० ।
(३) क्रमेति ।—इति कलि० मु० पु० नास्ति । (४) न हि—कलि० मु० पु० पा० ।
(५) वस्तुत्वं—पुण० पु० पा० । (६) हेतुना क्रमयौगपद्यं वक्तृत्वं—पा० २ पु० ।
(७) मेकवारेणैव—पुण० पु० पा० । मेकरूपेण—पा० २ पु० ।
(८) मिति त—पा० २ पु० । (९) मित्याह । असुतत्वे चेति—पुण० पु० पा० ।

तस्मात् प्रमाणमेव सीमा व्यवहारनियमस्य, तदतिक्रमे त्वनियम(१) एवेति । न ह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैयात्यं विना प्रश्नः । तत्रापि यद्येकोऽप्रतीतपरामर्षविषय(२) एवोत्तरं ददाति(३) गौर इति; अपरोऽपि किं न दद्यात(४) कृष्ण इति । न चैवं सति काचि(५)दर्थसिद्धिः, प्रमाणाभावविरोधयोरुभयत्रापि तुल्यत्वादिति ।

दीधितिः ।

अस्तु तर्हि विधिनिषेधव्यवहारभाजनत्वमेवासत इत्येतदुपसंहारव्याजेन निरस्यति । तस्मादिति । तथा चाऽसति प्रमाणविरहान्न व्यवहार(६)प्रवृत्तिरिति । वैयात्यम् धार्ष्ट्यम् । ( अप्रतीतेति । ) न प्रतीतः स इति(७)तच्छब्दपरामर्शविषयो येन स तथा(८) ॥

दीधितिटिप्पणी ।

अप्रतीतेति मूलस्य समासपुरस्सरमर्थमाह । न प्रतीत इत्यादि । स इतीति । स किं गौर इत्यत्र सपदरूपतच्छब्देन यत् परामर्शनीयं तस्य न ज्ञानमित्यर्थः ॥

कल्पलता ।

एवं प्रतिबन्दि(९)मुखेन परमतं(१०) दूषयित्वा

( १ ) तदतिक्रमेऽनियम—पुण० पु० पा० ।

( २ ) ऽप्रतीतपरामर्शविषय—कालि० मु० पु० पा० । ऽविदितपरामर्शविषय इति भगीरथसम्मतः पाठः । ( ३ ) ददाति न—कालि० मु० पु० पा० ।( ४ ) दद्यान्न—कालि० मु० पु० पा० ।

( ५ ) कदाचि—पुण० पु० पा० । ( ६ ) प्रमाणविरहान्न-कालि० मु० पु० पा० ।

( ७ ) स इति प्रश्नस्थपदोपदर्शनम् ।-गुणानन्दः ।( ८ ) सः—कालि० मु० पु० पा० ।

( ९ ) प्रतिबन्धि—पा० २ पु० । ( १० ) परमतेन—कालि० मु० पु० पा० ।

कल्पलता ।

स्वमतमुपसंहरति । तस्मादिति । व्यवहाराविषये(१) सर्व(२)विधिनिषेधव्यवहारमर्यादाविलोपमुदाहरणेन दर्शयति । न हीति । वैयात्यम् धाष्टर्यम् ।(३) अव्यवस्थामेव दर्शयति । तत्रापीति । अर्थसिद्धिरिति ( । प्रश्नविषयार्थसिद्धिरित्यर्थः )॥

---

नन्वप्रतीते व्यवहाराभाव इति युक्तम् । कूर्मरोमादयस्तु प्रतीयन्त एव । न ह्येते विकल्पाः कञ्चिदर्थभेदमनुल्लिखन्त एव उत्पद्यन्ते । न च प्रमाणास्पदमेव व्यवहारास्पदमिति । तन्न युक्तम्(४) । तथाहि । शशविषाणमिति ज्ञानमन्यथाख्यातिर्वा स्यात्, असत्ख्यातिर्वा(५) । न तावदाद्यस्ते रोचते, तथा सति (हि) किञ्चिदारोप्यं किञ्चिदारोपविषय इति स्यात्, तथा चारोपविषयस्तत्रैवास्ति आरोपणीयस्त्वन्यत्रेति(६) जितं नैयायिकैः । नापि द्वितीयः, कारणानुपपत्तेः । इन्द्रियस्य

---

दीधितिः ।

व्यवहारे(७) ज्ञानत्वेनैव प्रयोजकत्वं, न तु प्रमात्वेन, गौरवात्, त्वयापि भ्रान्तेस्तथात्वोपगमादित्याशयेनाह । नन्विति । एते

---

( १ ) व्यवहाराविशेषेऽपि—पाठः । व्यवहारविषये—पुण० पु० पा० ।

( २ ) सर्व—२ पु० नास्ति । ( ३ ) वैजात्यम् धर्म्यम् । तत्र—पुण० पु० पा० ।

( ४ ) तत्त्वमुक्तम्—पाठः । ( ५ ) न्यथाख्यातिर्वाऽसत्ख्यातिर्वा—पुण० पु० पा० ।

( ६ ) स्त्वन्यत्रैवेति—कलि० मु० पु० पा० ।

( ७ ) तथा व्यवहार—कलि० मु० पु० पा० । पौनरुक्त्यमाशङ्क्य युक्तिप्रणयनेन तदुद्धरति । इति । एवकारव्यवच्छेद्यं स्पष्टयति । न त्विति ।—गुणानन्दः ।

ज्ञानजनने विषयाधिपत्येनैव व्यापारात्(१), लिङ्ग-शब्दाभासयोरप्य(२)न्यथाख्यातिमात्रजनकत्वात्, अपहस्तितस्वार्थयोश्चासत्ख्यातिजनकत्वे शशविषाणादि(३)-शब्दात् कूर्मरोमादिविकल्पानामप्युत्पत्तिप्रसङ्गात्, नियामकाभावात् ।

दीधितिः ।

शशविषाणं कूर्मरोमेत्या(द्या)काराः । विषयाधिपत्यम् विषयसन्निकर्षः । विभ्रमादौ च ज्ञान(४)मेव तथेति भावः । लिङ्गेति । अलिङ्गमपि लिङ्गतया गृहीतं गृहीतव्यापकभावं तज्जातीयं वा(५) पक्षासंसृष्टमेव पक्षसंसृष्टं बोधयदन्यथाख्यातिमेवोत्पादयेत्, व्याप्तिग्रहानपेक्षणेऽतिप्रसङ्गात् । अनन्वितौ च स्वार्थावन्वितौ बोधयन्तौ शब्दावपि तथैव(६) । स्वार्थतिरस्कारेण शब्दस्य बोधकत्वे पुनराह । अपहस्तितेति ॥

दीधितिटिप्पणी ।

तथात्वम् व्यवहारप्रयोजकत्वम् । (पक्षसंसृष्टं बोधयत्) पक्षसंसृष्टत्वेन बोधयत् । ननु पक्षसंसृष्टमलीकमेव भासतामत आह । व्याप्तीति । यस्य व्याप्तिग्रहस्तदेवानुमितौ भासते, न चालीकस्य व्याप्तिग्रह इति भावः । ननु यदि शशपदेन विषाणपदेन च शशं विषाणं चोपस्थाप्यान्वितोभयं बोध्यत इत्युच्येत, तदैवान्यथाख्यातिराशङ्क्येत, किन्तु शशविषाणपदाभ्यां स्वार्थोपस्थितिं विनैवालीकरूपाखण्डशशशृङ्गं बोध्यत इत्यत आह मूले, अपहस्तितेति । कूर्मेति मूलम्, यथा तेन शक्तिं विनापि शशविषाणं बोध्यते, तथा कूर्मलोमापि बोध्यताम, तुल्यन्यायत्वादिति भावः ॥

(१) व्यापारवत्त्वात्—पुण० पु० पा० । (२) शब्दाभासयोर—कलि० मु० पु० पा० ।
(३) विषाण—पुण० पु० पा० । (४) ज्ञानादिक—कलि० मु० पु० पा० ।
(५) सामान्यलक्षणाप्रत्यासत्तेरनुपगमे त्वाह । तज्जातीयं वेति । व्याप्तिः पक्षधर्मताया अप्युपलक्षणम् ।—गुणानन्दः । (६) तथैव, अन्यथाख्यातिमेवोत्पादयतः ।—गुणानन्दः ।

कल्पलता ।

ननु लाघवाद् ज्ञात एव व्यवहारोस्तु, किं प्रसि-
तत्वपर्यन्तेनेत्याशङ्कते । नन्विति । एत इति । कूर्म-
रोम(१)शशशृङ्गादिगोचरा इत्यर्थः । न चेति । गौर-
वादिति भावः । प्रमाविषयत्वं प्रमाविषयत्वव्याप्यं न
वेत्यसत्ख्यातौ विप्रतिपत्तिः । व्याप्यत्वव्यतिरेको नि-
रधिकरण आकाशादौ प्रसिद्धः, सामानाधिकरण्य(२)-
विशेषस्य(३) व्याप्तित्वात् । यद्वा नित्यद्रव्या(४)विष-
यकमिदं रजतमिति ज्ञानं विशेषणान्याव्यासज्यवृ-
त्ति(५)प्रतियोगिताकात्यन्ताभावाप्रतियोग्यत्यन्ताभा-
व(६)प्रतियोगिमात्रविषयकं न वा(७), स्वातिरिक्त-
प्रमेय(८)विषयं न वेति विप्रतिपत्तिः(९) । जितसि-

---

(१) कूर्मलोम—पा० २ पु० ।
(२) प्रसिद्धः, स्वसामानाधिकरण्य—पुण० पु० पा० ।
(२) नियतसामानाधिकरण्यरूपस्येत्यर्थः । (४) नित्यद्रव्य—पुण० पु० पा० ।
(३) विशेषणान्यव्यासज्यवृत्ति—कलि० मु० पु० पा० ।
(५) प्रतियोगिकात्यन्ताभावात्यन्ताभावा—कलि० मु० पु० पा० । प्रतियोगिवदत्यन्ताभावा-
(६) प्रतियोगिकात्यन्ताभावात्यन्ताभावा—कलि० मु० पु० पा० ।
प्रतियोन्यत्यन्ताभाव—पुण० पु० पा० । (८) प्रमेयातिरिक्त—कलि० मु० पु० पा० ।
(७) मात्रं (?)—कलि० मु० पु० पा० । प्रमाविषयत्वसामानाधिकरण्योप-
(९) प्रथमविप्रतिपत्तौ कालिकादिसम्बन्धेन गगनादेरपि प्रमाविषयत्वसामानाधिकरण्योपनुसरणं बोध्यम् । नि-
गमसम्भवात् निषेधकोट्यप्रसिद्धिर्नैयायिकानां स्यादतो द्वितीयादिविप्रतिपत्त्यनुसरणं बोध्यम् । नि-
त्यद्रव्याविषयकमिदं रजतमिति भ्रमज्ञानं विशेषणान्यकेवलान्वय्यत्यन्ताभावप्रतियोगिमात्रविषयकं न
वेति द्वितीयविप्रतिपत्तिनिष्कर्षः । एवं चाकाशज्ञानेऽप्याकाशत्वादेः केवलान्वय्यत्यन्ताभावाप्रतियोगि-
नो भानान्मात्रविषयकत्वरूपविधिकोट्यप्रसिद्धिवारणार्थं विशेषणान्येति विषयविशेषणं विशेषण-
भिन्नार्थकम् । तथा च सति केवलान्वय्यत्यन्ताभावप्रतियोगिमात्रनिष्ठविशेषणतान्यविषयताकमित्यर्थः
पर्यवस्यति । अत्र सत्रापि कश्चिन्मुख्यविशेष्यतयाभासतामित्यर्थान्तरवारणाय मात्रपदम् । केवलान्वयित्वं
चात्यन्ताभावस्य अव्यासज्यवृत्तिप्रतियोगिताकात्यन्ताभावाप्रतियोगित्वम् । तत्र शुक्त्यतिरिक्तो देशः
भ्रमविषयीभूतरजतत्वाभाववान्, देशत्वात्, शुक्तिवदित्यनुमानमेव प्रमाणम् । अत्र केवलान्वय्य-
त्यन्ताभावप्रतियोगिनोऽपि रजतत्वोर्दगगनादेरिव स्वरूपेण नासत्त्वासिद्धिरित्यस्वरसात् तृतीयविप्रति-
पत्त्यनुधावनम् । तत्र च स्वपदं यत्किञ्चिद्वस्तुपरम्, तदतिरिक्तप्रमेयाविषयकत्वं च नैयायिकमते
तन्मात्रगोचरनिर्विकल्पकादौ प्रसिद्धमिति ध्येयम् ।

कल्पलता ।

ति । प्रमितमेव व्यवहारविषय इतिवादिभिरित्यर्थः । परिशेषेण कारणाभावमेव व्यवस्थापयति । इन्द्रियस्येति । विषयाधिपत्यम् विषयसहकारिता, इन्द्रियार्थ(१)सन्निकर्षजन्यत्वात् प्रत्यक्षस्येत्यर्थः । आरोप्यस्यासन्निकर्षेऽपि(२) क्वचित्सन्निकर्षो वक्तव्य एवेति भावः । ननु प्रत्यक्षाभासाभावेऽपि लिङ्गाभासा(च्छब्दाभासा)द्वा स्यादसत्ख्यातिरित्यत आह । लिङ्गेति । धूलीपटले धूमारोपादसन् वह्नि(३)र्भासेत पर्वते, तत्र धूमस्य धूलीपटलस्य वह्नेश्च(४) प्रमितत्वं क्वचिद्वाच्यमेवेत्यन्यथाख्यातिपर्यवसानमेव । एवं(५) चानाप्तोदीरिताच्छब्दात् पदार्थो वाक्यार्थो वा प्रतीतचर(६) एव भासत इत्यन्यथाख्यातिरेवेत्यर्थः । ननु स्यादेवं यदि व्याप्तिबलात् सङ्केतबलाद्वा भानं भवेन्न त्वेवमित्यत आह । अपहस्तितेति । तिरस्कृतस्वार्थयोरित्यर्थः । लिङ्गस्य स्वार्थो(७) व्यापको वन्ह्यादिः, शब्दस्य चार्थः सङ्केतविषयः, तत्तिरस्कारे नियमो न स्यादिति भावः(८) । शशविषाणशब्दादित्युपलक्षणम्, शशविषाणव्याप्यत्वेन गृहीतादित्यपि द्रष्टव्यम् ॥

---

(१) इन्द्रिय-पुण० पु० पा० । (२) स्यासन्निकर्षोऽपि—कालि० मु० पु० पा० ।

(३) दसद्वान्हि—कालि० मु० पु० पा० । (४) वन्हेः-पुण० पु० पा० ।

(५) पर्यवसानमेवं—कालि० मु० पु० पा० ।

(६) प्रतीत-कालि० मु० पु० पा० । प्रतीतवचन-पा० २ पु० । प्रतीतिचर-पुण० पु० पा० ।

(७) लिङ्गस्य अर्थो—पुण० पु० पा० ।

(८) तथा च शशविषाणमिति पदं विकल्पजनकत्वे सति कूर्मरोमाद्यविषयकविकल्पप्रयोजकरूपवद्यदि न स्यात् तद्विषयकविकल्पोत्पादकं स्यादित्यापादने तात्पर्यम् ।

स हि सङ्केतो वा स्यात्, शब्दस्वाभाव्यं वा। आद्यस्तावत्(१) सङ्केतविषयाप्रतीतेरेव पराहतः। तत एव(२) तत्प्रतीतावितरेतराश्रयत्वम्। पदसङ्केत(३)-बलेनैव प्रतीतौ(४) स्वार्थापरित्यागात्, तथा चानन्विताः पदार्था एवान्विततया परिस्फुरन्तीति विपरीतख्यातिरेवा-(नु)वर्तते। स्वार्थपरित्यागे तु पुनरप्यनियमः, असामयिकार्थप्रत्यायनात्। शब्दस्वाभाव्यात् तु नियमे व्युत्पन्न-वदव्युत्पन्नस्यापि तथाविधविकल्पोदयप्रसङ्गादिति(५)।

---

दीधितिः।

स हीति। सः नियामकः(६)। सङ्केतो वाक्यस्य(७), पदयोर्वा। आद्ये, आद्य इति। वाक्यस्य सङ्केतविषयोऽखण्डः(८) शशविषाणादिः। द्वितीये त्वभिहितैवान्यथाख्यातिरावर्तत इत्याह। पदेति। अथ सतोरेवार्थयोर्दोषवशादसन् संसर्गो(९) लिङ्गशब्दाभासाभ्यां बोध्यत इति चेत्, तत्रासन्निति सत्यम्,

दीधितिटिप्पणी।

तत्रेति। तत्रासन् संसर्गो भासत इति मयाप्युच्यते, सर्वथाऽसन्

---

(१) सङ्केतश्च शशविषाणमितिपदसमुदायस्य वा, प्रत्येकं वा शशविषाणपदयोः। प्रथमे, आद्यस्तावदिति।—भगीरथठक्कुरः। (२) पराहतः। इत एव—पाठः।

(३) नन्वस्तु द्वितीयः, तथाहि, यथा सुभ्रूपदे प्रत्येकगृहीतसङ्केतपदस्यार्थे सङ्केतमुपजीव्य वाक्यार्थे सङ्केतग्रहस्तथा शशविषाणपदेऽपि स्यादित्यत आह। पदसङ्केतेति। पदानां प्रत्येकपदार्थमुपजीव्य संसर्गबोधकत्वमनुपजीव्य वा। आद्येऽन्यथाख्यातिरेवेत्याह। तथा चेति। अन्त्ये प्रत्येकपदार्थानुपजीवनं प्रत्येकपदार्थपरित्यागे सत्येवेति पूर्वोक्तानियमप्रसङ्ग एवेत्याह। स्वार्थेति।—भगीरथठक्कुरः। (४) प्रवृत्तौ—पुण० पु० पा०। (५) प्रसङ्गः—पुण० पु० पा०।

(६) विशेष्यीभूताभावानुकर्षणभ्रमं निराकरोति। नियामक इति।—गुणानन्दः।

(७) अग्रिमानुसारेण विकल्पयति। वाक्यस्येति।—गुणानन्दः।

(८) ऽखण्ड—कलि० मु० पु० पा०। वाक्यस्यापि अन्यथाख्यातिविषयस्य सम्भवादाह। अखण्ड इति।—गुणानन्दः। (९) दसत्संसर्गो—कलि० मु० पु० पा०।

दीधितिः ।

सर्वथैवासन्निति (तु) कुतः ॥

दीधितिटिप्पणी ।

संसर्गः पुनर्न भासताम्, हेत्वभावादित्यर्थः ॥

कल्पलता ।

उपलक्षणविधया(१) शब्दाभासमेव अधिकृत्य(२) विकल्पयति । स हीति । नियामक इत्यर्थः । सङ्केतग्रहः स्वार्थे पदं नियमयेत्, स च नास्तीत्यर्थः । वाक्यार्थनियमोऽपि सङ्केतविषयाप्रतीतेरेव परास्त इति भावः । ननु शशविषाणशब्दादेव गृहीतसङ्केतस्ततो नियतमर्थं प्रतीयादित्यत आह । तत एवेति । नन्वखण्डः(३) शशविषाणपदार्थः कश्चिन्मास्तु, शशविषाणशब्दयो(४)र्गृहीतसङ्केतयोरेव सामर्थ्याद्वाक्यार्थः कश्चिदसन्नेव भासतामित्यत(५) आह । पदसङ्केतेति । एवं च शशसम्बन्धित्वं विषाणांशे समारोप्यत(६) इत्यन्यथाख्यातिरेवेत्यर्थः । ननु पदयोः स्वार्थस्फुरणे स्यादेवं(७), न त्वेतदस्तीत्यत आह । स्वार्थेति । कथमनियम इत्यत आह । असामयिकेति । ननु विषयाप्रतीतेः सङ्केतो मा गृह्यतां, शशविषाणादिपदानामीदृश एव स्वभावभेदो येन नियतार्थप्रतीतिः स्यादित्यत आह । शब्देति(८) । एवं सति सर्वेषां पदानामेवंस्वाभाव्ये सङ्केतग्रहोपयोगो न स्यादेवेत्यर्थः(९)॥

(१) उपलक्षणाविषय-पुण० पु० पा०। (२) शब्दाभासमेव तन्त्रं कृत्वा-कलि० मु० पु० पा०।
(३) ननु खण्डः--पुण० पु० पा०। (४) विषाणपदयो—पुण० पु० पा०।
(५) भासत इत्यत—पा० २ पु०।
(६) शशसम्बन्धित्वं विषाणे विषाणसम्बन्धित्वं वा शशे समारोप्यत—पुण० पु० पा०।
(७) स्वार्थस्फुरणं स्यादेव—कलि० मु० पु० पा०।
(८) शाब्देति—पुण० पु० पा०। (९) न स्यादित्यर्थः—पा० २ पु०।

वासनाविशेषादिति चेत्(१), अथासदुल्लेखिनः प्रत्ययस्य वासनैव कारणम्, उत वासनापि। न तावदाद्यः, शशविषाणादिप्रत्ययानां सदातनत्वप्रसङ्गात्। कदाचित् प्रबोधात् कदाचिदिति चेन्न। प्रबोधोऽपि सहकार्यन्तरं वा, अतिशयपरम्परापरिपाको वा। आद्ये वासनैवेतिपक्षानुपपत्तिः। द्वितीयेऽपि(२) यद्यर्थान्तरप्रत्या-

दीधितिः।

वासनाविशेषवशात्(३), नियत(४)विषयाऽसत्ख्यातिरिति (शेषः)। सदातनत्वेति। वासना(५)सन्तानस्याविच्छिन्नतया शशविषाणादिविकल्पसन्तानोऽप्यविच्छिन्नः स्यादित्यर्थः। (कदाचिदिति।) वासनायाः(६) कदाचित्प्रबोधात् शशविषाणादिप्रत्ययानां कदाचिदुत्पत्तिरिति। अतिशयः तत्त(७)त्कार्यानुकूलः स्वभावविशेषः(८)। यदीति। अर्थान्तरस्य सहकारिणः प्रत्यासत्तेर्यदि परिपाकः, तदा पूर्वस्मिन् प्रत्ययस्य

दीधितिटिप्पणी।

वासनाविशेषादिति मूलस्य पूरणम्, नियतविषयेत्यादि। अर्थान्तरस्येत्यस्य व्याख्या, सहकारिण इति। वितर्के परिपाकप्रवेश इत्यतोऽत्र परिपाक इत्युक्तम्। तथा च प्रत्यासत्तेरित्यस्य वितर्कस्थपरिपाक इत्यनेन सम्बन्धः। पूर्ववदित्यस्य व्याख्या, पूर्वस्मिन्नित्यादि। वितर्कयोराद्यकल्पे सहकार्यन्तर-

---

(१) चेन्न—पुण० पु० पा०। (२) द्वितीये तु—पुण० पु० पा०।

(३) वासनाविशेषादिति मूलमुपस्करोति। वासनाविशेषवशादिति। एवं कदाचिदित्यग्रिममूलेपि। (४) पञ्चम्यर्थान्वयिनं पूरयति। नियतेति।—गुणानन्दः।

(५) स्वतः सदातनत्वासम्भवादाह। वासनेत्यादि।—गुणानन्दः।

(६) कस्य प्रबोध इत्याकाङ्क्षायां पूरयति। वासनाया इति। कदाचिदित्यस्य साकाङ्क्षतया प्रकृतोपपादकं पूरयति। शशेत्यादि।—गुणानन्दः। (७) त—पुण० पु० पा०।

(८) स्वभावविशेषः, कुर्वद्रूपत्ववान्।—गुणानन्दः।

सत्तेः, तदा पूर्ववत् । स्वसन्ततिमात्राधीनत्वे तु बाह्यबादव्याघातः, नीलादिबुद्धीनामपि वासनापरिपाकादेवोत्पादात्(१) । वासनापीति पक्षे (तु) तदन्योऽपि हेतुः कश्चिद्वक्तव्यः(२), स च विचार्यमाणः पूर्वन्यायं नातिवर्तत इति ।

दीधितिः ।

सहकार्यन्तराधीनत्वे यद् दूषणं सहकार्यसम्भवो वक्ष्यते(३) सोऽत्रापीत्यर्थः । केचित्तु परिपाको(४) यदि सहकारिविशेषात्, तदा परिपाक(५)द्वारा अवश्यकत्वात् साक्षादेव वा विकल्पे तस्य कारणत्वाद्वासनैवेतिपक्षानुपपत्तिरित्यर्थ इत्याहुः । पूर्वन्यायम् इन्द्रियादेर्विषयाधिपत्यादिकम् । न चादृष्टविशेष(६) एव सहकारी वक्तव्यः, नीलादिविकल्पानामपि वासनासमुत्थत्वप्रसङ्गात् । वस्तुतस्त्व(७)सत्ख्यातौ(८) प्रमाणसत्त्वे तत्र कारणं कल्पनीयं, तदेव तु नास्ति, प्रमाणेनासदंशस्यानुल्लेख-

दीधितिटिप्पणी ।

स्याभिधानात् पूर्वत्वम् । अतिशयपरम्परेत्यादेरपि सहकार्यन्तरपरत्वे प्रबोधोपि सहकार्यन्तरमित्यादिमूले कल्पद्वयासङ्गतिः, आद्यकल्प एवान्तर्भावादित्यस्वरसः केचिदित्यनेन सूचितः । नीलादीति । अदृष्टविशेषसहकारेण वासनयैवालीकज्ञानादिवत् नीलादिज्ञानं जन्यत इत्यनेन रूपेण सम्भवे नीलादिकं न सिद्ध्येदिति भावः ।

(१) परिपाकादेरेवोत्पादात्—पाठः ।

(२) तदन्योपि कश्चिद्धेतुर्वक्तव्यः—पुण० पु० पा० ।

(३) स च विचार्यमाण इत्याद्युत्तरग्रन्थ इति भावः ।

(४) परीपाको—पुण० पु० पा० । (५) परीपाक—पुण० पु० पा० ।

(६) न वादृष्टविशेष एव—कलि० मु० पु० पा० ।

(७) नन्वन्यथाख्यातौ या सामग्री भवद्भिरिष्यते सैवासत्ख्यातौ मया वाच्येत्याशङ्क्य मूलयुक्तिमाह । वस्तुत इति ।—गुणानन्दः । (८) ख्याति—कलि० मु० पु० पा० ।

दीधितिः ।

ऽसत्ख्यातित्वासिद्धिः, उल्लेखे तु प्रमाणस्याप्रमाणताया(१) असतो वा सत्त्वस्य प्रसङ्गादिति ॥

दीधितिटिप्पणी ।

उल्लेखे त्विति । असद्विषयकं यदि तदा कथं प्रमाणम्, (प्रामाणिकं यदि) तदा कथमसत्त्वमर्थस्य, प्रमाणविषयत्वेन तस्य सत्त्वमेव स्यादित्यर्थः ॥

कल्पलता ।

वासनाविशेषादित्यनन्तरं नियमः स्यादिति शेषः । सदातनत्वप्रसङ्गादिति । अपेक्षणीयान्तराभावादिति भावः । कदाचिदिति । प्रबोधनाद्वासनाया इत्यर्थः(२) । शशविषाणादिप्रत्यया इति विपरिणामेनानुषङ्गः । अतिशयेति । अतिशयो वासना, तत्परम्परायाः(३) (स्व) कश्चिन् परिपाको येन शशविषाणादिप्रत्ययोत्पत्तिरित्यर्थः । परिपाको(पि) वासनाया यद्यर्थान्तरप्रत्यासत्त्यधीनस्तदा वासनैवेति-पक्षानुपपत्तिरेवेत्याह । यद्यर्थान्तरेति(४) । ननु स्वसन्ततिमात्राधीन एव तत्परिपाको न तु तत्रापि सहकार्यन्तरापेक्षेत्यत आह(५) । (स्व)सन्ततीति । एवं सति नीलादिविकल्प(६)कादाचित्कत्वमपि वासनापरि(७)पाकादेव स्यादित्यर्थः, नीलादिविकल्पकादाचित्कत्वेन त्वया नीलादीनि बाह्यानि

(१) अप्रमाणताया इति । असद्विषयकत्वादिति भावः । सत्त्वस्येति । प्रमाणविषयत्वस्यैव तत्त्वादिति भावः । असदंशेऽप्रमाणत्वेऽपि ख्यातिविषयत्वांशे प्रामाण्योपगमे नोक्तदोष इति चेत्, तत्र तस्यासत्त्वे प्रमाणाभावे तात्पर्यात् ।—गुणानन्दः ।

(२) कदाचिदिति ।—कालि० मु० पु० पा० । (३) वासनापरम्परायाः—पा० २ पु० ।

(४) यद्यर्थान्तरामिति—पुण० पु० पा० । (५) त्यर्थः—पुण० पु० पा० ।

(६) विकल्पः—कलि० मु० पु० पा० । (७) वासनापरी—कालि० मु० पु० पा० ।

कल्पलता।

स्वीक्रियन्ते, तच्च कादाचित्कत्वं यदि वासनामात्राधीनमेव(१), तदा गतं बाह्यनीलादिस्वीकारव्यसनेनेति भावः। पूर्वन्यायामिति। प्रत्यक्षलिङ्गशब्दाभासानां तत्र निराकृतत्वात् सहकार्यन्तराभावादित्यर्थः॥

न च शशविषाणादिशब्दानामसदर्थैः(२) सह सम्बन्धावगमोऽपि। तथाहि। परबुद्धीनामनुल्लेखात् तद्विषय-

दीधितिः।

असतो भानासम्भवेन तत्र व्युत्पत्तिविरहं व्युत्पाद्य सत्यपि तद्भाने(३) तं(४) व्युत्पादयति। न चेति। परबुद्ध्यादिविषयत्वेनोपस्थिते अलीके शक्तिग्रहः, प्रकारान्तरेण वा। आद्येऽपि विशिष्यो(५)पस्थिते, सामान्यतो वा। प्रथमे, परेति। अमुमर्थमभिसन्धाय वक्तैनं(६) शब्दं प्रयुक्तवान्, श्रोता वा अस्माच्छब्दादमुमर्थं प्रतीतवानित्यादिनिश्चये (हि) सति सङ्केतो ग्राह्यः, स च न सम्भवति, परबुद्ध्यादीनामनुल्लेखात् प्रत्यक्षे-

दीधितिटिप्पणी।

व्युत्पत्तिः सङ्केतग्रहः। मूले, सम्बन्धावगमः शक्तिरूपसम्बन्धावगमः। सत्यपीति। तिष्ठत्यपीत्यर्थः, अभ्युपगमवादेन तद्भानाङ्गीकारेपीत्यर्थः। परेति। परोऽत्र प्रयोज्यप्रयोजकवृद्धादिः। अथ परबुद्धेर्ज्ञानमेवोपयुक्तम्, तदुल्लेखस्य तु न किमपीत्यतोऽनुल्लेखपदार्थमाह। प्रत्यक्षेणेति। विषयस्याप्यनुल्लेख एवेति मूलं पूरयित्वा व्या-

(१) वासनामात्राधीनं—पुण० पु० पा०। (२) मसमर्थैः—पुण० पु० पा०।

(३) सत्यपि भाने—पुण० पु० पा०। सत्यपि तद्भाने, असद्भानसत्त्वेऽपि।—गुणानन्दः।

(४) तद्विरहं—पुण० पु० पा०।

(५) परबुद्धीनां सामान्यत उल्लेखसम्भवात् अग्रिमदोषासङ्गतेर्विकल्पयति। विशिष्येति। तत्तद्व्यक्तित्वादिनेत्यर्थः।—गुणानन्दः। (६) वक्तैवं—कालि० मु० पु० पा०।

स्या(१)प्यनुल्लेख एव । न चार्थक्रियाविशेषोऽप्यस्ति, यतो विषयविशेषमुन्नीय तत्र सङ्केतो गृह्यताम् । न च सङ्केतयितुरेव वचनात् तदवगतिः(२), तद्विषयाणां सर्वेषां वचनाना(३)मप्रतीतविषयत्वेनागृहीतसमयतया अप्रतिपादकत्वात् ।

दीधितिः ।

तद्विषयस्यापि यतोऽनुल्लेखो विशिष्यानिर्णय इत्यर्थः(५) । अथायमहं गां बध्नामीत्यभिधाय परकीयं वा गां बधानेति वाक्यमाकर्ण्य(६) गां बध्नतो व्यवहारविशेषात् तदीयबुद्ध्यादिविषयविशेषं निर्णीय तत्र गोपदस्य सङ्केतग्रह इव (वा) शशविषाणादिपदस्यापि स्यात्, तत्राह । न चेति । उन्नीय परबुद्ध्यादि(७)विषयतया (बुद्धेरित्यर्थः) । सङ्केतयितुः सङ्केत(८)ग्राहयितुः वक्तुः श्रोतुर्वा, वचनात् इममर्थमभिसन्धाय मयेदं पदं प्रयुक्तं, अस्माच्छब्दादयमर्थो मयाऽवगत इत्याद्याकारात् ॥

दीधितिटिप्पणी ।

णा(४)ग्रहणात् तद्विषयस्यापीति । परकीयमिति वाक्यविशेषणम् । श्रोतुः कथं वचनमत आह । अस्मादिति ॥

(१) ल्लेखात् विषयस्या—पुण० पु० पा० ।
(२) तदवगमः—पाठः ।
(३) तद्विषयाणां वचनानां सर्वेषा—पुण० पु० पा० ।
(४) प्रत्यक्षेणेति । तस्यैव तत्तद्व्यक्तित्वादिना तज्ज्ञाने सामर्थ्यावधारणादिति भावः । विशिष्य, तत्तद्व्यक्तित्वेन ।—गुणानन्दः ।
(५) विशिष्यानिर्णयः—पुण० पु० पा० ।
(६) माकलय्य—कलि० मु० पु० पा० ।
(७) परबुद्ध्यादीति । आदिपदाद्व्यवहारविषयत्वादिपरिग्रहः ।—गुणानन्दः ।
(८) सङ्केतं कलि० मु० पु० पा० ।

कल्पलता ।

निराकृतमप्यर्थं विशिष्य निराकरणार्थमाह । न चेति । ननु शशविषाणादिपदप्रयोक्तुरवश्यं तद्विषय(१)ज्ञानमस्ति, अन्यथा प्रयोगानुपपत्तेरिति श्रोतुस्तत्र सङ्केतधीः स्यादित्यत आह । परेति । तद्बुद्धेः परोक्षतया तद्विषयस्य विशिष्यानवगमादित्यर्थः । ननु प्रयोजकवृद्धोदीरितात् ( तु ) शशविषाणादिशब्दात् प्रयोज्यवृद्धस्य व्यवहारं दृष्ट्वा तटस्थस्य व्युत्पत्तिः स्यादत आह । न चेति । अर्थक्रिया नयनानयनादिरूपा । ननु यथा कम्बुग्रीवावानर्थो(२) घटपदवाच्य इति यथा सङ्केतग्रह(३)स्तथात्रापि(४) स्यादित्यत आह । न चेति । येन पदकदम्बेन सोऽर्थ(५) उपनेतव्यः सोऽप्यपरिचितार्थ एवेत्यर्थः ॥

---

न च शशविषाणशब्द(६)मुच्चारयतः कश्चिदभिप्रायो

---

दीधितिः ।

द्वितीय(७)माशङ्क्य निराकरोति । न चेति । कश्चित् किञ्चिदर्थगोचरः, अभिप्रायो विकल्पो वा(८) वक्तुः श्रोतुर्वा(९)

दीधितिटिप्पणी ।

द्वितीयम् सामान्यत इति विकल्पम् । सामान्यताबोधनाय न्यूनताभङ्गाय कश्चिदित्यनन्तरं पूरणेनाह । कश्चित् किञ्चिदित्यादि । सामा-

---

( १ ) तद्विषयक—पा० २ पु० । ( २ ) कम्बुग्रीवावादिमान्—पुण० पु० पा० ।
( ३ ) इति सङ्केतग्रह—पा० २ पु० । ( ४ ) तथात्रापि न—पुण० पु० पा० ।
( ५ ) पदकदम्बेन योऽर्थ–कलि० मु० पु० पा० ।
( ६ ) शशविषाण—कलि० मु० पु० पा० ।
( ७ ) द्वितीयम्, सामान्यतः परबुद्धिविषयत्वेन प्रतीत इति मतम् ।—गुणानन्दः ।
( ८ ) विकल्पो—कलि० मु० पु० पा० । परबुद्धिविषयत्वस्य प्रागभिहितत्वादाह । विकल्पो वेति ।—गुणानन्दः । ( ९ ) न्यूनत्वमुद्धरति । श्रोतुर्वेति ।—गुणानन्दः ।

वृत्त इति(१) तद्विषयोऽस्य वाच्य इति सुग्रहः स-मय इति वाच्यम्। न ह्येवमाकारः समयग्रहः, गां बधा-नेत्युक्ते अप्रतीतशब्दार्थस्या(प्य)भिप्रायमात्रप्रतीतौ सम-यग्रहप्रसङ्गात् । न च विशेषान्तरविनाकृतः कल्पना-मात्रविषयो(ऽस्य) वाच्य इति साम्प्रतम्, घटकूर्मरोमा-दीनामपि तदर्थत्वप्रसङ्गात् ।

दीधितिः।

अनुमोदनादिभाजः अस्माच्छब्दात्किञ्चिदर्थप्रत्ययो वृत्त इति समयग्रहोऽर्थप्रत्ययाद्यु(२)पयोगी, अभिप्रायमात्रादि(३)प्रती-तौ अर्थप्रत्यया(४)द्युपयुक्तसमयग्रहप्रसङ्गात् । प्रकारान्तरेण वे-त्या(५)शङ्कां निराकरोति । न चेति । वाच्य इति वाक्या-त्सङ्केतग्रह इति(६) साम्प्रतम् युक्तमित्यर्थः । परेषा(७)म-वयविमात्रस्यालीकत्वात् घटेत्युक्तम् ॥

दीधितिटिप्पणी।

स्यतः सङ्केतप्रत्ययो भवतीत्यर्थः । पूरणमाह । अर्थप्रत्ययादीति । कल्पनाविषयोऽस्य वाच्य इत्यतः किमायातं प्रस्तुतस्य सङ्केतग्रहस्य, अतः पूरयति । वाच्य इतीति ॥

कल्पलता।

ननु शशविषाणादिपदमुच्चारयितुर्यत्र तात्पर्यं

(१) वृत्तः—पुण० पु० पा० । तादृशाभिप्रायविषयत्वादिना समयग्रहसम्भवा-

(२) ऽर्थप्रत्ययो—कलि० मु० पु० पा० । गोत्वादिप्रकारकार्थप्रत्ययेत्यर्थः ।—गुणानन्दः ।

दाह । अर्थप्रत्ययेति । गोत्वादिप्रकारकार्थप्रत्ययेत्यर्थः । अभिप्रायमात्रादीति ।—गुणानन्दः ।

(३) आदिपूरणेन विकल्पमुपगृह्य समुदायार्थं निष्कृष्याह । (५) प्रकारान्तरेण वाऽलीके शक्तिग्रह इति मतमित्यर्थः ।

(४) प्रतीत्या—पुण० पु० पा० । वाक्यात्सङ्केतग्रह इतीति ।—गुणानन्दः ।

(६) निराकाङ्क्षप्रतिपत्तये पूरयति । परेषामिति ।—गुणानन्दः ।

(७) घटस्य परमाणुपुञ्जमात्रस्य पारमार्थिकत्वादाह ।

कल्पलता।

तदेव तदर्थं(१) इति सङ्केतग्रहः स्यादित्यत आह। न च शशविषाणेति। परबुद्धीनामित्यत्र ज्ञानविषयतया शङ्कितमिह(२) तु तात्पर्यविषयतयेत्यपौनरुक्त्यम्। न ह्येवमाकारः समयग्रहः, शाब्दव्यवहारोपयोगीति शेषः। अत्र हेतुमाह। गां बधानेत्युक्त इति। ननु शशविषाणादिशब्दानां विशेषविनाकृतो निरुपाख्योऽर्थो वाच्य इति सर्वैरेव प्रतीयते, तथा च कथमत्र सङ्केतो दुर्ग्रह(३) इत्याह(४)। न च विशेषेति। घटकूर्मरोमादीनामिति। घटरोमकूर्मरोमादीनामित्यर्थः। ✻(५)यद्वा यन्मते(६) घटस्यापि काल्पनिकत्वं तन्मतमाश्रित्योक्तम्॥

न च सर्वे प्रतिपत्तारः स्वस्ववासनयाऽसदर्थश-

दीधितिः।

स्वस्वे(७)त्यादेः कतरोऽर्थः, किमसतोऽर्थानिव वासनावशादेव तैः(८) समं तत्तच्छब्दानां सङ्केतं प्रतिपद्यन्ते, किं वा वासनोपनीतेषु तेषु(९) स्वकृतं तत्तच्छब्दसङ्केतं प्रतिपद्य-

दीधितिटिप्पणी।

न्यूनताभङ्गायाह। असत इति अर्थानित्यस्य विशेषणम्।

(१) तदर्थं-कलि० मु० पु० पा०। (२) शङ्कितमिदं-कलि० मु० पु० पा०।

(३) सङ्केतग्रहो दुःशक-कलि० मु० पु० पा०। (४) [illegible]-कलि० मु० पु० पा०।

(५) इत आरभ्य अग्रिमचिह्नपर्यन्तं कल्पलताग्रन्थो [illegible] नास्ति।

(६) यद्वा तन्मते-पुण० पु० पा०।

(७) स च-कलि० मु० पु० पा०। वासना [illegible] विषयः सङ्केतः सङ्केतविषयो वा। आद्ये मूलोक्त[illegible] दोषं सङ्क्रमयति। स्वस्वेत्यादि।--गुणानन्दः। (८) [illegible]।--गुणानन्दः।

(९) तेषु, असदर्थेषु। नियामकान्तर[illegible] [illegible] कृतमिति भविष्यतीति भावः।--गुणानन्दः।

वद्सम्बन्ध(१)प्रतिपत्तिभाज इति साम्प्रतम्, परस्पर-वार्तानभिज्ञतया अपरार्थत्वप्रसङ्गात् । न हि स्वयं कृतं समय(२)मग्राहयित्वा परो व्यवहारयितुं शक्यते । न च व्यवहारोपदेशावन्तरेण ग्राहयितुमपि । न च गां व-धानेतिवत् शशविषाणपदार्थे व्यवहारः, न चायमसा-वश्व इतिवदुपदेशः, न च यथा गौस्तथा गवय इति-वदुपलक्षणातिदेशः, न चेह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीतिवत् प्रसिद्धपदसामानाधिकरण्यम् ।

दीधितिः ।

न्त इति । नाद्यः, शशादिप्रत्येकपदार्थाव्युत्पन्नस्य शशविषाणा-दिशब्दादर्थप्रत्ययप्रसङ्गात् । द्वितीये त्वाह । परस्परेति । स्वस्व-कृतसङ्केतस्यान्योन्यमज्ञानेन, परार्थत्वम् परार्थबोधोपयोगित्वम्, न स्यादित्यर्थः । तर्हि ग्राह्यतां परोऽपि सङ्केतमत आह । न चेति । उपदेशः प्रवृत्तिनिमित्त(३)विशिष्टे वाच्यताबोधकं वाक्यम्, यथा पिकः कोकिलः, अयमसावश्व इत्यादि । परम्परया(४) सङ्केतग्राहकवाक्यस्याप्युपलक्षकमिदम् । प्रवृत्तिनिमित्तोपलक्षण(५) सामानाधिकरण्येन(६) वाच्यताबोधकमुपलक्षणातिदेशः ॥

दीधितिटिप्पणी ।

शशादीति । उक्तकारणस्य तदानीमपि सत्त्वादित्यर्थः । परम्परया शक्ति-ग्राहकस्य उपलक्षणातिदेशस्यात्रानुट्टङ्कने पश्चाद्दर्शनप्रसङ्गमत आह । परम्परेत्यादि । प्रवृत्तीति । प्रवृत्तिनिमित्तोपलक्षणं सादृश्यादि ॥

(१) सङ्केत—पाठः । (२) स्वयङ्कृतसङ्केत—पुस्त० पु० पा० ।

(३) कल्पनाविषयत्वादिना उपदेशस्य सम्भवादाह । प्रवृत्तिनिमित्तेति ।—गुणानन्दः ।

(४) अतिदेशवाक्यादेरपि परम्परया शक्तिग्राहकत्वात्तदनुक्तौ न्यूनत्वमाशङ्क्याह । परम्परयेति । अत एव न च यथेत्यादिना तयोरपि निरासो भविष्यतीति भावः ।—गुणानन्दः ।

(५) प्रवृत्तिनिमित्तोपलक्षक—पाठः ।

(६) प्रवृत्तिनिमित्तम्, गवयत्वम् । तदुपलक्षणम्, गोसादृश्यम् । तत्सामानाधिकरण्येनेत्यर्थः ।—गुणानन्दः ।

कल्पलता।

ननु वासनयैवोपस्थितेऽर्थे श्रोतुः सङ्केतग्रहः स्यादि(१)त्यत आह। न चेति। वक्तृश्रोत्रोः समानसङ्केताज्ञानात् परार्थे तत्प्रयोगो न स्यादित्यर्थः।*(२) अन्यथा घटाभिप्रायेण पटपदमपि प्रयुञ्जीतेति भावः। ननु स्वयमेव क्वचिदर्थे सङ्केतं परिकल्प्य शशविषाणादिपदप्रयोगः स्यादित्यत आह। न हीति। स्वयं सङ्केतकल्पनेऽपि परस्य तदज्ञानात् परार्थे प्रयोगानुपपत्तेरित्यर्थः। हिशब्दश्चार्थे शङ्कान्तरसमुच्चयार्थः। तर्हि तदर्थे श्रोतापि व्युत्पाद्यताम्, तथा च तदर्थे प्रयोगः स्यादत(३) आह। न च व्यवहारेति। तर्हि व्यवहारादेव परो व्युत्पाद्यतामत उक्तं प्रपञ्चयति। न च गामिति। तदर्थे नयनादिव्यवहाराभावादित्यर्थः(४)। तर्ह्युपदेशादेव व्युत्पाद्यतां पर इत्यत आह। न चायमिति। तद्गोचरशब्दानाम(प्य)गृहीतसमयत्वादित्यर्थः। ननु साक्षादुपदेशासम्भवेऽप्युपमानमनुमानं (वा) द्वारीकृत्योपदेशः स्यादत आद्यमाशङ्क्य निराकरोति। न च यथेति। प्रवृत्तिनिमित्तस्य गवयत्वस्योपलक्षणं गोसादृश्यं, तदतिदेशस्तत्कथनमित्यर्थः। अनुमानमाशङ्क्य निराकरोति। न चेहेति(५)। अयं प्राणी मधुकरशब्दवाच्यः, प्रभिन्नकमलोदरे(६) मधुपानकर्तृत्वात्, यन्नैवं तन्नैवं यथा घट इत्यर्थः, शशविषाणा-

(१) स्वकीयमानसप्रत्यक्षविषयेऽलीके सङ्केतग्रहः स्यादित्यर्थः।

(२) एतच्चिह्नपर्यन्तं पूर्वचिह्नादारभ्य ग्रन्थो २ पु० नास्ति। शशविषाणपदं यद्यन्यसाधारणसङ्केतवत्तया ज्ञानविषयो न स्यात् परार्थप्रयोगविषयो न स्यादित्यर्थः।

(३) स्यादित्यत—पुण० पु० पा०। (४) व्यवहितसमयत्वादित्यर्थः—पुण० पु० पा०।

(५) ति। यथेहेति—पुण० पु० पा०। (६) प्रतिकमलोदर—पुण० पु० पा०।

कल्पलता ।

दिपदार्थस्य मधुपानादिवदसाधारणार्थक्रिया(१)विरहादिति भावः(२) ॥

---

तदमूः शशविषाणादिकल्पनाः(३) नासत्ख्यातिरूपाः, तथात्वे कारणाभावात्, मूकस्वप्नवदसां(४)व्यावहारिकत्वप्रसङ्गाच्च । तस्मादन्यथाख्यातिरूपा एवेति नैतदनुरोधेना(५)प्यवस्तुनो निषेधव्यवहारगोचरत्वमिति ।

---

दीधितिः ।

उपसंहरति । तदमूरिति । नैतदित्यादि । अपिर्भिन्नक्रमे । शशविषाणादिविकल्पानां विनाऽसत्ख्यातिं दुरुपपादतया तदनुरोधेनोपेत(त)या तया अवस्तुनि धर्मान्तराभावग्रहात् तस्यापि(६) निषेधव्यवहारगोचरत्वमिति नेत्यर्थः, शशविषाणे घटत्वादिकं नास्तीति विकल्पानामसत्ख्यातौ कारणाभावेनान्यथाख्यातित्वध्रौव्यात् । वस्तुन एव निषेधव्यवहारगोचरत्वम्, नावस्तुनः(७), अपिः प्रमाणान्तराभाव(८)समुच्चयायेत्यप्याहुः ॥

दीधितिटिप्पणी ।

भिन्नक्रम इति । यथाश्रुतप्रक्रमातिरिक्तप्रक्रम इत्यर्थः । अवस्तुनो निषेधव्यवहारगोचरत्वं न प्रकृतम्, किन्तु अवस्तुनि इतरस्य निषेधव्यवहार इति तथैव भिन्नक्रमं दर्शयन्नाह । शशविषाणेति । तया असत्ख्यात्या । अपिरिति । न केवलं शशविषाणे घटत्वं नास्तीति

---

(१) दसाधारणक्रिया—कलि० मु० पु० पा० । (२) विरहादित्यर्थः—पाठः ।

(३) कल्पाः—कलि० मु० पु० पा० ।

(४) मूकस्वप्नवदासां—कलि० मु० पु० पा० । (५) न तदनुरोधेना—पाठः ।

(६) तस्यापीत्यत्रापिना सतः समुच्चयः । स च दृष्टान्तार्थः ।—गुणानन्दः ।

(७) एवकारव्यवच्छेद्यं स्पष्टयति । नावस्तुन इति ।—गुणानन्दः ।

(८) प्रमाणान्तराभावे--कलि० मु० पु० पा० । प्रमाणान्तराभावः, असतो निषेधव्यवहारगोचरत्वे ।—गुणानन्दः ।

दीधितिटिप्पणी ।

विकल्परूपैतत्प्रमाणानुरोधेनावस्तुनो निषेधव्यवहारे गोचरत्वाभावः, अपि तु प्रमाणान्तराभावानुरोधेनापि तत्त्वाभावः, तादृशप्रमाणस्यैवाभावादित्यर्थः । अत्रेदं बोध्यम् । प्रमाणान्तरसमुच्चयायेत्येव लिखितुं योग्यम्, अत्र हि एतदनुरोधेन यन्निषेधव्यवहारगोचरत्वं तन्नास्तीत्यर्थः, एवं च तद्वत् प्रमाणान्तराभावानुरोधेन यन्निषेधव्यवहारगोचरत्वं तदप्यत्र नास्तीत्युक्तेऽसङ्गतम्, निषेधव्यवहारस्य प्रमाणान्तराभावानुरोधाजन्यत्वात् । न चाभावाद्वावपि तृतीयार्थसम्बन्धः प्रकृत एतदनुरोधस्य तादृग्व्यवहारगोचरत्वान्वयित्वात् । तस्मादत्र नैतदनुरोधेनापीत्यनेन प्रमाणाभाव उक्तः, अत एव प्रमाणान्तराभावेति लिखितम्, प्रमाणाभावश्चात्रासत्ख्यातौ कारणाभावरूप एव, एवं च तृतीयार्थसम्बन्धोऽभावादिनैव बोध्यः ॥

कल्पलता ।

प्रकृतमुपसंहरति । तदमूरिति । न च सर्वे प्रतिपत्तारः स्वस्ववासनयेत्यादौ दूषणमुक्तं सिंहावलोकितन्या(१)येन प्रकारान्तरेण स्मारयति । मूकेति । ( स्वप्नेति । ) असत्ख्यातिरूपताव्यतिरेकमुपसंहृत्यान्यथाख्यातिरूपतामुपसंहरति । तस्मादिति । तदनुरोधेनापीति । शशविषाणादिप्रत्ययानुरोधेनापी(२)त्यर्थः ॥

भवतु वाऽसत्ख्यातिः, तथापि न ततो व्यतिरेकः

दीधितिः ।

न ततः तस्मिन्नसति(३), क्रमयौगपद्ययोः सत्त्वस्य च

दीधितिटिप्पणी ।

कुत्र कस्य व्यतिरेक इत्यतः पूरणं कृत्वा पङ्क्तिलिखनमाह । तस्मिन्नसतीति । असति अलीके । व्यतिरेकशब्देन तादृशसहचारो-

( १ ) सिंहावलोकितन्या—कालि० मु० पु० पा० । ( २ ) नुरोधेने—पा० २ पु० ।
( ३ ) तत्रेतिसतम्यन्तात्तसिलमनुरुध्याह । तस्मिन्निति ।—गुणानन्दः ।

प्रामाणिकः । तथाहि । कोऽयं व्यतिरेको नाम । यद्यतो व्यतिरिच्यते तस्य तत्राभावो वा, तदभावस्त्वभावत्वं वा ।

दीधितिः ।

व्यतिरेकः विरहः । यतः (अधिकरणात्), व्यतिरिच्यते व्यावर्त्यते(१), यद्वृत्तीति यावत् । यत् अधिकरणम्, यतः यद्धर्मवतः, व्यतिरिच्यते भिद्यते, तत्र तस्य धर्मस्येत्यन्ये(२) । केवलमधिकरणमभाव इति मतेनाह । तदभावेति । तस्याधिकरणस्य(३) ॥

दीधितिटिप्पणी ।

व्युच्यत इत्यत आह । विरह इति । यत इति मूले पूर्वोपष्टम्भकम्, न तूत्तरपदार्थेन(४) समं तस्य सम्बन्धः, तथा च स व्यतिरेकः कोऽयं नामेति सम्बन्धेनैव मूलमवतरतीति ध्येयम्।(?) उत्तरतत्पदसम्बन्धितया विकल्प्य पुन(?)र्व्याचष्टे। यत इति। आत्माश्रयदोषादाह। यद्वृत्तीति। अग्रस्थयत्पदस्याधिकरणपरत्वे तद्वाचकतत्पदमप्यग्र एव युज्यत इत्यतस्तथैवान्वयं दर्शयति। तत्र तस्य धर्मस्येति। तत्र अधिकरणे। यत्पदं यद्धर्मपरम्, व्यतिरेकपदे च भेदलक्षणेत्यत्रास्वरसोऽन्य इत्यनेन सूचितः। तद्भावेत्यत्रैकस्यैव तत्पदस्य विद्यमानत्वादधिकरणवाचकतत्पदं पूरयित्वा पाठवारणं दर्शयति। तस्याधिकरणस्येत्यादि। न चैतत्पूर्वस्थतस्येत्यनुषङ्गेणैव सामञ्जस्ये किमनेनेति वाच्यम्। तस्य तत्र प्रतियोगिवाचकत्वात्, अत्र त्वधिकरणवाचकत्वं तस्य विरुद्धम्। न चात्रापि तस्य प्रतियोगिवाचकत्वमस्तु, तत्पदस्य चाधिकरणवाचकत्वमस्त्विति वाच्यम्।

(१) व्यावर्त्तते—कलि० मु० पु० पा०। पञ्चम्यन्तानुरोधादाह। व्यावर्त्यत इति। निरूप्याह। यद्वृत्तीति।—गुणानन्दः।

(२) अन्य इत्यत्रोक्तत्वेनास्वरसबीजम्।—गुणानन्दः।

(३) अधिकरणस्येति केवलाधिकरणस्वरूपतामभावस्य स्फोरयितुम्।—गुणानन्दः।

(४) तूत्तरतत्पदार्थेन—पु० पु० पा०।

दीधितिटिप्पणी ।

एवं सति तदभावेत्यस्य तस्याधिकरणस्याभावस्वभावत्वमित्यर्थः स्यात्, तदा च प्रतियोगिवाचकतत्पदस्याभावेन सममन्वयो न स्यात्, अभावस्य समासावरुद्धत्वादिति, तस्मात् पूरणमेव युक्तमिति ॥

---

कल्पलता ।

ननु सत्त्वक्षणिकत्वयोः प्रमितत्वात्तद्व्यतिरेकावपि प्रमितावेव, तथा चाप्रामाणिके(१)ऽप्याश्रये व्यतिरेकग्रहोऽस्तु । यदाह कीर्त्तिः ।

'तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावेऽपि तन्नेति वचनादेव तद्गतेः ॥'

इति, अतोऽभ्युपगम्यापि निरस्यति । भवतु वेति । असत्ख्यातिः, आश्रयांशे । यद्वा ननु नैयायिकैरपि शुक्तिरजततादात्म्यस्यासत एव भानमङ्गीक्रियते, इत्यत आह । भवतु वेति । यद्यपि शुक्ती रजतं तादात्म्यं च(२) तत्र भासते, तच्च सर्वं सदेव, न चासद्विषयत्वं भ्रमत्वे(३) तन्त्रम्, किंतु प्रकारवैयधिकरण्यमात्रम्(४), तथापि सदुपरक्तमसदपि(५) भासत इति पक्षेऽभ्युपगमवादोऽयम् । न तत इति । न तत्रेत्यर्थः । यद्यतो व्यतिरिच्यत इति । व्यतिरिच्यते भिद्यते । यथा भूतलाद्भिन्नस्य(६) घटस्याभावो (न) भूतल इति स्वमते । प्राभाकरमते त्वाह । तदभावेति । तथा च भूतलादेरधिकरणस्यैव घटा(द्य)भाव(स्व)रू-

---

( १ ) तथा च प्रामाणिके–पा० २ पु० । ( २ ) शुक्तिरजततादात्म्यं च–कालि० मु० पु० पा० ।
( ३ ) न चासद्विषयत्वमप्रमात्वे––पुण० पु० पा० । न चासद्विषयत्वं तत्र– पा० २ पु० ।
( ४ ) विशेष्यावृत्तिप्रकारकत्वमित्यर्थः । ( ५ ) सदुपरक्तमसद्धि–कालि० मु० पु० पा० ।
( ६ ) भूतलाभिन्नस्ये –पुण० पु० पा० ।

कल्पलता ।

पत्त्वमित्यर्थः । अधिकरणाभिन्नो वाऽभावो(१)(ऽधिकरणस्वभावो)ऽधिकरणस्वरूपं वेति विकल्पार्थः । अपव्याख्यानमन्यत् । उक्तिरेतादृशी परनयेन ॥

तत्र न तावत् क्रमयौगपद्ययोः शशविषाणे अभावः प्रमाणगोचरः, वृक्षरहितभूभृत्कटकवत् क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणागोचरत्वात् ।

दीधितिः ।

क्रमेति । अर्थक्रियानुकूलक्रमयौगपद्ययोः(२) । क्रमादिकं सत्त्वस्याप्युपलक्षकम्(३) । एवमग्रेऽपि ॥

दीधितिटिप्पणी ।

न्यूनत्वमाशङ्क्याह । क्रमादिकमिति ॥

कल्पलता ।

न तावदिति । पर्वतनितम्बे यथा वृक्षाभावो योग्यानुपलम्भेन गृह्यते, न तथा व्यतिरेकग्रहः प्रकृते सम्भवतीत्यर्थः ॥

नापि क्रमयौगपद्याभावरूपत्वं(४) शशविषाणस्य प्रामाणिकम्, घटाभाववच्छशविषाणस्य प्रमाणेनानुपल-

दीधितिः ।

घटाभाववदिति व्यतिरेके(ण) दृष्टान्तः । तस्यासिद्धिमा-

(१) अधिकरणाभिन्नाऽभावो–पा० २ पु० ।

(२) कस्य क्रमयौगपद्ये इत्याकाङ्क्षायामाह । अर्थेति । अर्थक्रिया, कार्यम् । तदनुकूलम्, सहकारिसमवधानम् ।—गुणानन्दः ।

(३) ध्युपलक्षणम्–कलि० मु० पु० पा० । (४) भावरूपत्वं—मुग० मु० पा० ।

म्भात्। घटाभावोऽपि न प्रमाणगोचर इति चेन्न। तस्य तद्विविक्तेतरस्वभावस्यापि प्रमाणत एव सिद्धेः, असिद्धौ वा तत्राप्यव्यवहार एव।

दीधितिः।

ह(१)। घटाभावोपीति। तथा च पक्षः स्थिरो भाव इव सपक्षो विपक्षश्चाप्रामाणिक एवोपयुज्यत इति(२) (भावः)। तद्विविक्तेतरेति। तद्विविक्तः तद्भिन्नः, तदितरस्वभावस्य। प्रतियोगिव(३)दभावस्याप्यतद्व्यावृत्तस्वभावस्य प्रमाणसिद्धत्वादित्यर्थः, स च(४) केवलमधिकरणमन्यो वेत्यन्यदेतदिति भावः। तत्रापि घटाभावेऽपि(५)॥

दीधितिटिप्पणी।

तस्य तद्विविक्तेत्यादि मूलम्, अत्र तस्येति व्याधिकरणषष्ठ्या निष्कृष्टार्थमाह। प्रतियोगिवदिति॥

कल्पलता।

द्वितीयं निरस्यति। नापीति। स्यादेवं यदि शशविषाणे क्रमयौगपद्याभाव इति प्रतीतिः केनापि प्रमाणेन स्यात्, न त्वेवमित्यर्थः। घटाभाववदिति व्यतिरेकदृष्टान्तः। अधिकरणस्वभावत्वेऽप्यभावस्य प्र-

(१) तस्य, व्यतिरेके दृष्टान्तस्य। असिद्धिम्, अभावम्। व्यतिरेकि[illegible]।—गुणानन्दः।

(२) तथा च पक्षः स्थिरो भाव इव सपक्षादिरप्यप्रामाणिक [illegible] पु० पा०। तथा च व्यावृत्तिरिव सपक्षो विपक्षोऽप्यप्रामाणिक [illegible]। ननु मास्तु भावस्तथा, दृष्टान्तोऽभाव एव भविष्यतीत्यभिसन्धाय [illegible]। तथा च यत्र व्यतिरेकोपासना तत्राभावस्याप्रामाणिकत्वे [illegible] तथात्वे स्यादिति भावः।—गुणानन्दः।

(३) तद्विविक्तेतरस्वभावस्यापीत्यपिना प्रतियोगि[illegible] योगिवदिति। अपिः समुच्चये।—गुणानन्दः।

(४) प्रमाणसिद्धत्वाच्च-कलि० मु० [illegible]

(५) प्रतियोगिरस्वभावं [illegible] —गुणानन्दः

कल्पलता ।

तीतिरेतादृश्येवाभ्युपेयेति भावः । ननु यथा प्रमाणविषयस्यापि घटाभावस्य व्यवहारः सर्वजनीनस्तथा(१) क्रमयौगपद्याभावव्यवहारोपि स्यादित्यभिप्रायेण(२) शङ्कते । घटाभावोपीति । परिहरति ।(३) तस्येति । घटविविक्तम् घटभिन्नम्, भूतलादि, तदतिरिक्तस्त्वभावस्य, घटाभावस्येत्यर्थः । यथाधिकरणातिरिक्तो घटाभावः प्रत्यक्षत(४) उपलभ्यते, नैवं क्रमयौगपद्याभाव इति भावः । ननु भूतले घटो नास्तीति प्रतीतिरप्यसत्ख्यातिरेवेत्यत आह । असिद्धौ वेति(५) । तत्रापि घटाभावेपि । प्रमितस्यैव व्यवहार्यत्वादिति भावः(६) ॥

घटस्तावत् स्वाभावविरहस्वभावः प्रमाणसिद्धः,

दीधितिः ।

असिद्धे(७) व्यवहाराभाव इति सत्यम्, अभावस्तु प्रतियोगिनः स्वाभावविरहस्वभावस्य सिद्धयैव सिद्ध(म्) इत्या-

दीधितिटिप्पणी ।

घटस्तावदिति मूले केवलघटाभावस्य प्रमाणसिद्धत्वं स्वस्यानभीष्टमेव व्यवस्थाप्यते, अतो घटाभावमुपलक्षणं कृत्वा अभावमात्रस्य व्यवस्थापनाभिप्रायेण भावं ददाति । असिद्ध इत्यादि । ननु तादूप्येण तस्यानुपलम्भेपि तदभावस्वभावतायां तत्र मानमत

(१) स्तथा च—पुण० पु० पा० ।
(२) स्यादिति—पुण० पु० पा० ।
(३) घटाभावोपीति ।—पा० २ पु० ।
(४) प्रतिपक्ष—पुण० पु० पा० ।
(५) असिद्धाविति—कलि० मु० पु० पा० ।
(६) ननु भूतले घटो नास्तीति प्रतीतिरिति भावः ।—पा० २ पु० ।
(७) अप्रसिद्धे—पुण० पु० पा० ।

ताद्रूप्येण कदाचिदप्यनुपलम्भात्, एतावतैव तदभावोपि घटविरहस्वभावः सिद्ध इति चेन्न । घटाभावस्य(१) तदभावविरहस्वभावत्वानभ्युपगमात् ।

दीधितिः ।

शङ्कते । घटस्तावदिति । ताद्रूप्येण स्वाभावरूपत्वेन(२), तथा च तद्विरुद्ध(३)स्वभावः प्रतियोग्येव तदभावः, प्रतियोगिसत्त्वग्रहे(४) कदाचिदप्यभावसत्त्व(५)स्याव्यवहारात् । घटाभावोपि घटाविरहस्वभावः सिद्ध इत्यत्र तन्मत(६)विरोधमाह । घटाभावस्येति(७) । तदभावो घटः, ( तद्विरहः तदभावः, तथा च ) घटाभावस्य घटविरहस्वभावतायास्त्वयानभ्युपगमात् , अभावमात्रस्यैव निःस्वभावतया त्वया(८) तुच्छत्वाभ्युपगमात् । घटभावस्येति(९) पाठे तु घटरूपस्य (स्व)भावस्य स्वाभावविरहत्वानभ्युपगमादित्यर्थः, प्रतियोगिनः स्वाभावविरहात्मत्वे प्रामाणिके अभावप्रामाणिकताया आवश्यकत्वादिति भावः ॥

दीधितिटिप्पणी ।

आह । तथा च तद्विरुद्धस्वभाव इति । तदभावोपीत्यादौ एतावतैवेति हेतुर्न सङ्गतः, ( अतः ) स्वयं हेतुदानेन एतद्ग्रन्थव्याख्यामाह । प्रतियोगिसत्त्वग्रह इति । इत्यत्रेति । अतिसन्निहितोक्त इत्यर्थः । तन्मतम् क्षणिकतावादिमतम् । एतच्च घटतदभावस्येति मूले पाठो नास्तीत्यभिप्रायेण, अत एव घटाभावस्येति धृतम् । तुच्छत्वेति । तथा च निःस्वभावत्वे कथं विरहस्वभावत्वमित्यर्थः । ननु घटस्य स्वाभावविरहात्मकत्वा(न)भ्युपगमेपि तदभावस्य प्रामाणिकत्वे किमायातं, येनैतद्दोषदानं सङ्गतं स्यादत आह । प्रतियोगिन इति ॥

(१) घटभावस्य—कलि० मु० पु० पा० । (२) एतच्च बाधकापसारणपरम्, तस्य स्वाभावरूपत्वे स्वाधिकरणेपि तदुपलम्भात् तद्विरहत्वं तस्य न सिध्येदिति भावः । केचित्तु तत् रूपं धर्मो यस्येति व्युत्पत्त्या तद्रूपं तदधिकरणम्, तद्धर्मत्वेनेति च भावप्रत्ययलभ्यम्, तथा च तदधिकरणधर्मत्वेन कदाचिदप्यनुपलम्भादित्यर्थमाहुः ।-गुणानन्दः । (३) तथा च विरुद्ध-पुण० पु० पा० । (४) प्रतियोगिसत्त्वग्रहे-कलि० मु० पु० पा० । (५) दप्यभाव-कलि० मु० पु० पा० । (६) तन्मतेति च तेषामेवाभावे निःस्वभावतोपगमादित्यर्थः ।-गुणानन्दः । (७) घटभावस्येति-कलि० मु० पु० पा० । (८) निःस्वभावरूप-पुण० पु० पा० । (९) घटाभावस्येति—कलि० मु० पु० पा० ।

कल्पलता।

*प्रमाणाविषयस्यापि घटाभावस्य व्यवहार्यत्वमुपपादयति। घटस्तावदिति। ताद्रूप्येणेति। स्वाभावरूपतयेत्यर्थः(१), न हि भवति घटाभाव एव घट इति प्रतीतिरिति भावः।*(२) घटविरहस्वभावः सिद्ध इति। न तु स्वातन्त्र्येण प्रमित(३) इति रहस्यम्। गूढाभिसन्धिराह। घटभावस्येति(४)। क्वचिद्घटाभावस्येति पाठः, स च घटश्चासावभावश्चेति कथञ्चिदुपपाद्यः। अभावस्याप्रामाणिकत्वे घटस्य स्वाभावविरहस्वाभाव्य एव(५) विप्रतिपद्यामहे इति भावः॥

न चान्यस्य स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यात्, अतिप्रसङ्गात्। एवम्भूतावेव घटतदभावौ यदेकस्य परिच्छित्तिरपरस्य(६) व्यवच्छित्तिरिति

दीधितिः।

अपि च घटस्य घटस्वभावत्वेन सिद्ध्यैव(७) तदभावस्य सिद्धिः, स्वाभावविरहस्वभावत्वेन सिद्ध्या वा। आद्ये, न चेति। स्वभावभेदस्य नियामकत्वान्नातिप्रसङ्ग इत्याशङ्कते। एवम्भूताविति। एवंस्वभावा(८)वित्यर्थः। परिच्छित्तिः निश्चयः, व्यव-

दीधितिटिप्पणी।

स्वभावभेदस्येति। ईदृश एव कश्चित् स्वभावभेदोऽस्तीत्यर्थः। अभावस्य स्वभावभेदप्राप्तौ ग्रहः। ? एवंस्वभावाविति। एवंपदेन च

(१) ताद्रूप्येणेति। अभावस्वरूपतयेत्यर्थः—पुण० पु० पा०।

(२) *एतच्चिन्हाङ्कितः पा० २ पु० नास्ति।

(३) प्रमिति—पुण० पु० पा०। (४) घटाभावस्येति—पा० २ पु०।

(५) स्वाभाव्यस्य—कलि० मु० पु० पा०। (६) परिच्छित्तिरेवापरस्य—पुण० पु० पा०।

(७) सिद्ध्यैव-कलि० मु० पु० पा०। (८) स्वभावो-कलि० मु० पु० पा०।

चेन्न। घटवद्घटाभावस्यापि प्रामाणिकत्वानभ्युपगमे स्वभाववादानवकाशात्(१)। प्रमाणसिद्धे हि (वस्तुनि) स्वभावा(२)वलम्बनम्, न तु स्वभाववादावलम्बनेनैव व-

दीधितिः।

च्छित्तिः अभावावधारणम्, तथा च घट(३)परिच्छित्तौ स्वाभावतैरश्चीन्येन(४) घटाभावोपि सिद्ध इत्यर्थः(५)। निराकरोति। घटवदिति। व्यतिरेके दृष्टान्तः। स्वभावेति। निःस्वभावत्वेनाभ्युपगते(६) अभावे सस्व(७)भावत्वाभ्युपगमविरोधादिति(८)। अथ भाव एवै(९)तादृशस्वभावो यदेतस्य परिच्छित्तिरेवै(१०)तदभावव्यवच्छित्तिरिति चेत्, भावपरिच्छित्तेस्तदभावव्यवच्छित्तिरूपता-

दीधितिटिप्पणी।

तद्भेदप्राप्तिः। तैरश्चीन्येति। घटपरिच्छित्तेर्घटाभावनिर्णयरूपतया घटाभावस्य स्वभावस्य स्वभावे विशेषणीभूततया विशिष्टसिद्ध्यैवाभावसिद्धिरित्यर्थः। ?(११) इदमेव तैरश्चीन्यम्, तिर्यक् अमुख्यः प्रकारः, यतो मुख्यतया इतरासिद्धौ(१२) स्वस्यापि गुणभावेन सिद्धिः। सर्वत्र चाभ्युपगमः तन्मतेनाभ्युपगमो बोध्यः। एवंस्वभावावित्यादिनाऽभावस्यापि सस्वभावत्वपुरस्कारेण उक्तं निःस्वभावेत्यनेन दूषितं भवतु, इदानीं मया भावस्यैव (स)स्वभावत्वदर्शनपुरस्कारेण तदभिधाने को दोष इत्यभिप्रेत्याह। अथ भाव एवेत्यादि।

(१) घटाभावस्य प्रामाणिकत्वं त्वया नाभ्युपगम्यते, एवं च सस्वभावत्वस्वीकारोऽयुक्त इत्यर्थः।

(२) स्वभाववादा—कलि० मु० पु० पा०। (३) घटा—कलि० मु० पु० पा०।

(४) तैरश्चिन्येन—कलि० मु० पु० पा०। स्वाभावतैरश्चीन्येन, स्वाभावाभावत्वेन। घटपरिच्छित्तौ, निश्चये। स्वाभावोपि, घटाभावोपि। सिद्धः, विषयीकृतः।—गुणानन्दः।

(५) भावोपि प्रसिद्ध इति भावः—पुण० पु० पा०। (६) भ्युपगमात्—कलि० मु० पु० पा०।

(७) सत्स्व—पुण० पु० पा०। (८) विरोध इति भावः—कलि० मु० पु० पा०।

(९) भाव एवेति। तथा चाभावस्य निःस्वभावत्वोपगमेपि न क्षतिरिति भावः।—गुणानन्दः।

(१०) रेव—कलि० मु० पु० पा०।

(११) ? एतच्चिन्हाङ्कितो ग्रन्थ आदर्शपुस्तके नास्ति।

(१२) मुख्यतया इतरसिद्ध इत्यादर्शपुस्तके पाठः। मुख्यतयाऽसिद्धस्य—पा० २ पु०।

स्तुव्यवस्थितिरिति हि(१) भवतामेव तत्रतत्र जयदुन्दुभिः॥

दीधितिः।

याः प्रामाणिकत्वे तदभावस्यापि प्रामाणिकत्वमव(२)र्जनीयम्॥

दीधितिटिप्पणी।

तदभावस्यापीति। उक्तैरश्वीन्येनेत्यर्थः, तथा च तदनभ्युपगम एव पूर्वोक्तो दोष इत्यर्थः॥

कल्पलता।

दोषान्तरमाह। न चेति। तथा च स्तम्भे प्रवर्त्तमानं प्रमाणं कुम्भमपि साधयेदित्यर्थः। अतिप्रसङ्गं परो व्युदस्यति। एवम्भूतावेवेति। प्रतियोगिनि प्रवृत्तं प्रमाणमनुयोगिनमपि विषयीकरोति, अत्र प्रतियोग्यनुयोगिभाव(३) एव नियामक इति नातिप्रसङ्गो न वाऽभावस्य स्वतन्त्रप्रमाणविषयत्वमिति भावः। घटवदिति व्यतिरेके(४) दृष्टान्तः। स्वभावो हि स्वरूपम्, तच्च निःस्वरूपस्य(५) (प्रमाणपथानवतीर्णस्य(६) न सम्भवतीत्यर्थः। त्वयापि प्रमाणासिद्ध एव स्वभावावलम्बनमङ्गीकर्तव्यमित्याह।) प्रमाणासिद्धे हीति॥

तत् किमिदानीं स्वाभावविरहस्वभावो घटः प्रमा-

दीधितिः।

द्वितीयं(७) शङ्कते। तत्किमिति। तथा च घटशून्य इव घट-

दीधितिटिप्पणी।

ईदृशरूपेणासिद्धौ को दोषः, अत आह। तथा चेति। परमार्थतो

(१) वस्तुसिद्धिरिति–कलि० मु० पु० पा०। (२) त्वम–कालि० मु० पु० पा०।
(३) नुयोगीभाव–कालि० मु० पु० पा०। (४) व्यतिरेक–कलि० मु० पु० पा०।
(५) तत्त्वानिरूपितस्य–पा० २ पु०। (६) पथावतीर्णस्य–पा० २ पु०।
(७) द्वितीयम्, स्वाभावविरहस्वभावत्वेन सिद्ध्या वेति मतम्।—गुणानन्दः।

णान्नैव सिद्धः। तत्र द्रष्टव्या एवमेतत्। घटो हि यादृक्कृतादृक्स्वभावस्तावत् प्रमाणपथमवतीर्णः, तस्य तु यदि परमार्थतोऽभावोऽपि कश्चित् स्यात्, स्यात् परमार्थतः सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणेनावेदितः स्यात्। न चैतदप्य(१)भ्युपगम्यते भवता। तस्माद् घटवत् तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहलक्षणव्यतिरेकसिद्धिः, अप्रामाणिकत्वे त्वनयोरपि

दीधितिः।

वत्यपि घटाभावव्यवहारप्रसङ्ग इति भावः। निराकरोति। तत्रेत्यादि(२)। तदेव व्युत्पादयति। घटो हीति। यादृगिति। परमाणुपुञ्जोऽवयवी वेति(३)। सोऽपि घटोऽपि। तद्विरहस्वभावः स्वाभावविरहस्वभावः। तथैव स्वाभावविरहस्वभावत्वेनैव। भावस्य स्वाभावविरहात्मकतायाः प्रामाणिकत्वे चा(४)भावप्रामाणिकत्वध्रौव्यात्। अनयोः घटतदभावयोः। व्यतिरेकः विरोधः(५)। तदीयत्वेनैव च निरूपणे तज्ज्ञानमपेक्ष्यते नान्यथेति

दीधितिटिप्पणी।

यद्यभावः स्यात् तदेव भावस्य स्वाभावविरहस्वभावः, पारमार्थिक इत्यत्र किं मानमत आह। भावस्येति। पौनरुक्त्यादाह। व्यतिरेक इति। ननु यद्येतौ परस्परविरहलक्षणौ तदा कथं स्वाभावविरहलक्षणस्य भावस्य (अभाव)ज्ञानं विना ज्ञानमत आह। तदीयत्वेनेति।

(१) न चैतद—कलि० मु० पु० पा०। (२) तदेत्यादि—कलि० मु० पु० पा०।
(३) ऽवयवी चेति—कलि० मु० पु० पा०। (४) प्रामाणिकत्वे वा—कलि० मु० पु० पा०।
(५) विरोध इति। तथा च परस्परविरहलक्षणेत्यस्य परस्परविरहयोर्लक्षणं परस्परविरहत्वम्, स एव विरोध इत्यर्थोऽवसेयः। ननु घटस्य स्वाभावविरहरूपत्वे विना प्रतियोगिज्ञानं तज्ज्ञानं न स्यादित्याशङ्कायामाह। तदीयत्वेनेति।—गुणानन्दः।

न तथाभाव इति । शशविषाणादिष्वपीयमेव गतिः ।

दीधितिः ।

विनाप्यभावज्ञानं तदभावात्मनो भावस्य निरूपणं नानुपपन्नम्॥

दीधितिटिप्पणी ।

अभावीयत्वेनेत्यर्थः । संसर्गः प्रतियोगिता ॥

कल्पलता ।

तत्किमिति । तथा सति स्वाभावात्मैव(१) घटः स्यादिति साक्षेपाभिधानाभिप्रायः(२) । तव दृष्ट्येति । दृष्टिः दर्शनम् । त्वद्दर्शने चेदभावो न प्रामाणिकस्तदा तद्विरहस्वभावो घटोऽपि न प्रामाणिकः स्यादित्यर्थः । यादृक्तादृक्स्वभाव इति(३) । अवयवी परमाणुस्वरूपो वेत्यर्थः । तथैवेति । स्वाभाव(४)विरहस्वभावत्वेने(५)त्यर्थः । उभयोः प्रामाणिकत्वमुपसंहरति । तस्मादिति । अनयोः घटतदभावयोः । न चानयोरन्योन्यापेक्षायामन्योन्याश्रयः, घटत्वेन घटे गृह्यमाणे तद्विरहानपेक्षणात्, तद्विरहस्यापि प्रमेयत्वादिना ज्ञाने(६) घटा(७)नपेक्षणादिति भावः । न तथाभाव इति । नान्योन्यविरहस्वभावत्वमित्यर्थः । शशविषाणादिष्वपीति । शशविषाणादीनां प्रामाणिकत्वे परं तत्र(८) क्रमयौगपद्यविरहनिरूपणं, नान्यथेत्यर्थः, तथा च प्रमाविषयस्यैव व्यवहारविषयत्वमिति(९) यदुपक्रान्तं(१०) तत्सिद्धमिति भावः ॥

(१) स्वाभावाभावो नैव—कालि० मु० पु० पा० । (२) साक्षेपपराभिप्रायः—कालि० मु० पु० पा० ।
(३) यादृच्छिकस्वभाव इति—पा० २ पु० । (४) स्वभाव—पुण० पु० पा० ।
(५) स्वभावे—पा० २ पु० । (६) भाने—पाठः । (७) घठा—कलि० मु० पु० पा० ।
(८) परतन्त्र—कलि० मु० पु० पा० । (९) विषयत्वादिति—कलि० मु० पुं० पा० ।
(१०) यदुपसङ्क्रान्तं—पुण० पु० पा० ।

ननु काल्पनिकरूपसम्पत्तिरेवास्त्वनुमानाङ्गम् । तन्न । तस्याः सर्वत्र सुलभत्वात् ।

---

दीधितिः ।

रूपम् सपक्षसत्त्वादि । तस्याः काल्पनिक(१)रूपसम्पत्तेः । सर्वत्र अनैकान्तिकासिद्धविरुद्धेषु त्वदनुमतेषु हेत्वाभासेषु ॥

दीधितिटिप्पणी ।

वक्ष्यमाणतदिहेत्यादिमूलेन एवं सति व्यभिचारिस्वरूपासिद्धविरुद्धानामेवातिव्याप्त्युद्धरणस्य करिष्यमाणत्वात् तत्रैवातिव्याप्तिं दर्शयति । सर्वत्रेति ॥

---

कल्पलता ।

ननु सत्त्वक्षणिकत्वयोर्व्यतिरेकः कल्पनया तावदुपनीतः, एतावतैव तदनुमानं प्रवर्त्तताम्, किं व्यतिरेकस्य प्रामाणिकत्व(२)ग्रहेणेत्याह । नन्विति । पर्वतो वह्निमान् प्रमेयत्वात्, महानसवत्, शब्दोऽनित्यश्चाक्षुषत्वात्, घटवत्, नित्यः शब्दः कृतकत्वादित्यत्र व्यभिचारासिद्धिविरोधानां यथाक्रमं हेत्वाभासतयाऽसाधकत्वं त्वया यदुच्यते, तदपि न स्यादित्याह । तस्या इति। काल्पनिकरूपसम्पत्तेः, सर्वत्र उदाहृते(षु), सुलभत्वादित्यर्थः ॥

---

(१) तस्याः कल्पनाया इति भ्रमं निराकरोति । काल्पनिकेति । सद्धेतुषु काल्पनिकत्वा-स्तस्या अभावादाह । अनैकान्तिकेति । विपक्षासत्त्वपक्षसत्त्वसपक्षसत्त्वानां तेषु कल्पना क्रमेण ध्येया । अबाधितत्वासत्प्रतिपक्षितत्वयोर्ज्ञानं नाङ्गमिति तदुभयमुपेक्षितम् ।—गुणानन्दः ।

(२) व्यतिरेकस्य अप्रामाणिकत्व—पुण० पु० पा० ।

ननु पक्षसपक्षविपक्षा(१)स्तावद्वस्त्ववस्तुभेदेन द्विरूपाः, तत्र ये कल्पनोपनीतास्तत्र काल्पनिका एव पक्षधर्मत्वा(२)न्वयव्यतिरेकाः, प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः । तदिह(३) काल्पनिकाग्निरग्नेर्यद्यपि प्रमेयत्वादेर्व्याप्तिः काल्पनिकी सिद्धा, तथापि प्रामाणिकाज्जलह्रदादेः प्रामाणिक्येवैषितव्या, सा च न सिद्धेति कुतस्तस्य हेतुत्वम् । एवं प्रामाणिके शब्दे पक्षीकृते प्रामाणिक एव हेतुसद्भावो

दीधितिः ।

तत्र तेषु द्विरूपेषु पक्षादिषु मध्ये, तत्र तेषु काल्पनिकपक्षसपक्षविपक्षेष्विति, तथा चा(४)सत्त्वे साध्ये काल्पनिकयोः पक्षसपक्षयोः स्थिरभावशशशृङ्गयोः काल्पनिकमेव क्रमयौगपद्यविरहस्य हेतोः सत्त्वम्, क्षणिकत्वे च साध्ये सत्त्वस्य काल्पनिके(५) शशशृङ्गादौ विपक्षे काल्पनिक एव व्यतिरेको गमकतौपयिकं(६) रूपमिति भावः । तदिह वह्नौ साध्ये । एवम्

दीधितिटिप्पणी ।

असत्त्वे साध्य इत्यादि । क्षणिकत्ववादिभिर्वास्तविकः स्थिरो नाङ्गीक्रियते, अतः काल्पनिक एव तन्मते स्थिरः, एवं च सत्त्वेन क्षणिकत्वे साध्ये काल्पनिकस्थिरे सत्त्वस्यानैकान्तिकतापत्त्या काल्पनिकस्थिरं पक्षीकृत्य सत्त्वस्याभावः साध्यते, तत्र च क्रमादिविरहो हेतुः । क्षणिकत्व इति । तदनन्तरमित्यादिः । तस्याः सर्वत्र सु-

(१) पक्षविपक्षसपक्षा—पुण० पु० पा० । (२) पक्षधर्मा—कलि० मु० पु० पा० ।

(३) बौद्धानामनैकान्तासिद्धविरुद्धास्त्रयो हेत्वाभासास्तत्र क्रमेण काल्पनिकरूपसम्पत्तेरगमकत्वमाह । तदिहेति ।—भगीरथठक्कुरः ।

(४) एतावता प्रकृते यदायातं, तदाह । तथा चेति ।—गुणानन्दः ।

(५) काल्पनिक—कलि० मु० पु० पा० । (६) पयिक—कलि० मु० पु० पा० ।

वक्तव्यः, न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुः । एवं कृतकत्वस्यापि वस्त्वेकनियतस्य धर्मस्य वास्तव एवान्वयो वक्तव्यः, वस्तुनो विपक्षाच्च वास्तव एव व्यतिरेकः, न च तस्य तौ स्तः, तत् कथमसावपि हेतुरिति ।

दीधितिः ।

शब्दस्या(१)नित्यत्वे साध्ये । एवम् नित्यत्वे साध्ये । वस्त्वेकनियतस्येति वस्तुमात्रधर्मस्यावस्तुनि नित्येऽलीकेऽन्वयो विरोधात् कल्पयितुं न शक्यत इति सूचनाय ॥

दीधितिटिप्पणी ।

लभत्वादिति दत्तं व्यभिचारिण्यतिप्रसङ्गमुद्धरति, तदिहेति मूलम्(२)। नित्ये अलीके नित्यरूपे अलीके, तथा च तत्र सामानाधिकरण्येन विरोधभङ्गो न भवतीत्यर्थः ॥

कल्पलता ।

ननु निरग्निकात् कूर्मरोमादेर्विपक्षात् प्रमेयत्वव्यावृत्त्या विपक्षाद्व्यावृत्तिः(३) काल्पनिके (शब्दे) चाक्षुषत्वसत्त्वेन पक्षसत्त्वं काल्पनिके नित्ये गगनारविन्दे(४) कृतकत्वसत्त्वादन्वयो नित्यत्वकृतकत्वयोरिति काल्पनिकी रूपसम्पत्तिर्यथा त्वयोच्यते, तथा ह्रदे विपक्षे(५) प्रमेयत्वस्य सत्त्वाद्विपक्षगामित्वं वास्तवे शब्दे चाक्षुषत्वस्यासत्त्वादपक्षवृत्तित्वं नित्ये

---

( १ ) एवं शब्दस्येति । चाक्षुषगुणत्वमत्र हेतुरनुसन्धेयः ।—गुणानन्दः ।

( २ ) मूलम् । वस्त्येकनियतेत्यस्य सूचनायेत्यर्थं च यः । —पा० २ पु० ।

( ३ ) विपक्षव्यावृत्तिः—पुण० पु० पा० । ( ४ ) गगनादावरविन्दे—पुण० पु० पा० ।

( ५ ) विपक्ष--पुण० पु० पा० ।

कल्पलता।

वस्तुनि कृतकत्वस्यावृत्तेर्विरुद्ध(१)त्वमत उक्तानां (हेतूनां) कथं गमकत्वं स्यादि(२)त्याशङ्कते। नन्विति॥

प्रलपितमेतत्। न हि नियामकमन्तरेण सम्पदं प्रति कल्पना त्वरते, विपदं प्रति (तु) विलम्बत इति शक्यं वक्तुम्, तथा च निरग्निकमपि कूर्मरोम सधूमामिति कल्पनामात्रेण विपक्षवृत्तित्वात् धूमोऽपि नाग्निं गमयेत्। वास्तव्यां रूपसम्पत्तौ किमनेन काल्पनिकेन दोषेणे(३)ति चेत्, तर्हि वास्तव्यामसम्पत्तौ किं काल्पनिकया तयेति समानम्। विरोधाविरोधौ विशेष इति चेत्,

दीधितिः।

तर्हीत्यादि(४)। रूपस्य असम्पत्तौ(५)। तया रूपसम्पत्त्या। असति विपक्षे सतो धूमस्य सत्त्वं कल्पयितुं न शक्यते, विरोधात्, शक्यते पुनरसतोः पक्षसपक्षयो(६)रसतः क्रमादिविरहस्य सत्त्वं, सतोपि च सत्त्वस्यासति शशशृङ्गेऽसत्त्वेव

दीधितिटिप्पणी।

विपदं प्रत्यपि त्वरतामिति दर्शयति, तथा च निरग्निकमपीति मूलम्। विरोधात् साक्षात्सम्बन्धविरोधात्। सत्त्वस्यापि विपक्षावृत्तित्वं दर्शयति। सतोपि चेति। उभयोरित्यादिमूलेन विरोधरूपविशेषो धूमवन्हिस्थले दर्शितः, अन्यत्रेत्यादिना प्रकृतेऽविरोधो दर्शित इति। वस्त्ववस्तुत्वादिति यथासङ्ख्यं धूमशशशृङ्गयोरन्व-

(१) त्वस्यासत्त्वाद्विरुद्ध—पुण० पु० पा०। (२) गमकत्वामि—पुण० पु० पा०।
(३) काल्पनिकदोषेणे-पुण० पु० पा०। (४) तर्हीति—पुण० पु० पा०।
(५) असम्पत्त्यै-पुण० पु० पा०। असम्पत्तेर्निरूपकाकाङ्क्षायामाह। रूपस्येति।-गुणानन्दः।
(६) पक्षसपक्षयोः, स्थिरभावशशशृङ्गयोः।—गुणानन्दः।

कुत एषः(१)। उभयोरेकत्र वस्त्ववस्तुत्वात्, अन्यत्रावस्तुत्वादिति चेत्, तत् किं काल्पनिकोऽपि धूमो वस्तुभूतो येन कूर्मरोम्ण(२)स्तेन सह विरोधः स्यात्। क्वचिद्वस्तुभूत इति(३) चेत्, निर्धूमत्वमपि क्वचिद्वस्तुभूतमिति तेनापि

दीधितिः।

व्यतिरेकः, अविरोधादित्याह। विरोधेति। कुत एषः विशेषः, विरोधोऽविरोधश्चेति(४)। एकत्र धूमेन वह्नौ साध्ये। उभयोः धूमशशशृङ्गयोः। अन्यत्र क्रमादिविरहेणासत्त्वे सत्त्वेन क्षणिकत्वे वा पक्षहेत्वोः, हेतुसपक्षयोः, विपक्षहेत्वभावयोश्च। यादृशं(५) क्वचिद्वस्तुभूतम्, तादृशं यद्य(वस्तुभूतमप्य)वस्तुनि कल्पयितुं न शक्यते, तदा निर्धूमत्वं क्वचिद्वस्तुभूतमित्यवस्तुभूतमपि तदवस्तुनि न कल्प्येत(६), वास्तवं तु सुतरामशक्यकल्पनमिति काल्पनिकविपक्षव्यतिरेकविरहात् धूमो नाग्निं(७) गमयेदित्याह। निर्धूमत्वमपीति। अथ यद्वास्तवं तस्यैवावस्तुनि संसर्गो विरु-

दीधितिटिप्पणी।

यि। असत्त्वे, साध्य इत्यनुषज्यते। अन्यत्रावस्तुत्वादित्यत्रापि उभयोः इत्यस्यानुषङ्गः। तत्र च उभयोरित्यस्य व्याख्यामाह। पक्षहेत्वोरित्यादि। यादृशम् यद्रूपावच्छिन्नम्। ननु तत्र काल्पनिकनिर्धूमत्वं न कल्पनीयम्, किन्तु वास्तवं निर्धूमत्वमेव कल्पनीयम्, अत आह। वास्तवं त्विति। काल्पनिकेति। भवता काल्पनिकाद्विपक्षात् काल्पनिकी व्यावृत्तिः वास्तवविपक्षाच्च वास्तवीति कृतनियमस्या-

(१) एतत्—पुण० पु० पा०। (२) रोम्न—कलि० मु० पु० पा०।
(३) द्वस्तुभूत एवेति—कलि० मु० पु० पा०।
(४) विरोधोऽविरोधश्चेत्यर्थः—कलि० मु० पु० पा०।
(५) वयोर्या—कलि० मु० पु० पा०। (६) कल्पेत—कलि० मु० पु० पा०।
(७) यद्यप्युक्तरीत्या निर्वह्नित्वस्य तत्र कल्पनाया असम्भवेनासतो न विपक्षत्वम्, तथाप्यग्निपदं केवलान्वयिमात्रोपलक्षणमिति ध्येयम्।—गुणानन्दः।

दीधितिः ।

ध्यते, न तु तादृशस्यावास्तवस्यापि, हेतुश्च वास्तवे वह्नौ वास्तव(१) एव धूमः, न चास्य काल्पनिकमपि विपक्षवृत्तित्वम्, विरोधादिति चेत्, वस्त्ववस्तुनोः संसर्गो विरुध्यते नावस्तुनोरित्यत्र न किञ्चिदपि(२) प्रमाणम्, कल्पनामात्रं तु(३) वैपरीत्येनापि सुलभम्, वस्तुनो(४) धूमस्य वस्तुनि जलह्रदादौ कल्पनं च दुर्वारम्, वास्तवमेव च पक्षसत्त्वादिकमनुमानोपयोगि, क्लृप्तत्वात्, अन्यथा(५)तिप्रसङ्गात्, न तु(६) क्वचि(७)त्किञ्चिद्वास्तवं, क्वचि-

दीधितिटिप्पणी ।

रक्षणादिति भावः । इदं त्वत्र चिन्त्यम् । यथा काल्पनिके न काल्पनिकं निर्धूमत्वं वर्तते तथा वन्ह्यभावोपि न वर्तते, तुल्यन्यायात्, तथा च तस्य काल्पनिकविपक्षत्वमपि नास्तीति कुतो धूमस्य व्यावृत्त्याऽग्निगमकत्वाभावरूपं दूषणमिति । तादृशस्य तद्रूपावच्छिन्नस्य । अवास्तवस्यापीति । येन निर्धूमत्वमित्यादिदोषः स्यादिति भावः । वन्हौ, साध्य इति शेषः । विरोधात् सदसदित्यादिरूपात् । तन्मतसिद्धान्तदूषणेन समाधत्ते । वस्त्ववस्तुनोरिति । वैपरीत्येनापीति । वस्त्ववस्तुनोरेव दोषः, न तु वस्तुनोरपीत्यर्थः । वस्तुनो धूमस्येति । वस्तुनोः संसर्गे भवतां किमपि बाधकं नास्ति यत इत्यर्थः। वास्तवमेव चेत्येवकारव्यावर्त्यमाह । न त्विति । व्यतिरेकभङ्ग

(१) वा—कलि० मु० पु० पा० ।

(२) न किञ्चिदिति । अवस्तुनि प्रमाणाप्रसरादिति भावः । वैपरीत्येन, वस्त्ववस्तुसंसर्गाविरोधेन ।—गुणानन्दः ।

(३) कल्पनामात्रस्य—कलि० मु० पु० पा० ।

(४) ननु वस्तुविषयकप्रमाणावस्तुविषयकवासनाभ्यां परस्परसहकारेण विरोधधीः स्यात्, तत्राह । वस्तुन इति ।—गुणानन्दः ।

(५) अन्यथा, अवास्तवस्य तस्य तस्यानुमानोपयोगित्वे । अतिप्रसङ्गात्, शब्दे चाक्षुषगुणत्वादिनाऽनुमानप्रसङ्गात् ।—गुणानन्दः ।

(६) ननु—कलि० मु० पु० पा० ।

(७) क्वचित्, वस्तुनो हेतुत्वे । किञ्चित्, पक्षसत्त्वं सपक्षसत्त्वं च, विपक्षासत्त्वं च काल्पनिकमपीति भावः । क्वचित्, अवस्तुन एव यत्र पक्षत्वादिकम् । अवास्तवमपि, विपक्षासत्त्वं च तत्र वास्तवमिति भावः । ननु पक्षहेत्वादेरवस्तुवस्तुत्वादिकमेव नियामकं वाच्यम्, तत्राह । कल्पनागौरवेति ।—गुणानन्दः ।

विरोध एव । तस्माद् यथा काल्पनिकी विपत्तिर्न दोषाय, तथा काल्पनिकी सम्पत्तिरपि न गुणायेति व्यतिरेकभङ्गः ॥

दीधितिः ।

वास्तवमपि, नियामकाभावात्, कल्पनागौरवप्रसङ्गाच्चे(१)त्यभिसन्धायोपसंहरति । तस्मादिति । व्यतिरेकः क्रमादिविरहेण स्थिरस्य सत्त्वव्यतिरेकसाधनम्, क्षणिकत्वसाधनस्य च सत्त्वस्य शशशृङ्गे व्यतिरेकः, तयोर्भङ्गः ॥०॥

दीधितिटिप्पणी ।

इत्यत्र द्विवचनान्तसमासेन न्यूनत्वं परिहरति । व्यतिरेक इति ॥०॥

कल्पलता ।

परिहरति । प्रलपितमेतदिति । प्रलापः अनर्थकं वचः, तथा च त्वदभिधानमर्थशून्यमित्यर्थः । तदेव दर्शयति । न हीति । क्षणिकत्वसत्त्वयोरलीके व्यतिरेकासिद्धिः काल्पनिकी ( तव ) सम्पत् । सद्धेतोरप्यसद्धेतुत्वापत्तिर्विपत् । विपदमेव दर्शयति । तथा चेति । ननु वस्तुनो विपक्षाद् धूमस्य वस्तुनो व्यावृत्तिरस्त्येवेति धूमो वह्निं कथं न गमयेदित्याह । वास्तव्यामिति(२) । सत्त्वक्षणिकत्वयोरपि त्व(३)दुपदर्शिता व्यतिरेकसम्पत्तिरवास्तव्येवेत्याह। तर्हीति । ननु कूर्मरोम्णि(४) वस्तुसतो धूमस्य वृत्तौ विरोधः,अक्षणिकत्वस्य(५) क्रमयौगपद्याविरहस्य चासत एवासति

( १ ) ङ्गश्चे—कालि० मु० पु० पा० । ( २ ) वास्तव्यामिति—पुण० पु० पा० ।
( ३ ) सत्त्वक्षणिकत्वयोस्त्व—पुण० पु० पा० ।
( ४ ) रोम्नि—कालि० मु० पु० पा० । एवमग्रेपि ।
( ५ ) विरोधः क्षणिकत्वस्य—कालि० मु० पु० पा० ।

कल्पलता ।

कूर्मरोम्णि धूमत्वाविरोध इत्याह । विरोधेति । (उभयोरिति ।) धूमकूर्मरोम्णोः, एकत्र धूमानुमानस्थले, वस्त्ववस्तुत्वात्, अन्यत्र त्वदु(१)पदर्शिते व्यतिरेके, अवस्तुत्वात्, इति विरोधाविरोधावि(२)त्यर्थः । तत्किमिति । अवस्तु(भूतस्यैव)धूमस्या(३)वस्तुनि (नि)रग्निके गतत्वेन व्यभिचारस्य मयोक्तत्वात् क्व विरोध इत्यर्थः । क्वचिदिति । हेतुत्वेनोपात्तो धूमो वस्तुभूत एव(४), स च नावस्तुनीति न(५) व्यभिचार इत्यर्थः । तर्हि निर्धूमत्वमपि कूर्मरोम्णि कथं वर्तताम्, ह्रदादौ तस्य वस्तुत्वात्, तथा च निरग्निकेऽलीके न धूमवत्त्वं नापि निर्धूमत्वमिति महान्विरोध इत्याह । निर्धूमत्वमपीति(६) । व्यतिरेकभङ्ग इति । व्यतिरेकव्याप्तिग्रहभङ्ग इत्यर्थः, तथा च त्वन्मते नान्वयव्यतिरेक(७)ग्रहोऽपि सत्त्वक्षणिकत्वयोरिति भावः ॥०॥

दीधितिः ।

प्रतियोग्युत्तरभाविनो हि कारणस्यापेक्षणीयत्वे सत्यपि प्रतियोगिनि तद्विलम्बाद्विलम्बो नाशस्य स्यात्, निरस्ते च तस्मिन् भावस्योत्पत्त्यनन्तरमेव विनाशः, स एव च क्षणभङ्गः । यदि चैवमुत्पत्तिमतां क्षणिकत्वे सिद्धेऽपि नित्यत्वेन परैरभ्यु-

दीधितिटिप्पणी ।

मूले नित्ये क्षणभङ्गसाधकं न प्रतीयते, एवमितरत्रापि न्यूनत्वमाशङ्क्याभासमाह । प्रतियोगीत्यादि । तस्मिन् इतरकारणस्यापे-

(१) अन्यत्र तु सदु—पुण० पु० पा० । (२) विरोधाविरोधादि—कालि० मु० पु० पा० ।
(३) धूमस्यैवा—पुण० पु० पा० । (४) वस्तुसत एव—पाठः ।
(५) नावस्तुनीति स—पा० २ पु० । (६) निर्धूमत्व इति—पा० २ पु० ।
(७) नान्वयव्याप्ति—पुण० पु० पा० ।

अस्तु तर्हि ध्रुवभावित्वेन विनाशस्याहेतुकत्वसिद्धेः(१) क्षणभङ्गः। न। विकल्पानुपपत्तेः। तद्धि तादात्म्यं

दीधितिः।

पगतानां परमाणूनां तन्न सिद्धमिति विभाव्यते, तदाऽनित्येषु(२) सिद्धव्याप्तिकेन सत्त्वेन तेषां विनाशित्वं क्षणिकत्वं वा साधयिष्यत इत्याशयवानाशङ्कते। अस्तु तर्हीति। अहेतुकत्वं च तदुत्पत्त्युत्तरभाविहेत्वनपेक्षत्वम्। अत्र च यो यस्य ध्रुवभावी स तदुत्पत्त्युत्तरभाविहेत्वनपेक्षः, यथा पूर्वस्य बीजक्षणस्योत्तरः, यथा वा(३) कर्मणो विभागः, ध्रुवभावी च प्रतियोगिनो विनाश इति वस्तुतस्तेषामाभिमतः प्रयोगः(४)। उदक्षरमपि परकीयसिद्धान्तभेदानुसारेण विकल्प्य दूषयति। तद्धीत्यादि। तत् ध्रुवभावित्वम्। तादात्म्यम् प्रतियोगि(५)तादात्म्यम्, न च(६) तदात्मनस्तदुत्तरभाविसापेक्षत्वसम्भव इति

दीधितिटिप्पणी।

क्षणीयत्वे। सत्त्वेन विनाशित्वं प्रसाध्य तेन ध्रुवभावितया क्षणभङ्गसाधनमपेक्ष्य सम्मुख एव क्षणभङ्गसाधनमुचितमित्याह। क्षणिकत्वं वेति। तन्मतेऽपि विनाशस्य प्रतियोगिजन्यतयाऽहेतुकत्वासङ्गतेराह। अहेतुकत्वं चेति। अत्र च प्रयोग इति सम्बन्धः। उत्तरः, बीजक्षणः। पक्षधर्मतां दर्शयति। ध्रुवभावी चेति। तेषामभिमत इति। तेषां ह्यवयवत्वादिति भावः। उदक्षरमपीति विकल्प्य इत्यन्वयि। तादात्म्यं तैरुक्तं किं वाभिमतं क्रियते इत्याह। न

(१) ध्रुवभावित्वाद्विनाशस्याहेतुकत्वेन—पाठः। ध्रुवभावित्वेन विनाशस्याहेतुकत्वे सिद्धे—कलि० मु० पु० पा०।

(२) तदा नित्येषु— कलि० मु० पु० पा०। तदा अन्येषु—पुण० पु० पा०।

(३) न्यायनये दृष्टान्तमाह। यथा वेति।—गुणानन्दः।

(४) माभिमतप्रयोगः—पा० २ पु०।

(५) केन तादात्म्यमित्यपेक्षायामाह। प्रतियोगीति।—गुणानन्दः।

(६) व्याप्तिं द्रढयति। न चेति।—गुणानन्दः।

वा, निरुपाख्यत्वं वा, तत्कार्यत्वं वा, व्यापकत्वं(१) वा, अभावत्वमेव वेति(२)।

दीधितिः।

भावः। निरुपाख्यत्वम् निःस्वभावत्वम्, अलीकत्वमिति यावत्। अलीकस्य च (न) कारणापेक्षित्वम्(३), विलक्षणमेव च तदलीकं प्रतिनियतदेशकालमिति नातिप्रसङ्ग इति भावः॥

दीधितिटिप्पणी।

चेति। तेन कथमहेतुकमङ्गीक्रियत इत्याह। अलीकस्य चेति। नन्वलीकस्य काल्पनिकतया सार्वत्रिकतया कथमत्र देशे एतत्काल एव भवतीत्यादिप्रतिनियतकालाद्यपेक्षेत्यत आह। विलक्षणमेव चेति॥

कल्पलता।

ध्रुवभावित्वे तु वक्ष्याम(४) इति यदुक्तं, तत्राह। अस्त्विति। ध्रुवम् अवश्यं भावोऽ(स्या)स्तीति ध्रुवभावी विनाशः। एतावता सत्त्वक्षणिकत्वयोर्व्याप्तिः सेत्स्यतीति हृदयम्। (विकल्पेति।) विकल्पस्य प्रकृतविचारौपयिकसंशयस्य, अनुपपत्तेरित्यर्थः। यद्वा विकल्पानां विविधकल्पानां त्वदभिमतानाम्, अनुपपत्तेरित्यर्थः। यद्वा विकल्पे क्रियमाणे त्वदभिमतपक्षानुपपत्तेरित्यर्थः। तद्धीति। विनाशस्य ध्रुवभावित्व(५)मित्यर्थः। यद्यपि एते विकल्पा ध्रुवभावित्वस्य न भवितुमर्हन्ति, तदर्थासंस्पर्शात्, तथापि तात्पर्यानुसारेण कथञ्चिद्विनाशस्याहेतुकत्वप्रयोजका द्रष्टव्याः। भावानां विनाशोऽहेतुकः, ध्रुवभावित्वात्, यद्यस्य(६) ध्रुव-

(१) तत्कार्यत्वं वा, तद्व्यापकत्वं वा—कलि० मु० पु० पा०।
(२) मेव वा—पुण० पु० पा०। (३) कारणानपेक्षित्वं—पुण० पु० पा०।
(४) वक्ष्यत—कलि० मु० पु० पा०। (५) भावित्वाना—कलि० मु० पु० पा०।
(६) यद्यद्—कलि० मु० पु० पा०।

कल्पलता।

भावि तत्तद(१)हेतुकम्। तादात्म्यं चेति। विनाशस्य प्रतियोगितादात्म्यमित्यर्थः। निरुपाख्यत्वमिति(२)। अलीकत्वमित्यर्थः। तत्कार्यत्वमिति। प्रतियोगिकार्य(त्व)मित्यर्थः। व्यापकत्वं चे(३)ति। प्रतियोगिव्यापकत्वं चे(४)त्यर्थः॥

---

न पूर्वः(५), निषेध्यनिषेधयोरेकत्वानुपपत्तेः। उपपत्तौ वा विश्वस्य वैश्वरूप्यानुपपत्तेः।

---

दीधितिः।

निषेध्येति(६)। मिथो(७)विरुद्धस्वभावत्वादिति भावः। वैश्वरूप्येति। निषेध्यनिषेधयोरैक्ये क्वचिदपि(८) विरोधासिद्ध्या विरुद्धधर्मसंसर्गोच्छेदे भेदा(९)सिद्धावद्वैतमेव स्यात्, स्याच्च जगदेवाभावशेषं(१०), स्वदेशकालयोरपि तस्यासत्त्वादित्यर्थः॥

दीधितिटिप्पणी।

निषेध्यम् प्रतियोगि। निषेधः अभावः। यद्वा निषेध्यम् नाश्यम्। निषेधः नाशः। क्वचिदपीत्यादि। प्रतियोग्यभावयोरैक्ये घटत्वाभावरूपघटत्वस्य घटत्वादिसमानाधिकरणतया घटत्वपटत्वादीनामपि परस्परासामानाधिकरण्यरूपविरोधासिद्ध्या विरुद्धधर्मवत्त्वाभावेन घटपटादीनामपि भेदो न सिद्ध्येत्, इत्थं च जगत एवैक्यं स्यादित्यर्थः। इत्थं च इतरदपि स्यादित्याह। स्याच्चेति। अभावशेषम् अभावानतिरिक्तम्। न च भावशेषत्वमेव कथं नापादितमिति वाच्यम्। तस्य मूलेनापाद्यत्वान्नोक्तमिति। यद्यप्येतदद्वैतापादनेनैव

---

(१) तदन्या—पुण० पु० पा०। (२) निरुपाख्यमिति पाठः।

(३) व्यापकत्वं चे—कलि० मु० पु० पा०। (४) व्यापकमि—कलि० मु० पु० पा०।

(५) पूर्वकल्पः—पुण० पु० पा०। (६) निषेधेति—पुण० पु० पा०।

(७) मिथ इति। ध्वंसे च कालिको विरोधोऽस्माकं तेषां च दैशिकोऽपि।—गुणानन्दः।

(८) क्वचिदपीति। यत्र यस्य धर्मस्याभावो वर्तते तत्र तस्यापि सत्त्वादिति भावः।—गुणानन्दः। (९) भेद—कलि० मु० पु० पा०।

(१०) अभावशेषमिति भावशेषस्याप्युपलक्षणम्, तुल्ययुक्तेः।—गुणानन्दः।

दीधितिटिप्पणी ।

प्रातम्, तथापि स्पष्टत्वार्थमुक्तम् । केचित्तु जगद्घटाभावमयं स्यादित्यर्थ इत्याहुः । हेतुमाह । स्वदेशेति । स्वदेशकालयोरपि स्वात्मकस्वाभावस्य सत्त्वादित्यर्थः ॥

कल्पलता ।

निषेध्येति । न हि घट एव घटाभाव(१) इति कस्यचिदनुभवो व्यवहारो वेति भावः । ननु(२) परीक्षकाणां(३) ताव(त्त)दुभयमस्तीत्यत आह । उपपत्तौ वेति । वैश्वरूप्यम्(४) वैचित्र्यम्, तदनुपपत्तिः, सर्वेषां घटपटादीनामभावैकस्वभावत्वादित्यर्थः । यद्वा विरोधिनोरपि तादात्म्ये गवाश्वादीनामपि(५) तादात्म्यापत्तेरित्यर्थः ॥

ननु कालान्तरेऽर्थक्रियां प्रत्यशक्तिरेवास्य नास्तिता, सा च कालान्तरे समर्थेतरस्वभावत्वमेवेति(६)

दीधितिः ।

ननु कालान्तरे समर्थेतरस्वभावो भाव एव विनाश इति नोक्तदोष इत्याशङ्कते । नन्विति । सा चेति । नास्तितेत्यर्थः । कालान्तरवर्त्ती भावो हि सामर्थ्यविरहेण समर्थात्प्राचो भावाद्भिद्यमानो लाघवात् तस्य विनाशोऽभ्युपेयते, अथाभिन्न एव

दीधितिटिप्पणी ।

कालान्तरे कार्यकालत्वाभावक्षणे । नास्तितता नाशः । सा चे त्यादिमूलतोऽभेद एव प्रतीयते, अभेदपक्षे च नन्वयमेव क्षणभ इति न लगतीत्यतो विकल्प्य सङ्गमयति । कालान्तरेति । प्राचो भावात् प्राचीनभावात् । अथाभिन्न एव, विनाशोऽभ्युपेयत इति सम

(१) घटविनाश—कलि० मु० पु० पा० । (२) भावः।—पा० २ पु० ।
(३) परीक्षितानां—कलि० मु० पु० पा० । (४) वैश्वरूप्यं—पुण० पु० पा० ।
(५) गवाश्वादेरपि— पुण० पु० पा० । गवादेरपि—पुण० पु० पा० ।
(६) स्वभावत्वमिति—पा० २ पु० ।

चेत्, नन्वयमेव क्षणभङ्गः, तथा चासिद्धमसिद्धेन साधयतः कस्ते प्रतिमल्लः(१)।

दीधितिः।

आद्ये, नन्वित्यादि। सामर्थ्यविरहो हि भेदं साधयन् क्षणभङ्गे पर्यवस्यति, न चासावद्यापि सिद्ध इत्यर्थः। विनाशस्य प्रतियोगितादात्म्याभ्युपगमविरोधश्चेत्यपि(२) द्रष्टव्यम्॥

दीधितिटिप्पणी।

न्धः। ननु समर्थेतरस्वभावत्वं सामर्थ्यविरह एव, नन्वयमित्यादिना कथमस्य क्षणभङ्गाभेद आपादितः, वरमेतेनास्य क्षणभङ्गाविनाभूतत्वं भवत्वित्यतस्तत्पर्यवसानरूपार्थमाह। सामर्थ्यविरह इत्यादि। भेदं साधयन्, प्राचो भावात्॥

कल्पलता।

प्रकारान्तरेण विनाशस्य प्रतियोगितादात्म्यं शङ्कते। नन्विति। स्वोत्पत्त्यव्यवहितोत्तरक्षणे भावोऽर्थक्रियां प्रत्यसमर्थ इत्यशक्तिरेव तदातनी(३) नास्तिता, तथा च समर्थेतरस्वभावो भाव एव नास्तिता, सैव च नाश इत्यर्थः। प्रथमक्षणे सामर्थ्यमग्रिमक्षणे(चा)ऽसामर्थ्यमिति विरुद्धधर्माध्यासेन भेद एव (तव) विवक्षितः, तथा च क्षणभङ्ग एवानया(४) वचनभङ्ग्या त्वयोच्यते, स च पूर्वोक्तसामर्थ्यासामर्थ्यप्रयोजकप्रसङ्गतद्विपर्ययाधीनः(५), तौ च दूषितावेवेत्याह। नन्वयमेवेति। तथा चेति। तथा च प्रकारान्तरेण(६) समर्थेतरस्वभावत्वमसिद्ध(मसिद्धेन)क्षणभङ्गेन साधयत इत्यर्थः॥

(१) प्रतिममल्लः—पाठः। प्रतिनन्दः—कलि० मु० पु० पा०। (२) श्चेति—पुण० पु० पा०।
(३) तदानीं—पुण० पु० पा०। (४) क्षणभङ्गप्रधानया—पुण० पु० पा०।
(५) धीनश्च—कलि० मु० पु० पा०। (६) तथा चेति। कालान्तरे—पुण० पु० पा०।

अपि च देशान्तरकालान्तरानुषङ्गिण्यस्य(१) नास्तिता यद्ययमेव, नूनमनक्षरमिदमुक्तं, यदयमेव देशान्तरकालान्तरानुषङ्गीति । यदि वा स्वदेशकालवत् कालान्तरदेशान्तरयोरपि नास्तितानुषङ्गेऽस्तित्वप्रस-

दीधितिः ।

द्वितीये, अपि चेति । देशस्यापि(२) क्षणिकत्वात् देशान्तरेत्युक्तम् । अभावसामान्या(३)भिप्रायेणेत्यन्ये । चलसन्तान(४)मभिप्रेत्येत्यपरे । पूर्व(५)मशक्तिरशक्तस्वभावरूपा शङ्किता,

दीधितिटिप्पणी ।

देशस्यापीति । ध्वंसस्य प्रतियोगिदेश एव वृत्तेः प्रतियोगिक्षणोत्तरं तद्भूतलमेव देशान्तरपदेनोक्तम्, न तु प्रतियोग्यत्यन्ताभावाधिकरणं देश इति । यद्यप्येतद्देशस्यापि प्रतियोग्यनधिकरणतयाऽत्रापि कथं ध्वंसस्य वृत्तित्वमिति वाच्यम्, तथापि तन्मतेऽन्यथानुपपत्त्या प्रतियोग्यनधिकरणसमुद्भूताधिकरणजातीयपरम्परायामेव ध्वंसवृत्तित्वाङ्गीकारात् । अभावसामान्येति । नास्तितापदेनात्राभावसामान्यमेवोक्तम्, तथा चात्यन्ताभावस्यैव देशान्तरवृत्तित्वमस्तीति भावः । चलेति । यत्र परमाणुश्चलन्नेव एकभूतलतोऽधिकरणान्तरे द्वितीयक्षणे पतति, तत्र द्वितीयाधिकरणरूपदेशान्तरे द्वितीयक्षणवर्त्तितत्परमाणुरूपध्वंस एवास्तीत्यर्थः, तथा चैतन्मते एकाधिकरणमात्रे यद्वर्तते तदत्र नोक्तमिति भावः । पौनरुक्त्याभावं द-

(१) नुषङ्गिन्यस्य —पा० २ पु० ।

(२) ध्वंसस्य प्रतियोगिसमानदेशत्वे कथमेतदित्यत आह । देशस्यापीति । यद्यपि देशोऽपि क्षणतया कालान्तरमेव, तथापि दैशिककालिकसम्बन्धभेदाद्विवक्षाभेदोऽवसेयः ।—गुणानन्दः ।

(३) अभावसामान्येति । तथा चात्यन्ताभावमादाय देशान्तरवृत्तित्वसमन्वय इति भावः । उक्तप्रणाल्या यथाश्रुतेनैवोपपत्तिरत्रारुचिबीजम् ।—गुणानन्दः ।

(४) चलसन्तानेति । अत्र चलेति पूर्वसम्बद्धदेशेऽभावोपपादकम् । सन्तानेति प्रागभावलाभाय । अत्र च प्रतियोगिसमानदेशत्वेऽपि यत्रोत्तरता प्रतीयते तदपेक्षया देशान्तरत्वोपपत्तिः । यत्र प्राक् प्रतीतिं तदपेक्षया देशान्तरत्वेन ध्वंसोऽपि बोध्यः ।—गुणानन्दः ।

(५) पौनरुक्त्यमाशङ्क्याह । पूर्वमिति । अशक्तस्वभावः, शक्तभेदः ।—गुणानन्दः ।

ङ्गः । अशक्ते(१) कथमस्तु, शक्तेः सत्तालक्षणत्वादिति चेत्, अथ कालान्तरकार्यं प्रति स्वकालेऽशक्तिरसत्त्वम्, (किं वा) स्व(२)कार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वम् ।

---

दीधितिः ।

सम्प्रति शक्तिविरहरूपां(३) तामाशङ्कते, अशक्ते(४) कथमस्तु(५), कालान्तरेऽस्तित्वमिति (शेषः)(६) । कालान्तरेति । कालान्तरीण(७)कार्याशक्तेः स्वकालेपि(८) भावात् स्वकाल इत्युक्तम्, न तु विकल्पान्तर्गतमिति(९) मन्तव्यम् ॥

दीधितिटिप्पणी ।

शयति । पूर्वमिति। ननु कालान्तर इत्यादावित्यर्थः(१०) । अस्तित्वत्यादि । तथा चास्तित्वत्यत्रास्तित्वप्रसङ्ग इत्यस्यानुषङ्गो बोध्य इत्यर्थः । स्वकाल इत्यस्य वैयर्थ्यमाशङ्क्याह । कालान्तरे(ती)ति । वस्तुतः स्वकालेपि तदस्तीत्युक्तं, न तु तस्य किमपि प्रयोजनमिति भावः ॥

---

कल्पलता ।

यदि च घटनास्तिता घटात्मिका देशान्तरकालान्तरयोरनुवर्त्तते, तदा तद्रूपतया घटस्यैवानुवृत्तिः, अथ तत्र नानुवर्त्तते, तदा स्वरूपत एव घटानुवृत्तिरिति

---

(१) अशक्तेः-पुण० पु० पा० । अयं पाठो गुणानन्दकल्पलताकृत्सम्मतः ।

(२) स्वा—कलि० मु० पु० पा० । (३) रूप—कलि० मु० पु० पा० ।

(४) अशक्तेः—कलि० मु० पु० पा० । अयं पाठो गुणानन्दसम्मतः ।

(५) कथमस्त्विति—कलि० मु० पु० पा० ।

(६) अधिकरणाकाङ्क्षां पूरयति । कालान्तर इति । धर्मिनिवेशस्य वैयर्थ्यमाख्यातपञ्चम्यर्थस्य च तथात्वमाशङ्क्याह । अस्तित्वमिति ।—गुणानन्दः ।

(७) कालान्तरीय—कलि० मु० पु० पा० ।

(८) स्वकालेऽपीति । एतच्च स्वकालेऽसत्त्वापादनरूपदोषायोपयोक्ष्यत इति ध्येयम् ।—गुणानन्दः । (९) न्तर्गतं—कलि० मु० पु० पा० ।

(१०) २६४ पृष्ठे १३ पङ्क्तौ मूलमिदं वर्तते ।

कल्पलता ।

घटादेः(१) क्षणिकतां साधयितुमुद्यतस्य नित्यत्वं विभुत्वं च पर्यवसितमित्युभयतःपाशा रज्जुरित्याह । अपि चेति । अयमेव भाव एव । ननु देशान्तरे कालान्तरे वा भावस्याशक्तिं ब्रूमः, तथा च तदुभयत्र कथं सत्त्वमापद्यतामिति(२) शङ्कते । अशक्तेरिति ॥

आद्ये स्वकालेऽप्यसत्त्वप्रसङ्गः, तदानीमपि (तस्य) तादूप्यात् । कालान्तरकार्यं प्रत्येवमेतदि(३)ति चेत्, किमयं मन्त्रपाठः । न हि यो यत्राशक्तः स तदपेक्षया नास्तीति व्यवह्रियते । न हि रासभापेक्षया धूमो जगति नास्ति, तत् कस्य हेतोः, न ह्यशक्तस्य स्वरूपं निवर्तत इति ।

दीधितिः ।

× × ×

दीधितिटिप्पणी ।

× × ×

कल्पलता ।

कालान्तर(४)कार्यं प्रत्यशक्तिरसत्त्वमिति चेद्ब्रूषे, तदा(५) बीजादेः स्वकालेपि कालान्तरकार्यं प्रत्यशक्तिरेव, न हि स्वकाले बीजादि *(६)कालान्तरकार्याणि

(१) कालान्तरकार्यं प्रत्यशक्तिरेव, न हि बीजादि कालान्तरकार्याणि करोतीति स्वकालेपि बीजादेरसत्त्वप्रसङ्ग इति प्रथमविकल्पार्थः ॥ स्वकालेऽपि—कालि० मु० पु० पा० ।

(२) मापद्यत इति—पा० २ पु० । (३) त्येवमेवे—पुण० पु० पा० ।

(४) कालान्तरे—पुण० पु० पा० । (५) चेद्ब्रूषे, यदा—पुण० पु० पा० ।

(६) एतत्पुष्पिकामारभ्याग्रिमपुष्पिकाचिन्हपर्यन्तो ग्रन्थः २ पु० नास्ति ।

कल्पलता।

करोतीति स्वकालेऽपि बीजादेरसत्त्वप्रसङ्ग इति प्रथमविकल्पार्थः(१)। तदानीमिति। तदानीमपि स्वकालेऽपि। तस्य बीजादेः। ताद्रूप्यात् कार्यं प्रत्यशक्तत्वादित्यर्थः(२)। (एवमेतदिति।) एतत् बीजादि। एवं स्वकालेपि* कालान्तरकार्यं प्रत्यसदेवेत्यर्थः। किमयमिति। सदपि किञ्चिदपेक्षयाऽसदिति(३) विरोधपरिहारो मन्त्रपाठं(४) विना नोपपद्यत इति भावः। व्यवहारविरोधमाह। न हीति। व्यवहारविरोधमेव सोपपत्तिकमाह। न हि रासभेति॥

द्वितीये तु यदि कालान्तराधाराऽशक्तिः, कथं

दीधितिः।

स्वकार्यं प्रति कालान्तरानिरूपिता(तस्या)ऽशक्तिः कालान्तरनिष्ठा(५) तन्निष्ठा(६) वा। आद्यं दूषयति। यदीति। कथमिति। तस्य त्वया(७) क्षणिकत्वाङ्गीकारादिति भावः।

दीधितिटिप्पणी।

कथमिति मूलम्, तेन तस्य तदात्मकत्वाङ्गीकारादित्यर्थः। तस्य त्वयेति। इदानीं वृत्तेः क्षणिकस्य कालान्तरवृत्तित्वरूपत्वा-

(१) स्वकालेऽपि तस्य बीजादेस्ताद्रूप्यात् कालान्तरकार्यं प्रत्यशक्तत्वादित्यर्थः—इति० पु० पु० पा०।

(२) तदानीमपि स्वकालेऽपि—इति० पु० पु० पा०।

(३) सदपेक्षया असदिति—पु० पु० पा०। (४) विरोधे मन्त्रपाठं—पु० पु० पा०।

(५) कालान्तरस्य [illegible]। कालान्तरनिष्ठत्वादि।—गुणानन्दः।

(६) [illegible]।

(७) [illegible]—गुणानन्दः।

तदात्मिका । तदाधारा चेत्, तदैवासत्त्वप्रसङ्गः, कालान्तरे तु विपर्ययः । तस्मात्

विधिरात्माऽस्य भावस्य(१) निषेधस्तु ततः परः ।
सोऽपि चात्मेति कः प्रेक्षः शृण्वन्नपि न लज्जते ॥

दीधितिः ।

द्वितीये त्वाह । तदे(२)त्यादि । तदात्मिकाया(३) अशक्तेस्तत्काल एव सत्त्वादिति भावः । अभेदे कथमाधाराधेयभाव इत्यपि द्रष्टव्यम् । तदाधारेत्यस्य तत्कालाधारे(४)त्यर्थ इति (तु) केचित् । विपर्ययः असत्त्वव्यतिरेकप्रसङ्गः । उपसंहरति । तस्मादिति । आत्मा स्वरूपम् । अस्य(५) निषेध इत्यन्वयः ॥

दीधितिटिप्पणी ।

भावादित्यर्थः । तदात्मिकाया इति । अशक्तेरसत्त्वरूपतया तत्कालेऽसत्त्वापादनं बोध्यम् । अन्तिमदोषोद्धारिणां मतमाह । तदाधारेत्यस्येति । विपर्यय इति । असत्त्वस्य प्रतियोग्याधारकतया कालान्तरे प्रतियोग्यसत्त्वेनासत्त्वस्याप्यभावप्रसङ्ग इत्यर्थः । इत्यन्वय इति । तथा च भावस्यात्मा विधिः, अस्य निषेधस्ततः पर इत्यन्वय इत्यर्थः ॥

कल्पलता ।

स्वकार्यमपि प्रति(६) कालान्तरे(ऽपि) अशक्तिरसत्त्वमिति द्वितीयं पक्षं दूषयति । यदीति । कथं तदात्मिका कथं प्रतियोग्यात्मिका, प्रतियोगिनः प्रथम(७)-

(१) विधिरात्माऽभावस्य—पुण० पु० पा० । (२) तदैवे—पुण० पु० पा० ।

(३) एवकारार्थानुपपत्तिमाशङ्क्याह । तदात्मिकाया इति । तत्काल एव, क्षणिकत्वेनाभिमतभावकाल एव ।—गुणानन्दः ।

(४) तत्कालाधारेति । तथा च कालान्तरनिष्ठा तत्कालनिष्ठा वेति विकल्पोऽवसेयः । अत्र स्वनिष्ठत्वविकल्पानिरसने न्यूनत्वमरुचिबीजम् ।—गुणानन्दः ।

(५) केवलाधिकरणस्य अभावतामुपगच्छतां को विरोध इत्यत आह । अस्य निषेध इति । तस्य ध्वंस इत्यर्थः ।—गुणानन्दः ।

(६) स्वकार्यमपि—पा० २ पु० । (७) प्रतियोगिनः—कालि० मु० पु० पा० ।

कल्पलता ।

क्षणमात्रवृत्तितया द्वितीय(१)क्षणेऽसत्त्वादित्यर्थः । तदाधारा चेदिति । प्रतियोगिकालाधारेत्यर्थः । कालान्तर इति । स्वकालाधारैव चे(२)दशक्तिरसत्त्वं, तदा स्वकालातिरिक्ते काले भावस्य सत्त्वप्रसङ्ग इति स्थैर्य्यमेवावर्त्तत इति भावः । प्रथमविकल्पभङ्ग(३)मुपसंहरति । तस्मादिति । (स्व)भावाभावयोर्विधायक(निषेधक)प्रमाणगोचरयोस्तादात्म्यं सर्वथाऽनुपपन्नमित्यर्थः । प्रकृष्टा ईक्षा प्रेक्षा, तया व्यवहरतीति प्रेक्षः ॥

---

अस्तु तर्हि भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति वाक्यस्य(४) सोपाख्येति शेषः । नन्वयमपि क्षणभ-

---

दीधितिः ।

द्वितीयं(५) पक्षं तदीयग्रन्थाविरुद्धं व्युत्पादयन्नाशङ्कते । अस्तु तर्हीति । शेषः अध्याहरणीयो भागः, तथा च भावस्वरूपातिरिक्ता सोपाख्या निवृत्तिर्नास्तीति पर्यवसितवाक्यस्य निरुपाख्या निवृत्तिरिति तात्पर्यम् । (एतद्दूषयति । नन्वयमपीति ।

दीधितिटिप्पणी ।

द्वितीयं पक्षम् निरुपाख्यत्वरूपम् । तदीयग्रन्थाविरुद्धमिति । भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति तदीयग्रन्थपङ्क्तिः,निवृत्तेरलीकत्वाङ्गीकारे एतद्वाक्यं विरुध्यते, भावातिरिक्तस्यैवालीकत्वात्, अत एतद्ग्रन्थं सोपाख्यपदाध्याहारेणाविरुद्धं सम्पादयन्निदमुच्यत(६) इत्यर्थः । तदीयग्रन्थत एव इदं कथं लब्धं, येन तन्मतसिद्धमिति वाच्यमत आह । इति तात्पर्यमिति । न क्वापीत्युक्ते कथं तस्य सार्वत्रिक-

---

( १ ) द्वितीये—कलि० मु० पु० पा० । ( २ ) स्वकालाकारैरन्य—कलि० मु० पु० पा० ।
( ३ ) प्रथमविकल्पप्रसङ्ग—कलि० मु० पु० पा० । प्रथमविकल्पस्तु नाशस्य प्रतियोगितादात्म्यरूपो बोध्यः । ( ४ ) नास्तीत्यस्य—पाठः । ( ५ ) द्वितीयम् , निरुपाख्यत्वरूपम् ।-गुणानन्दः
( ६ ) सम्पादयित्वेदमुच्यत इति पाठो युक्तः प्रतिभाति ।

ङ्गस्योद्गारः(१), स च(२) कफोणिगुडायितो वर्त्तते। भवतु वा निवृत्तिरसमर्था, तथाप्यहेतुकत्वे तस्याः किमायातम्। तुच्छस्य कीदृशं जन्मेति चेत्, यादृशः कालदेशनियमः। सोऽपि तस्य कीदृश इति चेत्, एवं(३) तर्हि न घट(४)निवृत्तिः क्वापि कदापि वा(५) सर्वत्रैव सदैव वेति(६) स्यात्(७)।

दीधितिः।

निरुपाख्या चेन्निवृत्तिरहेतुका तदोत्पन्नमात्रस्यैव भावस्य सा भवेदिति क्षणभङ्गसिद्धिरिति तवाभिप्रायः।) स चेति। निरुपाख्यत्वमेवासिद्धमिति भावः। (कफोणिः कूर्परः।) सोऽपीति। तस्य तुच्छस्य, घटनिवृत्तेर्देशकालसम्बन्धनियमो नास्तीत्यर्थः। घटनिवृत्तेर्देश(८)कालसम्बन्धनियमनिषेधो हि किं विशेषणस्य सम्बन्धांशस्य(९) निषेधः, किं वा विशेष्यस्य नियमांशस्य। आद्यं विवृणोति। न घटेत्यादि(१०)। द्वितीये त्वाह। सर्वत्रैवेति। घटनिवृत्तिरित्यनुषज्यते॥

दीधितिटिप्पणी।

त्वम्, येन सर्वत्रैवेत्यादि सङ्गतं स्यादतो विकल्प्य सङ्गमयति। घटनिवृत्तेरिति। किं वेति निषेध इत्यन्वयि॥

(१) स्योद्गारः—पाठः। (२) स तु—पा० २ पु०। (३) एवं च—पा० २ पु०।
(४) घटादि—पुण० पु० पा०। (५) कदापि—कलि० मु० पु० पा०।
(६) सर्वदैवेति वा—पा० २ पु०।
(७) अस्तु तर्हीति। तदपि निवृत्तेर्नानादेशकालानुगमादलीकत्वमनलीकस्य क्षणिकत्वसिद्धौ स्यात्, तदेव त्वसिद्धमित्याह। नन्वयमपीति। सिद्धमभ्युपेत्याप्रयोजकत्वमाह। भवत्विति। तुच्छस्येति। निर्धर्मकस्याद्यकालसम्बन्धरूपधर्मासम्भव इत्यर्थः। यादृश इति। अलीकस्य नियतदेशकालसम्बन्धवज्जन्माप्यस्त्वित्यर्थः। सोऽपीति। अलीकत्वादेव देशकालनियमोऽपि तुच्छस्य नास्तीत्यर्थः। निवृत्तेर्देशकालनियमस्य विशिष्टस्याभावो यदि देशकालसम्बन्धस्य विशेषणस्याभावात्, तत्राह। न घटनिवृत्तिरिति। अथ तत्सम्बन्धसत्त्वेऽपि विशेष्यनियमाभावात्, तत्राह। सर्वत्रेति।—भगीरथठक्कुरः। (८) घटनिवृत्तिदेश—पुण० पु० पा०।
(९) सम्बन्धान्तस्य—पुण० पु० पा०। (१०) न घट इत्यादि—पा० २ पु०।

कल्पलता।

निरुपाख्यत्वं वेति द्वितीयं विकल्पमुत्थाप्य निराकरोति। अस्त्विति। भावस्वरूपातिरिक्ता(१) निवृत्तिर्नास्तीति कीर्तिवाक्यं सोपाख्येति शेषं दत्त्वा प्रज्ञाकरेण(२) व्याख्यातं, तेन निरुपाख्या(३) निवृत्तिरित्यर्थः पर्यवस्यतीत्यभिप्रायः। एतद्दूषयति। नन्वयमपीति। निरुपाख्या चेन्निवृत्तिरहेतुका तदोत्पन्नमात्रस्यैव भावस्य सा भवेदिति क्षणभङ्गसिद्धिरिति तवाभिप्रायः, स च निवृत्तेः सोपाख्यत्वसाधनात् पूर्वमेव निरस्त इति भावः। कफोणिः कूर्परः। तत्पर्यन्त(४)गतस्य गुडस्य यथा लेहनमनुपपन्नं, (तथा) बहुधा निरस्तस्य क्षणभङ्गस्य पुनरवष्टम्भो(५)ऽनुपपन्न इत्यर्थः। भवतु वेति। निवृत्तेरलीकत्वं ध्रुवभावित्वम्(६), तेन(७) तस्या अहेतुकत्वसाधनमनुपपन्नमिति भावः। तुच्छत्वादेवाहेतुकत्व(८)मिति शङ्कते। तुच्छस्येति। यथा वस्तुनो जन्म देशकालादि(९)नियमगम्यं, तथा तुच्छस्यापीति परिहरति। यादृश इति। सोऽपि नियमः। तस्य तुच्छस्य। एवं तर्हीति। तुच्छाया निवृत्तेरुत्पादाभावादि(१०)त्यर्थः, तथा च क्षणिक(त्व)सिद्ध्यर्थं विनाशस्याहेतुकत्वं ध्रुवभावित्वेनाभिमतं नित्यत्वमेव भावस्य साधयेदिति शुद्धा बुद्धिरिति भावः॥

(१) भावस्वरूपातिरिक्ति—पा० २ पु०। (२) प्रज्ञाकोरण—पा० २ पु०।
(३) निरुपाख्य—पा० २ पु०। (४) कफोणीति। कफोणिपर्यन्तं—पुण० पु० पा०।
(५) पुनरारम्भो—कालि० मु० पु० पा०।
(६) भवेदिति तवाभिप्रायः, स च निवृत्तेः सोपाख्यत्वसाधनात्—पा० २ पु०।
(७) तेन च—पुण० पु० पा०। (८) वाहेतुक—पा० २ पु०।
(९) जन्म कालादि—कालि० मु० पु० पा०। (१०) भाव इ—कालि० मु० पु० पा०।

भवतु(१) प्रथम एवेति चेत्, सोऽयं भावनास्तितास्वरूपप्रतिषेधो वा, भावप्रतिषेधेन निवृत्ति(२)स्व-

दीधितिः ।

प्रथमः घटनिवृत्तिदेशकालसम्बन्धनिषेधः । सोऽपि किं देशकालसम्बन्धस्य(३) निषेधः, किं वा घटनिवृत्तेः । नाद्यः, निवृत्तेर्देशकालासम्बन्धित्वेनाविरोधित्वात् घटस्य सार्वत्रिकत्वसदातनत्वप्रसङ्गात्(४)। द्वितीयोपि(५) निवृत्तेर्निषेधो (वा), घटस्य वेति विकल्प्य दूषयति । सोऽयमिति । भावेति विकल्पविषयस्य(६) गुणत्वेनाभिधानमितरफलकत्वसूचनाय । निवृत्ति(७)स्व(८)रूपानिरुक्तिपर्यवसायी भावप्रतिषेधो वेत्यर्थः । निवृत्तिस्व(९)रूपमत्यन्तासत्प्रतियोगिकत्वम् । भावः देशकालयोः सम्बन्धः । तत्प्रतिषेधेन निवृत्तिस्व(१०)रूपमलीकत्वं

दीधितिटिप्पणी ।

विकल्पविषयस्येति । द्वितीयविकल्पे भावप्रतिषेधस्य विषयतया तस्य प्राधान्येन दर्शनमुचितम्, न गौणत्वसूचकतृतीयान्ततया,(तथा) लिखनं च इदं न मुख्यफलं, किं तु इतरदेवास्य फलमस्तीतिबोधार्थमित्यर्थः । इतरफलमेवाह । निवृत्ति(स्व)रूपेति । तादृशपर्यवसानमेवाभिधानफलमित्यर्थः । तत्प्रतिषेधेनेति । तस्य देशकालसम्बन्धस्य प्रतिषे-

(१) अस्तु—पाठः । (२) भावस्वरूपनिषेधेन नास्तिता—पा० २ पु० ।
(३) सम्बन्ध-पा० २ पु० । (४) प्रसङ्ग इति-कलि० मु० पु० पा० ।
(५) द्वितीयमपि-कलि० मु० पु० पा० ।
(६) भावप्रतिषेधेनेति तृतीयार्थमुपपादयन्नाह । विकल्पविषयस्येति । घटनिवृत्तिर्नास्तीति निषेधवाक्यस्य निषेधप्रतियोगित्वेन घटे तात्पर्यसूचनायेत्यर्थः । यद्वा गुणत्वेन, कारणत्वेन, इतरफलकत्वम्, पूर्वोक्तनिषेधवाक्यस्यात्यन्तासत्प्रतियोगिकत्वरूपनिवृत्तिस्वरूपबोधफलकत्वम्, तत्सूचनाय। —गुणानन्दः ।
(७) विकल्पेत्यादिना वक्राभिधानस्य प्रयोजनमुक्त्वा तस्य तात्पर्यविषयीभूतार्थमाह । निवृत्तीति ।—गुणानन्दः ।
(८) निवृत्ति-कलि० मु० पु० पा० । (९) निवृत्ति-कलि० मु० पु० पा० ।
(१०) निवृत्ति-कलि० मु० पु० पा० ।

स्वरूपनिरुक्तिर्वेति । आद्ये भावस्यैव(१) सदातनत्वप्रसङ्गः । द्वितीये (तु) निवृत्तेरेवेति ।

दीधितिः ।

निरूच्यत(२) इत्यर्थस्तु न युक्तः, वक्ष्यमाणसदातनत्वप्रसङ्गासङ्गतेः । भावप्रतिषेधेन काचित्कत्व(३)कादाचित्कत्व(४)प्रतिषेधेन निवृत्तिस्वरूप(५)निरुक्तिरि(त्यर्थ इ)त्यन्ये । तच्चिन्त्यम् । प्रथमपक्षस्य काचित्कत्वादि(६)प्रतिषेधरूपत्वाभावात् । सदातनत्वेति सार्वत्रिकत्वस्याप्युपलक्षणम्(७) । निवृत्तेरिति । सदातनत्वेत्यादिकमनुषज्यते ॥

दीधितिटिप्पणी ।

धेऽलीकत्वमेवार्थसिद्धम् । वक्ष्यमाणेति । निवृत्तेरेवेत्यनेन यन्निवृत्तेः सदातनत्वं वक्ष्यमाणं तस्यासङ्गतेः, तस्य देशकालसम्बन्धाभावे कथं सर्वकालवृत्तित्वरूपं सदातनत्वमापादितमित्यर्थः । काचित्कत्वेति । तथा च निवृत्तेः काचित्कत्वादिप्रतिषेधेनार्थात् सार्वत्रिकत्वमेवेति, तथा चाग्रे तदापादनमविरुद्धमिति भावः । प्रथमपक्षस्येति । भवतु प्रथम एवेत्यादिना न घटनिवृत्तिः क्वापि कदापीति प्रथमपक्षस्यैवायं विकल्पोऽवसीयते, तत्र च घटनिवृत्तेः सार्वत्रिकत्वं सार्वकालिकत्वं च प्रसिद्धम्, न तु कादाचित्कत्वादि, अतस्तद्विकल्पने तन्निद्धनिषेधोऽनुपपन्न इत्यर्थः ? ॥

कल्पलता ।

एतदेव विभावयितुं शङ्कते । भवत्विति(८) । प्रथम इति । न क्वापि भावनिवृत्तिरिति पक्ष इत्यर्थः । सोऽयमिति । घटनिवृत्तिः क्वापि नास्तीति पक्ष इत्यर्थः ।

(१) भावस्य—पा० २ पु० । (२) निरूप्यत- कालि० मु० पु० पा० ।
(३) क्वाचित्कत्वम्, किञ्चिद्देशमात्रवृत्तित्वम् । (४) कादाचित्कत्वम्, किञ्चित्कालमात्रवृत्तित्वम् ।
(५) निवृत्तिस्वरूपम्, सर्वदेशकालवृत्तित्वम् ।
(६) प्रथमपक्षस्य कादाचित्कत्वादि—पुण० पु० पा० । (७) लक्षकम्–पुण० पु० पा० ।
(८) शङ्कते । अस्त्विति—पुण० पु० पा० ।

कल्पलता ।

नास्तितास्वरूपनिरुक्तिरिति(१) । भावस्य नास्तिता न (न) काचित्की न वा कादाचित्कीति(२) नास्तिताया एव स्वरूपं निरूच्यत इत्यर्थः । आद्य इति । निवृत्तेरेवाभावपक्ष इत्यर्थः । द्वितीय इति । निवृत्तेः सार्वत्रिकत्वसार्वदिकत्व(३)पक्ष इत्यर्थः । एवं सति कदाचिदपि(४) भावो न स्यादिति भावः ॥

---

अस्तु तर्हि तत्कार्यत्वमेव ध्रुवभावित्वम्। न। तस्यापि कार्य इति पक्षे विरोधात्, तस्यैव कार्य इत्यसिद्धेः ।

---

दीधितिः ।

तस्यापी(५)त्यपिशब्देन यदि तदुत्तरभावि समुच्चेयं, तत्राह । विरोधादिति। असिद्धेरिति ।अप्रसिद्धेरि(६)त्यर्थः । अथा(७)पिना हेत्वन्तरमात्रं समुच्चेयम्, अविवक्षितविशेषं तत्कार्यत्व-

दीधितिटिप्पणी ।

ननु तस्यापीति पक्षेऽविरोध एव, कुतः, अपिः कारणतः पूर्वभाविव्यक्तिसमुच्चये,(तस्य च) क्षणिकत्वपक्षेऽपि निर्वाहेण प्रतियोग्युत्तरभाविभावानपेक्षत्वरूपसाध्यस्य तत्कार्यत्वरूपध्रुवभावित्वरूपसाधनेन सामानाधिकरण्यसम्भवादत आह। तस्यापीत्यपिशब्देन यदीति। अथापिनेति । तथा चोक्तरूपेण सामानाधिकरण्यसत्त्वादविरोध इत्यर्थः। अविवक्षितेति । विशेषः तदुत्तरभावितदुत्तराभावि(त्व)रूपः,

---

(१) नास्तितास्वरूपनिरुक्तिर्वेति–पुण० पु० पा०। (२) न कादाचित्कीति–कलि० मु० पु० पा० ।
(३) सार्वत्रिकत्वसार्वत्रिकत्व—पा० २ पु० । (४) कदापि—कलि० मु० पु० पा० ।

(५) क्रियाजन्यविभागे तदितरकार्यत्वे सति तत्कार्यत्वमस्ति, अस्ति च तदुत्तरभाविहेत्वनपेक्षत्वमिति विरोधासङ्गतेराह । तस्यापीत्यादि ।—गुणानन्दः ।

(६) हेतोरप्रसिद्धत्वे स्वरूपासिद्ध्यसम्भवादाह । अप्रसिद्धेरिति ।—गुणानन्दः ।

(७) वक्ष्यमाणप्रकारद्वयस्य मूले साक्षादनभिधानान्न्यूनत्वापत्तिमाशङ्क्याभिप्रायविषयपरतयाऽवतारयति । अथेत्यादि । हेत्वन्तरमात्रम्, न तु स्वोत्तरभावित्वेन विशेषितं येन विरोध इति भावः । हेत्वन्तरसमुच्चये वैयर्थ्यमाशङ्क्याह । अविवक्षितेति । विशेषौ, समुच्चयव्यवच्छेदौ । इत्याशयेनेत्यनेन वक्ष्यमाणयुक्त्याऽस्यानुकूलतर्कत्वं सूचितम् ।—गुणानन्दः ।

यत् किञ्चिदुत्पन्नमात्रस्य कार्यम्, स एव तस्य

दीधितिः।

मात्रं वा हेतुरित्याशयेना(१)शङ्कते। यत्किञ्चिदिति। तद्व्यक्ति(२)-कार्यत्वस्य सन्दिग्धव्यतिरेकतया(३) तत्सामग्रीकार्यत्वं हेतू-कार्यं, परामर्शनीया(४) च तदा(५) तद्व्यक्तिसामग्री, तत्र च(६)

दीधितिटिप्पणी।

तत्कार्यत्वस्यैव हेतूकृतत्वात् तद्विहाय यस्याः सामग्र्या इत्येतद्विवरणं किमर्थमतः सङ्गत्या दर्शयति। तद्व्यक्तीति। कारणव्यक्तीत्यर्थः। सन्दिग्धव्यतिरेकतया सन्दिग्धव्यभिचारतया। तत्पदस्य पूर्वं तत्कारणव्यक्तेरेव वाचकतया यत्र कारणव्यक्तिसामग्रीकार्यत्वं तत्र तत्कारणव्यक्तेरुत्तरभाविभावानपेक्षत्वमित्यर्थः स्यात्, तथा च प्रकृते कार्यस्वरूपनाशपक्षे कारणसामग्रीकार्यत्वेन कारणव्यक्तेरुत्तरभाविभावानपेक्षत्वं साधनीयं, तथा च कारणसामग्रीजन्यकारणरूपव्यक्तेः क्षणद्वयाद्यवस्थायित्वेऽप्युपपन्नं, तादृशसामग्रीकार्यस्य कारणनाशव्यक्तेः कारणोत्तरभाव्यनपेक्षत्वस्य एकमात्रक्षणानवस्थायित्वेऽप्युपपत्तेरत आह। परामर्शनीयेति। तदा तच्छब्देन। तदतिरिक्तसाधनानपेक्षमित्यत्र तच्छब्देन व्यक्तिसामग्री उक्ता, अतस्तद्व्यक्तिसामग्रीकार्यस्य कारणव्यक्तेर्नाशस्य तत्सामग्र्युत्तरभाव्यनपेक्षत्वं सामग्रीनिविष्टकारणव्यक्तेरेकक्षणावस्थायित्व एव भवति, सामग्र्यनन्तरमेव तन्नाशादिति भावः। तत्र चेति। उक्तव्याप्तिर्मया अङ्गीक्रियत एव, किं तु तद्व्यक्ति(नाश)रूपपक्षे तद्व्यक्तिसामग्रीजन्यत्वरूप-

(१) शयेन—पा० २ पु०।

(२) तद्व्यक्तीत्यादि। एतत्प्रतियोगिको ध्वंसः नैतदुत्तरभाविहेत्वपेक्षः इति साध्ये तद्व्यक्तिकार्यत्वं सन्दिग्धव्यतिरेकतया सन्दिग्धव्यभिचारतया न हेतुरिति तत्सामग्रीकार्यत्वं हेतूकार्यम्, तत्र तत्पदेन यस्य ध्वंसस्तत्परामर्शे विरोधात् तदव्यवहितोत्तरक्षणोत्पत्तिकं कार्यमेव परामर्शनीयम्, तेन तदव्यवहितोत्तरोत्पत्तिकसामग्रीजन्यत्वादिति फलति, अत्र व्याप्तिरस्ति, न तु ध्वंसे पक्षे हेतोः सत्त्वमित्यर्थः।—गुणानन्दः।

(३) व्यभिचारतया—पुण० पु० पा०। व्यभिचारश्चैतदुत्तरवर्तिहेत्वनपेक्षत्वनिरूपितः सन्दिग्धः।

(४) परामर्षणीया-कालि० मु० पु० पा०। (५) तच्छब्देन।

(६) तत्र कालि० मु० पु० पा०।

नाश इति चेत्, तर्हि यस्याः सामग्र्या यत् कार्यं तत् तदति(१)रिक्तानपेक्षमिति साधनार्थः, तमिमं को नाम नानुमन्यते(२)। कार्यमेव विनाश इति तु केनानुरोधेन

दीधितिः।

व्याप्तिमनुमन्यामहे, न तु पक्षधर्मतामित्याह, तर्हीत्यादिना। यस्याः व्यक्तेः(३)। तदतिरिक्तेति तदुत्तरभाविपरम्। यया सामग्र्या यज्जन्यत इत्यर्थेऽप्येवमेव। केचित्तु यथाश्रुतस्यैतस्य तस्यापि(४) कार्य इत्यादेश्चानुरोधात्त(५)दितरकारणानपेक्षत्वमेवाहेतुकत्वं वर्णयन्ति, तच्च पुञ्जात्पुञ्जोत्पत्तिं वदतो वैनाशिकस्य(६) क्वचिदपि वस्तुनि न प्रसिद्धं,(७)स्फुटतरविरोधव्य-

दीधितिटिप्पणी।

हेतुमत्त्वं नाङ्गीक्रियत इति पक्षधर्मताभावात् कथं नाशस्य क्षणिकत्वसिद्धिरित्यर्थः। तद्व्यक्तेः सामग्रीति शब्दतोऽर्थः कथं घटतामतो यत्पदस्य व्यक्तिपरत्वमाह। यस्या इति। इदं पुनरत्र बोध्यम्। यत्पदस्य व्यक्तिपरत्वे तदतिरिक्तेत्यत्र तत्पदस्य सामग्रीपरामर्शकत्वानुपपत्तिरिति। ननु तत्पदस्य सामग्र्यपरामर्शकत्वात् यस्या इति सामग्रीविशेषणमेव युक्तं, तथा सामानाधिकरण्ये यया सामग्र्या यज्जन्यत इत्येवार्थोऽस्त्वित्यत आह। ययेति। तदा च सामग्रीपरामर्शानुपपत्त्या इत्यर्थः। एवमेव तद्व्यक्तिसामग्रीमादायैव व्याख्या इति। यथाश्रुतस्येति। एतस्य तदतिरिक्तसाधनानपेक्षित्वस्य। तस्यापीत्यत्रापिना सामान्यतस्तदितरकारणमात्रस्यैव समुच्चयावगतेः। न प्रसिद्धमिति। सर्वस्यैव कार्यस्य तत्कारणव्यक्तीतरस्य पुञ्जप्रविष्टकारणान्तरस्यापेक्षणादित्यर्थः। स्फुटतरेति। तदा

(१) तद—कलि० मु० पु० पा०। (२) नानुमनुते—पाठः।

(३) यस्याः व्यक्तेः—नास्ति पा० २ पु०।

(४) यथाश्रुतस्यैतस्यापि—कलि० मु० पु० पा०। (५) रोधा—कलि० मु० पु० पा०।

(६) तेषां मते पुञ्जघटकमेकमुपादानमितरन्निमित्तमिति भावः।

(७) प्रसिद्ध—कलि० मु० पु० पा०। अप्रसिद्धमित्यत्र उपेक्षितमित्यमेतनमनुषज्यते। —गुणानन्दः।

व्यवहर्तव्यम्, किं तद्विरहवत्त्वात् कार्यस्य, किं वा तद्विरहरूपत्वात्(१) ।

दीधितिः ।

भिचाराणां च तत्तादात्म्यतत्कार्यत्वतद्व्यापकत्वानां तत्र हेतुत्वाशङ्कनमनुचितमित्युपेक्षितम् । व्यवहर्त्तव्यम् स्वीकर्त्तव्यम् । तद्विरहरूपत्वादिति । तत्कार्य(२)स्तद्विरह(३)स्तद्विनाश इत्युभयसम्प्रतिपन्नत्वादिति भावः ।

दीधितिटिप्पणी ।

त्मनः सुतरां तदतिरिक्तानपेक्षत्वं अस्तीत्यर्थः । पूर्वं नानुमन्यत इति लिखनादाह । व्यवहर्तव्यमिति । तत्कार्य इति । तत्कार्यस्वरूपस्तद्विरहः स तद्विनाश इत्युभयमतसिद्धत्वेन तद्विरहरूपत्वं कार्यस्य सुतरामेवेत्यर्थः । अत्र चात्यन्ताभावादौ व्यभिचारवारणाय तत्कार्यत्वे सति तद्विरहरूपत्वमित्येवंरूपेण ॥

कल्पलता ।

तृतीयं ध्रुवभावित्वं दूषयितुमाह । अस्त्विति । एतद्धटध्वंस(४) एतदव्यवहितोत्तरक्षणोत्पत्तिकः, एतत्कार्यत्वात्, एतद्धट(स्व)रूपवदिति तावत्तव विवक्षितम्,(तदा) तत्र तत्कार्यत्वादित्यस्य तस्यापि(५) कार्यत्वादित्यर्थेऽपिशब्दे(न) कारणान्तरसमुच्चयश्चेत्त(व विवक्षितस्त)दा तद्विलम्बेन ध्वंसविलम्बे(न) तदुत्पत्त्यव्यवहितोत्तरक्षणोत्पत्तिकत्वं विरुद्धम्, तन्मात्र-

(१) रूपत्वात् कार्यस्य—पा० २ पु० ।

(२) सम्भवदुक्तिकत्वं रचयति । तत्कार्य इति । तत्कार्यो यस्तद्विरहः, स तावत्तद्विनाश इति सर्वानुमतम्, तथा च तत्कार्यत्वावच्छेदेनैव तद्विनाशत्वामिति भावः ।—गुणानन्दः ।

(३) तत्कार्यतद्विरह-पुण० पु० पा० । (४) एतत्पटध्वंसः—पाठः ।

(५) तत्कार्यत्वादिति तस्यापि—कलि० मु० पु० पा० ।

कल्पलता ।

कार्यत्वं च हेतुः स्वरूपासिद्ध इत्यर्थः । यद्वा एतद्धट-ध्वंस एतन्मात्रहेतुकः, तत्कार्यत्वादित्यत्र विरोधासिद्धी विकल्पतो(१) द्रष्टव्ये । असिद्धेरिति । मुद्गरादेरपि घटनाशं प्रति कारणत्वदर्शनादित्यर्थः । ननु तस्यापि वा तस्यैव वेति न(२) समुच्चयो न वा नियमो विवक्षितः, किन्तूत्पन्नमात्रस्य यत्कार्यं तदेव तस्य विनाश इति मम मतम्, तदतिरिक्ते ध्वंसे मानाभावादिति शङ्कते । यत्किञ्चिदिति । तर्हि(३) कार्यं कारणातिरिक्तानपेक्षमित्यहेतुकत्वार्थः, त(द)त्र च(४) कारणपदेन यदि सामग्री विवक्षिता, तदा सिद्धसाधनम् । तदेकदेशश्चेत्, तदा बाधः(५),

'न किञ्चिदेकमेकस्मात्(६) सामग्र्याः सर्वसम्भवः।'

इति तवाभ्युपगमात् । एवमभ्युपगमे(७)ऽपसिद्धान्तो माभूदत आह । (८)को नाम नानुमन्यत इति। कार्यमेवेति ।(९) कार्यमात्रस्य विनाशित्वाभ्युपगमो मम प्रौढिवादेनेति भावः । कार्य(स्य) कारणविनाशात्मकत्व(१०)व्यवहारबीजं विकल्पयति । किमिति । तद्विरहवत्त्वात् कारणान्योन्याभाव(व)त्वात् । तद्विरहरूपत्वात् कारणविरहात्मकत्वात्, कार्यस्येत्यर्थः ॥

---

(१) विकल्पिते—कलि० मु० पु० पा० । (२) वेति—पा० २ पु०।

(३) दिति । न हि—पुण० पु० पा० । (४) तदत्र—कलि० मु० पु० पा० ।

(५) वाधः, कार्यस्य कारणविनाशात्मकञ्च—पा० २ पु० ।

(६) देकमकस्माद्—पुण० पु० पा० । (७) भ्युपगमो—कलि० मु० पु० पा० ।

(८) आह । कार्यमेवेति—पुण० पु० पा० ।

(९) कार्यमेवेति ।—नास्ति पा० पुण० पु० । (१०) त्मक—पा० २ पु० ।

न तावत् पूर्वः, सहकारिष्वपि तथाप्रसङ्गात् (१), विरहस्वरूपानिरुक्तेश्च(२)। न द्वितीयः, स हि कार्यकाले कारणस्य योग्यानुपलम्भनियमाद्वा भवेत्, व्यवहारानुरोधाद्वा, अतिरिक्तविनाशे बाधकानुरोधाद्वेति।

दीधितिः।

विरहस्व(३)रूपेति। विरहो यद्यभावः, स भवतामलीक इति कथं तद्वत्ता वस्तुनः कार्यस्य, सदसतोः संसर्गनिषेधात्। अथाधिकरणस्वरूपः, कथं तेनैव तद्वत्ताऽसाधारण्यं चे(४)त्यर्थः। स हीति। सः द्वितीयः, कार्यस्य तद्विरहरूपत्व(५)रूपः॥

दीधितिटिप्पणी।

असाधारण्यञ्चेति। तद्विरहरूपत्वेन तन्नाशत्वसाधने हेतोः पक्षमात्रवृत्तितया सपक्षादिव्यावृत्तत्वमित्यर्थः। स इत्यनेन द्वितीयस्य तद्विरहरूपत्वस्य परामर्शान्नपुंसकता स्यात्, अत आह। स इति॥

कल्पलता।

तथाप्रसङ्गादिति(६)। वेमादावपि(७) तन्तुविनाशत्वव्यवहारप्रसङ्गात्(८), तदन्योन्याभाववत्त्वस्य (तत्र)

(१) तथाभावप्रसङ्गात्—पा० २ पु०। तथाव्यवहारप्रसङ्गात्—पुण० पु० पा०। सहकारिष्वपीति मूलम्, तेषामपि तदत्यन्ताभाववत्त्वादिति भावः। अत्र सहकारिपदं तद्विरहवदुदासीनस्याप्युपलक्षणमिति ध्येयम्—गुणानन्दः।

(२) विरहरूपानिरुक्तेश्च—पा० २ पु०। विरहस्वरूपानिरुक्तेः—पुण० पु० पा०।

(३) विरह—कलि० मु० पु० पा०।

(४) ऽसाधारण्यं वे- कलि० मु० पु० पा०। ननु प्रतियोगित्वादेः प्रतियोग्यात्मकत्वेपि यथा तेन रूपेण तद्वत्ता, तथा प्रकृतेऽपि स्यादित्यनुशयादाह। असाधारण्यं चेति। अधिकरणात्मकत्वे तद्विरहस्य तद्विरहवत्त्वं तद्व्यक्तित्वपर्यवसन्नमेव, तच्च कालान्तरे तद्विनाशत्वेनोभयसम्प्रतिपन्नात्सपक्षाद्व्यावृत्तमित्यर्थः।—गुणानन्दः।

(५) रूपस्व-कलि० मु० पु० पा०।

(६) तथा च सङ्गादिति—पा० २ पु०। तथाभावप्रसङ्गादिति—पुण० पु० पा०।

(७) दिति। रोमादावपि—पुण० पु० पा०।

(८) तन्तुविनाशव्यवहारप्रसङ्गात्—कलि० मु० पु० पा०। तु तन्तुविनाशप्रसङ्गात्—पा० २ पु०।

सत्त्वादित्यर्थः। विरहस्वरूपेति। विरहो ह्यभावः, स चालीक एवेति तद्वत्ता कार्यस्य (स्वलक्षणस्य) कथं भवेदिति भावः। यद्वा कारणविरहो यदि कार्यमेव, तदा कथं तेनैव तद्वत्ता, अतिरिक्तश्चेत्तद(१)भावः, तदा किमपराद्धं कार्यातिरिक्तेन(२) ध्वंसेनेति भावः। न द्वितीय इति। यद्यपि भावस्याभावतादात्म्यनिषेधादेवैतदपि निरस्तम्, तथापि प्रकारान्तरेणापि(३) निरस्यति। न द्वितीय इति। स इति(४)। द्वितीयः पक्ष इत्यर्थः। कार्यकाले कारणं(५) सर्वथापि नोपलभ्यत इति मूलम्, कार्यमेव कारणविनाश इत्यर्थः। अतिरिक्तेति। कार्यातिरिक्त इत्यर्थः(६)॥

न प्रथमः, उपलभ्यन्ते हि पटकाले वेमादयः। न ते त इति चेत्, किमत्र प्रमाणम्। अभेदेऽपि(७) किं प्रमाणमिति चेत्, मा भूत् तावत्, सन्देहस्थितावपि अनुपलब्धिबलावलम्बन(८)विलयात्।

दीधितिः।

न ते त इति। उपलभ्यमाना वेमादयः पटपूर्वकालीनेभ्यो(९) भिन्ना इत्यर्थः॥

(१) श्चेद—कालि० मु० पु० पा०। (२) कार्यस्यातिरिक्तस्य—कालि० मु० पु० पा०।
(३) प्रकारान्तरेण—पुण० पु० पा०।
(४) न द्वितीय इति। स इति—कालि० मु० पु० पा०। (५) कारणत्वं—पा० २ पु०।
(६) अतिरिक्तेति। कार्यातिरिक्त इत्यर्थः—नास्ति पा० २ पु०। अतिरिक्तेति। कार्यातिरिक्तेत्यर्थः—पुण० पु० पा०।
(७) अभेदे—पा० २ पु०।
(८) लालम्ब—पा० २ पु०। लालम्बन—कालि० मु० पु० पा०।
(९) कारणपदस्य फलोपधायकपरत्वमभिप्रेत्याह। पटपूर्वकालीनेभ्य इति।—गुणानन्दः।

कल्पलता।

ननु पटकाले ये वेमादय उपलभ्यन्ते ते(१) तद्भिन्ना एवेति शङ्कते। न ते त इति। क्षणभङ्गे सत्येवं (न) स्यात्, स चाद्यापि न सिद्ध इत्यभिप्रायेणाह। किमत्रेति। यद्यपि प्रत्यभिज्ञा(नं) तत्र मानं(२), तथापि तदनुपदर्शनेपि न(३) क्षतिरित्याशयेनाह। मा भूदिति। कार्यकाले कारणानुपलम्भः सन्दिग्ध इति तद्बलं तव भग्नमेवेत्यर्थः॥

---

न द्वितीयः, न हि पटो जात इत्युक्ते तन्तवो नष्टा इति कश्चिद्व्यवहरति। पटस्यानतिरेकात् तन्तुमात्रजन्मनि च(४) भेदाग्रहादव्यवहार इति चेत्, न तर्हि व्यवहारबलमपि(५)। विसभागसन्ततौ तावद्व्यवहार-

---

दीधितिः।

पटस्येति। तथोत्पन्नाना(६)मेव तन्तूनां(७) पटत्वात्, तेषां च सौसादृश्येन भेदाग्रहात्त(८)ज्जन्यत्वाग्रहेण न विनाशव्यवहार इत्यर्थः। विसभागेति। समानाः सदृशाः भागाः सान्तानिका यस्याः सा सन्ततिः सभागा, विसदृशसान्तानिका च(९) विसभागा, काष्ठाङ्गारादिसन्ततावङ्गारादिजन्मनि काष्ठा-

दीधितिटिप्पणी।

परतन्तुतो भेदाग्रहात्। सान्तानिकाः सन्ततिप्रविष्टा व्यक्तयः। पूर्वतन्तुनोत्तरतन्तुसन्तानं जन्यते, सा सभागसन्ततिः, यत्र च काष्ठा-

---

(१) ते-नास्ति पा० २ पु०। (२) तत्र प्रमाणम्-पुण० पु० पा०।

(३) न-नास्ति पा० २ पु०। (४) जन्मनि—कलि० मु० पु० पा०।

(५) व्यवहारावलम्बनमपि—पा० २ पु०।

(६) तथोत्पन्नानाम्, पटकार्यावरणादिकुर्वद्रूपाणाम्।—गुणानन्दः।

(७) त्पन्नानां तन्तूनामेव-पुण० पु० पा०।

(८) भेदाग्रहा-कलि० मु० पु० पा०। (९) च-नास्ति पा० २ पु०।

बल(१)मस्तीति चेत्, नैतदेवम्, यदि हि तन्तुमालैव पटनिवृत्तिः, (तर्हि)(२) कथं तदाश्रयस्तदात्मको वा

दीधितिः।

दिविनाशव्यवहारात् कार्यस्य(३) विनाशत्वस्थितौ सभागसन्ततावपि कार्यमेव विनाशत्वेन कल्प्यते, बाधकाभावादित्यर्थः। एकत्र बाधकबलादतिरिक्ते विनाशे सिद्धे विसभागसन्तानेपि तथैव(४) कल्प्यत(५) इत्याशयवान् बाधकमाह । यदि हीति। तन्तुभिन्नत्वाभिन्नत्वविप्रतिपत्तावपि दुरपन्हवस्तावत्सर्वा(६)नुभवसिद्धः पटो धर्मी, भवितव्यं च तस्यावश्यं कादाचित्कस्य सतो(७) विनाशेन, स चेदतिरिक्तः, सिद्धमीहितम् । अथ तन्तुमाला (-मात्रं), किं वा तद्विशेषः। आद्ये(८), कथमिति। तदाश्रय इति

दीधितिटिप्पणी।

दिनाङ्गारादि जन्यते, तत्र विसभागसन्ततिः, कार्यस्य विनाशत्वस्थिताविति । तदानीं विनाशव्यवहारस्य सत्त्वेन कार्यमेव लाघवात्तत्त्वेन कल्प्यत इति भावः। एवञ्च व्यवहारात्(९) कार्यकाले व्यवहारानुरोधादित्येव व्याख्या, न तु कार्यस्य व्यवहारात इत्यादिः। काष्ठाङ्गारेपि तद्व्यवहारस्योभयासम्मतत्वादिति बोध्यम्। यदि हीत्यादि मूलं पूर्वपक्षं प्रति अन्यद्भुक्तमन्यदित्यादिवद्भासतेऽतो व्यक्तिकृतन्तु नाद्यापीत्याद्यनुमेयमाशयमाह।एकत्रेति । तथा च त्वया दृष्टान्तेन सभागेऽनतिरिक्तनाश आनेयः, तथा मयापि तव सपत्नपक्षयोर्व्युत्क्रमेणातिरिक्तो विसभागेप्यानेय इत्यर्थः। सौष्ठवं करोति । तन्तुभिन्नत्वेत्यादि। अथ तन्तुमाला तन्तुमालात्वावच्छिन्नम्। तद्विशेषः तन्तुमालाविशेषः। कथमितीति। तथा च मूलस्यायमर्थः,

(१) सन्ततौ कथञ्चिद्व्यवहारावलम्बन-पा० २ पु०। (२) तर्हि-नास्ति पा० कलि० मु० पु०।

(३) कार्यस्येत्यादि। अत्र कार्यद्वये विनाशद्वये च तदित्यादिः।—गुणानन्दः।

(४) तथैव, विनाशस्य तदतिरिक्तत्वमेव।—गुणानन्दः।

(५) कल्पनात्-पा० २ पु०। (६) सर्वजना-पुण० पु० पा०।

(७) सतः, भावस्य। एतच्च स्वमते ध्वंसे व्यभिचारवारणाय।—गुणानन्दः।

(८) आद्ये, तन्तुमालासामान्यस्य पटध्वंसात्मकत्वे।—गुणानन्दः।

(९) व्यवहारानुरोधात्—इत्यादर्शपुस्तके २ पु० च पाठः।

पटः प्राक्। अन्यैवासाविति चेत्; न तावज्जातिकृतमन्यत्वमुपलभ्यते(१)। व्यक्तिकृतं तु नाद्यापि(२) सिद्ध्यति। इत एव(३) तत्सिद्धावितरेतराश्रयत्वम्। तथापि यद्येवं(४) (स्यात्) कीदृशो दोष इति चेत्,

दीधितिः।

स्वमतेन। तदात्मक इति परमतेन। द्वितीयं शङ्कते। अन्यैवेति। पटाकारेभ्य(५)स्तन्तुभ्योऽन्यैव तदुत्तरकालीना तन्तुमालेत्यर्थः। इत एवेति। वर्तमानतन्तुमालायाः पूर्वकालीनतन्तुमालाव्यावृत्ते(६) पटनाशात्मकत्वे सिद्धे भेदसिद्धिः, सिद्धे च भेदे तत्सिद्धिरित्यर्थः।(७) नन्वेवमपि सन्देहे(८) न बाधकबलमत आह।

दीधितिटिप्पणी।

यदि तन्तुमालात्वावच्छिन्ना एव तन्तव एव पटनिवृत्तिस्तदा कथं तन्तुमालापुञ्जात्मकपटः स्वकालेपि वर्तेत, तदानीमपि स्वनिवृत्तिरूपतन्तुमालासत्त्वादित्यर्थः। स्वमतेन न्यायमतेन। पटे तन्तव इति प्रतीत्या तन्तुमालाया अपि पटवृत्तित्वात्। यद्वा तदाश्रय इति बहुव्रीहिः। एतदुपादानं च पटकालेपि तन्तोरावश्यकत्वबोधनाय। द्वितीयम् तन्तुमालाविशेष एव पटस्य नाश इति पक्षम्। मूले, इत एव तन्तुमालायाः पटनाशत्वादेव। तत्सिद्धिः तन्तुमालायाः पटनाशात्मकत्वसिद्धिः। नन्वेवमपीति। प्रमाणाभावादिनापि तस्य सन्देह एवापतितः, एवमस्ति न वेतिसन्देहनिरासकं

(१) मन्यदुपलभ्यते—पाठः। (२) व्यक्तिकृतं त्वद्यापि न—पा० २ पु०।

(३) अत एव—कलि० मु० पु० पा०।

(४) उत्तरकालीना तन्तुमाला पूर्वमालातो भिन्ना नाशरूपा चेति स्वीकार इत्यर्थः।

(५) पटाकारेभ्य इति सौसादृश्यतिरस्कारनिवृत्तये। तत्पटाकारेभ्य इति वाऽर्थः। तेन नाग्रे जातिकृतान्यत्वानुपलम्भविरोधः।—गुणानन्दः।

(६) व्यावृत्तेः—कलि० मु० पु० पा०, पुण० पु० च।

(७) रित्यर्थः। एवम् उत्तरतन्तुमालायाः पूर्वतन्तुमालानिवृत्तित्वे।—पा० २ पु०।

(८) सन्देहे, उक्तप्रणाल्या तत्कार्यस्य तद्विनाशत्वसन्देहे। बाधकबलम्, तत्कार्यत्वेन तद्विनाशत्वे साध्ये न बाधः, ग्राह्यसन्देहस्याप्रतिबन्धकत्वादिति भावः।—गुणानन्दः।

न कश्चित्, केवलं प्रमाणाभावः, व्यवहारान(१)नुरोधश्च, तदसिद्धावपि सिद्ध्यतस्तस्य निमित्तान्तरा(२)पेक्षणात् ।

दीधितिः ।

तदसिद्धावपीत्यादि । उपलक्षणं चैतत् । तत्सिद्धा(३)वप्यासिद्ध्यत इत्यपि द्रष्टव्यम् । पटो हि यादृशस्तादृशो भवतु, गृह्यते तावत् तन्तुभ्यो भिन्नत्वेन तज्जन्यत्वेन(४) च, न च तथापि तन्तुविनाशबुद्धिव्यपदेशौ भवतः, भवतश्च तन्तुमालायाः पूर्वतन्तुनिवहा(५)भिन्नत्वे(न) गृह्यमाणेऽगृह्यमाणे च पटजन्यत्वे(६)

दीधितिटिप्पणी ।

वाधकं न दत्तमित्यर्थः । अन्वयव्यभिचारादाने मूलस्य न्यूनतां परिहरति । उपलक्षणं चैतदिति । तदसिद्धावपीति मूलं, भवन्मतसिद्धनाशव्यवहारहेतोस्तद्भिन्नतन्तुमालाज्ञानस्यासिद्धावपि सिद्ध्यतस्तस्य व्यवहारस्य कारणान्तराधीनत्वं, न त्वेतत्कारणाधीनत्वमित्यर्थः । उपलक्ष्यं उपलक्षणं च विशदयति । पटो हीत्यादि । यादृशस्तादृशः तन्तुस्वरूपोऽतिरिक्तो वेत्यर्थः । ननु तद्भिन्नत्वे सति तज्जन्यत्वज्ञानमेव तन्नाशव्यवहारकारणं वाच्यमत आह । तज्जन्यत्वेनेति । तदसिद्धावपीति मूलस्यार्थं विशदयति । भवतश्चेति । ताविचेत्यन्वयि । पटाद्वितीयक्षणवृत्तितन्तुमालायाः पटस्वरूपपूर्वतन्तुनिवहेन सहाभेदे गृह्यमाणेपि वास्तवपटनाशे पटस्य नाशबुद्ध्युदयात् व्यभिचारेण नेदं पटनाशबुद्धिकारणमित्यर्थः । ननु पटजन्यत्वज्ञानाधीनमेव तदा पटनाशज्ञानं स्यादत आह । अगृह्यमाणे चेति । तत्रापि तन्तुमालायाः पटजन्यत्व इत्यन्वयि । ननु तदा तन्तुमालामादाय

(१) व्यवहारा—पा० २ पु० । (२) निमित्तान्तरान—पा० २ पु० ।
(३) चैतत् सिद्धा—पा० २ पु० । (४) तन्तुभिन्नत्वेन तन्तुजन्यत्वेन—पुण० पु० पा० ।
(५) तन्तुविरहा—कलि० मु० पु० पा० ।
(६) अयमेव पाठष्टिप्पणीकृन्मतः । पटजन्यत्वेना—कलि० मु० पु० पा० । पटजन्यत्वेऽपुण० पु० पा० ।

दीधितिः।

भावात्मनि च पटजन्यान्तरे पटस्य ताविति सिद्ध्यति कार्याद्भा-वा(१)दन्य एव भावस्य विनाश इत्यर्थः॥

दीधितिटिप्पणी।

पटनाशबुद्धिर्न भवति, किन्तु पटजन्यभावान्तर एव सा भविष्यतीत्यत आह। भावात्मनीत्यादि। भावात्मनि च पटजन्यान्तरेऽगृह्यमाणे चेत्यर्थः॥

---

कल्पलता।

अवयवेभ्योऽनन्यत्वमवयविन इति पक्षमादाय शङ्कते। पटस्येति। कारणाभावत्वेन व्यवहर्तुं योग्येऽपि पटे तन्त्वात्मके पूर्व(२)तन्तुभेदाग्रहान्न तथा व्यवहारः, येन तु परीक्षकेण भेदो गृह्यते, तस्य तथा व्यवहारोऽस्त्येवेति भावः। व्यवहारो हि(३) लौकिकपरीक्षकसाधारणः प्रमाणं, स च प्रकृते नास्तीत्याह। न तर्हीति। परीक्षकस्य विपरीत एव व्यवहारो न कथमत्रेति भावः। ननु पटे नष्टे तन्तुमालालक्षणं कार्यं यत्र(४) जायते तत्र पटनाशप्रतीतिव्यवहारौ स्त एवेत्याह। विसभागेति। (वि)सभागसन्तताव्प्येतद्दृष्टान्तेन तथोन्नेयमिति हृदयम्। यदि हीति। तन्तुमालायां पटस्तावद्वर्त्तत इत्यनुभवसिद्धम्। सा चेत्तन्तुमाला पटनिवृ*(५)त्तिः स्यात्(६), तदा स्वध्वंस एव पटो वर्त्तत इत्यायातामिति स्वमते। परमते त्वाह। तदात्मको वेति। पटोपि

---

(१) कार्यभावा-कलि० मु० पु० पा०। (२) पटे च तन्त्वात्मकपूर्व-पुगा० पु० पा०।
(३) व्यवहारोपि-पा० २ पु०। (४) यत्र-नास्ति पा० २ पु०।
(५) एतत्पुष्पिकामारभ्याग्रिमपुष्पिकाचिन्हपर्यन्तो ग्रन्थः पुण० पु० नास्ति।
(६) निर्वृत्तिः-पा० २ पु०।

कल्पलता।

तन्तुमाला, पट(१)निवृत्तिरपि(२) तन्तुमाला, तथा च प्रतियोग्यात्मिकैव निवृत्तिः स्यादिति विरोध इत्यर्थः। ननु पूर्वतन्तुमालाया उत्तरतन्तुमाला अन्यैव, तथा च कथमयं विरोध इति शङ्कते। अन्यैवेति। तद्विजातीया वा तद्भिन्ना वा। नाद्यः, तथाऽननुभववात्। नान्त्यः, क्षणभङ्गासिद्धेरिति परिहरति। न तावदिति। यद्यपि जातिकृतान्यत्वं व्यक्तिकृतान्यत्वे सत्येव, न ह्येकस्यां व्यक्तौ क्रमेण जातिभेदः सम्भवतीति पृथग्विकल्पानुपपत्तिः, तथाप्युपपत्ति(३)सौकर्यादेतदुक्तम्। इत एवेति(४)। उत्तरतन्तुमाला पूर्वतन्तुमालातो भेद एव सति तन्निवृत्तिरूपा भवति नान्यथेति तत्सिद्धिरित्यर्थः। इतरेति(५)। पूर्वापरतन्तुमालयोर्भेदे सति निवृत्तिरूपत्वं, निवृत्तिरूपतायां च सत्यां भेद इत्यन्योन्याश्रय इत्यर्थः। एवमिति। यदि(६) उत्तरतन्तुमाला पूर्वतन्तुमालानिवृत्तिः(७) स्यात्, को दोषः, तदा(८) निवृत्त्यन्तरस्वीकारे गौरवमिति(९) भावः। प्रमाणाभाव इति। उत्तरतन्तुमालायाः पूर्वतन्तुनिवृत्तिरूपत्वे तद्भिन्नत्वे(१०) च प्रमाणाभाव इत्यर्थः। न वा ईदृशो(११) व्यवहार इत्याह। व्यव-

(१) पट—नास्ति पा० २ पु०।

(२) इत आरभ्य द्वितीयपुस्तकं बहुदूरपर्यन्तं खण्डितमिति पुणतामकरपुस्तकमेवाग्रेतनकल्पलताग्रन्थमुद्रणे शरणीकृतम्।

(३) तथाप्युत्पत्ति—पुण० पु० पा०।

(४) इत एवेति—नास्ति पा० कलि० मु० पु०।

(५) रित्यत्राह। इत एवेति—कलि० मु० पु० पा०।

(६) यदि—नास्ति कलि० मु० पु०।

(७) मालाविनाशः—पुण० पु० पा०।

(८) को दोषो—कलि० मु० पु० पा०।

(९) गौरवादिति—इति पाठो युक्ततरः।

(१०) रूपत्वे भिन्नत्वे—कलि० मु० पु० पा०।

(११) तादृशो—पुण० पु० पा०।

कल्पलता।

हारेति। तदसिद्धाविति। यत्राश्रयनाशादेव पटनाशस्तत्र तन्तुमालाया अ(प्र)सिद्धावपि पटनाशव्यवहारो निमित्तान्तरात् पटध्वंसरूपादेव वक्तव्य इत्यर्थः। तन्तुमालाया निवृत्तिरूपत्वासिद्धावपीत्यन्ये॥

अपि च तन्तुविनाशः सामान्यतस्तन्तुविरहस्वभावो वा स्यात्, तद्विपरीतो वा। आद्ये कथं तन्त्वन्तरं, न हि सामान्यतो नीलमनीलविरुद्धस्वभावमनीलान्तरम्। द्वितीये

दीधितिः।

सभागसन्ताने कार्यस्य विनाशत्वे बाधकान्तरमाह। अपि चेति। सामान्यतः तन्तुविनाशत्वेन। तन्तोः तन्तुसामान्यस्य, विरहः अन्योन्याभावः, स्वभावो(२) यस्य स तथा। तन्तुविनाशः तन्तुविनाशत्वावच्छेदेन तन्तुसामान्यभिन्नस्तन्तुसामान्याभिन्नो वेति विकल्पार्थः। आद्य इति। तत्सामान्यभिन्नत्वावच्छेदकरूपवतस्तद्विशेषत्वायोगात्, न ह्यनीलसामान्यभिन्नत्वावच्छेदक(रूप)नीलत्ववन्नीलमनीलविशेषो भवितुमर्हतीत्यर्थः। विरोधः(३) भेदः। द्वितीये भस्मादिलक्षणविसभागसन्तानीयस्तन्तुविनाशः

दीधितिटिप्पणी।

तन्मते तन्तुनाशत्वावच्छेदेनापि तन्तुविशेषस्यान्योन्याभावसत्त्वेपि सामान्यावच्छिन्नान्तरत्वमस्य व्याहतमित्यत आह। तन्तोस्तन्तुसामान्यस्येति। द्वितीये अभेदपक्षे। सभागसन्ता-

(१) स्वभावः, धर्म। तन्तुविनाशत्व तन्तुसामान्यभेदव्याप्यं तदभेदव्याप्यं वेति फलितम्।—गुणानन्दः।

(२) नीलानीलयोरेकत्र समावेशात् कथं विरोध इत्यत आह। विरोधो भेद इति। विरुद्धस्वभावमित्यत्र मूले विरोधो भेद इत्यर्थः।

कथं तद्विरोधी, न हि नीलं सामान्यतोऽपि नीलान्तरविरोधि। विशेष(मात्र) एवायं विरोध(१) इति चेत्, तत् किं सामान्यतोऽनुभयस्वभाव(२) एव (वि)ना-

दीधितिः।

कथं तन्तुसामान्यविरोधी(३), तत्सामान्याभिन्नत्वावच्छेदकरूपवतस्तत्सामान्यभिन्नत्वायोगात्, न हि नीलसामान्याभिन्नत्वावच्छेदकनीलत्वशालि नीलं नीलसामान्यभिन्नमित्यर्थः(४)। नीलपीतादि(५)वत्तन्तुतद्वि(६)नाशयोः सामान्यतो न विरोधो(७)ऽविरोधो वा, अ(८)पि तु व्यक्तिविशेषयोरेवेति न तन्तुविनाशस्य तन्तुविशेषत्वानुपपत्तिरित्याशङ्कते। विशेष(मात्र) एवेति। यथा भवतां(९) जन्यविनाशिनोः, अस्माकं वा कलमाङ्कुरकुर्वद्रूपयोः(१०) सामान्यतो न विरोधो नाप्यविरोधः, क्वचित्समावेशस्य मिथो व्यभिचारस्य च दर्शनात्, तथा तन्तुतद्वि(११)नाशयोरपीत्यभ्यु-

दीधितिटिप्पणी।

नात्मकनाशस्य तदविरोधितया तद्विरोधित्वं कथमिति वक्तुं न शक्यत इत्यतः, अस्मादीति। तन्तुसामान्यविरोधी तन्तुसामान्य-

(१) विशेष एवात्र विरोध-पाठः।

(२) नुभयस्वरूप-पुण० पु० पा०। नुभवस्वभाव-पा० २ पु०।

(३) विरोधी, भिन्नः।

(४) मिति—पुण० पु० पा०। नीलसामान्यभिन्नमिति। तथा च नीलान्तरविरोधीति मूलस्य नीलविरोध्यन्तरं नीलविरोधिविशेष इत्यर्थोऽवसेयः।—गुणानन्दः।

(५) नीलपीतादीति गुणपरं व्यतिरेके दृष्टान्तः। द्रव्यपरत्वे त्वन्वयेपि दृष्टान्तत्वसम्भवः।—गुणानन्दः।

(६) तन्तुवि—कालि० मु० पु० पा०।

(७) न विरोध इति। तन्तुविनाशत्वं न तन्तुसामान्याभिन्नत्वावच्छेदकमित्यर्थः।—गुणानन्दः।

(८) न विरोधोऽ—कालि० मु० पु० पा०।

(९) तन्मते ध्वंसप्रागभावयोरतिरिक्तयोरनुपगमादाह। भवतामिति।—गुणानन्दः।

(१०) कलमत्वावच्छेदेन नाङ्कुरकुर्वद्रूपत्वम्, न वा तदवच्छिन्नभेदः, एवमङ्कुरकुर्वद्रूपत्वावच्छेदेनापि नैतदुभयमित्यर्थः।

(११) तन्तुवि—कालि० मु० पु० पा०।

शः। ओमिति ब्रुवतोऽन्यतरमुपादाय(१) विनाशव्यवहारानुपपत्तिः। सामान्यस्यालीकत्वात् तत्र विरोधोऽपि किं करिष्यतीति चेत्, विलीनमिदानीं विरुद्धधर्माध्यासेन

दीधितिः।

पगमेऽन्यतरं(२) तन्तु(३)मादायाऽनुगततन्तुविनाशव्यवहारानुपपत्तिरित्याह। ओमितीति। ननु न तन्तुसामान्यं (न) तन्तुमात्रं(४) वा तन्तुविनाशव्यवहारनिमित्तम्, आद्ये(५) तन्तु(तन्तु)भस्मनोर्व्यभिचारात्, परं तु(६) सभागो विसभागो वा तत्कार्यसन्तान एव(७),एवमन्यत्रापीति चेन्न(८)। सन्तान(त्व)स्य दुर्वचत्वात्। ननु तन्तुत्वादि(९)सामान्यस्यालीकत्वान्न पारमार्थिको(१०)नुगततन्तुविनाशव्यवहार इत्याशयेना(११)शङ्कते। सामान्यस्येति(१२)।

दीधितिटिप्पणी।

भिन्नः। उभयत्रैव यथासङ्ख्येन हेतुमाह। क्वचिदित्यादि। अन्यतरमिति। सभागविसभागयोर्मध्ये एकतरो यस्तन्तुस्तमादायानुगतो यस्तन्तुविनाशव्यवहारस्तदनुपपत्तिरित्यर्थः, तन्तुं विनापि भस्मादिकमादाय तद्व्यवहारात्, उभयस्यैव च तत्कल्पने अनुगतो व्यवहारो न स्यादित्यर्थः। यथायथं व्यभिचारमाह। आद्येति। तत्कार्येति। तथा च तत्कार्यसन्तानत्वमेवानुगतव्यवहारनिमित्तमिति भावः। न पारमार्थिक इति। तथा च पारमार्थिक एव व्यवहारे अननुगतत्वादिदोषो

(१) न्यतरमादाय—पुण० पु० पा०। (२) ऽन्यतर—कलि० मु० पु० पा०।

(३) तन्तुमित्युपलक्षणम्। भस्मादिकमित्यपि बोध्यम्, तथा चाननुगतेषु तेषु कथमनुगतव्यवहार इति भावः।—गुणानन्दः। (४) तन्तुमात्रम्, तन्तुरेव।—गुणानन्दः।

(५) आद्ये—कलि० मु० पु० पा०। (६) परं तु, किन्तु।

(७) सन्तानः—पुण० पु० पा०। तत्कार्यस्य क्षणिकतयाऽनन्तरमपि तद्विनाशव्यवहारादुक्तम्। सन्तानेति।—गुणानन्दः। (८) ति चेत्,—पुण० पु० पा०।

(९) तन्तुत्वादीति। आदिपदात्तत्कार्यसन्तानेष्वपि नानुगतस्तद्विनाशत्वव्यवहार इति लभ्यते।—गुणानन्दः। (१०) लीकत्वादुपाधिसाहित्येना—कलि० मु० पु० पा०।

(११) इत्याशयेन—कलि० मु० पु० पा०। (१२) सामान्येति—पा० २ पु०।

कल्पलता ।

अन्यतरेति । विरोधमादाय तन्तुव्यवहारानुपपत्तिरित्यविरोधपक्ष आश्रयणीयः, तथा च विनाश(१)व्यवहारानुपपत्तिरित्यर्थः । ननु सामान्यतो विरोधाविरोध(२)चिन्ता तदा भवेत्, यदि सामान्यं भवेत्, तदेव तु नास्तीत्याह । सामान्यस्येति । एवं सति गोत्वाश्वत्वलक्षणविरुद्धधर्माध्यासाभावाद्गवा(३)श्वादीनामभेद आपद्येतेत्याह । विलीनमिति । तस्य भेदस्य । तदाश्रयत्वात् तदधीनत्वादित्यर्थः ॥

दीधितिः ।

ननु(४) यथा भवतामननुगता एव तत्तत्तन्तुविनाशास्तन्तुविनाशत्वेनानुगता अनुगतं(५) तन्तुविनाशव्यवहारमर्जयन्ति, तथास्माकमपि सरूपाणि विरूपाणि च तन्तुकार्याणि तन्तुकार्यत्वेन तन्तुविनाशत्वेन(६) वा अनुगतानि(७), यथा च भवतां विशेषतो विरोधेपि(८) सामान्यतो न तथा, तथास्माकमपीत्याशयेन(९)

दीधितिटिप्पणी ।

तन्तुविनाशत्वेन वानुगतानीति । अर्जयन्तीत्यनेनानुषङ्गः । पटान्तराभावेत्यादिमूलेन विशेषतो विरोधेपि सामान्यतोऽविरोधो दर्शितः, अत्यन्ताभाववत्त्वमपि पटस्य न विरुध्यते, अतः कथं

(१) विनाशस्य—पुण० पु० पा० । (३) भावादेवा—कलि० मु० पु० पा० ।
(२) विरोध्यविरोधि—कलि० मु० पु० । (५) अनुगत-पुण० पु० पा० ।
(४) ननु-पा० नास्ति कलि० मु० पु० ।
(६) तन्तुकार्यत्वेन ग्रहदशायामपि तथाव्यवहाराभावात् सन्तानत्वस्योक्तयुक्त्या निवेशे तस्य दुर्वचत्वाच्चोक्तम्, तन्तुविनाशत्वेनेति । तच्चालीकं वस्तु वेत्यन्यदेतत्, प्रतीतेरुभयसिद्धत्वादिति ध्येयम ।—गुणानन्दः ।
(७) अनुगतानीत्यत्र तन्तुविनाशव्यवहारमर्जयन्तीत्यनुषज्यते ।—गुणानन्दः ।
(८) विशेषतो विरोधेऽपि, तत्पटत्वावच्छेदेन पटान्तरभेदेपि ।
(९) त्याशयेना-पुण० पु० पा० ।

नन्वतिरिक्ताभावपक्षे यथा(१) पटः पटान्तराभाववांश्च तज्जातीयश्च, अभावो वा(२) पटविरोधी पटान्तरसहवृत्तिश्चेति न कश्चिद्विरोधः, तथा कार्याभाव(३)पक्षेऽपि भविष्यतीति। नैतदेवम्। प्रतियोगिना हि तादात्म्यसंस-

दीधितिः।

शङ्कते, नन्वित्यादिना। पटान्तराभाववान् पटा(४)न्तरभिन्नः(५), पटाभावो(६) वा स्वप्रतियोगिपटविरोधी स्वाप्रतियोगिना पटेन सहैकतन्त्वादिवृत्तिरिति। संसर्गः एककाला(७)(द्य)वच्छेदेनैकदेशवृत्तित्वम्। ध्वंसप्रतियोगिनो(८)स्तादात्म्याद्यनभ्युपगमे क्रमेण

दीधितिटिप्पणी।

विशेषतो विरोध इत्यत आह। पटान्तरभिन्न इति। सामान्यतो विरोधो न बुध्यतामिति पूरणेन दर्शयति। स्वप्रतियोगीति। अप्रतियोगिना त्विति मूलम्, तथा च पटाभावस्य अप्रतियोगिनः पटाद्यन्तरस्य सहवृत्तित्वरूपसंसर्गित्वं न विरुध्यत इति भावः। एवं च तादात्म्येति एकजातीयत्वेति च दृष्टान्तार्थमिति केचित्। अत एव अप्रतियोगिना त्वित्यादिना संसर्गमात्र एव दर्शितम्। ननु तादात्म्यमेकजातीयत्वं चाभावस्यास्मन्मते-

(१) ननु तन्तुरेव तन्तुविनाशश्चेत्, स्वप्रतियोगिभिन्नः, भिन्नश्चेत् कथं तज्जातीय इत्यत आह। यथेति। ननु तन्तुश्चेत् तन्तुविनाशः, कथं तन्तुसहवृत्तिरत आह। अभावो वेति।

(२) तज्जातीयश्च, पटभावो वा–पा० २ पु०।

(३) अत्र कर्मधारयः। (४) पठा–कलि० मु० पु० पा०।

(५) अन्तरपदस्वरसादाह। पटान्तराभिन्न इति। प्रतियोग्याकाङ्क्षां निवर्त्तयन्नेकीकृत्याह। पटाभावो वेति। कस्य विरोधीत्याकाङ्क्षायामाह। स्वप्रतियोगिनोपि पटान्तरत्वादाह। स्वाप्रतियोगिनेति। अभावस्य समवायसम्बन्धावच्छिन्नत्वद्योतनाय—एकतन्त्वादीति।—गुणानन्दः।

(६) पटाभाव', पटात्यन्ताभावः।

(७) प्रतियोगिदेशवृत्तित्वस्य ध्वंसादेरुपगमादाह। एककालावच्छेदेनेति। इदमुपलक्षणम्। एकदेशावच्छेदेनैककालवृत्तित्वं चात्यन्ताभावस्य प्रतियोगिना नेष्यत इत्यपि बोध्यम्।—गुणानन्दः।

(८) भिन्नकालत्वादित्यग्रिमदर्शनादाह। ध्वंसप्रतियोगिनोरिति। ध्वंसत्वं च भावाभावसाधारणम्, तेन प्रागभावप्रतियोगिनोरित्यपि लभ्यते।— गुणानन्दः।

गैकजातीय(१)त्वानि नेष्यन्ते, अप्रतियोगित्वप्रसङ्गात्, भिन्नकालत्वात्, सामान्यतो विरुद्धधर्मसंसर्गाच्च । अप्रतियोगिना तु(२) संसर्गे को दोषः । न हि भेदविजातीयत्वै(३)ककालताः संसर्गविरोधिन्यः, तादात्म्यं हि (४)संसर्गित्वे(५) विरुद्धं विरोधित्वं च, ते च नेष्यते एव ।

दीधितिः ।

हेतूनाह(६) । अप्रतियोगित्वेति । सामान्यत इति(७) । सामान्यतः आद्ये तन्तौ विसभागस्थलीयतन्तुनाशे च तन्तुत्व(तन्तु)-विनाशत्वयोः विरोधावधारणादित्यर्थः । भावत्वाभावत्वलक्षण-विरुद्धधर्मसंसर्गादित्यपरे । तादात्म्यं हीति । हिस्त्वर्थः(८) । तादात्म्यविरोधित्वे तु संसर्गित्वविरुद्धे इत्यर्थः । विरोधित्वं सहा-

दीधितिटिप्पणी ।

ऽप्रतियोगिनापि भावेन समं तादात्म्यैकजातीयत्वयोरभावात् (?), सामान्यतो विरुद्धधर्मसंसर्गाच्चेत्यत्र हेतुमाह । सामान्यत आद्ये तन्तावित्यादि । द्रव्यत्वपृथिवीत्वयोस्तादात्म्यादत आह । विसभागेति । ननु अप्रतियोगिभेदप्रतीतय एव सामानाधिकरण्यरूपसंसर्गे विरोधिन्यः स्युरत आह मूले, न हीति । ते चेति मूलम्, अप्रतियोगिना समं नेष्येते इत्यर्थः । प्रतियोगिनापि ऐकजात्यं दर्शयति । ननु यथेत्यादि । जन्यत्वेनेत्यादि यथाक्रमेणान्वयि । विसभागेपि

(१) सम्बन्धैकजातीय-पाठः । (२) अप्रतियोगिना च-पुण० पु० पा० ।

(३) विजातीयत्वै-कलि० मु० पु० पा० ।

(४) तादात्म्यं हीति । हिशब्दस्तुशब्दार्थे, संसर्गस्य भेदाधिष्ठानत्वादित्यर्थः । विरोधित्वं चेति । संसर्गित्वे विरुद्धमित्यनुषज्यते, विरोधस्यैकत्रासंसर्गनियमनिरूपकत्वादित्यर्थः ।—भगीरथठक्कुरः । (५) संसर्गे-पुण० पु० पा० । (६) भ्युपगमे हेतून् क्रमेणाह-पुण० पु० पा० ।

(७) सामान्यत इति ।-पा० नास्ति कलि० मु० पु० । सामान्यतः, अधिकरणविशेषान्तर्भावेण ।

(८) प्रागुक्तापेक्षया वैलक्षण्यस्य वक्तव्यत्वादाह । हिस्त्विति । विरुद्धत्वमित्यनेनापि हेत्वर्थेन सम्बन्धं दर्शयितुमेकीकृत्याह । तादात्म्येति । संसर्गित्वविरुद्धे इति । अत्र संसर्गित्वस्य भेदगर्भतया तादात्म्यविरोधितदभावव्याप्यत्वस्य विरोधित्वे आकाशादावभावाद ह । सहेति ।—गुणानन्दः ।

दीधितिः।

नवस्थायित्वम्। ननु(१) यथा जन्यत्वेन कादाचित्कत्वादिना अभावत्वेन वा तन्तोस्तत्प्रागभावस्य वा सजातीयोऽपि कश्चित् तद्ध्वंसस्तथा तन्तुजातीयोऽप्यस्तु, उपदर्शितश्च मिथो व्यभिचारिणोरपि समावेश इति चेत्, एवमपि तृतीयादितन्तूत्पादे प्राथमिकादितन्तोस्तृतीयविसभागसन्तानोत्पादे च प्राथमिकसन्तानस्य विनाशव्यवहारो न स्यात्, तज्जन्यस्य विलयात्। सर्व एव(२) तत्सान्तानिकस्तदुदीच्यस्तस्य विनाश इति चेन्न। सन्तानस्य दुर्वचत्वा(दित्युक्तत्वा)त्, चलसन्तानोत्पन्नशालिनि सुदूरेऽपि देशे देशान्तरविलीनस्य प्राथमिकस्य विनाशवत्ताव्यवहारप्रसङ्गात्, अनन्तसान्तानिकानां विनाशत्वकल्पनामपेक्ष्य ए-

दीधितिटिप्पणी।

दर्शयति। तृतीयेति। तज्जन्यस्येति। तृतीयतन्तूत्पादक्षणे प्राथमिकतन्तुनाशात्मकद्वितीयतन्तोरभावात् प्रथमतन्तुविनाशव्यवहारस्तदा न स्यादित्यर्थः। चलेति। काष्ठादि यत्राधिकरणे भस्माऽभूत् ततोऽधिकरणादितरत्राप्यधिकरणे तद्भस्मनि गते तत्राप्यधिकरणे काष्ठं नष्टमिति धीः स्यादित्यर्थः, तत्सन्तानरूपभस्मनस्तत्रापि

(१) प्रतियोगिना सजातीयत्वं नेष्यत इत्यत्र शङ्कते। नन्विति। जन्यत्वेन सजातीयः कश्चित् ध्वंसत्वेन त्वदभिमतस्तत्तद्ध्वंसः, तन्तुध्वंसः, कादाचित्कत्वादिना तन्तुतत्प्रागभावयोः सजातीयस्तद्ध्वंसः, आदिपदाद् ध्वंसप्रतियोगित्वाद्युपसङ्ग्रहः। अभावत्वेन प्रागभावसजातीयः प्रागभावादिध्वंस इति यथायोगं बोध्यम्। अस्तु इत्यस्य तन्तुध्वंस इति कर्तृपदम्। मिथोऽव्यभिचारिणो', तन्तुत्वतद्ध्वंसत्वयोः। एवमपि, प्रतियोगिसजातीयस्य तद्ध्वंसत्वसम्भवेऽपि। तृतीयादीति तदजन्यत्वस्य लाभाय। प्राथमिकादीति तदजनकत्वस्य लाभाय। स्वजन्यस्तन्तुस्तन्तुध्वंस इत्यत्र स्वजन्यत्वतन्तुत्वयोरुभयोरेव व्यभिचारमादर्शयितुमाह। तृतीयेत्यादि। तज्जन्यस्येति। विसभागस्यातन्तुत्वादित्यपि बोध्यम्। सर्व एवेति। विसभागसभागसाधारण इत्यर्थः। सान्तानिकत्वम्, तत्सन्तानघटकत्वम्, तच्च प्राक्तनसाधारणमत आह। उदीच्य इति। ननु प्रदीपादिसन्ततावितरव्यावृत्तसन्तानव्यवहारादुभयनिर्वाच्यमनतिप्रसक्तं तदावश्यकमित्यत आह। चलेति। ननु तयोर्देशभेदाग्रहोऽपि तदुपयोगी वाच्य इत्यनुशयादाह। अनन्तेति। प्रतियोगितद्ध्वंसयोः प्रागभावध्वंसत्वोपगमात् तद्वैलक्षण्यायानन्त्योपादानम्। ध्वंसाप्रतियोगित्वरूपानन्त्यव्यवच्छेदायाह। सान्तानिकानामिति।—गुणानन्दः।

(२) सर्व ए—कालि० मु० पु० पा०।

दीधितिः ।

कस्यैव विनाशस्य कल्पनाया न्याय्यत्वाच्च । अथैवमनन्तघट-व्यक्तीनामभावत्वकल्पने गौरवात् घटसामान्याभावस्याप्यभा-वोऽ(१)तिरिच्येतेति चेन्न । घटग्रहे घटाभावस्याग्रहादभावव्यव-हाराच्च घटत्वेनानुगता(२)घटव्यक्तय एव तदभावत्वेन स्वीक्रिय-न्ते । एवमन्योन्याभावानां प्रतियोगितावच्छेदका एव धर्मा इति। अबाधिताभावप्रतीत्यनुरोधादभावस्याप्यतिरिक्त एवाभावः । न चानवस्था(३), तयोः परस्परविरहरूपत्वाङ्गीकारात् । एवं ध्वंस-सप्रागभावयोरपि प्रागभावध्वंसावित्यप्ये(४)कदेशिनः । अ-न्योन्याभावस्याप्यन्योन्याभावस्त्वनवस्थाभयादनायत्या तत्तद-धिकरणरूपः, त(त्त)द्वृत्तिद्रव्यत्वादिरूपो वा स्वीक्रियत इति ॥

दीधितिटिप्पणी ।

सत्त्वात् । नन्वेवं सभागे सास्तु, विसभागस्थले काष्ठादेरग्रहात् अभावत्वं स्यादत आह । अभावव्यवहाराच्चेति । एकदेशिमतमाह । अबाधितेति ॥

---

कल्पलता ।

पटान्तराभाववानित्यत्रा(५)न्तरपदं स्फुटार्थम् । यथा पटः पटाभाववानपि पटजातीयस्तथा तन्तुरपि तन्तुनिवृत्तिर्भवेत् । पटविरोध्यप्यभावः पटस्य(६) प-टान्तरसमानाधिकरणत्वेन पर्यवस्यते, तथा तन्तुवि-

---

(१) सामान्याभावाभावोप्य-पुण० पु० पा० ।

(२) घटत्वेनानुगता इति प्रकृतवैलक्षण्योपदर्शनाय। एकदेशिनस्तु परम्परया घटत्वमेव भूत-लादिवृत्ति घटसामान्याभावाभाव इत्याहुः ।—गुणानन्दः ।

(३) अनवस्थेति । यो योऽन्योन्याभावः सिध्यति तत्तदन्योन्याभावस्य तं तं विहायैव वृत्तेरुप-गमात् पूर्वेणोपपादयितुमशक्यत्वादिति भावः ।—गुणानन्दः ।

(४) वित्ये-पुण० पु० पा० ।

(५) नित्य-कालि० मु० पु० पा० । (६) प्यभावः-कालि० मु० पु० पा० ।

कल्पलता।

नाशोपि तन्तुमयेष्यत इत्यर्थः। कार्याभावपक्ष इति। कार्यरूपाभावपक्ष इत्यर्थः। प्रतियोगिना हीति। स्वाभावतादात्म्यं स्वसंसर्गाभावसामानाधिकरण्यं स्वाभावसमान(१)जातीयत्वं विरुद्धं, तच्च न मयेष्यत इत्यर्थः। अभावस्य प्रतियोगितादात्म्याभावे हेतुमाह। अप्रतियोगित्वेति। प्रतियोग्यनुयोगिभावस्य भेदनियतत्वादिति भावः(२)। विनाशस्य प्रतियोग्यसंसर्गे हेतुमाह। भिन्नकालत्वादिति। अभावस्य प्रतियोग्यैकजात्याभावे(३) हेतुमाह। सामान्यत इति। प्रतियोग्यभावयोः सामान्यतो विरुद्धधर्मसंसर्ग एवानुभूयते, स चैकजात्ये न स्यादित्यर्थः। अप्रतियोगिना त्विति। (न हि) नीलघटसंसर्गिणः पीतघटाभावस्य नीलघट एव(४) प्रतियोगी येन तत्संसर्गो न स्यादित्यर्थः। न हीति। भेदवैजात्यैककालत्वे सति संसर्गस्यानुभवसिद्धत्वादित्यर्थः। ननु त्वत्पक्षवन्मत्पक्षेपि स्यादभावसंसर्ग इत्यत आह। तादात्म्यं(५) हीति। त्वया प्रतियोगितादात्म्यमभावस्येष्यते प्रतियोग्यविरुद्धत्वं च, तच्च मया नेष्यत(६) इति न मत्पक्षे(७) दोषावकाश इति भावः। विरोधित्वं(८) चेत्यत्र विरुद्धमित्यनुषज्यते॥

---

(१) स्वाभावसमाना–पाठः।

(२) दित्यर्थः—पुण० पु० पा०।

(३) भाव—पुण० पु० पा०।

(४) एव न—पुण० पु० पा०। (५) तादात्म्ये—कालि० मु० पु० पा०।

(६) ते च मया नेष्येते—पाठः। ते च मयालोच्यत—पुण० पु० पा०।

(७) मत्पक्ष—पुण० पु० पा०। (८) विशेषत्वं—पुण० पु० पा०।

नापि बाधकानुरोधः, तदभावात् । ननु घटाभावे घटोऽस्ति न वा । आद्ये घटवति(१) तदभावः, कपाले(घटो)ऽ(२)स्तीति तान्यपि तद्वन्ति प्रसज्येरन्, नास्तीति पक्षेऽनवस्थाप्रसङ्गः, अभावान्तरमन्तरेण तत्र नास्तिताव्यवहारे भावान्तरेऽपि(३) तथा(४) प्रसङ्गः । न । भावान्तरस्य स(५)जातीयत्वे(६)नाविरुद्ध(७)-

दीधितिः ।

बाधकमाशङ्कते । नन्विति । घटाभावे घटध्वंसे । तद्वन्ती(८) त्यस्य परंपरयेत्यादिः(९), तथा च घटध्वंसकालेऽपि(१०) घटः(११) स्यादुपलभ्येत चेति (भावः)। भावान्तरस्येति ।

दीधितिटिप्पणी ।

नापीति मूलम्, बाधकानुरोधः कार्यातिरिक्तनाशे बाधकानुरोधः । बाधकमाशङ्कत इति । कार्यादतिरिक्तं विनाशं प्रतीति शेषः । अभावस्य घटवत्त्वेपि अभाववत्कपालस्य कथं घटवत्त्वमत आह । परम्परयेत्यादिरिति । भावान्तरेणापीति मूलं, तथा च कार्यरूपभावान्तरमेवाभावव्यवहार(जन)कमिति नातिरिक्तोऽभाव इत्यर्थः । अ·

(१) घटवान्—पुण० पु० पा० । कपालेष्वप्य—पा० २ पु० ।
(२) कपालेष्य—पुण० पु० पा० । (४) तथात्व—पा० २ पु० ।
(३) भावान्तरेणापि—टिप्पणीकृन्मतः पा० ।
(५) भावान्तरस्य (स)स्व—कलि० मु० पु० पा० ।
(६) अत्र सजातीयत्वम्, भावजातीयत्वम् । विरुद्धजातीयत्वम्, अभावजातीयत्वम्, तथा च भूतलादेर्भावजातीयत्वेन भावप्रतिक्षेपरूपतया भानासम्भवादाधारस्वरूपातिरिक्तोऽभावोऽभ्युपेय इत्यर्थः ।—भगीरथठक्कुरः । (८) तद्वती—कलि० मु० पु० पा० ।
(७) विरुद्धस—कलि० मु० पु० पा० ।
(९) त्यादि—कलि० मु० पु० पा० ।
(१०) घटाभावे घटध्वंसेऽनिष्टप्रसङ्गमुपदर्शयति । तथा चेति । मूले, भावान्तरेऽपीति । भूतलादावपि अभावान्तरं नास्तीतिप्रत्ययप्रसङ्गादित्यर्थः ।—गुणानन्दः ।
(११) ध्वंसकालेऽपि प्रतियोगी—पुण० पु० पा० ।

जातीयत्वात्, विरुद्धजातीयत्वे वा (१) स(मान)जातीयत्वानुपपत्तेः, अन्यत्वमात्रेण तथा व्यवहारे तद्वत्यपि प्रसङ्गात्। अभावस्य (तु) विरुद्धस्वभावतयैवाभा-

दीधितिः।

अत्र सजातीयत्वविरुद्धजातीयत्वे भावत्वाभावत्वाभ्याम्(२)। प्रतियोग्यन्यत्वेन प्रतियोगिमदन्यत्वेन(३) वाऽभावव्यवहारे प्रतियोगिमत्यपि तत्प्रसङ्गः। तस्याऽपि(४) प्रतियोगिनस्तद्वतश्च यतः कुतश्चिदन्यत्वादित्याह। अन्यत्वमात्रेणेति। प्रतियोगिमद्यावदन्यत्वेन(५) तथा व्यवहारे त्वेकदा(६) प्रतियोगिमति कालान्तरे तदनुपपत्तिः, अनुगतं(७) च तदन्यत्वं विनाऽभावेन दुर्वचमिति भावः।(८) अभावे अभावान्तरं निरस्यति। अभावस्येति। अभावे अभावान्तरं न तावदविरुद्धस्वभावे(९)नाप्यधिकर-

दीधितिटिप्पणी।

विरुद्धजातीयत्वादिति मूलं, तथा च प्रतियोगिविरुद्धजातीयस्यैव तद्विरुद्धाभावव्यवहारजनकत्वं न तु तदविरुद्धजातीयस्य तत्कार्यस्येत्यर्थः। अभावेन विनेति सम्बन्धः। अभाव इति। अविरुद्ध-

(१) जातीयस्य—कलि० मु० पु० पा०।

(२) भावत्वाभावत्वाभ्यामित्यस्य निर्वाच्यमिति शेषः, तथा च भावान्तरस्य भूतलादेः सजातीयत्वेन भावत्वेन, विरुद्धजातीयत्वात् अभावजातीयत्वात् अनभावत्वात्, विरुद्धजातीयत्वे वा सजातीयत्वापत्तेः भावजातीयत्वानुपपत्तेरिति मूलार्थोऽवसेय इति भावः।—गुणानन्दः।

(३) प्रतियोगिमदन्यत्वेन, तद्वत्प्रतियोगिकान्यत्वेन।

(४) तस्यापि, प्रतियोगिमतोऽपि।—गुणानन्दः

(५) प्रतियोगिमद्यावदन्यत्वेन, तत्त्वावच्छिन्नप्रतियोगिकभेदवत्त्वेन।—गुणानन्दः।

(६) एकदेति। अन्योन्याभावस्य व्याप्यवृत्तित्वादिति भावः।—गुणानन्दः।

(७) ननु तदव्याप्यवृत्तित्वमभ्युपेत्य तथा वाच्यमत आह। अनुगतमिति।—गुणानन्दः।

(८) भावत्वाभावत्वाभ्याम्। अन्यत्वमात्रेण प्रतियोग्यन्यत्वमात्रेण। तथा व्यवहारे प्रतियोग्यभावत्वव्यवहारे। तद्वत्यपि प्रतियोगिमत्यपि तदभावत्वव्यवहारस्य प्रसङ्गात्। अतिप्रसङ्गाच्च प्रतियोगिनि। तद्वदन्यत्वेन तथा व्यवहार इति चेत्, अन्यत्वस्य स्वरूपभेदेनाननुगमात्—कलि० मु० पु० पा०। (९) स्वभावे—पा० २ पु०। स्वभावेन—कलि० मु० पु० पा०।

वान्तरानुभवतर्कयोरभावादिति ।

दीधितिः ।

णस्वरूपेणाभावव्यवहारजनने प्रतियोगिमतोऽपि(१) तद्वापत्त्या स्वीकार्यम्, अभावस्य विरुद्ध(२)स्वभावत्वेन तदयोगात्, नाप्यनुभवबलात्, त(३)दसिद्धेः(४), नाप्यभाववत्त्वप्रत्ययात्, अभावान्तरोपगमे(५) अन्योन्याश्रयचक्रकानवस्थानामन्यतम(६)प्रसङ्गेन लाघवादात्माश्रयस्यैवो(७)पगमात् । एतेन(८) घटाभावो यदि घटा(९)भाववान् स्यात् घटवान् स्यादित्यादेस्तर्कस्याप्या(१०)पादकासिद्ध्या अभावादिति ॥

दीधितिटिप्पणी ।

भावेन प्रतियोग्यविरुद्धजातीयेन अधिकरणेन तद्व्यवहारजननाङ्गीकारे प्रतियोगिमताप्यधिकरणेनाभावव्यवहारापत्तिरूपबाधकेन स्वरूपाधिकरणस्थलेऽभावान्तरं स्वीकृतं, तद्युक्त्याभावेपि अभावान्तरं न स्वीकर्तव्यमित्यर्थः, अविरुद्धस्वभावेऽधिकरण एव तद्युक्तेः, अस्य तु विरुद्धस्वभावत्वादित्यर्थः । आत्माश्रयस्येति । स्वाश्रय(त्व)स्येत्यर्थः । तर्कस्याभावादिति सम्बन्धः । आत्माश्रयत्वाङ्गीकारेण घटाभाववत्त्वस्याङ्गीकारादापादकासिद्धिरित्यर्थः ॥

कल्पलता ।

अतिरिक्ताभावे बाधकानुरोधाद्वेति(११) यदुक्तं त-

(१) प्रतियोगिमत्य—कलि० मु० पु० पा० ।

(२) विरुद्धस्वभावत्वेन, प्रतियोगिमत्त्वासम्भवेन । तदयोगात्, तदापादनासम्भवात्, तथा चापादने इष्टापत्तिरिति भावः ।—गुणानन्दः ।

(३) बलाद्व—कलि० मु० पु० पा० । (४) सिद्धिः—कलि० मु० पु० पा० ।

(५) पगम—कलि मु० पु० पा० । (६) मन्यतर—कलि० मु० पु० पा० ।

(७) श्रयस्यो—कलि० मु० पु० पा० । अन्योन्येति । द्वयोः परस्परमाधाराधेयभावोपगमेऽन्योन्याश्रयः, त्रिचतुरादीनां तथोपगमे चक्रकम्, अनन्ततदभावोपगमे चाऽनवस्थेति ध्येयम् । आत्माश्रयस्य, स्ववृत्तित्वस्य ।—गुणानन्दः ।

(८) एतेन, आत्माश्रयोपगमेन ।—गुणानन्दः । (९) घट—कलि० मु० पु० पा० ।

(१०) तर्कस्या—पा० २ पु० । (११) २८१ पृष्ठे ४ पङ्क्तौ ।

कल्पलता ।

आह । नापीति । अतिरिक्ताभावे(१) बाधकमाशङ्कते । नन्विति । कपालेषु प्रागभावस्य प्रध्वंसस्य वा सत्त्वेन (तदुभयकालेऽपि) कपालानि घटवन्ति स्युः । एवं घटा(२)-भाववति घटे घटोऽपि स्यात् । स्वा(३)भाववति (स्व)-सत्त्वं स्वस्मिन्नपि स्यात्, एवं तत्र तत्रापीति घटपरम्परापत्तिरिति भावः । अनवस्थेति । अभावे अभावान्तरम्, एवं(४) तत्र तत्रापीत्यर्थः । भावान्तरेऽपीति । भूतला(५)दावपि घटाभावव्यवहारोऽधिकरणस्वरूपेणैव स्यादित्यर्थः । न भावान्तरस्येति । सजातीयत्वेन भावजातीयत्वेन अविरुद्धजातीयत्वात् अभावाधिकरणत्वाविरोधित्वादित्यर्थः । विरुद्धेति । अभावाधिकरणताविरोधेनाभावजातीयत्वानुपपत्तेरित्यर्थः । ननु प्रतियोगिभिन्नत्वेनैव भूतलादीनां घटा(६)-भावव्यवहारप्रवर्त्तकत्वमस्तु, किमतिरिक्ताभावस्वीकारेणेत्यत आह । अन्यत्वेति(७) । एवं सति घटवतोपि भूतलस्य घटाभावव्यवहारप्रवर्त्तकत्वं स्यादित्यर्थः । नन्वभावेऽपि तर्हि स्वीक्रियतामभावान्तरमित्यत आह । अभावस्य त्विति । अभावेऽभावान्तरं नानुभूयते यद्बलेनाभावान्तरमङ्गीक्रियेत । यदि घटाभावो(८) घटाभाववान् न(९) स्यादिति तर्कोपि नात्र

(१) अतिरिक्तविनाशपक्षे बाधकमाहेत्यर्थः । (२) घटात्यन्ता—पुण० पु० पा० ।
(३) स्वात्यन्ता—पुण० पु० पा० । (४) एव—पुण० पु० पा० ।
(५) भूता—पुण० पु० पा० । (६) घटाव—पुण० पु० पा० ।
(७) अन्यद्वेति—पुण० पु० पा० ।
(८) क्रियेत । घटाभावो यदि—पुण० पु० पा० ।
(९) स्यात घटवान्—इत्यंशोऽत्र त्रुटित इति भाति ।

कल्पलता ।

प्रभवति, यतः(१) प्रतियोगिविरुद्धस्वभावतया(२) प्रथमाभावादेव घटाभावे घटो नास्तीतिव्यवहारोपपत्तेर्द्वितीयाभावकल्पनाया अनवकाशात्, अधिकरणस्याभावरूपस्य द्वैरूप्याभावाच्च, न ह्यभावः कदापि प्रतियोगिमान(३)पि भवति यथा भूतलादिः, द्वितीयाभावाभ्युपगमेऽनवस्थापत्तिश्चेत्यर्थः । अप(४)व्याख्यानमन्यत् । केचित्तु अभावेऽपि अभावान्तरं, न चानवस्था, तृतीयमादाय तदापत्तेरिति वदन्ति ॥

भिन्नाभावजन्मनि घटतादवस्थ्यं(५) दोष

दीधितिः ।

बाधकान्तरमाशङ्कते । भिन्नाभावेति । न ह्यकार्योत्पादे अकारणं निवर्त्तते, घटोत्पादे पटनिवृत्तिप्रसङ्गात्, अतः कार्यमेव विनाश(६) आस्थीयत इति भावः । भिन्नमात्र इव कार्यमात्रेऽपि विनाशबुद्धिव्यवहारयोभावात् कार्यविशेष एव विनाश

दीधितिटिप्पणी ।

बाधकेति । अतिरिक्ताभावे बाधकान्तरमित्यर्थः । न ह्यकार्योत्पादे इत्यादि यदुक्तं, तन्मयाऽपि स्वीक्रियते एव, परन्तु अतः कार्यमेव विनाश आस्थीयते इत्यत्र व्यवहारानुरोधेन विशेषपदप्रक्षेपः क्रियते, तावतापि तदतिप्रसङ्गनिवारणादित्याशयेनाह । कार्यविशेष

(१) यत—पुण० पु० पा० । (२) तथैव—पुण० पु० पा० ।

(३) योगिना—पुण० पु० पा० ।

(४) प्रतीतिस्तौल्येन घटाभावेऽप्यभावो वर्तत एव, न चानवस्था, द्वितीयतदङ्गीकारे तदभावात् । अथ द्वितीयमादायैवानवस्था, तर्हि प्रथममादायैव सेति तुल्यम्, घटाभावो यदि घटात्यन्ताभाववान् न स्यात् घटवान् स्यादिति तर्कस्यापि सत्त्वात्, अभावान्तरानुभवतर्कयोरिति च विषयसप्तमी, अभावादित्यस्यातिरिक्ताभावस्वीकारादित्यर्थः, तथा चानुभवतर्करूपज्ञानविषयीभूतोऽभावोऽभ्युपेय इत्यर्थ इति भागीरथव्याख्यां खण्डयति । अपेति ।

(५) ताद्रूप्यं—कलि० नु० पु० पा० ।

(६) कार्यं विनाश एवेति योजना ।—गुणानन्दः ।

इति चेन्न। (घट)तादवस्थ्यं(१) हि यदि घटत्वमेव अभिमतम्, एवमे(२)तत्। न ह्यभावजन्मनि घटोऽघटतामुपैतीत्यभ्युपगच्छामः। तत्कालसत्त्वं चेत्, न तर्ह्यभावो जातः, कालान्तरे घटानवस्थानस्वभाव एव हि तदभावः। अस्तु तर्हि निरुपादानत्वं बाधकं, जन्मन उपादानव्याप्तत्वादिति चेन्न। धर्मिग्राहकप्रमाण(३)बाधात्, भावावच्छेदाच्च(४) व्याप्तेः। एतेन निरुपादेयत्वं व्याख्यातम्। गुणादिसिद्धौ चा(५)नैकान्तिकत्वा(६)दिति।

दीधितिः।

आस्थीयत इत्याशयवान् निराकरोति। नेति। बाधकान्तर(७)माशङ्कते। अस्तु तर्हीति। जन्मन इति। जन्मव्यापकस्य सोपादानत्वस्य(८) निवृत्त्या व्याप्यस्य(९) जन्मनो निवृत्तिरिति। धर्मिग्राहकेति। घटादेरिव ध्वंसस्यापि जन्यतायाः प्रत्यक्षसिद्धत्वादिति भावः(१०)। भावेति। भावजन्मन एव सोपादानत्वनियमादित्यर्थः॥

दीधितिटिप्पणी।

एवेति। न तर्ह्यभाव इति मूलम्, तथा च भिन्नाभावजन्मनीत्येतदेव नास्तीति भावः। उपादानम् समवायिकारणम्। जन्मनो निवृत्तिरिति। असमवेतत्वनिबन्धनमतिरिक्तध्वंसजन्म नाङ्गीक्रियते, मन्मते तु कार्यस्वरूपस्य तस्य समवेतत्वाङ्गीकाराद्भवति जन्मेति भावः। एतेनेति मूलम्, निरुपादेयत्वम् असमवायित्वम्॥

(१) तादव्यवस्थ्यं—कलि० मु० पु० पा०। (२) अभिमतमेव—कलि० मु० पु० पा०।
(३) ग्राहकमान—पा० २ पु०। (४) च्छेदकत्वाच्च—पुण० पु० पा०।
(५) सिद्धौ अ—पा० २ पु०। (६) कान्ता—पुण० पु० पा०।
(७) बाधकान्तरम् भावातिरिक्तध्वंसोपगमे।—गुणानन्दः।
(८) उपादानस्य जन्मासामानाधिकरण्यादाह। सोपादानत्वस्येति।—गुणानन्दः।
(९) निवृत्तेर्व्याप्यस्य—कलि० मु० पु० पा०। (१०) भावः—नास्ति कलि० मु० पु०।

कल्पलता ।

ननु यथा पटे जातेऽपि घटस्तदवस्थ एव, तथा ध्वंसे जातेऽपि घटस्तदवस्थ एव स्यादन्यत्वाविशेषात्, तथा च प्रतियोगितादात्म्यमेव विनाशस्याभ्युपेयमित्याह । भिन्नेति । तादवस्थ्य(१)मिति घटजातीयत्वं वा घटस्य, ध्वंसानन्तरकालस्थायित्वं वा । आद्य आ(२)ह । एवमेतदिति । तदेवोपपादयति । न हीति । द्वितीय(मा)ह । तत्कालेति । ध्वंसकालसत्त्वमित्यर्थः । न तर्हीति(३) । ध्वंसस्य प्रतियोग्यसमानकालीनत्वस्वभावत्वादित्यर्थः । अतिरिक्ताभावपक्षे बाधकान्तरमाशङ्कते । अस्तु तर्हीति । ध्वंसो न जायते निरुपादानत्वादाकाशवदित्यर्थः । उपादानम् समवायिकारणम् । इहेदानीं घटो नष्ट इति प्रत्यक्षेण ध्वंसस्योत्पन्नत्वमेव(४) विषयीक्रियते, तथा चानुत्पादे साध्ये धर्मिग्राहकमानबाध इत्यर्थः । निरुपाधेर्बाधा(५)नवकाशादु(६)पाधिमाह । भावेति । यद्यप्यभावान्तरे साध्या(७)व्यापकोयमुपाधिः, तथापि ध्वंसेतरत्वमिहोपाधित्वेन विवक्षितम् । न च पक्षेतरत्वम्, बाधोन्नीतस्य तस्यानुमतत्वात् । ननु ध्वंसो न जायते निरुपादेयत्वात् गोत्वादिवदित्यस्त्वनु(८)मानमित्याह । एतेनेति । निरुपादेयत्वम् कार्यानाश्रयत्वम्(९) । धर्मिग्राहकप्रमाणबाधेन बाधो(१०)-

(१) तादवस्त्य—पुण० पु० पा० । (२) आयमा—कलि० मु० पु० पा० ।
(३) न तर्हीति—नास्ति पा० कलि० मु० पु० । (४) त्पन्नं—पुण० पु० पा० ।
(५) धस्या—कलि० मु० पु० पा० । (६) शाद्यावत्वमु—पुण० पु० पा० ।
(७) साध्य—पुण० पु० पा० । (८) दित्यस्तु—पुण० पु० पा० ।
(९) कार्यानाश्रयत्वम्—नास्ति पा० कलि० मु० पु० । (१०) बाधेन तदु—पुण० पु० पा०

कल्पलता।

नीतपक्षेतरोपाधिग्रासेन (च) निराकार्यत्वेन व्याव्यात्तमित्यर्थः। गुणकर्मादेश्च गुणिभिन्नत्वेन सिद्धौ तत्रानैकान्तिकं कार्यानाश्रयत्व(१)मित्याह। गुणादीति(२)॥

अस्तु तर्हि व्यापकत्वं ध्रुवभावित्वमिति चेन्न। अतादात्म्यात्(३), अतत्का(४)रणत्वाच्च। अस्मद्दिशापि व्याप्तिग्रहो न साहित्यनियमेन, विरोधितया

दीधितिः।

परेषां तादात्म्यतदुत्पत्तिभ्यामेव व्याप्यत्वग्रहाद्व्यापकत्वमपि तदात्मकतत्का(५)रणयोरेव गृह्यते, न च ध्वंसः प्रतियोग्यात्मेति प्रागेवावेदितं, न वा प्रतियोगिकारणमिति न तत्र(६) तद्व्यापकत्वग्रह इत्याह। अतादात्म्यादिति(७)। साहित्यनियमो हि देशतो वा स्यात्कालतो वा। देशोपि संयोगी वा समवायी वा। नाद्यः, गृहे जातस्यापि प्राङ्गणे विनाशोपगमात्। नेतरः, आश्रयनाशेना(८)पि विनाशोपगमात्। द्वितीये त्वाह। विरोधितये-

दीधितिटिप्पणी।

ननु भवन्मतवदतादात्म्यादिसत्त्वेपि व्यापकत्वं ग्रहीष्यत इत्यत आह, अस्मद्दिशापीति मूलम्। न साहित्यनियमेन, वक्तुं पार्यत इत्यर्थः। न्यूनतां परिहरति(९)। साहित्यनियमो हीत्यादि। आश्रयादिनाशेनापीति। तथा च तत्रैव प्रतियोगिसमवायिनि ध्वंसस्य वृत्तित्वरूपसाहित्यनियमो भग्न इत्यर्थः। द्वितीये तु कालत इति पक्षे तु। एकदेशावृत्तित्व-

(१) कार्यत्वाश्रितत्व—पाठः।

(२) इदमुपलक्षणम्, गुणादेर्गुण्यादिभेदासिद्धौ व्याप्यत्वासिद्धं चेत्यपि द्रष्टव्यम्।

(३) अतादात्वात्—पुण० पु० पा०। (४) अतत्क—कालि० मु० पु० पा०।

(५) तत्क—कालि० मु० पु० पा०। (६) तत्र—नास्ति पा० कालि० मु० पु०।

(७) दित्यादि—कालि० मु० पु० पा०। (८) नाशे—कालि० मु० पु० पा०।

(९) न्यूनतामाशङ्क्याह—पा० २ पु०।

विषमसमयत्वात्। नापि जन्मानन्तर्यनियमेन(१), तद्‌सिद्धेः, सिद्धौ वा तत एव(२) क्षणभङ्गसिद्धेः किमनेन। भविष्यत्तामात्रेण(३) व्यापकत्वमस्तीति चेत्, अस्तु, न त्वेतावता हेत्वन्तरानपेक्षत्वसिद्धिः, अद्यतन(४)-घटस्य श्वस्तनकपालमालयैवानैकान्तिकत्वादिति(५)।

दीधितिः।

त्यादि। विरोधः एककालानवस्थायित्वम्॥

दीधितिटिप्पणी।

रूपाविरोधो नास्तीत्यत आह। विरोध इति। अद्यतनघटस्येति मूलं; भविष्यत्तयाऽद्यतनघटव्यापकत्वं श्वोभाविकपालमालायामस्ति, न च तत्र घटोत्तरभावानपेक्षजन्यत्वरूपं साध्यमस्तीति भावः॥

कल्पलता।

चतुर्थं ध्रुवभावित्वं निराकर्त्तुं शङ्कते। अस्त्विति। व्यापकत्वं प्रतियोगिव्यापकत्वं विनाशस्येत्यर्थः, तथा च(६) सिद्धसहेतुकत्वं नाशस्येति भावः। परमते तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तिरित्यभिप्रेत्याह। अतादात्म्यादिति। यदा प्रतियोगी तदा ध्वंस इति कालगर्भापि न व्याप्तिरित्याह। विषमसमयत्वादिति। यः प्रतियोगी स एव (वि)नाश इति तु पूर्वमेव निरस्तम्। यत्र प्रतियोगी तत्र ध्वंस इति देशगर्भापि न व्याप्तिः,

(१) जन्मानन्तर्यनियमेनेति। यदा प्रतियोगी तदुत्तरं तद्ध्वंस इति नियमेन। व्याप्तिग्रह इत्यनुषज्यते।—गुणानन्द,। (२) तत एव, तादृशग्राहकप्रमाणादेव।—गुणानन्दः।

(३) भविष्यत्तामात्रेणेति। तदधिकरणक्षणोत्तरत्वं सामानाधिकरण्यसम्बन्धेन तद्व्याप्यमित्यर्थः।—गुणानन्दः।

(४) अद्यतनेति। श्वस्तनकपालमालाया अद्यतनघटं प्रति भविष्यत्तामात्रेण व्यापकत्वेन तत्रैव व्यभिचारादित्यर्थः।—गुणानन्दः। (५) अनेकान्तादिति—पुण० पु० पा०।

(६) त्यर्थः, यथा च—पुण० पु० पा०।

कल्पलता ।

आश्रयनाशजन्यद्रव्यादिध्वंसे व्यभिचारादिति भावः। स्वोत्पत्त्यव्यवहितोत्तरक्षण एव ध्वंस इत्यपि नियमो नास्ति, असिद्धेरित्याह । नापीति । तत एवेति । एतन्नियमबलादेवेत्यर्थः, तथा च ध्रुवभावित्वादहेतुकत्वमहेतुकत्वाच्च ध्वंसस्याग्रिमक्षण एवोत्पाद इति प्रक्रियागौरवमिति भावः । ननूत्पन्नस्य विनाशो भविष्यत्येवेत्यपि नियम एवेत्याशङ्कते । भविष्यत्तेति(१) । अस्त्विति । एतादृशध्रुवभावित्वेनाहेतुकत्वं(२) वा प्रतियोगिभिन्नहेत्वनपेक्षत्वं(३) वा साधयितुं न शक्यत इत्यर्थः । कुतो न शक्यत इत्यत आह । अद्यतनेति(४) । श्वस्तनकपालमालाया अवश्यम्भाविन्या अपि मुद्गरप्रहारादिरूपहेत्वन्तरापेक्षित्वेनानैकान्त्या(५)दित्यर्थः ॥

---

दीधितिः ।

उत्पन्नस्यापि प्रतियोगिनो य(६)दीतरविरहेणापि विनाशाजनकत्वं, तदा यावत्सत्त्वं(७) प्रतिबन्धकादिवशात् तदसमवहितो विनाशं न जनयेदित्युत्पन्नोपि भावः कश्चिदविनाशी स्यात्, न चैवम्, अतो नोत्पन्नस्येतरविरहेण विनाशाजनकत्वमिति,

दीधितिटिप्पणी ।

इतरकारणासत्त्वे दण्डस्य घटव्यभिचारो न क्षतिकरः, व्यापकव्यभिचारस्यैवादोषत्वात्, अतोऽविनाशित्वप्रसङ्गरूपनिष्कृष्टार्थमाह । उत्पन्नस्यापीति । न चैवमिति च्छेदः । इति पर्यन्तं दूष्यमतकथनम् ।

---

(१) भविष्यत्तेति ।—नास्ति पा० कलि० मु० पु० ।
(२) हेतुकत्व— कलि० मु० पु० पा० । (३) हेत्वनपेक्षित्वं—कलि० मु० पु० पा० ।
(४) बौद्धमतेन व्यभिचारमाह । अद्यतनेति ।—भगीरथठक्कुरः ।
(५) पेक्षित्वेनानैकान्त्या—पुण० पु० पा० ।
(६) नोर्य —कलि० मु० पु० पा० । (७) यावज्जीवं—कलि० मु० पु० पा० ।

एतेन सापेक्षत्वे विनाशस्य(१) व्यभिचारोऽपि स्यात्, विनाशहेतूनां प्रतिबन्धवैकल्यसम्भवादिति परास्तम्। कपालसन्ततितुल्य(२)योगक्षेमत्वात् विनाशस्येति।

दीधितिः।

तदिद(३)मुत्पत्तिमतां भावानां विनाशनियमासिद्धौ(४) न सिद्ध्यतीति तत्सिद्धिरवश्यमुपेया(५), तथा चान्वयव्यतिरेकसिद्धकारणभावानां सहकारिणां सर्वत्र समवधानं सैव(६) साधयिष्यतीत्याशयवानाह। एतेनेत्यादि। प्रतिबन्धेति। प्रतिबन्धेन वैकल्यस्येत्येके(७)। प्रतिबन्धवैकल्ययोरित्यपरे॥

दीधितिटिप्पणी।

तदिदमित्यारभ्य पुनः सिद्धान्तकथनम्। इदम् पूर्वोक्तमात्रम्। तत्सिद्धिर्भवताऽवश्यमुपेया। सैव, तादृशव्याप्तिरेव। साधयिष्यतीति। तथा चातएव न कोऽप्यविनाशी भवेत् येन इतरविरहेणापि विनाशजनकत्वमङ्गीक्रियेतेति भावः॥

कल्पलता।

ननु यदि विनाशस्य हेत्वन्तरापेक्षा, तदा कदाचिदुत्पन्नोपि(८) भावो न नश्येत्, हेतुसाकल्ये सत्यपि प्रतिबन्धसम्भवात्, हेतूनां वैकल्यस्यैव वा(९) सम्भवादित्याह(१०)। एतेनेति। एवं सति कपालमालापि कदाचिन्न भवेदित्यपि सम्भाव्येतेत्यर्थः॥

---

(१) सापेक्षत्वे— कलि० मु० पु० पा०। (२) सन्ततिसमान—पुण० पु० पा०।
(३) सिद्धान्तयितुराशयमाह। तदिदमिति। (४) अव्यवहितोत्तरक्षण इत्यादि।
(५) स्वश्याभ्युपेया—पुण० पु० पा०। (६) सैव, निरुक्तनियमसिद्धिरेव।—गुणानन्दः।
(७) स्येत्यन्ये—पुण० पु० पा०। (८) तदा उत्पन्नोऽपि—पुण० पु० पा०।
(९) स्यैव चा—पाठः। (१०) दित्यत आह—पुण० पु० पा०।

अस्तु तर्हि चरमः पक्षः। तथाहि, विनाशो न जायते, अभावत्वात्, प्रागभाववत्, जातोऽपि(१) वा निवर्तते, जातत्वात्, घटवदिति। नैतदेवम्। प्रागभावो जायते, अभावत्वात्, विनाशित्वाद्वा(२), ध्वंसवत्(३), घटवद्वा, अजातो वा न निवर्तते, अजातत्वात्, आकाशवत्, शशविषाण(४)वद्वेतिवदसाधनत्वात्।

दीधितिः।

चरमः पक्षः अभावत्वमेव ध्रुवभावित्वमिति। जन्मविरहे (हे)त्वपेक्षा(५)विरहः सुतरां सिध्यतीति तं साधयति। तथाहीति। विपक्षे बाधकमाह। जातो वेति। (प्रागभाव इति।) अभावत्वे हेतौ ध्वंसो विनाशित्वे च घटो दृष्टान्तः। अजातो वेत्यादि(६) विपक्षे बाधकम्॥

दीधितिटिप्पणी।

अभावत्वमेव ध्रुवभावित्वमितीति। नाशस्य तत्र पक्षत्वासम्भवादेतत्। विपक्षे बाधकमिति॥

कल्पलता।

चरमः पक्ष इति। ध्रुवभावि(७)त्वविकल्पस्येति शेषः, स चाभावत्वं वेति पक्षः। ध्रुवभावित्वं विनाशस्याभावत्वं, तथा च तेनैवाहेतुक(८)त्वम्, अहेतुक(८)त्वे च प्रयोगं स्वमते(न) दर्शयति। तथाहीति। विपक्षबाधकमाह। जातोपि वेति। यदि जायेत विन-

(१) जातो—दीधितिकृन्मतः पाठः।

(२) अभावत्वात, नाशित्वाद्वा—पा० २ पु०।

(३) त्वाद्वा, प्रध्वंसवत्—पुण० पु० पा०। (४) विषाणादि—पुण० पु० पा०।

(५) त्वत्पक्ष—पा० २ पु०। (६) त्यादीति।—पा० २ पु०।

(७) भाव—पुण० पु० पा०। (८) हेतु—कालि० मु० पु० पा०।

कल्पलता ।

इयेत, तथा च घटोन्मज्जनप्रसङ्ग इति भावः । अत्रा-प्रयोजकत्वं दर्शयति । प्रागभाव इति । यथा(१) प्राग-भावस्य(२) जातत्वेऽभावत्वमप्रयोजकम्, तथा ध्वंस-स्या(३)जातत्वे तदतन्त्रम्(४), तथा चानुभवतर्कादि-साचिव्यमिहानुसरणीयमिति भावः । क्रमेण दृष्टान्त-माह । ध्वंसवद्घटवद्वेति(५) । विपक्षे(६) बाधकमाह । अजातो वेति । प्रागभावो यदि न जायते न निवर्त्तेत, निवर्त्तते च, तस्माज्जायत इत्यर्थः ॥

किमेतेषां दूषणमिति चेत्, भावावच्छिन्नव्याप्ति-

दीधितिः ।

भावावच्छिन्नेत्यादि(७) यथायोग्यं दूषणमूहनीयम्, जा-तत्वेन विनाशित्वे विनाशित्वेन च जातत्वे साध्ये साधनाव-च्छिन्नसाध्यव्यापकस्य भावत्वस्योपाधित्वात् तत्र तयोरप्रयो-

दीधितिटिप्पणी ।

प्राथमिकाजातत्वानुमाने अभावत्वहेतुकजातत्वानुमाने च न भावत्वस्योपाधित्वं, साधनावच्छिन्नसाध्याव्यापनात्, भावा-वच्छिन्नव्याप्तीत्यनेन साधनावच्छिन्नस्यैव लाभादत आह । यथा-योग्यमिति । तदेवाह । जातत्वेनेति । विपक्षबाधकरूप इत्यर्थः । चतुर्थे विपक्षबाधके दोषो नायात इत्यत आह ।

(१) इति । तथा—पुण० पु० पा० । (२) भावस्या—कालि० मु० पु० पा० ।

(३) ध्वंसस्य—कालि० मु० पु० पा० ।

(४) जातत्वेऽभावत्वमप्रयोजकम्—कलि० मु० पु० पा० ।

(५) द्वटवत्त्वेति—पुण० पु० पा० । (६) विपक्ष—पुण० पु० पा० ।

(७) ननु जायत इति साध्ये भावत्वस्य नोपाधित्वसम्भवः, ध्वंसे साध्याव्यापकत्वादत आह। भावावच्छिन्नेत्यादीति । विशदयति । जातत्वेनेत्यादि । जातो वा न निवर्त्तेत इत्यस्य तर्कपरत्वे साध्य इत्यस्यापाय इत्यर्थः । ध्वंसप्रागभावयोर्व्यभिचारमाशङ्क्याह । साधनावच्छिन्नेति ।—गुणानन्दः ।

कत्वादप्रयोजकत्वम्, प्राक्प्रध्वंसाभाव(१)ग्राहकप्रत्य-

दीधितिः।

जकत्वम्, विनाशित्वस्य च सोपाधितया जातत्वाव्याप्यत्वेन जातत्वाभावो नाविनाशित्वव्याप्य इति तस्याऽप्रयोजकत्वम्, विपक्षबाधकयो(२)श्चाप्रयोजकत्वेनाजातत्वे जातत्वे चाभावत्वस्याप्रयोजकत्वम्। प्रागित्यादि। प्रागभावस्य जन्यत्वे साध्ये(३) यद्यपि प्रत्यक्षेण न बाधः, तस्याजन्यत्वाग्राहकत्वात्, तथापि प्रत्यक्षतः सिद्धस्य प्रागभावस्य प्रागभावान्तरकल्पनायामनवस्थानाद(४)जन्यत्वसिद्ध्या प्रत्यक्षबाधो(५)ऽभिहितः। ध्वंसस्याजन्यत्वे साध्ये तज्जन्यत्वग्राहकप्रत्यक्षबाधः। केचित्तु जातत्वाजातत्वाभ्यां ध्वंसप्रागभावयोर्विनाशित्वाविनाशित्वानुमानं प्रसङ्गागतम्, तत्र प्रागभावस्याविनाशित्वे प्रत्यक्षबाधो दर्शित इत्याहुः(६)। प्रागभावस्य जन्यत्वे तत्पूर्वं, ध्वंसस्य च विनाशित्वे तत्पश्चा(७)त्कार्यसत्त्वप्रसङ्गः, ध्वंसप्रागभावानाधा-

दीधितिटिप्पणी।

विनाशित्वस्य चेति। आद्येऽनुमाने अभावत्वहेतुना जातत्वानुमाने च दोषो न लब्धोऽत आह। विपक्षबाधकयोश्चेति। ध्वंस एवं भ्रमो माभूदित्यत आह। ध्वंसस्येति। प्राक् पश्चादिति यथायोग्येन समर्थयति। प्रागभावस्येति। उन्मज्जनपदस्य उत्पत्तिवाचकत्वादुत्पत्त्यापादकं ना-

(१) भावे—पुण० पु० पा०।

(२) विपक्षबाधकयोः, जातत्वे विनाशित्वव्याप्यत्वमूलकयोस्तर्कानुमानयोः।—गुणानन्दः।

(३) साध्यत्वे—पुण० पु० पा०।

(४) यदा स प्रागभावो नोत्पन्नस्तदा घटवत्त्वप्रसङ्गभयेन प्रागभावान्तरकल्पनाया आवश्यकत्वादिति भावः।—गुणानन्दः।

(५) प्रत्यक्षबाध इति। प्रत्यक्षसिद्धे प्रमाणान्तरेण बाध इति तदर्थ इति भावः।—गुणानन्दः।

(६) केचित्तु......इत्याहुः—अयं पाठः कालि० मु० पु० नास्ति।

(७) विनाशित्वे पश्चा—कालि० मु० पु० पा०।

क्षबाधः(१), प्राक् पश्चाच्च कार्योन्मज्जनप्रसङ्गलक्षण-प्रतिकूलतर्कश्च(२)। अथोन्मज्जने को दोष इति चेत्, कालविच्छेद(३)प्रत्यय(४)स्यानुभयात्मकत्वप्रसङ्गः। अयथार्थत्वे तस्य द्विचन्द्रदर्शनकाले चन्द्रदेशा(५)विच्छेदवत् तत्त्व(६)तः कालाविच्छेदे भावस्य(७) प्राक्प्रध्वंससहवृत्तित्वेना(८)विरोधप्रसङ्गात्। यथार्थत्वे तु(९) भेदस्थितौ(१०) तदुन्मज्जनानुपपत्तेः। एतेन

दीधितिः।

रकालस्य प्रतियोगिसत्त्वनियमादित्याह। प्रागिति। अनुभयेति।

दीधितिटिप्पणी।

स्तीत्यर्थमाह। कार्यसत्त्वप्रसङ्ग इति। कालविच्छेदप्रत्ययस्येति मूलम्, यदि भावोन्मज्जनं स्यात्तदा घटादेः कालस्य विच्छेदप्रत्ययो योऽयमुभयसिद्धः स किं भ्रमः स्यात् प्रमा वा स्यात्, नाद्य इत्याह। अयथार्थत्व इति। एतस्यायथार्थत्वं तदैव स्याद्यदि वास्तवं तद्वतः घटवतः कालस्याविच्छेदः स्यात्(११), तदैव विषयबाधात्, एवं च निखिलकालस्यैव घटवत्तायां तत्प्रागभावकालस्यापि तथात्वेन तेन सह घटस्याविरोधप्रसङ्ग इत्यर्थः। मूले द्विचन्द्रेति दृष्टान्ते यथा द्विचन्द्रदर्शनस्यायथार्थत्वनिबन्धनश्चन्द्रदेशस्याविच्छेद इत्यर्थः। यथार्थत्वेत्विति मूलम्, विच्छेदप्रत्ययस्येति सम्बन्धः। मूले भेदस्थितौ अघटकालाद्घटकालस्य भेदस्थितौ, सार्वकालिकत्वरूपमुन्मज्जनमनुपप-

(१) बाधश्च-पुण० पु० पा०।

(२) तर्कवत्त्वञ्च-पुण० पु० पा०। तर्कहतत्वञ्च-पा० २ पु०। (३) विच्छेदः, नास्तिता।

(४) यत्व—पुण० पु० पा०। (५) देश—कलि० मु० पु० पा०।

(६) तद्व—कलि० मु० पु० पा०। (७) भावस्य—नास्ति पा० २ पु०।

(८) वृत्तितया-पा० २ पु०। (९) तु—नास्ति पा० २ पु०।

(१०) मूले भेदस्थिताविति। एतत्कालावृत्तित्वे सति यदेतदनन्तरकालवृत्ति तदेतत्पूर्वकालवृत्तितो भिन्नमिति नियमादिति भावः।—गुणानन्दः।

(११) तद्वतः कालस्याविच्छेदे—इति मूलपाठमभिप्रेत्येदमुक्तमिति भाति।

प्रागभावकाले(१) प्रध्वंसोन्मज्जनं तत्काले च प्रागभावोन्मज्जनमपास्तम्। भाववदभावयोरपि उ(२)भयविरोधिस्वभावत्वादिति।

दीधितिः।

यथार्थोऽयथार्थश्चेत्युभयम्। भाववदिति। यथा भावस्य प्रतियोगिनो ध्वंसप्रागभावविरोधित्वं, तथा ध्वंसस्य प्रतियोगिप्रागभावयोः, प्रागभावस्य च ध्वंसप्रतियोगिनोर्विरोधित्वमित्यर्थः। न चैवं ध्वंसप्रागभावपरम्परयोरपि भावविरोधित्वान्नोन्मज्जनमिति वाच्यम्। अनन्ततादृशपरम्परा(३)कल्पनामपेक्ष्य लाघवेन तयोरेवानन्तत्वानादित्वयोः कल्पनाया न्याय्यत्वात्॥

दीधितिटिप्पणी।

ज्ञमिति भावः। नैय्यायिकोपरि बौद्धेन दत्तदूषणमुद्धरति मूले, एतेनेति। तथा ध्वंसस्य प्रतियोगिप्रागभावयोः, विरोधित्वमिति सम्बन्धः। ध्वंसप्रागभावपरम्परयोरिति। ध्वंसपरम्परयोः प्रागभावपरम्परयोर्वेत्यर्थः।

कल्पलता।

एतेषामिति। अनुमानतर्काणामित्यर्थः। भावत्वेति(४)। जातो वा(५) निवर्तेत(६) जातत्वादित्यत्र अजातो वा न निवर्तेत अजातत्वादित्यत्र च साधनधर्मा(७)वच्छिन्नसाध्यव्यापकं भावत्वमुपाधिरतो विपक्षबाधकद्वयस्य आभासत्वे ध्वंसपक्षकप्रागभाव-

(१) प्रागभाव-कलि० मु० पु० पा०। (२) भाववदभावयोरु—पा० २ पु०।
(३) परम्परा—नास्ति कलि० मु० पु०।
(४) भावावच्छिन्नेति मूले भावत्वावच्छिन्नेति पाठाभिप्रायकमिदम्।
(५) जातो न—पुण० पु० पा०। (६) निवर्त्तते—पुण० पु० पा०।
(७) साधना—पुण० पु० पा०।

कल्पलता।

पक्षकयोरनुमानयोरप्रयोजकत्वमित्यर्थः । तर्कयोर्भावत्वावच्छिन्नव्याप्तिकत्वाद्धेत्वो(१)रप्रयोजकत्वमिति योजना । अपव्याख्यानमन्यत् । ( प्रागिति ) प्रागित्यत्राभाव इति सम्बध्यते । इहेदानीं नष्ट इति प्रध्वंसग्राहकं प्रत्यक्षं, तद्बाधितं ध्वंसस्याजन्यत्वसाधनं, इह तन्तुषु भविष्यति पट इति प्रागभावग्राहकं प्रत्यक्षं, तद्बाधितं च प्रागभावे जन्यत्वानुमानं, प्रागभावस्य हि जन्यत्वे तस्यापि प्रागभावान्तरमेवं तस्यापीत्य(२) नवस्थादुःस्थतया प्रत्यक्षमेवैतादृशं नोदीया(३)दिति भावः । प्रागिति । प्रागभावस्य जन्यत्वे(४)प्राक्कार्योन्मज्जनं प्रध्वंसस्य नाशे(५) पश्चात्कार्योन्मज्जनप्रसङ्ग इत्यर्थः । ननु पूर्वमपि घट आसीत्, कुतश्चिन्निमित्तान्नोपलभ्यत इति स्यात्, एवं ध्वंसानन्तरमपि घटः स्यात् कुतश्चिन्निमित्तान्नोपलभ्यत इति स्यादित्याशङ्कते । अथेति । कालेति । घटध्वंसानन्तरमिदानीं घटो नास्तीति यः कालविच्छेदप्रत्ययः स यद्ययथार्थस्तदा तदा(६)नीमपि घटसत्त्वे ध्वंससत्त्वे च तयोर्विरोधो न स्यात्, द्वयोः समानकालीनत्वात् । यथार्थत्वे (तु) घटध्वंस एव तदा अनुभूयते इति कुतो (घटो) न्मज्जनप्रसङ्ग इत्यर्थः । अनुभयात्मकत्वे(७)ति । यथार्थायथार्थोभयानात्मकत्वमित्यर्थः(८) । द्विचन्द्रे-

( १ ) द्धेतो—पुण० पु० पा० । ( २ ) तस्याप्य—कलि० मु० पु० पा० ।
( ३ ) नोदिया—पुण० पु० पा० । ( ४ ) प्रागभावस्याजन्यत्वात्—कलि० मु० पु० पा० ।
( ५ ) नाशसत्त्वे—कलि० मु० पु० पा० । ( ६ ) र्थस्तदा—कलि० मु० पु० पा० ।
( ७ ) त्वमि—कलि० मु० पु० पा० ।
( ८ ) यथार्थत्वायथार्थत्वोभयानात्मकत्वमित्यर्थः—कलि० मु० पु० पा० ।

कल्पलता।

ति(१)। एक एव चन्द्रो मध्ये विच्छिन्नत्वेन योऽनुभूयते स मध्येऽपि यथास्त्येव, विच्छेदप्रत्ययस्या (यथा) र्थत्वात्, एवं मध्येऽपि घटः स्यादेव, नास्तीति प्रत्ययस्यायथार्थत्वादित्यर्थः। एवं प्रागभावकालीनोऽपि घट(२)नास्तिताप्रत्ययो विकल्पनीयः। ननु सन्तु प्रागभावाः प्रध्वंसाश्च अनन्ता एव घटविरोधिनः, तथा च जातत्वाद्विनाशित्वाच्चेति हेतू अपि प्रागभावोत्पन्नत्वप्रध्वंसनाशित्वसाधके(३) समाहिते(४) भवत इति चेन्न। प्रध्वंसानां प्रागभावानां च तावतां भेदाननुभवात्, (५)हेतुद्वये च भावत्वस्योपाधेरुक्त(६)त्वात्, कल्पनागौरवप्रसङ्गाच्चेति। ननु घटप्रागभावकाले घटश्चेत् नास्ति, तदा तद्विरोधिना ध्वंसेन भवितव्यम्, एवं घटध्वंस(७)काले घटश्चेन्नास्ति तदा प्रागभावेन भवितव्यम्, एकविरोधिविरहस्य(८) विरोध्यन्तरानियतत्वादित्यत आह। एतेनेति। विच्छेदप्रत्ययस्यानुभयात्मकत्वप्रसङ्गेनेत्यर्थः। तर्हि विरोधिविगम(९)काले विरोध्यन्तरं कथं न भवेदित्यत आह। भाववदिति। यथा घटस्य प्रागभावप्रध्वंसौ विरोधिनौ तथा प्रागभावस्य घटतद्ध्वंसौ(१०) ध्वंसस्य (च) घटतत्प्रागभावाविति नासौ विरोधिविगम(११)काल इत्यर्थः।

---

(१) द्वितन्त्रेति—पुण० पु० पा०। (२) कालीनेपि घटे—कालि० मु० पु० पा०।
(३) साधिके—पुण० पु० पा०।
(४) हेतुशब्दस्य नित्यपुंलिङ्गत्वात्कथमेतदिति चिन्त्यम्। (५) ननुगमात् पाठः।
(६) पाधेरसक्त—पुण० पु० पा०। (७) घटध्वस—कालि० मु० पु० पा०।
(८) एकविरोधिविरहकालस्य—पुण० पु० पा०। (९) विरह—पुण० पु० पा०।
(१०) घटतत्प्रध्वंसौ—पुण० पु० पा०। (११) विरोधिनिगम—पुण० पु० पा०।

कुत पुनः स्थिरासिद्धिः प्रत्यभिज्ञानात्, क्षणिकत्वानुपपत्तेश्च। लक्षणा(१)भेदेन व्यभिचारिजातीयत्वात् प्रत्यभिज्ञानम(२)प्रमाणमिति चेन्न(३)। अवा-

दीधितिः।

बाधकानवतारेपि विना साधकं नार्थसिद्धिरित्याशयेन पृच्छति। कुतः पुनरिति। उत्तरं प्रत्यभिज्ञानादिति।(४) पूर्वापर(५)कालीनाभेदावगाहिप्रत्यक्षमेव स्थैर्यप्रमाणमित्यर्थः। अर्थापत्तिं(६) प्रमाणयति। क्षणिकत्वेति। क्षणिकत्वे(७) अनुगतगवादिव्यवहारस्यानुपपत्ते(८)रित्यर्थः। निश्चितार्थव्यभिचारज्वाला(९)दिप्रत्यभिज्ञासाधारणं प्रत्यभिज्ञा(१०)त्वं न प्रामाण्य(११) प्रयोजकं, न चात्र तत्प्रयोजकान्तरमीक्षामहे,

दीधितिटिप्पणी।

बाधकानवतारेपीति। स्वार्थे बाधकाभावनिबन्धना न तस्याः सिद्धिः, किं तु साधकनिबन्धनेत्यर्थः। क्षणिकत्वस्यानुपपत्तिरिति वक्तुं न पार्यते, तदा क्षणिकत्वानुपपत्तेः क्षणिकत्वबाधरूपात् अक्षणिकत्वस्थैर्यसिद्धिरित्यर्थः स्यात्, एवं च साध्याविशेषः, क्षणिकत्वबाधस्यैव स्थैर्यसिद्धिरूपत्वात्, अतः सप्तमीसमासेनाह। क्षणिकत्वइति। निश्चितेति। ज्वालादौ या प्रत्यभिज्ञा तस्याऽप्रामाण्यं निश्चितं, ज्वालाया अस्थिरत्वात्, लक्षणेति मूलं, निखिलप्रत्यभिज्ञाना-

(१) लक्षणेति। प्रत्यभिज्ञानस्वरूपेत्यर्थः।—गुणानन्दः। लक्षण—पा० २ पु०।

(२) प्रत्यभिज्ञा न—कलि० मु० पु० पा०। (३) चेत्—पा० २ पु०।

(४) नानादेशवर्तिन्यपि तद्देशतदितरदेशवर्तिन्यभेदग्रहस्यापि प्रत्यभिज्ञानत्वात्तस्य न स्थैर्यमानत्वमत आह। पूर्वापरेति।—गुणानन्दः।

(५) पूर्वापरा—पा० २ पु०। (६) अनुपपत्तिं—पुण० पु० पा०।

(७) क्षणिकत्वे, गोत्वादीनाम्। अपोहवादस्य च निरसनीयत्वात् सदेव गोत्वादिकमनुगतं वाच्यम्, तथाच सत्त्वेन न क्षणिकत्वसिद्धिरिति भावः।—गुणानन्दः।

(८) स्यानुपपत्ति—पा० पु०। (९) ज्ञाना—पा० २ पु०।

(१०) प्रत्यभिज्ञान—पुण० पु० पा०। (११) प्रामाण्ये—पुण० पु० पा०।

न्तरलक्षणभेदेनाव्यभिचारानियमात् (१)। किं तदिति चेत्, विरुद्धधर्मासंसृष्टविषयत्वम्, सिद्धं च तदत्र। एवम्भूतमपि कदाचिद्व्यभिचरेदिति चेन्न। विरुद्धधर्मसंसर्गा(२)नास्कन्दितस्यैकत्वप्रत्ययस्य व्यभिचारे सर्वत्रैकत्वोच्छेदप्रसङ्गात्, तथा चानेकत्वमपि न स्यादिति भव निष्किञ्चनः (३)। तस्माद्भेदप्रवृत्ताववश्यं विरुद्धधर्मसंसर्गः, तदसंसर्गे वाऽ(४)वश्यं भेदव्यावृत्तिरिति भेदाभेदव्यवहारमर्यादा(५)।

---

दीधितिः।

इत्याशङ्कते। लक्षणेति। अव्यभिचारः यथार्थत्वम्। विरुद्धधर्म्मासंसृष्टविषयमपि सन्दिग्धाप्रामाण्यमिति(६) शङ्कते। एवम्भूतमपीति।

दीधितिटिप्पणी।

मेकलक्षणतयेत्यर्थः। अवान्तरेति मूलम्, तथा च तादृशप्रत्यभिज्ञाविषयत्वमत्र हेतौ प्रवेशितमित्यर्थः। व्यापकाभावस्य व्याप्यत्वं दर्शयति, तदसंसर्गे वेति मूलम्। वाकारश्चार्थः।

कल्पलता।

**एवं स्थैर्ये(७) यथा बाधकं प्रमाणं नास्ति, तथा (साधकमपि नास्ति, तथा च) साधकबाधकमानाभा-**

---

(१) चारदर्शनात्—पा० २ पु०। (२) धर्माध्यासा—पा० २ पु०।

(३) मूले, निष्किञ्चनः, शून्यतावादी।—गुणानन्दः।

(४) संसर्गे चा—पा० २ पु०। (५) व्यवहारव्यवस्था—पुण० पु० पा०।

(६) मित्या—पुणः पु० पा०। (७) स्थैर्ये—पुण० पु० पा०।

कल्पलता ।

वात् संशयः स्यादित्यनुशयेन पृच्छति । कुतः पुनरिति । उत्तरम्, प्रत्यभिज्ञानादिति । स एवायं घट इति प्रत्यक्षमेव पूर्वापर(काल)योरभेदग्राहकमित्यर्थः । मानान्तरमाह । क्षणिकत्वानुपपत्तेश्चेति(१) । अपोहवादनिरासेन गोत्वादिसामान्यानां देशकालानुगतानां क्षणिकत्वं सर्वथाप्यनु(पपन्न)मिति तद्ग्राहकमानादेव स्थैर्यसिद्धिरिति हृदयम् । ननु तत्तेदन्तोल्लेखिज्ञानत्वमेव प्रत्यभिज्ञानस्य लक्षणं, तच्च ज्वाला(२)दिप्रत्यभिज्ञानेऽप्यस्तीति व्यभिचारिजातीयत्वेन(३) तदप्रमाणमिति शङ्कते । लक्षणेति । प्रत्यभिज्ञानमात्रं न प्रमाणम्, अपि तु प्रत्यभिज्ञानविशेष इति परिहरति । अबाधितेति । किं तदिति । अप्रमा(ण)रूपप्रत्यभिज्ञानव्यावर्तकं किं लक्षणमित्यर्थः । ननु सर्वत्र सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गस्य दर्शितत्वाद्विशिष्टं प्रत्यभिज्ञानमसिद्धमेवेत्यत आह(४) । सिद्धमिति । तत्साधकप्रसङ्गतद्विपर्ययनिरासेन सिद्धमेव तादृशं प्रत्यभिज्ञानमित्यर्थः । एवम्भूतमिति । विरुद्धधर्मासंसृष्टविषयमित्यर्थः । सर्वत्रेति । क्षणिकमप्येकं न स्यादित्यर्थः । मा भूदेकत्वं, ततः किमित्यत आह । तथा चेति । एकत्वपर्युदासात्मकत्वादनेकत्वस्येत्यर्थः । व्यभिचाराभावमेवोपसंहरति । तस्मादिति ।

(१) उपपत्तेः कालि—मु० पु० पा० ।

(२) तच्च ज्ञाना कालि—मु० पु० पा० ।

(३) जातीयतया—पुण० पु० पा० ।

(४) मेवेत्याह—पुण० पु० पा० ।

निष्क(१)म्पप्र(२)दीपकुड्मलेषु निपुणं निभालयन्तोऽपि न विरुद्धधर्मसंसर्गमीक्षामहे, अथ च प्रत्यभिज्ञानमवधूय तत्र भेद एव पदं विधत्त इति चेत्, कस्य प्रमाणस्य बलेन। आश्रयनाशस्य हुताशननाश(३)हेतुत्वेन विज्ञातत्वात् तस्य चात्र प्रतिक्षणमुपलब्धेः, वर्तितैलयोरुत्तरोत्तरमपचीयमानत्वात् पूर्वस्य नाश उत्तरो(४)त्पादश्च न्यायसिद्ध इति चेत्, नन्वयं

दीधितिः।

तादृशमपि निश्चिताप्रामाण्यमित्याशङ्कते। निष्कम्पेति(५)। आश्रयेति। यथालोका(६)नुभवमेतत्। वस्तुतस्तूत्पन्नस्य वह्नेरवयवक्रियादिक्रमेण नाशो वह्न्यन्तरस्य तु(७) कारणाभावाद·

दीधितिटिप्पणी।

तादृशमपि विरुद्धधर्माऽसंसृष्टविषयप्रत्यभिज्ञानमपि। कस्य प्रमाणस्य बलेनेति मूलं तत्र भेद एव पदं (वि)धत्त इत्यत्र प्रमाणमाशङ्कते। आश्रयनाशेति मूलम्, वर्तितैलरूपाश्रयनाशस्य दीपरूपवह्निनाशहेतुत्वेनावगमादित्यर्थः। पूर्वस्येति मूलम्, दीपस्येति विशेष्यम्। दूषयति। यथेति। लोके तैलादिनाशाद्दीपो नष्ट इत्यादेरनुभवस्य सत्त्वादेवेदं लिखितं, न तु वास्तवं तैलादिनाशो दीपनाशहेतुरित्यर्थः। तदेवोपपादयति। वस्तुतस्त्विति। ननु सतैलस्थले यथा पूर्ववह्नेर्नाशेऽपि वह्न्यन्तरोत्पादाद्दीपस्तिष्ठति, तथा निस्तैलस्थलेऽपि किं न स्यादत आह। वह्न्यन्तरस्य त्विति। ननु वह्नेराशु विनाश इत्यत्र किं मानमत

(१) निःक—पा० २ पु०। (२) प्र—नास्ति २ पु०।
(३) हुताशनाश—पुण० पु० पा०। (४) उत्तरस्यो—पुण० पु० पा०।
(५) निस्कम्पेति—पुण० पु० पा०। निःकम्पेति—पा० २ पु०।
(६) वर्तितैलादिरूपाश्रयनाशाद्वह्नेर्नाशमसहन्नाह। यथालोकेति—गुणानन्दः।
(७) तु—नास्ति—कलि० मु० पु०।

प्रत्यनीकधर्मसंसर्ग एव, नष्टत्वानष्टत्वयोराश्रयनाशानाशयोर्वा ए(१)कत्र तेजस्यनुपपत्तेः। सोऽयं शतं शिरश्छेदेऽपि न(२) ददाति विंशति पञ्चकं तु(३) प्रयच्छतीति किमत्र ब्रूमः।

दीधितिः।

नुत्पादः, अवयवानां विसरालु(४)स्वभावत्वाच्चाशुविनाशोऽनवरतानुभूयमान(५)परिमाणभेदासिद्ध इति॥

दीधितिटिप्पणी।

आह। अवयवानामिति। अवयवानां विसरालुस्वभावाधीनो वह्नेराशुविनाशोऽनुभूयमानपरिमाणभेदादनुमीयत इत्यर्थः॥

कल्पलता।

ननु भेदप्रवृत्तेर(६)वश्यं विरुद्धधर्मसंसर्ग इत्येव नियमो नास्ति, निष्कम्पप्रदीपे भेदे सत्यपि विरुद्धधर्मसंसर्गाभावादित्याह। निष्कम्पेति। कस्येति। प्रदीपे केन प्रमाणेन भेदः सिद्ध इत्यर्थः। भेदसाधकं प्रमाणमुपन्यस्यति परः, आ(७)श्रय(नाश)स्येति। आ(८)श्रयोऽत्र निमित्तकारणमिन्धनादिः। प्रतिक्षणमिति सूक्ष्मकालोपलक्षणम्। पूर्वस्य दीपस्य। एवमुत्तरस्येति।

(१) नाशयोरे—पा० २ पु०।
(२) शिरश्छेदेनापि न शतं—पा० २ पु०।
(३) पञ्चकं च—पा० २ पु०।
(४) विसरारु—पुण० पु० पा०। विसम्वाध—पा० २ पु०।
(५) अनुभूयमानेति। यत्र च न तदनुभवस्तत्र प्रत्यभिज्ञायाः प्रामाण्येऽपि न क्षतिरिति भावः—गुणानन्दः।
(६) प्रवृत्ताव—पुण० पु० पा०।
(७) स्वा—पुण० पु० पा०।
(८) स्वा—पुण० पु० पा०।

कल्पलता ।

**न्यायसिद्ध इति । दीपो नाशप्रतियोगी, नष्टाश्रयत्वादिति न्यायासिद्ध इत्यर्थः। नन्वयामिति। प्रत्यनीकः विरुद्धः।(१) पूर्वस्य नाश उत्तरस्योत्पाद इति वदता त्वयैव नष्टत्वानष्टत्व(२)लक्षणविरुद्धधर्मसंसर्गः स्वीकृत इत्यर्थः। आश्रयनाशानाशयोरिति। नष्टाश्रयत्वानष्टाश्रयत्वयोरित्यर्थः। सोयामिति। विरुद्धधर्मसंसर्गं साक्षान्न स्वीकरोति प्रकारान्तरेण च तमेवाहेत्यर्थः॥**

भविष्यति तर्हि इहापि विरुद्ध(३)संसर्गो दुरूह इति चेत्, अथ स एवायं स्फटिक इत्यत्र प्रमाणप्रतीतसंसर्गाणां विरोध आशङ्क्यते, तत्प्र(४)तीतविरोधानां संसर्गः, अथाप्रतीतस्वरूपविरोधसंसर्गा एव केचिद्विरुद्धतया, संसृष्टया वेति ।

---

दीधितिः ।

भवतु प्रामाण्यप्रयोजकं विरुद्धधर्मासंसृष्टविषयत्वं न तु तत्प्रकृत इत्याशङ्कते । भविष्यतीति । अप्रतीतेति । न प्रतीतं स्वरूपं विरोधो धर्मिसंसर्गो(५) येषां ते तथा ॥

दीधितिटिप्पणी ।

प्रामाण्यप्रयोजकम्, अभेदप्रत्ययस्येति शेषः। न तु तदिति। तत् विरुद्धधर्मासंसृष्टविषयत्वं प्रकृते नास्तीत्यर्थः । न प्रतीतमित्यादि । येषां धर्माणां स्वरूपविरोधधर्मिसंसर्गाणामन्यतमस्य न प्रतीतिरित्यर्थः॥

---

(१) प्रत्यनीकः विरुद्धः—नास्ति कालि० मु० पु० ।
(२) नष्टानष्टत्व—कालि० मु० पु० पा० ।
(३) विरुद्धधर्म—पुण० पु० पा० । (४) शङ्क्यते उत प्र—पा० २ पु० ।
(५) संसर्गश्च—पुण० पु० पा० ।

कल्पलता ।

इहापीति । सत्यप्रत्य(१)भिज्ञा(न)विषयेऽपीत्यर्थः। प्रमाणप्रतीतेति। सत्त्वद्रव्यत्वस्फटिकत्वा(दी)नामित्यर्थः। प्रतीतेति। गोत्वाश्वत्वादीनामित्यर्थः। अप्रतीतेति। कौचिद्धर्मौ विहा(२)पि विरुद्धौ स्यातामिति शङ्कामात्रमित्यर्थः॥

---

न प्रथमः, प्रागेव निराकृतत्वात् । न द्वितीयः, योग्याना(३)मनुपलम्भबाधितत्वात्(४), अयोग्यानामपि कारणादिव्याप्यव्यापकविगमाविलोकनव्याव-

---

दीधितिः ।

कारणादीत्यादिपदेन कार्यस्य संग्रहः, तस्यापि चरम(५)सामग्रीनिवेशिकारणव्यापकत्वात् । व्याप्यम् समनियतं(६), स्नेहादे-

दीधितिटिप्पणी ।

ननु कार्यस्य संग्रहे तद्विगमे कारणविगमोऽसिद्धः, व्यापकव्यतिरेकस्यैव व्याप्याविगमप्रयोजकत्वादत आह। तस्यापीति। कार्यस्यापीत्यर्थः, तथा च कार्यव्यतिरेकेण चरमसामग्रीनिविष्टकारणमत्र नास्तीति निर्णय इत्यर्थः। ननु व्याप्यं किमिति लिखितं व्याप्यव्यतिरेकेण व्यापकव्यतिरेकाभावादत आह। व्याप्यमिति। तदेव दर्शयति। स्नेहादेरिति। समव्याप्यार्थकव्याप्यपदेनैव समव्यापकस्य लाभाद्व्यापकपदेन तत्संग्रहो व्यर्थ इत्यत आह। व्यापकमिति। तदेव दर्शयति। तस्यैवेति।

---

(१) प्रति—पुण० पु० पा०। (२) केचिद्धर्मा विरहा—पुण० पु० पा०।
(३) अयोग्याना २ पु०। (४) म्भप्रतिकृतत्वात्—पुण० पु० पा०।
(५) चरमकारणम्, अन्त्यतन्तुसंयोगादि। तस्यापि सति प्रतिबन्धके फलानुपधाने वाऽव्यापकत्वादाह। सामग्रीनिवेशीति। तेन प्रतिबन्धकाभाववैशिष्ट्यलाभः।—गुणानन्दः।
(६) व्याप्यनिवृत्तेर्व्यापकनिवृत्त्यव्याप्यत्वादाह। समनियतमिति।—गुणानन्दः।

र्तितत्वात्। न तृतीयः, तस्यातिप्रसञ्जकतया सर्वत्रैक-स्वोच्छेदप्रसङ्गादिति(१)।

दीधितिः।

जलत्वादि। व्यापकम्(२), विषमव्यापकं तस्यैव(३)द्रव्यत्वादि॥

दीधितिटिप्पणी।

स्नेहस्यैवेत्यर्थः॥

कल्पलता।

प्रागेवेति। सामर्थ्यासमर्थ्यकरणाकरणादीनां पूर्वमेव निराकृतत्वादित्यर्थः। अयोग्यानामिति। मनस्त्वात्म(४)त्वचक्षुष्ट्वप्रभृ(५)तीनामित्यर्थः। कारणादीति। आदिपदेन कार्यग्रहणं, व्याप्यव्यापकपदाभ्यां कार्यकारणव्यतिरिक्तव्याप्यव्यापकग्रहणं, तथा च द्वन्द्वः। व्याप्यपदेन च समव्याप्यमभिमतम्। व्यापकपदेन तद्भिन्नं व्यापकं यथायोग्यमत्रोहनीयम्। कर्मधारयः समास इहेत्येके॥

एतेन प्रत्यभिज्ञानादेव लक्षणभागमाकृष्य अनु-

दीधितिः।

लक्षणभागम् विरुद्धधर्मासंसृष्टत्वम्। यद्यपि प्रत्यभिज्ञानस्यापि

दीधितिटिप्पणी।

पूर्वं विरुद्धधर्मासंसृष्टविषयकप्रत्यभिज्ञानं स्थैर्ये साध्ये हेतूकृतं, इदानीं तु तद्विशेषणांश एव हेतूकर्तव्य इत्याशयवानाह, एतेनेति मूलम्। एवं च प्रत्यभिज्ञानादेवेत्यस्य विशिष्टप्रत्यभिज्ञानादेवेत्यर्थः। प्रत्यभिज्ञानस्यापि पूर्वोक्तविशिष्टप्रत्यभिज्ञानस्यापि।

(१) च्छेदात्—पा० २ पु०।

(२) निरुक्तव्याप्यस्यापि व्यापकत्वात्तदुपादानानुपपत्तेराह। विषमेति।-गुणानन्दः।

(३) तस्यैव, स्नेहस्यैव।-गुणानन्दः।

(४) मनस्त्ववायु—पुण० पु० पा०। (५) प्रकृ—पुण० पु० पा०।

मानेन स्थैर्यसिद्धिः । तथाहि, विवादाध्यासितो भावः कालभेदेऽपि न भिद्यते, तद्भेदेऽपि विरुद्धधर्मासंसृष्टत्वात्, यो यद्भेदेऽपि न विरुद्धधर्मसंसृष्टो नासौ तद्भेदेऽपि भिद्यते यथा प्रतिसम्बन्धि परमाणुभेदेऽपि एकः परमाणुः, तथा चायं विवादाध्यासितो भावः, तस्मात् कालभेदेपि न भिद्यते इति ।

दीधितिः ।

हेतुत्वे न क्षतिः, धूमप्रागभाववदवैयर्थ्यात्, तथापि तन्मात्रस्य व्यभिचारितया विशिष्टस्योपादेयत्वे प्रथमोपस्थितत्वाद्विशेषणस्यैव हेतूकरणमुचितमित्याशयः । ( तदेव दर्शयति । विवादेति । ननु ) क्षणिकोपि भावो न भिद्यत एव स्वस्मादत आह ।(१) भेदेपीति । उत्तर(२)कालीनो भावः पूर्वकालीनात्तस्मान्न भिद्यते, तद्विरुद्धधर्मासंसृष्टत्वादिति प्रयोगार्थः ॥

दीधितिटिप्पणी ।

तन्मात्रस्य प्रत्यभिज्ञामात्रस्य । क्षणिकोऽपि भाव इति । तथा च परेणापि सिद्धसाधनप्रसङ्गो दातुं न शक्यत इति भावः । ननु तथापि तद्दोषतादवस्थ्यम्, क्षणिकभावस्य परेण कालभेदेपि भेदानङ्गीकारादतः साध्यस्थकालभेदं पक्षे दत्वा हेतुस्थतद्भेदं च साध्ये दत्वा निष्कृष्टमाह । उत्तरकालीन इत्यादि ॥

कल्पलता ।

व्यर्थविशेष्यताभयेनाह । लक्षणभागेति । तदेव दर्शयति । विवादाध्यासित इति । ननु क्षणि-

( १ ) दतः काल–पुण० पु० पा० । आह । काल–२पा०पु० ।

( २ ) उत्तरेति । यद्यपि पूर्वकालीनो भावः उत्तरकालीनाद्दित्यपि वक्तुं युज्यते, तथापि प्रत्यभिज्ञाने इदमुद्दिश्य तत्ताविशिष्टाभेदावगाहित्वात्तत्प्रामाण्यनिर्वाहायैवं साधितमिति भावः ।–गुणानन्दः ।

कल्पलता।

कोपि भावः स्वस्मान्न भिद्यत एवेति सिद्धसाधनं स्यादत आह। कालभेदेति। ननु कालभेद(संसर्ग) एव विरुद्धधर्मसंसर्गः स्यादित्यसिद्धो विरुद्धधर्मा-संसृष्टत्वा(१)दित्ययं हेतुरित्यत आह। तद्भेदे-पीति। क्रमिककालभेदस्याविरुद्धत्वादिति भावः। ननु संयोगविभागलक्षणाविरुद्धधर्माध्यासो(२) बीजा-दावपि, तथा श्यामपाक(३)रक्तादिविरुद्धधर्माध्यासो घटादावपीति चेन्न। तेषां(४) कालभेदेना(५)वि-रोधात्। न हि यो यदा श्यामः स एव तदा रक्तः। तद्भेदेपीति स्वरूपाख्यानपरमेव। अयं विवादाध्यासि-तो घटो भाविकपालमालापर्यन्तं(६) न विनश्यति, वि-नाशकारणा(७)समवहितत्वात्, विनष्टत्वेनाप्रतीय-मानत्वात्, ताद्रूप्येण प्रत्यभिज्ञायमानत्वात्, सभागस-न्तानत्वेन विवक्षितो घटो न नाना, एकत्वेन प्रती(८)-यमान(९)त्वात्, क्षणिकपरमाणुवत्। प्रातःकाल(१०)-दृष्टोयं घटो मध्यन्दिनस्थायी, तदन्तरालसमये(११) विनाशकारणासमवहितत्वादित्यादि कथञ्चिद्द्रष्टव्य-म्(१२)। वस्तुतः प्रत्यक्षमेव स्थैर्ये प्रमाणं(१३), स्वोत्प-त्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वस्य (सर्व)-

(१) धर्माविशिष्टत्वा—पा० २ पु०।

(२) ध्यासो घटा—पुण० पु० पा०। (३) तथा चामश्याम—पुण० पु० पा०।

(४) तथापि—पुण० पु० पा०। (५) भेदेन—पुण० पु० पा०।

(६) पर्यंतं—कलि० मु० पु० पा०। (७) विनाशकारण—पुण० पु० पा०।

(८) प्रमी—पुण० पु० पा०। (९) माण—पुण० पु० पा०।

(१०) काले—कलि० मु० पु० पा०। (११) समये—पुण० पु० पा०।

(१२) कथितं बोध्यम्—पुण० पु० पा०। (१३) मानं—पुण० पु० पा०।

कल्पलता ।

प्रमाणबाधितत्वादिति भावः। प्रतिसम्बन्धीति। षट्के(१)न युगपद्योगेऽप्येक एव परमाणुर्यथेत्यर्थः॥

अत्र(२) व्याप्तौ न कश्चित् विप्रतिपद्यते, पक्षधर्मता तु प्र(३)साधितैव। क्षणिकत्वानुपपत्तिश्च, अनुगतव्यवहारानन्यथासिद्धेः। शब्दालिङ्गविकल्पा हि साधारणं रूपमनुपस्थापयन्तो न तृणकुब्जीकरणे(ऽपि) स-

दीधितिः ।

सर्वभावानां क्षणिकत्वेऽनन्यथासिद्धानेककालानुगतगवादिव्यवहारानुपपत्तिरक्षणिकत्वं(४) साधयतीत्याह। क्षणिकत्वेति। अनन्यथासिद्धानुगतव्यवहारबलात् क्षणिकत्वबाधा(५)दक्षणिकत्व(६)सिद्धिरित्यपि कश्चित्(७)। शब्देति। अनुगतधर्मावच्छिन्नसमय(८)नियमग्रहाधीनप्रवृत्तिकयोरप्रवृत्तिरेव शब्द-

दीधितिटिप्पणी ।

क्षणिकत्वानुपपत्तिरिति नोपसंहारः, स्थैर्यसिद्धेरेवोपसंहर्तुमुचितत्वात्, तस्मात् क्षणिकत्वानुपपत्तिश्च स्थैर्यसाधिकेत्यर्थो वाच्यः, तच्च न लगति, क्षणिकत्वानुपपत्तिर्हि क्षणिकत्वबाधः, स चाक्षणिकत्वप्रमा, इयमेव च स्थैर्यसिद्धिरित्यतो हेतुहेतुमद्भावो न घटत इत्यतः क्षणिकत्वेऽनुपपत्तिरिति सप्तमीसमासाभिप्रायेण किंचित्पूरयित्वा व्याचष्टे। सर्वभावानामिति। विकल्पस्यापि साधारण-

(१) अनेके—पुण० पु० पा०।

(२) अत्र च—पुण० पु० पा०। (३) धर्मता तु—पा० २ पु०।

(४) अक्षणिकत्वम्, स्थिरत्वम्।

(५) क्षणिकत्वबाधादिति। सामान्यसामग्र्या एकविशेषबाधे तदितरप्रकारकज्ञानजनकत्वमिति नयेनेदम्। अरुचिबीजमप्येतदेव।—गुणानन्दः।

(६) गोत्वे अनुगतत्वं सिध्यत् स्थिरत्वमित्यर्थः।—गुणानन्दः।

(७) कश्चिदित्यरुचिबीजञ्च शब्दादिजन्यतयैव विकल्पत्वलाभात्तदुपादाने वैयर्थ्यम्।—गुणानन्दः।

(८) समयः, शक्तिः।—गुणानन्दः।

मर्था इत्यंविवादं, बाह्यार्थस्थितौ(१) स्थिरास्थिरविचारात्।

दीधितिः।

लिङ्गयोरन्तरेणानुगतधर्मं तथा गृहीतेष्टजनकजातीयत्वं रजतत्वादिरूपं समुल्लिख्य प्रवर्त्तयतो विकल्पस्यापीत्यर्थः। शब्देन लिङ्गेन च विकल्प इत्यर्थ इत्यपि(२) कश्चित्(३)। बाह्यार्थेति। विज्ञानवादे विज्ञानानां स्व(४)मात्रसाक्षिकत्वादन्येनान्यस्याग्रहणादनेकक्षणघटितमूर्त्तिकयोः स्थैर्यास्थैर्ययोः केनाप्यनुल्लेखात् कोऽप्यप्रसिद्ध्या विवादस्यैवासम्भवादित्यर्थ इ(५)त्येके। बाह्यार्थमभ्युपेत्य स्थैर्यास्थैर्यविवादस्यारब्धत्वादित्यर्थ इत्य(६)न्ये॥

दीधितिटिप्पणी।

पाभावेऽसामर्थ्यमाह। तथेति। शब्देनेति। शब्दलिङ्गजन्यविकल्पा इत्यर्थः। उक्तरीत्यैव स्वतन्त्रविकल्पस्य स्थानदाने एवं ते दृष्टिर्नोचितेति कश्चिदित्यस्वरसः। ननु शब्दलिङ्गादय एव न सन्ति, बाह्यार्थस्याभावादित्यत आह। बाह्यार्थस्थिताविति मूलम्। बाह्यार्थास्थितौ स्थिरास्थिरविचारः कथं न सम्भवतीत्यत आह। विज्ञानवाद इत्यादि। अनेकक्षणेति। पदार्थमात्रस्यैव क्षणत्वाङ्गीकारात् क्षणेति लिखितम्। केनापीति। स्वमात्रस्यैव स्वेन ग्रहणादनेकक्षणादनेकक्षणसम्बन्धात्मकस्थैर्यादेः केनापि ज्ञानेनाग्रहणमित्यर्थः॥

कल्पलता।

न कश्चिदिति। अन्यथैकस्मिन्नपि क्षणे भावो भिद्येतेति विपक्षबाधिका त्वया(७)पीयं व्याप्तिरभ्युपगन्तव्येत्यर्थः। ननु नानाक्षणस्थायिनां विरुद्धधर्मासंसृष्टत्वं हेतुरेवासिद्ध इत्यत आह। पक्षधर्मता त्विति। द्वितीयं प्रमाणमाह। क्षणिकत्वेति। ननु गोत्वादिकमपि

(१) बाह्यार्थसिद्धौ—पुण० पु० पा०। (२) विकल्प्य इत्यपि—पा० २ पु०।

(३) कश्चिदित्यरुचिबीजं च शब्दादिजन्यतयैव विकल्पत्वलाभात्तदुपादाने वैयर्थ्यम्।—गुणानन्दः। (४) स्वस्व—पुण० पु० पा०।

(५) वादि—पुण० पु० पा०। (६) दित्य—पा० २ पु०।

(७) बाधकधिया—पुण० पु० पा०।

कल्पलता ।

(ला?)क्षणिकमेवास्तु, को दोष इत्यत आह । (१)अनुगतेति । देशकालानुगतं धर्मं विनाऽनुगतव्यवहार एव न स्यादित्यर्थः । ननु यदि देशकालानुगतो धर्मः प्रतीतिपथमवतरे(२)त् तदा तस्य स्थैर्यचिन्ता, तदेव तु नास्तीत्यत आह । शब्देति । सङ्केतग्रहार्थं व्याप्तिग्रहार्थमनुगतविकल्पार्थं च साधारणरूपभानमवश्यम(३)भ्युपगन्तव्यमित्यर्थः । तृणेति । अनुगतरूपावच्छेदमन्तरेण व्याप्तिसङ्केतयोरग्रहेऽनुमितिशाब्दज्ञानानुदये तदधीने प्रवृत्तिनिवृत्ती न स्याताम्, इष्टतावच्छेदकधर्मग्रहं विना तोयादिविकल्पानां प्रवर्त्तकता च न स्यादित्यर्थः । नन्वस्तु ज्ञानात्मकमेव साधारणं(४) रूपं तथापि गोत्वादीनां बाह्यानां कथं स्थैर्यमित्यत आह । बाह्यार्थेति । बाह्यस्यार्थस्य व्यवस्थापनीयत्वादित्यर्थः ॥

तच्चालीकं(५) वा, आ(६)कारो वा, बाह्यं वस्तु वेति त्रयः पक्षाः ।

दीधितिः ।

तत् अनुगत(७)रूपम् । आकारो वेति । यद्यपि विकल्पाना-

दीधितिटिप्पणी ।

नन्वाकारो वेति कथमलीकं वेत्यतः पृथग्विकल्पः, तेनानुगताकारस्यालीकत्वाङ्गीकारादित्याशङ्कते । यद्यपीति । नन्वाकारो वेत्यनेनानुगताका-

(१) पक्षधर्मता इत्यारभ्य दोष इत्यत आह—इत्यन्तः पाठः कलि० मु० पु० नास्ति ।

(२) वतर—पुण० पु० पा० । (३) वश्या—पुण० पु० पा० ।

(४) साधारण—पुण० पु० पा० ।

(५) भावत्वमनुगतवृत्ति न वा, व्यावृत्तिर्गवादिपदार्थो न वा, गोपदशक्यतावच्छेदकं गोसमवेतं समवेतं वा न वेत्याद्या विप्रतिपत्तीरपोहवादे वदन्ति ।—गुणानन्दः ।

(६) वा, ज्ञाना—पुण० पु० पा० । (७) अनुगतं—पुण० पु० पा० ।

दीधितिः।

मप्यनुगतो नीलत्वादिराकारोऽतद्व्यावृत्तिरूपत्वादलीक एव(१), तथापि बाह्यान्तरभेदेन पृथक् विकल्पः ॥

दीधितिटिप्पणी।

र उक्तः, स च न तेषामलीक इत्याह। नीलत्वेति। बाह्येति। अलीकं वेति बाह्यवादिमते, आकारो वेति तु आन्तरवादिमते इत्यर्थः ॥

तत्र न प्रथमः पक्षः(२), तद्धि न तावदनुभवादेव तथा व्यवस्थाप्यं, तस्यालीकत्वानुल्लेखात्, तथात्वे वा प्रवृत्तिविरोधात्, न ह्यलीकमेव त(३)दित्यनुभूयाप्यर्थक्रियार्थी प्रवर्त्तते। अन्यनिवृत्ति(४)स्फुरणान्नैष

दीधितिः।

विकल्पविषया(५)नुगतधर्म्मस्यालीकत्वं किं विकल्पेनैव(६) गृह्यते किं वा मानान्तरसिद्धम्। आद्ये, तद्धीत्यादि। द्वितीयं शङ्कते। अन्येति। निवृत्ते(७)रलीकत्वं मानान्तरसिद्धमिति भावः। अन्यनिवृत्ते(८)रन्यस्या(९)त्यन्ताभावस्य स्फुरणम्, अ(१०)न्योन्याभावस्य वा, तस्यापि किं प्राधान्येन, निवृत्ते(११) विशेषणतया वा, आद्ये

दीधितिटिप्पणी।

अन्यनिवृत्तीति मूलम्, अनुगतरूपस्यातद्व्यावृत्तिरूपतास्फुरणमेवालीकत्वसाधकं, अतद्व्यावृत्तेरलीकत्वस्येतरप्रमाणावधारितत्वादित्यर्थः।

(१) अलीक एवेति। तथाच पृथग्विकल्पानुपपत्तिरिति भावः।—गुणानन्दः।

(२) पक्षः—नास्ति २ पु०। (३) मेत—पा० २ पु०।

(४) न्यावृत्ति—पुण० पु० पा०। निवृत्तेः—पा० २ पु०।

(५) विषयस्या—पुण० पु० पा०।

(६) विकल्पेनैवेत्यस्य तेनैवेत्यादिः।—गुणानन्दः।

(७) निवृत्तेरिति। तथाच निवृत्तितया विकल्पेन भाने निवृत्तित्वलक्षणेन मानान्तरेणालीकत्वं साधनीयमिति भावः।—गुणानन्दः।

(८) न च निवृत्तिमात्रप्रतिभासेपीत्यग्रिमलक्षणानुसारेणाह। अन्यस्यात्यन्ताभावस्येति।—गुणानन्दः। (९) निवृत्तेर—कालि० मु० पु० पा०।

(१०) त्यन्ताभावस्या—कालि० मु० पु० पा०। (११) निवृत्ति—कालि० मु० पु० पा०।

दोष इति चेत्, एतदेवासत्, विधिरूपस्यैव स्फुरणात्। न हि शब्दलिङ्गाभ्या(१)मिह महीधरोद्देशे अनग्निर्न भवतीति स्फुरणम्, अपि त्वग्निरस्तीति।

दीधितिः।

न हीति। विकल्पस्य विषय(२)विशेषविषयतायां स एव तदुत्तरभावी(३) वा विकल्पो(४) मानम्, न चानग्निनिवृत्तिं प्रत्येमीति विकल्पः, अपि तु अग्निं प्रत्येमीतीति भावः। एतेन द्वितीयं(५) प्रत्युक्तम्॥

दीधितिटिप्पणी।

स एवेति स्वप्रकाशमते, तदुत्तरेति परप्रकाशमते। उभयमत एव मूलीयाकारो लगति, स्वप्रकाशीयव्यवसायस्य परप्रकाशीयानुव्यवसायतुल्यत्वात्, अत आकारं दर्शयति। न चानग्निनिवृत्तिमिति। एतेन अत्यन्ताभाववदन्योन्याभावस्याप्यस्फुरणेन, द्वितीयम् अन्योन्याभावकल्पम् (ल्पः?)॥

कल्पलता।

तर्हीति। अनुगतस्व(६)रूपमित्यर्थः। तथा व्यवस्थाप्यमिति। अलीकत्वेन व्यवस्थाप्यमित्यर्थः। तथात्वे वेति। अलीकत्वेनो(७)ल्लिख्यमानत्वे वा इत्यर्थः। तदे(८)वाह। न हीति। अन्यनिवृत्तिरूप(९)तया स्फुरणमेवा(१०)लीकस्फुरणं ब्रूमो न त्वलीकत्वेन स्फुरणम्, तथा च नेदमरजतमिति ज्ञात्वैव रजतार्थी प्रवर्त्तत इति को दोष इत्याह।अन्येति(११)। विधिरूपस्यैवेति।

(१) लिङ्गशब्दाभ्या—पुण० पु० पा०। (२) विषय—पा० नास्ति कलि० मु० पु०।
(३) स एवेति तु स्वप्रकाशनये, तदितरनये त्वाह। तदुत्तरेति।—गुणानन्दः।
(४) वा विकल्पो वा —पुण० पु० पा०।
(५) द्वितीयम्, अन्योन्याभावस्य प्राधान्येन स्फुरणपक्षम् (क्षः?)।—गुणानन्दः।
(६) अनुगतं—पुण० पु० पा०। (७) कत्वो—पुण० पु० पा०।
(८) तत्रै—पुण० पु० पा०। (९) निवृत्ति—कलि० मु० पु० पा०।
(१०) मेव चा—पुण० पु० पा०।
(११) अन्येति। विप्रतिपत्तयः। पूर्वपक्षोक्तौ—पुण० पु०पा०।

कल्पलता ।

न ह्यनुभवोपि व्याख्याय कल्प्य(१)त इति भावः । एतदेवाह । न चे(२)ति । व्यवसाये हि विषयव्यवस्थाऽनुव्यवसायाधीना, अनुव्यवसायश्च रजतमहं प्रत्येमीत्याकारो न त्वरजतमिदं न भवतीति प्रत्येमीत्याकार इति भावः ॥

---

यद्यपि निवृत्ति(३)महं प्रत्येमीति न विकल्पः, तथापि निवृत्त(४)पदार्थोल्लेख एव निवृत्त्युल्लेखः, न ह्यनन्तर्भावितविशेषणा(५) विशिष्ट(६)प्रतीतिर्नाम, ततो यथा

---

दीधितिः ।

तृतीयं(७) शङ्कते । यद्यपीति । निवृत्तः(८) निवृत्तिविशिष्टः । प्राधान्येन निवृत्तेरस्फुरणेपि तद्विशिष्टस्फुरणमेव तत्सिद्धिरित्य·

दीधितिटिप्पणी ।

तृतीयम् निवृत्तिविशेषणतया वेति रूपम् । न चैतच्चतुर्थमेव वक्तुं योग्यम्, प्राधान्यविशेषणते विहाय निवृत्तेरितररूपेण स्फुरणाभावादाद्यद्वितीययोरेव प्राधान्यमन्तर्गतं, न तु प्राधान्यस्य स्वतन्त्रकल्पत्वं, न च वाच्यं विशेषणत्वमेवान्तर्गतं स्यात्, स्वतन्त्रन्तु प्राधान्यमिति विपर्यय एव कुतो न स्यात्, विशेषणत्वकल्पस्य मूले यद्यपीत्यादिना स्वातन्त्र्येण शङ्कितत्वात् । (एतत् स्वातन्त्र्यं । एवं ?) मूलीयभावबलात् निवृत्तपदार्थस्य स्वरूपतस्तदुल्लेखनस्याप्रकृतत्वाद्विशिष्टोल्लेखस्यैव प्रकृतोपयोगात्, निवृत्त इति । तत्सिद्धिः निवृत्तिसिद्धिः । निवृत्तेरपि भाने

---

(१) कथ्य—पुण० पु० पा० । (२) न ही—पुण० पु० पा० ।

(३) निवृत्त—पा० २ पु० । (४) निवृत्ति—पा० २ पु० । कलि० मु० पु० पा० ।

(५) विशेषण—पा० २ पु० । (६) विशिष्टार्थ—पा० २ पु० ।

(७) तृतीयम्, निवृत्तिविशेषणतया स्फुरणपक्षम् ।—गुणानन्दः ।

(८) वस्तुतो निवृत्तस्य स्वरूपतो भानेऽपि न विवक्षितार्थसिद्धिरत आह । निवृत्तिविशिष्ट इति ।—गुणानन्दः ।

सामान्यमहं प्रत्येमीत्यनुव्यवसायाभावेऽपि साधारणाकारस्फुरणात् विकल्पधीः सामान्यबुद्धिः परेषां, तथा निवृत्तप्रत्ययाक्षिप्ता(१) निवृत्तिबुद्धिरस्माकमिति चेत्, हन्त, साधारणाकारपरि(२)स्फुरणे(३) विधिरूपतया यदि सामान्यबोधव्यवस्था, किमायातमस्फुरदभावाकारे चेतसि निवृत्तिप्रतीतिव्यवस्थायाः ।

दीधितिः ।

र्थः । तथेत्यादि । विशिष्टस्यातिरिक्तस्या(४)भावेन विना विशेषण(५)विषयत्वं(६) विशिष्टविषयत्वानुपपत्तेः आक्षेपः । भवेदेवं यद्यगोव्यावृत्त इति स्फुरणं स्यात्, नत्वेवं, किं तु गौरि(ती)त्याह । हन्तेति । चेतसि विज्ञाने ॥

दीधितिटिप्पणी ।

आक्षिप्तेति मूललिखनमसङ्गतमत आह । विशिष्टस्येति । यस्मात् विशेषणविशेष्याभ्यां विशिष्टं नातिरिक्तं, अतो विशिष्टबुद्धौ विशेषणं विषय इत्येवमाकार आक्षेप इत्यर्थः ॥

कल्पलता ।

अत्र शङ्कते । यद्यपीति । इतरव्यावृत्तवस्तुभानमेव व्यावृत्तिभानं ब्रूम इत्यर्थः । निवृत्तिमहं प्रत्येमीत्यनुव्यवसायस्तदा स्या(७)द्यदि व्यवसाये निवृत्तिः स्वातन्त्र्येण स्फुरेत्, न त्वेवमित्यर्थः। न विकल्पः नानुव्य-

(१) प्रत्ययाक्षिप्त—पा० २ पु० । (२) परि—नास्ति २ पु० ।
(३) स्फुरणेपि—पा० २ पु० ।
(४) अतिरिक्तस्य, विशेष्यविशेषणसम्बन्धेभ्यो भिन्नस्य ।—गुणानन्दः ।
(५) विशेषणं—पा० २ पु० । (६) विषयत्व—पा० २ पु० ।
(७) अनुव्यवसायस्तादात्म्या—पुण० पु० पा० ।

कल्पलता ।

वसायः । तथापीति । अ(१)रजतव्यावृत्तमिद(२)मिति भाने (३)विशेषणतया व्यावृत्तिभानमावश्यकमित्यर्थः । एतदेवोपपादयति । न हीति । यद्यपि(४) यथा दण्डीत्यत्रादण्डिव्यावृत्त(५)भानमस्ति, न तु विशिष्य व्यावृत्त्युल्लेखः, तथापि(६) विशेषणभानं व्यावृत्तिभाननान्तरीयकमेव, अतद्व्यावृत्तिर्वैशिष्ट्यमिति तवाभ्युपगमादित्यर्थः । तद्भानेपि(७) तद्वृत्तिप्रकारभानमावश्यकमित्यत्र दृष्टान्तमाह । यथेति । परेषाम् नैयायिकानाम् । तथेति(८)। निवृत्तप्रत्ययश्चे(९)न्नूनं निवृत्तिप्रत्ययोप्यस्त्येवेत्यर्थः । हन्तेति(१०) । वस्तुगत्या यद्व्यावृत्तं तद्भासते न तु व्यावृत्तत्वेनापि भानमङ्गीकुर्मो येन व्यावृत्तिभानं विशेषणतया(११) स्यात् । विधिरूपं सामान्यं भासते न तु तस्य सामान्यत्वमपि विषय इति नायं दृष्टान्त इत्यर्थः । अस्फुरन्नभावाकारो यत्र चेतसि ज्ञाने इत्यर्थः(१२) ॥

---

न ह्यगोपोढोयमिति विकल्पः(१३), किं तु गौरि(१४)-

---

(१) अ—नास्ति कालि० मु० पु०।
(२) व्यावृत्त— कालि० मु० पु० पा० । (३) भाने विषय—पुण० पु० पा० ।
(४) यद्वा—पुण० पु० पा० (५) व्यावृत्ति—कालि० मु० पु० पा० ।
(६) तत्रापि—पुण० पु० पा० । (७) तज्ज्ञानेपि—पुण० पु० पा० ।
(८) तथा चेति—पा० २ पु० । (९) यश्चेन्मूलं--पा० २ पु० ।
(१०) हन्त—नास्ति कालि० मु० पु० ।
(११) विशेषणतया—नास्ति कालि० मु० पु० ।
(१२) अस्फुरदनुभवाकारो यस्येत्यर्थः—कालि० मु० पु० पा० । अस्फुरदनुभवाकारो यस्येत्यर्थः—पुण० पु० पा०।
(१३) विकल्पार्थः—पा० २ पु० । (१४) गौरयमि—पा० २ पु० ।

ति, ततोऽन्यनिवृत्तिमहं प्रत्येमीत्येवमाकाराभावेऽपि
निवृत्त्या(१)कारस्फुरणं यदि स्यात् को निवृत्तिप्रतीति-
(२)मपह्नुवीत(३), अन्यथा त्वतत्प्रतिभासे तत्प्रतीति-
(४)व्यवहृतिरिति गवाकारे चेतसि तुरगबोध इत्य(५)स्तु।
न च निवृत्तिमात्रप्रतिभासेऽपि प्रवृत्तिसम्भवः, न ह्य(६)-
घटो नास्तीत्येव(७) घटार्थी प्रवर्त्तते, अपि तु घटोऽस्तीति।

दीधितिः।

अत्यन्ताभावरूपनिवृत्तिभाने दोषान्तरमाह। न चेति(८)।
अन्यनिवृत्तित्वेना(९)स्फुरणात्, पटार्थि(१०)प्रवृत्तौ पटत्वेन प्र-
तीतेरेव हेतुत्वात्, विनातिरिक्तं पटत्वमनुगतानतिप्रसक्तस्यापट-
निवृत्तित्वादेर्दुर्निरूप(ण)त्वाच्च नैवमिति (भावः)॥

दीधितिटिप्पणी।

न हि अघटो नास्तीत्यादिमूलेनात्यन्ताभावरूपनिवृत्तेरेव प्रदर्शना-
दाह। अत्यन्ताभावेति। न च निवृत्तिमात्रप्रतिभासेपीति मूलमसङ्गतम्,
अपि तु घटोऽस्तीत्युक्तप्रतिभासस्यापि वस्तुगत्या निवृत्तिमात्रप्रति-
भासत्वात्, घटाभावनिवृत्त्यात्मकत्वाद्घटस्य, इत्यतः स्वयं दूषणमाह।
वस्तुत इति। (११)हेतुत्रितयं नैवमित्यत्रान्वयि। अन्यनिवृत्तित्वेनेति।
घटोऽस्तीति प्रतीतावन्यनिवृत्तित्वेन स्फुरणाभावात्, ईदृशस्यैव भवता
प्रवर्तकतया वक्तव्यत्वादिति भावः॥

(१) निवृत्त्या—पा० २ पु०। (२) प्रतीति—नास्ति २ पु०।
(३) मपलपेत्—पुण० पु० पा०। भासे प्रतीति—पा० २ पु०।
(४) भानं तथेति—कलि० मु० पु० पा०। (६) नहीहा—पुण० पु० पा०।
(५) बोधोऽय—पुण० पु० पा०। (८) न वेति—पा० २ पु०।
(७) त्येवं—पा० २ पु०।
(९) अत्यन्ताभावरूपनिवृत्तेः प्राधान्यभाने दोषमाह। अन्यनिवृत्तित्वेनेति।—गुणानन्दः।
(१०) पटार्थि—पा० २ पु०।
(११) वस्तुतः अन्यनिवृत्तित्वेनास्फुरणात् पटार्थिप्रवृत्तौ—इति टिप्पणिकृन्मतः दीधिति-
पाठः प्रतिभाति।

कल्पलता ।

एतदेवाह । न हीति । अगोपोढोयमिति । अगोव्यावृत्त इत्यर्थः । तत इति । निवृत्तेर्न प्राधान्येन भानं नाप्युपसर्जनतयेत्यर्थः । अतज्ज्(१)ज्ञानाविषयस्यापि तज्ज्ञानाविषयताकल्पने विपक्षे(२) दण्डमाह । अन्यथेति । तथा च सर्व(३)ज्ञानं सर्वविषयं स्यादिति भावः । निवृत्तिस्फुरणे दोषान्तरमाह । न चेति । (तन्मते) विकल्पेन स्वलक्षणासंस्पर्शान्मात्रेत्युक्तम्(४) । प्रवर्त्तकानुभववैलक्षण्यमाह । न हीति । प्रवर्त्तकज्ञानस्वरूपमाह । अपि त्विति । अनुभव एवात्र साक्षीत्यर्थः ॥

अघटस्यैव निवृत्तिरिति प्रतीतौ नायं दोष इति चेन्न । घटनिवृत्त्यप्रतिक्षेपे नियमस्यैवा(५)सिद्धेः । तत्प्रतिक्षेपे तु कस्ततोऽन्यो विधिः, निषेधप्रतिक्षेप(६)स्यैव विधित्वात् । निवृत्तेरपरिस्फुरणे(७) गां बधानेति देशि-

दीधितिः ।

अन्यनिवृत्तेरस्फुरणे गोपदादश्वसाधारणप्रतीत्याऽश्वेपि प्रवृत्तिप्रसङ्ग इत्याशङ्कते । निवृत्तेरिति । यद्धर्मविशिष्टे(८) यस्य पदस्य सङ्केतग्रहस्ततस्तद्धर्मविशिष्टस्य प्रतीतिः, गोत्वविशिष्टे च गोपदस्य सङ्केतग्रहात् ततो गोत्वविशिष्ट एव प्रतीयते नाश्व

दीधितिटिप्पणी ।

परिस्फुरणाधीनप्रवृत्तौ वास्तवगोत्वस्याकिञ्चित्करत्वादाह । यद्ध-

(१) अ—कालि० मु० पु० पा० । (२) विपक्ष—पुण० पु० पा० ।
(३) तद्वि—पुण० पु० पा० । (४) संशर्पात्—पुण० पु० पा० ।
(५) नियमस्या—पा० २ पु० । (६) प्रतिषेध—पा० २ पु० ।
(७) रस्फुरणे—पुण० पु० पा० ।
(८) यद्धर्मविशिष्ट इति । येन रूपेण यत्र, तेन रजतत्वेन शुक्तौ शक्तिग्रहे ततस्तदुपस्थितावपि न नियमभङ्ग इति ध्येयम् ।—गुणानन्दः ।

तो(१)ऽश्वमपि बध्नीयादिति चेन्न(२)। भवेदप्येवं, यद्यश्वोऽपि(३) गौः स्यात्, किन्तु गौर्गौरश्वोऽश्व इति। अन्यथा निवृत्तावपि कुतस्ते(४) समाश्वास इति(५), निवृत्त्यन्तराच्चेदनवस्था, निवर्त्यनिवृत्तितदधिकरणानां स्वरूपसाङ्कर्ये प्रवृत्ति(६)सङ्करः स्यात्, स्वरूपभेदेनैव नियमे विधिमात्रप्रतिभासे(७)ऽपि तथा किं न स्यात्।

---

दीधितिः।

इति निराकुरुते। भवेदिति। गौर्गौ(८)रेव(९) गोत्वविशिष्टः। अश्वस्त्वश्वत्वविशिष्टो न तु गोत्वविशिष्ट इत्यर्थः। गोत्वस्यैवाश्वव्यावृत्त्यस्फुरणे कथं ततोपि नियम(१०) इति चेदत्राह। अन्यथेति। अगोव्यावृत्तेरप्यनश्वव्यावृत्तितो व्यावृत्तिः स्फुरति न वा। आद्ये, निवृत्त्यन्तरादिति। द्वितीये, निवर्त्येति। स्वरूपेणैव भिन्ना निवृत्तिर्भासते तेन प्रवृत्तिनियम इति यदि, तदा विधेरपि तादृशस्यैव(११) भानान्नियमो भविष्यतीत्यत आ(१२)ह। स्वरूपेति॥

दीधितिटिप्पणी।

मेति। स्वरूपेणैवेति। स्वत एवेत्यर्थः। प्रवृत्तिनियमः गोपदाद्गव्येव प्रवर्तते नाश्व इत्यादिरूपः। तादृशस्यैव। स्वत एव निवृत्तस्य॥

---

(१) ति चोदितो—पुण० पु० पा०। (२) न—नास्ति पा० २ पु०।
(३) ऽपि—नास्ति पा० २ पु०। (४) स्तव—पुण० पु० पा०।
(५) इति—नास्ति पा० पुण० पु०। (६) प्रति—पा० २ पु०।
(७) भासमे—पा० २ पु०। (८) रिति। गौ—पुण० पु० पा०, पा० २ पु०।
(९) अभेदेनान्वयानुपपत्तेराह। गौरेवेति। एवकारसमभिव्याहारेणापि विधिमुखान्वयस्यावश्यकत्वात्तत्रैवानुपपत्तिरत आह। गोत्वविशिष्ट इति। तथा च गोत्वत्वादिना गोत्वस्य विधेयतावच्छेदकत्वात् स्वरूपतो गवि न तत्त्वानुपपत्तिरिति भावः। गोपदवाच्यत्वमेव विधेयतावच्छेदकमित्याहुः।—गुणानन्दः। (१०) नियमः, तत्प्रकारकज्ञानादश्वे प्रवृत्त्यभावः।—गुणानन्दः।
(११) तादृशस्यैव, स्वरूपव्यावृत्तस्यैव।—गुणानन्दः।
(१२) तीत्या—पुण० पु० पा०, पा० २ पु०।

कल्पलता।

ननु (चा)घटो नास्तीति प्रतीतेः प्रवर्त्तकत्वे तवायमनुशयो यदत्र घटनिवृत्तिरपि स्फुरति घटान्तरापेक्षया घटस्याप्यघटत्वात्, अघटस्यैव निवृत्तिरिति प्रतीतेः प्रवर्त्तकत्वे (तु) नायं दोष इत्याह। अघटस्यैवेति। नेति। अघटस्यैवेति नियमार्थो घटनिवृत्तिप्रतिक्षेप एव, अन्यथा पूर्वदोषतादवस्थ्यात्, घटनिवृत्तिप्रतिक्षेपश्च घटोयमिति ज्ञानपर्यवसायी, तत्र च घटत्वमेव विधिरूपं स्फुरेत्, त(१)न्मते सविकल्पकेन स्वलक्षणासंस्पर्शादित्यर्थः। शाब्दं ज्ञानमन्यनिवृत्तिमुखेनैव जायत इत्यवश्यम(२)भ्युपगन्तव्यम्, अन्यथाऽन्यपराच्छब्दादन्यत्रापि प्रवर्त्तेतेति शङ्कते। निवृत्तेरस्फुरण इति। भवेदेवमिति। गोपदार्थो(३) नाश्व इति कथमश्वं बध्नीयादित्यर्थः। गौर्गौरिति। गोपदवाच्यो गौरश्वपदवाच्योऽश्व इति कथमन्यपराच्छब्दात् अन्यत्र प्रवृत्तिरित्यर्थः। अन्यथेति। निवृत्तावपि निवृत्तिप्रतियोगिनिवृत्त्यधिकरणादिभ्यो यदि निवृत्तिः स्फुरेत्तदाऽनवस्था, तदस्फुरणेऽ(४)श्वव्यावृत्तिग्रहेपि गोपदादश्वे प्रवृत्तिः स्यादेव, निवृत्तेः साधारण्येनैव स्फुरणात्। स्वरूपसांकर्य इति। प्रतियोग्यादिसाधारण्येनैव निवृत्तेः स्फुरणादित्यर्थः। प्रवृत्तीति। निषेध्योऽश्वो निषेधाधिकरणं गौरिति तवापि मते गोशब्दादतद्व्यावृत्तिपरादप्यतद्गोचरप्रवृत्त्यापत्तेरित्यर्थः।

---

(१) त्व—पुण० पु० पा०। (२) वश्या—पुण० पु० पा०।
(३) पदार्थे—कालि० मु० पु० पा०। (४) स्फुरणे त्व—पुण० पु० पा०।

कल्पलता ।

ननु निवृत्तिः स्व(१)त एव विलक्षणा, तत्र किं निवृत्त्यन्तरस्फुरणेनेति यदि, तदा गोत्वाद्यपि स्वत एव विलक्षणमिति तत्स्फुरणे कथमन्यत्र प्रवृत्तिः स्यादिति समानमित्याह । स्वरूपेति । तथा किं न स्यादिति । प्रवृत्तेर्नि(२)यमः किन्न स्यादित्यर्थः ॥

स्वरूपभेद एवान्यापोहः,(३)अन्यापोढस्व(४)रूपत्वाद्विधेरिति चेन्न। अलीकपक्षे तदभावात्, तस्य स्वरूपविधावनलीकत्वप्रसङ्गात्, स्वलक्षणस्य च विकल्पाना-

दीधितिः ।

व्यावृत्तेर्निःस्वरूपतया(५) तत्र स्वरूपभेदो न सम्भवति, किन्तु सा स्वत एव व्यावृत्ता, विधिस्तु सस्वरूप इति तस्यैव स्वरूपभेदः, स चान्यापोह इति स्वरूपाभिन्नस्य तस्य भानेऽन्यापोहभानमावश्यक(६)मित्याशङ्कते । स्वरूपेति । स्वरूपाभिन्नो विधिरवास्तवो भासते वास्तवो वा, आद्ये, अलीकेति । अलीकस्य निःस्वरूपतायास्त्वयैवोक्तत्वात्, सस्वरूपत्वे तु अलीकत्वव्याघात इत्याह । तस्येति । स्वरूपाविधौ सस्वरूपताभ्युपगमे(७) । द्वितीये, स्वलक्षणस्येति । स्वलक्षणस्य निर्विकल्पकमात्रवेद्यताया-

दीधितिटिप्पणी ।

व्यावृत्तेरिति । विधावेव भेदापेक्षा न निवृत्ताविति समुदायार्थः । स चेति । स्वरूपभेद इत्यर्थः, तथा च विधेरपोहरूपस्वरूपभेदविशिष्टत्वात् तत्रैव निवृत्त्यपेक्षेति भावः । स्वलक्षणस्येति । तथा

(१) अ—पुण० पु० पा० । (२) प्रवृत्तिनि—पुण० पु० पा० ।
(३) पोह इति—पुण० पु० पा० । (४) स्व—नास्ति पा० पुण० पु०, २ पु० ।
(५) निःस्वरूपतया, तुच्छत्वेन निर्धर्मतया ।—गुणानन्दः ।
(६) मावश्यक—नास्ति—कलि० मु० पु० । आवश्यकमिति । तथा च आवश्यकत्वादपोह एव गोत्वं स्वीक्रियतामिति भावः ।—गुणानन्दः । (७) गम इत्यर्थः—पुण० पु० पा० ।

रोहात् । अपि च गां बधानेति देशि(१)तो गवि प्रवृत्तो नाश्वे, तदप्रतीतेः । यदा त्वश्वमुपलप्स्यते तदा तत्र प्रवृत्त्युन्मुखोपि गोरभावं प्रतीत्यैव निवर्त्स्यतीति(२) किमनुपपन्नम् ।

---

दीधितिः ।

स्त्वयाऽभ्यु(३)पगमादित्यर्थः । अस्माकं तु विकल्पविषयस्यान्यापोहशालिनोपि विधेः स्वरूपेण(४) स्फुरणं न विरुद्धमिति भावः । अपि च गोशब्दादन्यव्यावृत्तिभानं किं गवि प्रवृत्तये, किं वाऽश्वे तदभावाय, उत अश्वान्नि(५)वृत्तये, नैकमपीत्याह । अपि चेति । गोशब्दात्प्रत्यक्षतश्च प्रतीते गवि प्रवर्त्तते, नाश्वे, तस्यागोशब्दार्थत्वादिन्द्रियासन्निकर्षाच्चाप्रतीतेः, प्रवृत्तौ प्रवृत्तिविषयप्रत्यक्ष(६)स्यापि हेतुत्वात्, यदा त्विन्द्रियसन्निकर्षाद्गोसाधारणाकारमश्वमुपलभते तदा गवांशकया प्रवृत्त्युन्मुखो(७)पि तत्र गोरन्योन्याभावं प्रतीत्य निवर्त्तते, यदा त्वयं गौरिति भ्राम्यति तदा प्रवर्त्तत एवेत्यर्थः ॥

दीधितिटिप्पणी ।

च्चानुगतधर्मस्य निर्विकल्पकमात्रविषयत्वं त्वदभ्युपगतं भग्नमित्यर्थः । भवन्मतेपि कथं न तद्दोषोऽत आह । अस्माकं त्विति । अप्रतीतेरिति लिखनादाह । इन्द्रियेति । मूलतोपि किञ्चिदधिकमाह । यदा त्विति ॥

---

( १ ) ति चोदि—पुण० पु० पा० । ( २ ) त्स्यंत इति—पुण० पु० पा० ।
( ३ ) त्वयो—पुण० पु० पा० ।
( ४ ) स्वरूपेण, स्वांशे किंचिदप्रकारकतया ।—गुणानन्दः ।
( ५ ) श्वनि—पुण० पु० पा० ।
( ६ ) त्यक्षऽ—कलि० मु० पु० पा० । ( ७ ) त्युन्मुखे—[illegible]

कल्पलता ।

स्वरूपभेद एवेति । यः स्वरूपभेदो गोत्वं त्वयोच्यते स एवान्यापोहोऽतद्व्या(१)वृत्तिलक्षणः, यस्तु विधिः सोऽन्यापोहोऽन्य(२) एव, तद्वा(३)नं शब्दान्निराकुर्म इत्यर्थः । अलीकपक्ष इति । अन्यापोहलक्षणो नाभिमतं(४) गोत्वादि स्वरूपभेदस्त्वयोच्यते, तच्च(५)लीकं तदा कथं स्वरूपभेदः, न हि निःस्वरूपमलीकं स(६)स्वरूपं भवतीत्यर्थः । तदभावात् स्वरूपभेदाभावात् । तस्येति । अन्यापोहत्वेना(७)भिमतं गोत्वादि यदि सस्वरूपं तदा कथम(८)लीकमित्यर्थः । स्वरूपविधाविति । स्वरूपत एव विधावित्यर्थः । किं च गोत्वमन्यापोह(९)रूपं यदि विधिस्वरूपं भवेत् तदा स्वलक्षणतामासादयेत्, ( तथा च ) वस्तुन(१०)स्तस्य सविकल्पकाविषयता न स्यादित्याह । स्वलक्षणस्य चेति । यद्वा स्वलक्षणमन्यापोह(११)त्वेन गृह्यते इति तवाभिमानोऽनुपपन्न इत्या(१२)ह । स्वलक्षणस्य चेति । अपि चेति । पूर्वमश्वव्यावृत्तेर्गोशब्दादभानेपि नाश्वे प्रवर्त्तेत इत्युक्तमिदानीमश्वाप्रतीत्यैव नाश्वे प्रवर्त्तेत इत्युच्यत(१३) इत्यपौनरुक्त्यम् । ननु गोपदादश्वव्यावृत्तिश्चेन्न स्फुरेत्तदा गां बधानेति-

(१) होतुल्या—पुण० पु० पा० ।
(२) ढोत—पुण० पु० पा० ।
(३) तज्ज्ञा—पुण० पु० पा० ।
(४) हत्वेनाभिमतं—कालि० मु० पु० पा० ।
(५) तयदा—पुण० पु० पा० ।
(६) स—नास्ति पा० कालि० मु० पु० ।
(७) हत्वा—पुण० पु० पा० ।
(८) यन्तद—पुण० पु० पा० ।
(९) हस्व—पुण० पु० पा० ।
(१०) स्तुत—पुण० पु० पा० ।
(११) पोढ—पुण० पु० पा० ।
(१२) इत्यत आ—पुण० पु० पा० ।
(१३) इत्युच्यत—नास्ति पा० पुण० पु० ।

कल्पलता।

देशितो(१) गवाश्वमेकत्र पश्यन्नश्वं बध्नीयात्, न हि तत्र नाश्वप्रतीतिरित्यत आह। यदा त्विति। प्रवृत्त्युन्मुखो(२)पि अश्वज्ञानवानपि नाश्वे प्रवर्त्तते। प्रैषविषयाद्गो(३)रयं भिन्न इति ज्ञानाद्वा, नायं गौरिति ज्ञानाद्वा(४), नायं प्रैषविषय इति ज्ञानाद्वा, प्रैषविषयतावच्छेदकं यद्गोत्वं तदिह(५) नास्तीति ज्ञानाद्वा, (नायं गौरिति ज्ञानाद्वा) न प्रवर्त्तत इत्यर्थः॥

स्यादेतत्। न ह्यनुभवमवधूय(६) भवितुं क्षम(७)मिति को विधिस्फुरणमपन्हुताम्, तदुपसर्जनीभूतस्तान्नि-

दीधितिः।

विशेषणं तावदितरव्यावृत्तिबोधजनकं विशेषणजन्या च विशिष्टबुद्धिरेवेति तस्यामवश्यमितरव्यावृत्तिभासत इत्याशङ्कते। स्यादेतदिति। अव(८)च्छेदकत्वं विशेषणत्वं, विशेषणं हि नागृहीतं नाप्यगृहीतविशेष्यसम्बन्धमन्यव्यावृत्तिबुद्धिमाधत्ते, परन्तु विशेष्ये गृहीतसम्बन्धम्, स एव च ग्रहो विशिष्टबुद्धिस्तदधीना

दीधितिटिप्पणी।

ननु विशिष्टबोधातिरिक्तस्य इतरव्यावृत्तिविषयकबोधस्य जनकतयैव विशेषणस्य इतरव्यावृत्तिबोधजनकतास्थास्यति, विशिष्टबुद्धौ तस्या विषयत्वे तु किं मानमत आह। विशेषणजन्या चेति। विशेषणत्वं नामेति लिखनादाह। अवच्छेदकत्वमिति। एतत्समाधाने सति कथं समाधानान्तरं दत्तमित्याशङ्कते। विशेषणं हीति। स एव

(१) शितौ—पुण० पु० पा०।
(२) न्मुखे—पुण० पु० पा०। (३) वृष—पुण० पु० पा०।
(४) नायं ........ ज्ञानाद्वा—अयं पाठः कालि० मु० पु० नास्ति।
(५) दिहापि—पुण० पु० पा०। (६) मभिभूय—पुण० पु० पा०, पा० २ पु०।
(७) स्थातुं क्षमं कस्यचित्स्वरूपमित्यर्थः। (८) व्यव—कालि० मु० पु० पा०।

षे(१)धोपि(२) स्फुरत्येव, अन्यथा विधेरवच्छेदकत्वानुपपत्तेः, न ह्यन्यतो विशेष्यमव्यावर्तयतो विशेषणत्वं नाम, न चाऽन्यतो व्यावर्तनं व्यवच्छित्तिप्रत्यायनादन्यत्, ततो यथेन्दीवरपुण्डरीकादिशब्देभ्यो गुणीभूतनीलधवलादिविधिशेखरा प्रतीतिस्तदन्यव्यवच्छेदस्तु तद्गर्भीभिकायमाणस्तथा सर्वत्रेति चेत्, अस्तु तावदेवं, विधिस्तु स्फुरतीत्यत्र सम्प्रति नो निर्बन्धः, अन्यथाऽवच्छेद्यावच्छेदकयोरप्रतीतेरवच्छित्तिरपि न स्यात्, यथोत्पलादावेव नीलत्वाद्यप्रतीतौ ।

दीधितिः ।

तु पश्चात्तनीतरव्यावृत्तिबुद्धिरिति यद्यपि तत्त्वं, तथापि विधिस्फुरणमात्रेणैव सम्प्रति कृतार्था वयमित्याशयवानाह । अस्तु तावदिति । अवच्छेद्यावच्छेदकयोः विशेष्यविशेषणयोः । अवच्छित्तिः इतरव्यावृत्तिबुद्धिः ॥

दीधितिटिप्पणी ।

च कारणीभूतग्रह एव च, भवन्मतेपि कारणीभूतग्रहे व्यावृत्त्यस्फुरणमिति विधेरेव तत्र विषयत्वमिति भावः ॥

कल्पलता ।

कीर्त्तिदिङ्नागादिभिर्गौरियमि(३)त्यादिविकल्पे विधिस्फुरणं नास्त्येवेत्युक्तं, ज्ञानश्रिया(४) तु विधिस्फुरणमभ्युपगम्य निषेधस्फुरणमपि तत्र भवतीति स्वीकृतं, यदाह 'तत्रापोहस्तद्गुणत्वेन गम्यत' इति,

(१) तस्तु निषे—पा० २ पु० । (२) धोपि परि—पुण० पु० पा० ।
(३) गौरि—पुण० पु० पा० । (४) ज्ञानाश्रया—कालि० मु० पु० पा० ।

कल्पलता।

तदुत्थाप्य दूषयति । स्यादेतदिति । 'न ह्यनुभवमभिभूय भवितुं क्षम'मित्यपि तद्ग्रन्थ एव । तस्यार्थः, अनुभवमभिभूय तिरस्कृत्य, शास्त्रं भवितुं न क्षमामिति, शास्त्रस्यानुभवानुसारित्वात् । तदुपसर्जनीभूतः विध्युपसर्जनीभूतः । अन्यथेति। व्यवच्छेदो यदि न स्फुरेत्तदा गोत्वादेर्विधेर्व्यवच्छेदकत्वं न भवेदित्यर्थः । तदेवोपपादयति । न हीति । व्यावर्त्तकं हि विशेषणमित्युच्यत इत्यर्थः । ननु विशेषणं व्यवच्छित्ति(१)-प्रत्ययं जनयति, अन्यतो व्यावृत्तिप्रत्यये तु किमायातमत आ(२)ह । न चेति । स्फुटतरव्यावृत्तिप्रत्ययस्थले(३) दृष्टत्वे(४)न गवादिप्रत्ययानामपि व्यावृत्तिविषयत्वमाह । यथेति । इन्दीवरम् नीलोत्पलम्, पुण्डरीकम् सिताम्भोजम् । नीलधवलादिविधिशेखरा नीलधवलादिविधिप्रधाना । तद्गर्भार्भकायमाणः(५) तत्क्रोडवर्त्ती । तथा(६) सर्वत्र गोमहिषमातङ्गादिप्रतीताव(७)पीत्यर्थः। अत्र सम्प्रतिपत्तिमाह । अस्त्विति । स्फुरितस्य विधेरलीकत्वं यद्यपि तव हृदि वर्त्तते, तथापि विधिस्फुरणं स्वीकृतमेव त्वयेति तात्पर्यार्थः । प्राथमिकाविशिष्टज्ञाने(८) निषेधो न स्फुरतीत्यनुशयस्तावत्पदार्थ इति केचित् । तन्न । प्रथमविशिष्टज्ञानेपि व्यावृत्तिस्फुरणात् । तदुक्तं गुणाकि-

---

(१) च्छित्तिः—पुण० पु० पा०।
(२) तमित्या—पुण० पु० पा०।
(३) प्रत्यये स्थान—कालि० मु० पु० पा०।
(४) दृष्टान्ते—कालि० मु० पु० पा०।
(५) मानः—पुण० पु० पा०।
(६) तया—पुण० पु० पा०।
(७) तीतिर—पुण० पु० पा०।
(८) ज्ञान—पुण० पु० पा०।

कल्पलता ।

रणावल्यामाचार्यैः, 'अतद्व्यावृत्तिर्वैशिष्ट्यम्' इति । वैशिष्ट्यं च प्रथमाविशिष्टज्ञानेपि भासत एव । यत्तु(१) विशेषणत्वज्ञाने(२) व्यावृत्तिप्रत्ययो न विशिष्टज्ञान इति । तन्मन्दम् । विशेषणत्वज्ञाने हि व्यावर्तकत्वं स्फुरेन्नतु व्यावृत्तिः । यदप्यन्योन्याभावग्रहे(३) वैधर्म्यज्ञानं तन्नामिति । तदपि न । अन्योन्याभावत्वेन तद्ग्रहे तथैव, न तु वैशिष्ट्यरूपतयाऽन्योन्याभावग्रहे तन्नामिति लीलावतीकण्ठाभरण एव विस्तृतम्(४) । अवच्छेद्यावच्छेदक(५)योरिति । विशेषणविशेष्ययोर्विधिरूपयोरित्यर्थः । व्यवच्छित्तिः व्यवच्छित्तिप्रत्ययः । यथेति । नीलं नीलत्व(मुत्पल)मुत्पलत्वं च यदि न भासते तदाऽनीलादनुत्पलात्(६) व्यावृत्तिर्न भासत एवेत्यर्थः ॥

---

दीधितिः ।

अपि च यत्किञ्चिदितरव्यावृत्तिरतिप्रसक्ता, यावदितरव्यावृत्तिश्च(७) यावदितरानवगतौ दुरवगमा । न च सर्वेषामितरेषां प्रातिस्विकरूपेणाऽश्वत्वादिना वा(८) भानं जन्मनां सह-

दीधितिटिप्पणी ।

यत्किञ्चिदितरतो व्यावृत्तिः । ननु प्रातिस्विकरूपेण ग्रहोऽस्वशक्यः, इतरेषामनुगताश्वत्वादिरूपेण ज्ञानं भविष्यतीत्यत आह । अ-

---

(१) यत्त्व—पुण० पु० पा० । (२) भाने—पुण० पु० पा० ।
(३) ग्रन्थे—पुण० पु० पा० । (४) विवृतम्—पा० २ पु० ।
(५) वच्छेद—पुण० पु० पा० । (६) त्पलाच्च—पुण० पु० पा० ।
(७) व्यावृत्तिः—कालि० मु० पु० पा० । (८) वा—नास्ति—पा० कालि० मु० पु० ।

न च निषेध्यमस्पृशती(१) प्रतीतिर्निषेधं स्प्र-

दीधितिः।

ष्टुमपि शक्यं, न वा भवतां भाविक(२)मश्वत्वादिकं, ताद्रू(३)प्ये-णाप्रतीतानां चाऽग(४)वां विकल्पवासनयाऽप्युपस्थापनमश(५)-क्यं, मेयत्वादिना चो(६)पस्थितिर्न भेदनिरूपणक्षमा, प्रतियोगि-तावच्छेदकरूपेण प्रतियोग्युपस्थितिं विना तदसम्भवात्(७), य-त्किञ्चिद्गवेतरत्वं तु गवान्तरसाधारणं, गोमात्रेतरत्वेन(८) भाने (च) गोत्वं भाविकमनुगतमुपेतव्यमित्याह। न चेति। निषेध्यम्(९) निषेधप्रतियोगिनम्। अथ गवेतरेतरत्वमेव गोत्वं(१०), त-

दीधितिटिप्पणी।

श्वत्वादिना वेति। तत्तदनुगतधर्मस्याप्यनन्तत्वादिति भावः। भाविकम् वास्तवम्(११),त्वन्मते अनुगतधर्मस्यालीकत्वादिति भावः। ननु यावतां गवेतरेषां(१२) विकल्पवासनावशादेवोपस्थितिर्भविष्यतीत्यत आह। ताद्रूप्येणेति। विधिरूपेण अश्वत्वादिरूपेणेति यावत्। वासनां प्रति प्रतीतेः कारणत्वात्तदभावे वासनाया अप्यसम्भवादिति भावः। इतरस्य यत्किञ्चित्त्वयावत्त्वे वितर्क्य इतरप्रतियोगिनोपि तद्वितर्केनेन समीहितं दर्शयति। यत्किञ्चिद्गवेतरत्वं त्विति। गवान्तरसाधारणमिति। तथा च कुत्रापि गवि गवेतरव्यावृत्तिर्न स्यादित्यर्थः। गोत्वावच्छिन्नेतरत्वं वक्तव्यमत आह। गोमात्रेति। निषेध्यपदस्य निषेधाश्रयपरत्वेऽस-ङ्गतिः, तेनातद्व्यावृत्तिप्रतीतौ निषेधाश्रयस्य यस्य कस्यचिद्गोः स्पर्शाङ्गीकारादत आह। निषेध्यमिति। निषेधान्तरमित्यन्तरलिख-

(१) शन्ती—पा० २ पु०।

(२) भाविकम्, पारमर्थिकम्।—गुणानन्दः। (३) ताद्र—कलि० मु० पु० पा०।

(४) वा ग—कलि० मु० पु० पा०। (५) स्थापनं श—कलि० मु० पु० पा०।

(६) वो—पा० २ पु०। (७) तदसम्भवात्, भेदानिरूपणासम्भवात्।—गुणानन्दः।

(८) त्वेन च—पुण० पु० पा०। गोमात्रेतरत्वेन, गोत्वावच्छिन्नप्रतियोगिताकेतरत्वेन।—गुणानन्दः।

(९) निषेधानुयोगिन्यपि निषेध्यपदप्रयोगादाह। निषेधप्रतियोगिनमिति।—गुणानन्दः।

(१०) गोत्वमित्यस्य प्रतियोगितावच्छेदकमिति शेषः।—गुणानन्दः।

(११) भाविस्वरूपम्—पा० २ पु०। (१२) गवेतरधी—पा० २ पु०।

ष्टुमर्ह(१)ति, तस्य(२) तन्निरूपणाधीननिरूपणत्वात्
न च निषेधान्तरमेव निषेध्यम्, इतरेतराश्रयप्रसङ्गात्।
परानपेक्षनिरूपणे तु विधौ(३) नायं दोषः(४)।
ततः प्रतीतावितरेतराश्रयत्वमुक्तं सङ्केते सञ्चार्य यत्प-

दीधितिः।

आह। न चे(५)ति। निषेधान्तरम् गवेतरत्वरूपनिषेधविशिष्टम्।
तदुक्तम्—

'सिद्धश्चा(६)गौरपोह्ये(७)त गोनिषेधात्मकश्च सः।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते(८)॥' इति।

सङ्केत इति। अगोव्यावृत्तो गोपदवाच्य इति वाक्याद्गोप-
दशक्तिग्राह्या, तद्वाक्यप्रवृत्तिश्च गोपदशक्तिग्रहाधीनेति(९) य-

दीधितिटिप्पणी।

नाद्विधेयस्यापि निषेधत्वं प्राप्यत इत्यतो व्याचष्टे। अथेति। तथा च
भाविकानुगतगोत्वानङ्गीकारेऽपि न क्षतिरिति भावः। एवं च गवेत-
रेत्यत्रापि इदं गोत्वं प्रविष्टमिति भावः। निषेधान्तरं प्रतियोगितावच्छे-
दकमेव न तु प्रतियोगीत्याह। गवेतरत्वरूपेति। विशिष्टम् इतरस्वरूपम्।
निषेधान्तरं किमित्याह। गवेतरत्वरूपेति। इतरेतराश्रयं सङ्गमयति,
तदुक्तमित्यादिना। अपोह्येत निषिध्येत, सः अगौः, तत्र प्रथमप्रवि-
ष्टगौरेव उच्यतामित्यर्थः। इति यदीति। एवंरूपेण यदि मन्मते अ-
न्योन्याश्रयो दीयते तदा भवन्मतेऽपि स्यात्। गौर्गोपदवाच्य इति
वाक्यार्थबोधस्यापि उद्देश्यान्तर्गतगोपदशक्तिग्रहाधीनत्वादित्यर्थः।

(१) मर्ह इति—पुण० पु० पा०।
(३) तद्विधौ तु—पा० २ पु०। (२) तस्या—पा० २ पु०।
(५) न चे—पुण० पु० पा०। (४) दोष इति—कलि० मु० पु० पा०।
(८) सिद्धः प्रतियोगितावच्छेदकरूपेण ज्ञातः, गोनिषेधात्मकः सः, अपोह्यः, तत्र अपोह्ये प्रतियोगितया विशेषणीभूतः, गौः गोत्वविशिष्टः गोत्वनिरुक्त्या वक्तव्यः निर्वाच्यः।—गुणानन्दः। (६) सिद्धश्च—पा० २ पु०। (७) पोह्ये—पा० २ पु०।
(९) गोपदशक्तिग्रहाधीनेति। गोपदाधीनार्थोपस्थित्यधीनेत्यर्थः।—गुणानन्दः।

रिहतं ज्ञानश्रिया, तदेतत् ग्राम्यजनधन्धीकरणं गोलकादिवत् स्थान(न्तर)सञ्चारात् ।

दीधितिः ।

अन्योन्याश्रयः, तदा गौर्गोपदवाच्येस्तत्रापि स स्यात्, यदि च प्रत्यक्षादिनोपस्थिते गोत्वविशिष्टे व्यवहारादयं गोपदवाच्य इत्यादिवाक्याद्वा सङ्केतग्रह इति नान्योन्याश्रयः, तथैवोपस्थिते गवेतरापोढे तत एव स इति सञ्चारपरीहारौ । (ज्ञानश्रिया ज्ञानधनेन ज्ञानातिरिक्तपदार्थानभ्युपगन्त्रा बाह्येनेत्यर्थः ) ॥

दीधितिटिप्पणी ।

अयं च सञ्चारः। परिहारं दर्शयति। तदेति । मन्मतेपीति शेषः। तथैव प्रत्यक्षादिनोपस्थित एव, गवेतरापोढे गवेतरव्यावृत्ते, तत एव व्यवहारादेव अयं गोपदवाच्य इति वाक्यादेव वा, सः सङ्केतग्रहः। मूले, धन्धीकरणमिति । प्रतीतौ दत्तान्योन्याश्रयस्य तथाप्यवारणादित्यर्थः ॥

---

कल्पलता ।

ननु निषेधमात्रमेव भासतां, किं निषेध्यस्योत्पलादेरपि भानेनेत्यत आह । न चेति । ननु चागवि महिषादौ या गोव्यावृत्तिः गवि च धवलादौ(१) याऽगो(२)व्यावृत्तिस्तयोरेव (परस्परं) विशेषणविशेष्यभावोऽस्तु, किं विधेर्निषेध्यत्वेनेत्यत आह। न चेति । एवं सत्यन्योन्याश्रयापत्तिः, तदुक्तं—

'सिद्ध(३)श्चाऽगौरपोह्येत गोनिषेधात्मकस्तु सः ।
तदा गौरेव वक्तव्यो नञा यः प्रतिषिध्यते' ॥ इति ।

---

(१) शवलादौ—पुण० पु० पा० । (२) या गो—कलि० मु० पु० पा० ।
(३) सिद्धि—पुण० पु० पा० ।

कल्पलता ।

ननु भावोपि स्वा(१)भावविरहरूप इति तत्राप्यन्योन्याश्रय एवेत्यत आह । परानपेक्षेति । यद्यभाववविरहात्मतया भावनिरूपणमवश्यं भवेत्तदाऽयं दोषः स्यात्, किन्तु स्वरूपेणापि भावनिरूपणं सम्भवत्येवेति क्वान्योन्याश्रय इत्यर्थः । अन्योन्यज्ञानाधीनमन्योन्यज्ञानमिति नैयायिकोक्तमन्योन्याश्रयमन्योन्यसङ्केतग्रहाधीनमन्यो(२)न्यसङ्केतग्रहणमिति छलतः सञ्चार्य(३) ज्ञानश्रिया(४) बौद्धविशेषेण(५) यत्समाहितं तदेतद्ग्राम्यजनस्य पामरजनस्य व्यामोहनं, न तु परीक्षकस्य, यथै(६)न्द्रजालिको गुटिकान्तरस्थाने गुटिकान्तरं(७) निवेशयति, पृथग्जनास्तु ता(८)द्रूप्येणैव(९) प्रतिपद्यन्त इत्याह । तत इति । सङ्के(१०)तेऽन्योन्याश्रयसञ्चारो यथा, अगौर्महिषादि(र्महिषादि)पदसङ्केतग्रहाधीनग्रहः, गौश्च गोपदसङ्केतग्रहाधीनग्रह इति । अस्य च परीहारः, गवादि(११)रूपार्थग्रहाधीनो गोपदसङ्केतग्रहो न (तु) महिषादिपदसङ्केतग्रहस्तत्रोपयुज्यते येनान्योन्याश्रयः स्यादिति, तथा च कल्पितदूष्यदूषणत्वादन्योन्याश्रयस्य ना(१२)पत्तिरिति भावः ॥

(१) स्व—पुण० पु० पा० ।
(२) मन्ये—पुण० पु० पा० ।
(३) सञ्चार्य—पुण० पु० पा ।
(४) ज्ञानाश्रया-पुण० पु० पा० ।
(५) बौद्धविशेषेण-नास्ति० पा० कालि० मु० पु० ।
(६) यथे—पुण० पु० पा० ।
(७) कान्तरे—पुण० पु० पा० ।
(८) जनास्ता—पुण० पु० पा० ।
(९) द्रूप्येनैव—पुण० पु० पा० ।
(१०) तत्र सङ्के— पुण० पु० पा० ।
(११) रः, महिषादि—पुण० पु० पा० ।
(१२) विकल्पितदूष्यदूषणत्वाज्ज्ञानाश्रियश्छला—पुण० पु० पा० ।

स्फुरतु विध्यलीकमिति चेन्न । व्याघातात् । किञ्चिदिति हि(१) विध्यर्थो न किञ्चिदिति चाऽ(२)लीकार्थः । अतद्रूपपरावृत्तिमात्रेणालीकत्वे स्वलक्षणस्याप्यलीकत्वप्रसङ्गात् । स्वरूप(३)मात्रपरावृत्तौ (तु) कथं विधिर्नाम ।

दीधितिः ।

विध्यलीकमिति कोऽर्थः । किं विधिस्वरूपमलीकं, किं वा विधित्वेनारोपितं, किं वाऽगृहीतविधि(४)भेदकमिति । आद्य आह । व्याघातादिति । रूप(५)व्यावृत्त्या अनुगतस्य विधेरलीकत्वमिति चेत् । किमतद्रूपव्यावृत्त्या, रूपमात्रवृत्त्या वा। आद्ये, अतदिति । द्वितीये, स्वरूप(६)मात्रेति ॥

दीधितिटिप्पणी ।

रूपव्यावृत्त्येति। स्वरूपमात्रेतिलिखनात्स्वरूपादेरभिन्नत्व ? इत्यर्थः। विधिर्नामेति मूलम्, सस्वरूपस्यैव विधित्वादिति भावः॥

कल्पलता ।

तदत्र धर्मो(७)त्तरस्य मतं शङ्कते । स्फुरत्विति। यदाह 'असत्यरूपमादर्शयन् विकल्पः कथं बाह्यसदृशमादर्शयेत् तयोरत्यन्तवैधर्म्या'दिति । विध्यलीकमिति (हि) कर्मधारयोऽत्र विवक्षितः, तथा च विधित्वमलीकत्वं च नैकत्र सम्भवति, किञ्चित्वं हि

(१) हि—नास्ति पा० कलि० मु० पु० । (२) दित्य—पा० २ पु० ।
(३) व । रूप—कलि० मु० पु० पा० ।
(४) व्यक्ति—कलि० मु० पु० पा० । विरोधि—पा० २ पु० ।
(५) अतद्रूप—पा० २ पु० ।
(६) ये रूप—कलि० मु० पु० पा० । (७) दण्डधर्मो—पुण० पु० पा० ।

कल्पलता ।

विधित्वमकिञ्चित्त्वं त्वलीकत्वमिति परिहरति । न व्याघातादिति । ननु गोत्वमगोव्यावृत्तिरिति कृत्वाऽलीकमित्युच्यते(१), व्यवहारबलात्तु(२) विधिरेव, अतो विध्यलीकत्वं न विरुद्धमित्यत आह। अतद्रूपेति। स्वलक्षणस्याप्यतद्रूपव्या(३)वृत्तिसम्बन्धादलीकत्वमेव(४) प्रसज्येते(५)त्यर्थः । ननु स्वलक्षणेऽतद्रूपपरावृत्तित्वं, गोत्वादिकं(६) तु रूपमात्रपरावृत्तिरिति कथं स्वलक्षणस्यालीकत्वमित्यत आह । रूपमात्रेति। स्वलक्षणादेतावता भेदेपि पुनः पूर्वोक्त एव व्याघातः, न ह्येकं निःस्वरूपं सस्वरूपं चेत्यर्थः ॥

विध्यंशस्यारोपितत्वाद्यम(७)दोष इति चेन्न । स्वलक्षणविधेर्विकल्पासंस्पर्शात्, सामान्यविधेरनु(८)-

दीधितिः ।

द्वितीयं शङ्कते । विध्यंशस्येति । स्वलक्षणरूपो विधिरारोप्यते, सामान्यरूपो वा । आद्ये, स्वलक्षण(९)विधेरिति । तव मत इति शेषः । द्वितीये, सामान्येति(१०) । न हि क्वचिदपि कश्चित्सामान्यरूपो विधिरुपेयते भवता, य इहारोप्येत (इति) ।

दीधितिटिप्पणी ।

द्वितीयम्, विधित्वेन आरोपितम्। स्वलक्षणविधेरिति । तथा च कथं घट इत्याकारविकल्पे स्वलक्षणस्यारोपः स्यादिति मूलीयभावः। अन्य-

(१) च्येत—पुण० पु० पा० । (२) बलात—पुण० पु० पा० ।
(३) पपरा—कलि० मु० पु० पा० । (४) मेवं—पुण० पु० पा० ।
(५) प्रसज्यत इ—कलि० मु० पु० पा० । (६) गोत्वं—पुण० पु० पा० ।
(७) दयमेव—कलि० मु० पु० पा० । (८) विधेरन्यप्राप्यनभ्यु—पुण० पु० पा० ।
(९) स्वलक्षणस्य—पा० २ पु० । (१०) सामन्योति—कलि० मु० पु० पा० ।

पगमात्, परिशेषा(१)दलीकविधौ विरोधस्यैव स्थितेः।

दीधितिः।

तथा चारोपासम्भवादलीके भासमानं तदीयमेव विधित्वं वाच्यम्, तथा च विरोध एवेत्याह। परिशेषादिति॥

दीधितिटिप्पणी।

त्रेति मूलम्(२)। तथा च तदेवारोप्यते यदन्यत्र स्थले अभ्युपगम्यत इत्यर्थः। अन्यत्रानभ्युपगममेव दर्शयति। न हि क्वचिदपीति अन्यत्रेत्यस्यार्थकथनम्। तदीयम् अलीकीयम्॥

कल्पलता।

नन्वलीके विधित्वमारोपितं स्फुरतीति विध्यलीकमिति ब्रूम इति कुतो विरोध इति शङ्कते। विध्यंशस्येति। अलीके स्वलक्षणस्य विधेरारोपो(३) न सम्भवति, आरोपो हि विकल्पस्तत्र च स्वलक्षणस्फुरणं त्वया(४) नेष्यते। सामान्यं यद्बोत्वादि स एव विधिस्तत्रारोप्यत इत्यपि नास्ति, सामान्यविधेस्त्वयाऽनङ्गीकारात्, तथा चालीकमेव विधिरित्या(५)यातं, तत्र च विरोध उक्त एवेति परिहरति। स्वलक्षणेति॥

भेदाग्रहाद्विधिव्यवहारमात्रमेतदि(६)ति चेत्।

दीधितिः।

तृतीयं शङ्कते। भेदाग्रहादिति। अभेदव्यवहारो हि व्यावर्तकेन(७) रूपेणानुपस्थितयोरुपस्थितयोश्च साधारणेन भेदाग्रहा-

(१) पारिशेष्या—पा० २ पु०। (२) सामान्यविधेरन्यत्रानुपगमात्। इति टिप्पणीकृन्मतो मूलपाठः।
(३) राशङ्का—कालि० मु० पु० पा०।
(४) त्वया च—पुण० पु० पा०। (५) विरोधिता—पुण० पु० पा०।
(६) मात्रमि—कालि० मु० पु० पा०। (७) व्यावर्तकेण—पुण० पु० पा०।

सम्भवेदप्येतत्, यदि स्वलक्षणमपि विधित्वमपहाय स्फु(१)रेत्, यदि चा(२)लीकमपि निषेधरूपतां परिहृत्य प्रकाशेत(३)। न चैवम्। उभयोरपि निरंशतया प्रकारान्तरमुपादायाप्रथनात्, अप्रथमानरूपासम्भवाच्च। काल्पनिकस्याप्यं(४)शांशिभावस्यात(५)

दीधितिः।

द्भवेत्, न चेह तत्सम्भव इत्याह। सम्भवेदपीत्यादि। निषेधरूपताम् विधिविलक्षणरूपताम्(६)। उभयोरपि। भवतामिति शेषः(७)। निरंशतया निर्द्धर्मकतया। प्रकारान्तरम् साधारणं रूपम्। (८) अत एव विनापि साधारणं रूपं(८) उपस्थितयोर्व्यावर्तकविधित्वनिषेधत्वाग्रहेण भेदाग्रहाद(९)भेदव्यवहार इत्यपि नास्ति, स्वतो विलक्षणतदुभयातिरिक्तयोर्विधित्वनिषेधत्वयोर्भवता तत्रानभ्युपगमात्, तत्र तयोर्निर्धर्मकत्वादित्याह। अप्रथमानेति। निर्द्धर्मकयोरपि तयोः काल्पनिकाभ्यामेव विधित्वनिषेधत्वाभ्यां सह काल्पनिको धर्मधर्मिभावो भविष्यतीत्याह। काल्पनिकस्येति। अंशांशिभावः धर्मधर्मिभावः। अत एव नित्यं विशेषदर्शनग्रस्त-

दीधितिटिप्पणी।

विधिवैलक्षण्यस्यैव विधित्वव्यावर्तकत्वादाह। निषेधरूपतामिति। भवतामिति पूरणेन व्याचष्टे। उभयोरिति। निरंशतयेत्यस्य व्याख्यामाह। निर्धर्मकेति। तदुभयातिरिक्तयोरिति। तथा च तदतिरिक्त-

(१) परिस्फु—पुण० पु० पा०। (२) यदि वाऽ—पुण० पु० पा०।
(३) प्रकाशेत्—पुण० पु० पा०।
(४) निकस्यां—कलि० मु० पु० पा०, पा० २ पु०। (५) स्याप्यत—पुण० पु० पा०।
(६) शशविषाणादिरूपालीकस्य विनापि निषेधरूपतां भानादाह। विधिविलक्षणरूपमितीति।—गुणानन्दः। (७) भवताम्—पुण० पु० पा०।
(८) अतएव……साधारणं रूपमित्यन्तः पाठः नास्ति, कलि० मु० पु०।
(९) ग्रहेणा—कलि० मु० पु० पा०।

एव मूल एव निहि(१)तः(२) कुठारः ।

---

दीधितिः ।

त्वादेव । मूले भेदाग्रहे, तदधीनत्वात् कल्पनायाः । अथासत्ख्यात्युपनीतस्य विधित्वस्य निषेधत्वस्य च विधौ निषेधे च ग्राहको विकल्प एव विशेषदर्शनम्, अतस्तद्विरहदशायां भेदाग्रहो न विरुध्यत इति चेन्न । तत्र विधेर्विकल्पासंस्पर्शात्, असत्ख्यातिनिरासात्(३), गोत्वादौ प्रतीयमानस्य विधित्वस्य वास्तवत्वे बाधकाभावाच्चेति ॥

दीधितिटिप्पणी ।

विधित्वनिषेधत्वयोरभावे तदग्रहणे तदुभयग्रहणमित्येव नास्ति, तयोर्विधित्वादिस्वरूपत्वादिति भावः । कथं तस्य मूलत्वमत आह । तदधीनत्वादिति । ननु विकल्पे अलीकधर्मिणि विधित्वविकल्प एव विशेषदर्शनं, अन्यस्याभावात , तथा च तत्पूर्वं विशेषदर्शनाभावादनुगृहीतादेकमुपपन्नमिति ? स्वयं देशयति । अथेति ॥

---

कल्पलता ।

ननु स्वलक्षणविधेरारोपं न ब्रूमो येन विकल्पे(४) तत्स्फुरणं स्यादपि तु तद्भेदाग्रहमात्रं ब्रूम इति शङ्कते । भेदाग्रहादिति । भेदाग्रहो विध्यलीकयोस्तदा भवेत्, यदि विधिर्विधित्वेन न स्फुरेदलीकं वा तत्त्वेन, तथा च न सम्भवति, द्वयोरपि तत्त्वेनैव स्फुरणात , न हि शुक्तित्वेनैव भासमानायाः शुक्ते रजतभेदाग्रहः सम्भवति व्यवहारोपयोगी चे(५)ति परिहरति । भवेदेवमिति । निरंशतया निर्धर्मक(६)तया । प्रकारा-

---

(१) मूले निह—पुण० पु० पा० । (२) निहितो—पा० २ पु० ।

(३) ननु विधेर्विकल्पास्पर्शेऽपि निर्विकल्पकभासी तादृशो विकल्प एव विशेषदर्शनमिति वाच्यमित्यनुशयादाह । असत्ख्यातीति ।—गुणानन्दः । (४) विकल्पेन—पुण० पु० पा० ।

(५) पयोगी चे—पुण० पु० पा० । (६) निर्धार्मिकं—पुण० पु० पा० ।

कल्पलता ।

न्तरम् स्वरूपातिरिक्तं प्रकारम् । ननु यः प्रकारो न भासते तेन भेदाग्रहः स्यादित्यत आह । अप्रथमानेति । तत्र प्रमाणाभावादिति भावः । एतच्च परमतेनोक्तम्, तेन विधौ रूपान्तरानभ्युपगमात् । अलीकमात्रपरं वैतत् । ननु अलीकस्वलक्षणयोः पार(१)मार्थिकधर्माभावेऽपि काल्पनिकं धर्ममादायारोप एव स्यात्, तथा च विधेर्विकल्पासंस्पर्शेऽपि न दोष इत्यत आह । काल्पनिकस्येति । आरोपस्य हि मूलं भेदाग्रहः, स तु नि(२)रस्तस्तदा का आरोपसम्भावनेत्यर्थः । न च विशेषदर्शने सत्यप्याहार्य एवायमारोपः स्यादिति वाच्यम् । तस्य व्यवहारानङ्गत्वात्, व्यवहारार्थमेव हि स्फुरणं चिन्त्यत इति भावः ॥

साधारणं च रूपं विकल्पगोचरः, न चालीकं तथाभवितुमर्हति । तस्य (हि) देशकाला(३)नुगमो न स्वाभाविकः(४),तुच्छत्वात् । न काल्पनिकः,तस्याः(५)

दीधितिः ।

प्रकारान्तरेण वास्तवविधिस्फुरणं साधयति । साधारणं चेति । साधारणम् बहुतरदेशकालसम्बद्धम् । (तस्य अलीकस्य ।) का-

दीधितिटिप्पणी ।

देशकालाद्यनुगम इति लिखनादाह । साधारणमिति । उपाधिपदेनात्र स्वधर्मसंक्रामकमुच्यते, कल्पना च तदैव उपाधिर्भवितुं पार्यते,

(१) पर—पुण० पु० पा० । (२) स चोक्ति—पुण० पु० पा० ।
(३) कालाद्य—पा० २ पु० । (४) न भाविक—इति शङ्करमिश्रसम्मतः पाठः ।
(५) तस्या—पा० २ पु० ।

क्षणिकत्वात् । नारोपितः(१), अन्यत्राप्यप्रसिद्धेः(२) ।

दीधितिः ।

ल्पनिक इति कोऽर्थः । किं कल्पनो(३)पाधिकः, तथा च स्वधर्म एव बहुदेशकालसम्बन्धः(४) कल्पनया गोत्वादौ गृह्यत इति, अथान्यदीय एवायं कल्पनाया विषय इति । आद्येपि सम्बन्धो विषयित्वं, वृत्तिर्वा । नाद्यः, गोत्वादि नानादेशकालविषयकमिति प्रतीत्यापत्तेः । अन्त्ये त्वाह । क्षणिकत्वादिति । बहुकालानवस्थायित्वादित्यर्थः(५) । बहुदेशा(६)वृत्तित्वाच्चेत्यपि द्रष्टव्यम् । द्वितीयं दूषयति । नारोपित इति । असत्ख्यातेश्च निरासादिति भावः ॥

दीधितिटिप्पणी ।

यदि अलीकगोत्वादौ स्वधर्मं बहुतरदेशकालसम्बन्धं संक्रामयतीत्यभिप्रेत्याह । तथा चेति । स्वं कल्पना । काल्पनिक इत्यस्य एवमर्थ इत्याह । अथेति । ज्ञानस्वरूपकल्पनाया उभय(विध) एव सम्बन्धः विषयिता वृत्तित्वं चेति तदभिप्रायेणाह । आद्य इति । क्षणिकत्वनिबन्धनं बहुतरकालस्थायित्वं भवति, तथा च एकाभावविशेषणाभाव एव बहुतरदेशकालसम्बन्धाभाव इत्याह । ? बहुतरेति । स्वयं दोषमाह । बहुदेशेति । तैरनेकवृत्त्यनङ्गीकारादित्यर्थः । इदं च मूलोक्तक्षणिकत्वादिति हेतोर्न लभ्यते इति स्वातन्त्र्येणोक्तम् । ननु अन्यत्रासिद्धत्वेप्यसत्ख्यातिबलादेवोपस्थितं स्यादत आह । असत्ख्यातेश्चेति ॥

कल्पलता ।

प्रकारान्तरेण विधिस्फुरणं साधयति । साधारणं चेति । अनुगतप्रत्ययोऽनुगतधर्माधीनः, न चालिकम-

(१) नाप्यारोपित—इति शङ्करमिश्रसम्मतः पाठः, नारोपितोपि—पुण० पु० पा० ।

(२) प्यसिद्धेः—पुण० पु० पा०, अन्यत्र सिद्धेः—पा० २ पु० ।

(३) कल्पनो—कालि० मु० पु० पा० । (४) बहुदेशकालसम्बद्धः—कालि० मु० पु० पा० ।

(५) बहुकालेति । यद्यपि समानकालीननानाक्षणवृत्तित्वमस्त्येव तस्यास्तथापि क्रमिकबहुकालवृत्तित्वमेव तस्या वाच्यम् । अन्यथा क्षणिकत्वलक्षणस्याऽननुगतत्वापत्तेरिति ध्येयम् । एवमन्यत्रापि ।—गुणानन्दः । (६) बहुकाला—कालि० मु० पु० पा० ।

कल्पलता ।

नुगतमित्यर्थः । भाविकः स्वाभाविकः । तुच्छत्वात् निःस्वभावत्वात् । ननु कल्पना संवृत्तिः, सा स्वकीयमनुगमं गोत्वादावलीके ग्रहीष्यतीत्यत आह । न काल्पनिक इति । कल्पनाया अपि संवृत्तेर्देशतः कालतश्चाननुगमात्, ज्ञानत्वेन तस्या अपि क्षणिकत्वादित्यर्थः । ननु गोत्वादि यद्यप्यलीकमननुगतं च, तथाप्यन्यत्र दृष्टं देशत्वानुगमं तत्रारोपयिष्यतीत्यत आह। नाप्यारोपित इति । तादृशस्य कस्यापि त्वयाऽनभ्युपगमादित्यर्थः ॥

भेदाग्रहादेकत्वमात्रमनुसन्धीयत इति चेन्न । भाविकस्य(१) भेदस्याभावात्, भावे वा काल्पनिकत्व(स्य)व्याघातात् । परमार्थासतः परमार्थभेदपर्यवसा-

दीधितिः ।

अननुगतानामेवालीकानां भेदाग्रहादभेदारोपेणानुगतव्यवहार इत्याह । भेदाग्रहादिति । अलीकानां भेदः पारमार्थिको वा, परमार्थासत्ताको वा, आरोपितो वा, आरोपितासत्ताको वा, अलीको वा, व्यधिकरणो वा । आद्ये, भाविकस्येति । भावे वेति(२) । तद्गतभेदस्य पारमार्थिकत्वे तस्यापि पारमार्थिकत्वात्, असतः सदाश्रयत्वानुपगमात् । द्वितीये, परमार्थेति । तद्भेदस्य तत्रासत्त्वं

दीधितिटिप्पणी ।

तत्तद्व्यक्तिमात्रवृत्तीनामलीकानामतद्व्यावृत्तीनां परस्परं भेदाग्रहादनुगतव्यवहार इत्यर्थः । तदपारमार्थिकत्वेपि तत्कृतभेदः पारमा

(१) चेन्न । स्वाभाविकस्या— पा० २ पु० । (२) भावे वेति—कलि० मु० पु० पा० ।

यित्वात् । आरोपितस्याग्रहानुपपत्तेः, अभेदारोपानवकाशाच्च(१) । आरोपितासत्त्वस्य परमार्थसत्त्वप्रसङ्गात् । चतुःकोटि(२)निर्मुक्तस्य चा(३)तिप्रसञ्जकत्वात्, तद-

दीधितिः ।

यदि पारमार्थिकं तदा तत्र तदभेदोऽपि परमार्थिक इति(४), यथा स्वलक्षणे स्वभेदासत्त्वस्य पारमार्थिकत्वे स्वाभेदः पारमार्थिकः(५), तथा च सिद्धं नः समीहितमिति । तृतीये, आरोपितस्येति । आरोपस्यैव(६) तद्ग्रहरूपत्वात्(७), भेदग्रहे चाभेदारोपानवकाशात्(८), आरोपितभेदस्य(९) पारमार्थिकाभेदपर्यवसायित्वात्, आरोप्या(१०)रोपविषयपारमार्थिकत्वमन्तरेणारोपानुपपत्तेः । एतेन कालान्तरारोपितस्य(११) तदानीमग्रह इत्यपि प्रत्युक्तम् । चतुर्थे, आरोपितासत्त्वस्येति । भेदस्य च पारमार्थिकत्वे प्रतियोग्यनुयोगिनोरपि परमार्थिकत्वान्नालीकत्वमिति । पञ्चमे, चतुःकोटीति । कोटिः प्रकारः । अलीकभेदाग्रहस्याभेदारोप-

दीधितिटिप्पणी ।

र्थिकः स्यादत आह । असत इति । तत्र तत्तद्व्यक्तिवृत्त्यलीके । सिद्धं न इति । तत्तद्व्यक्तिवृत्तितत्तद्धर्माणामभेदसिद्धावेकानुगतधर्मः सिद्ध इत्यर्थः । एतेन आरोप्यारोपविषयपारमार्थिकत्वमन्तरेणारोपानुपपत्तिः इत्यादिरूपेण दोषेण । तदा को दोष अत आह । भेदस्य चेति ।

(१) नवकाशात्—पुण० पु० पा० । (२) चतुःकोटिवि—पुण० पु० पा० ।
(३) निर्मुक्तस्या—पुण० पु० पा० । (४) पारमार्थिको—कलि० मु० पु० पा० ।
(५) पारमार्थिक इति—पुण० पु० पा० । (६) आरोपितस्यैव—कलि० मु० पु० पा० ।
(७) तद्ग्रहरूपत्वात्, भेदग्रहरूपत्वात् ।—गुणानन्दः ।
(८) अभेदारोपेति । तदधीनत्वादनुगतव्यवहारस्येति भावः ।—गुणानन्दः ।
(९) आरोपितभेदस्येति । आरोपस्य विषयबाधनान्तरीयकत्वादिति भावः ।—गुणानन्दः ।
(१०) नन्वसत्ख्यातिरेवारोपविषयत्वेन विवक्षिता, नचालीकस्य बाधोपि सन्, इत्यरुचेराह । आरोप्येति । असत्ख्यातिनिरासादिति भावः ।—गुणानन्दः ।
(११) रारोपितस्य तस्य—पुण० पु० पा० ।

ग्रहस्य त्रैलोक्येपि सुलभत्वात् । अन्यत्र पारमार्थिकभेदप्रतीतौ कथमभेद आरोप्यतामिति चेत्(१) । एवं तर्हि यस्य प्रतिभासे यन्नारोप्यते नियमेन तस्यैवाप्रकाशे तदारोप्यम्, न तु तन्नामकमात्रस्य(२), अतिप्रसञ्जकत्वात्(३) । अत एव न व्यधिकरणस्यापि(४)

दीधितिः ।

हेतुत्वे तस्य सार्वत्रिकतया सर्वत्रैवाभेदारोपः(५) स्यादित्यर्थः । अलीकभेदाग्रहस्य सत्त्वेपि पारमार्थिकभेदग्रहेण प्रतिबन्धान्ना(भेदा)रोप इत्याशङ्कते । अन्यत्रेति । तर्हि पारमार्थिकभेदग्रहस्य प्रतिबन्धकतायां आवश्यकत्वे अलीकभेदाग्रहस्य(६) तथात्वे मानाभाव इत्याह । एवमिति । कथं तर्हि रजत एव रजतभेदग्रहे न रजताभेदप्रत्यय इति चेत्, रङ्गादौ सतः पारमार्थिकस्य रजतभेदस्यारोपेण प्रतिबन्धादिति प्रतीहि । कूर्मरोमवाजिविषाणयोः कथं नाभेदप्रत्यय इति चेत्,परमार्थसतोरेव रोमविषाणयोरारोपितकूर्मवाजिसम्बन्धयोः पारमार्थिकभेदग्रहेण प्रतिबन्धादिति गृहा·

दीधितिटिप्पणी ।

प्रकारः उक्तचतुष्टयप्रकारः । व्याप्तेरप्रयोजकत्वं निरस्यति । तर्हीत्यादि । कथं तर्हीति । पारमार्थिकभेदग्रहस्यैव प्रतिबन्धकत्वे रजते पारमार्थिकरजतभेदाभावात् प्रतिबन्धो न स्यादित्यर्थः। पारमार्थिक भेद एव उक्तः, न तु तदधिकरणे पारमार्थिक इत्यभिप्रेत्याह । रङ्गादाविति । असत्ख्यात्युपनीतानभिप्रेत्य शङ्कते । कूर्मलोमेत्यादि । अनयोरलीकत्वेन पारमार्थिकभेदाभावादित्यर्थः । पारमार्थिकपरस्परभेदग्र

(१) चेत् न—पुण० पु० पा० । (२) तन्नामकमात्रं—पा० २ पु० ।
(३) अतिप्रसङ्गात्—पुण० पु० पा० । (४) व्यधिकरणस्य—पा० २ पु० ।
(५) घटपटादौ पारमार्थिकभेदग्रहे विद्यमाने अलीकभेदाग्रहस्य सत्त्वादभेदव्यवहारापत्तिरित्यर्थः ।—गुणानन्दः । (६) अलीकभेदग्रहस्य—पुण० पु० पा० ।

सतोऽसतो वा भेदस्याग्रहोऽभेदारोपोपयोगीति ।

दीधितिः ।

ण । एवं शशशृङ्गवाजिविषाणयोरप्यनुसन्धेयम्, असत्ख्यातौ(१) साधकाभावस्योक्तत्वात । षष्ठे, अत एवेति । परेषामसद्वय-भेदस्यासत्त्वात्(२)। व्यधिकरणस्य यस्य कस्यचिद्भेदस्याऽग्रहो यद्यभेदग्रहे हेतुः, तदा तस्य सार्वत्रिकत्वात् गृह्यमाणभेदानामप्य-भेदप्रत्ययप्रसङ्गः। अथ निखिलानामेव तेषामग्रहस्तथा, तर्हि(३) ययोः कयोश्चिदपि भेदग्रहे क्वाप्यभेदप्रत्ययो न स्यादिति ॥

दीधितिटिप्पणी ।

हेण । एवमिति । अत्र विशेष्ययोर्भेदाभावात पृथगुक्तम् । अनुसंधानं चैवं नीलपीतघटयोर्नीले पीताभेदग्रहे तदभेदप्रत्ययवत शशीये वाजीया-भेदप्रत्ययकाले अभेदप्रत्ययः, अन्यदा तु नेत्यर्थः । ननु मया असत्ख्या-त्युपनीताऽखण्डकूर्मरोमादिविषयस्यैव फक्किका कृतेत्यत आह । अस-त्ख्याताविति । व्यधिकरणभेदं यत्किञ्चित्त्वावत्त्वेन विकल्प्य दूषयति । यस्य कस्यचिदिति ॥

कल्पलता ।

ननु विकल्पविषयाणामलीकानां परस्पर(४)भेदो न गृह्यत(५) एतावता(६)ऽनुगतप्रत्ययः स्यादिति शङ्कते । भेदेति । पारमार्थिकस्तावदलीकानां भेदो नास्ति यदग्रहः स्यादित्याह । भाविकस्येति । नन्वस्तु तेषां

(१) ननु सामान्यतः सदसत्साधारणभेदाग्रहत्वमेव कारणतावच्छेदकं, नतु पारमार्थिकत्व-विशेषितमत आह । असत्ख्याताविति ।--गुणानन्दः ।

(२) धर्मप्रतियोगिकभेदाग्रहो हेतुरुक्तः धर्माणामसत्त्वात्तत्प्रातियोगिको भेदोप्यसन्निति भावः ।

(३) तर्हीति । नच येन रूपेण यत्र यस्याभेदारोपस्तत्र तदवच्छिन्नप्रतियोगिताकत्वेन भास-मानभेदग्रहाभावो वाच्यः । अत एव नेदं प्रमेयमित्यपि ग्रहः प्रमेयाभेदग्रहे विरोधीति वाच्यम् । अनु-गतस्यापि सम्भवति पारमार्थिकत्वे ऽभेदारोपेण तद्व्यवहारकल्पनायां मानाभावादिति भावः ।--गुणानन्दः।

(४) परस्परं—पुण० पु० पा० । (५) न गृह्यत एव,--पुण० पु० पा० ।

(६) अतो—पुण० पु० पा० ।

कल्पलता ।

पारमार्थिको भेद इत्यत आह । भावेति(१) । पारमार्थिकधर्माश्रयत्वेन विकल्पविषयाणां(२) पारमार्थिकत्वप्रसङ्गादित्यर्थः(३) । ननु यथा रजते रजतभेदः परमार्थतोऽसन्नेव (न) गृह्यते, तथा विकल्पविषयाणां पारमार्थिकोऽसन्नेव(४) भेदः स्यादित्यत आह । परमार्थेति । यथा(५) रजतस्य तत्र परमार्थभेदः(६) पर्यवस्यति, तथा कल्पनाविषयाणामपि परमार्थभेदः स्यात्, तथा च सिद्धं विकल्पविषयाणां देशकालानुगमो विरोधित्वं(७) चेत्यर्थः । ननु विकल्पविषयेषु यो भेद आरोपितः तस्याऽग्रहं ब्रूम इत्यत(८) आह । आरोपितस्येति । आरोपश्चाग्रहश्चेति विरोध इत्यर्थः । ननु यस्य भेदस्यासत्त्वमारोप्यते तस्याग्रहः स्यादित्यत आह । आरोपितेति । असत्त्वं चेदारोपितं तदापि परमार्थसन्नेव भेदस्तत्र(९) स्यात्, तथा च पुनरलीकत्वप्रसङ्ग इत्यर्थः । कोटिः प्रकारः । त्रैलोक्येति । तथा च सर्वत्रैवानुगतप्रत्ययः स्यादिति भावः । ननु घटपटादावत्यन्तविलक्षणे भेदप्रतीतिरेवास्त्यतो न भेदाग्रहः, न च तदधीनोऽनुगतप्रत्यय(१०) इत्याह । अन्यत्रेति । (११)पारमार्थिकभेदग्रह(१२)भेद-

(१) आह । भवेदेवामिति--पुण० पु० पा० । (२) विकल्पे विषयाणां--कालि०मु०पु०पा० ।
(३) प्रसङ्ग इत्यर्थः--पुण० पु० पा० । (४) परमार्थासन्नेव--पुण० पु० पा० ।
(५) यथा तत्र--पुण० पु० पा० । (६) परमार्थोभेदः--पुण० पु० पा० ।
(७) नुगमोपि विषयत्वं--कालि० मु० पु० पा० ।
(८) तस्याग्रहः स्यादित्यत--पुण० पु० पा० । (९) भेदः--पुण० पु० पा० ।
(१०) तदधीनाऽनुगतप्रत्यय--कालि०मु० पु० पा० । (११) एवं तर्हीति--पुण० पु० पा० ।
(१२) भेदप्रत्यय--पुण० पु० पा० ।

कल्पलता ।

भेदारोपपरिपन्थी, तदा पारमार्थिकभेदाग्रह एवाभेदारोपानुगुणः स्यादिति विकल्पविषयाणां पारमार्थिकभेदो(१)ऽभ्युपगन्तव्यः, यदग्रहेणाभेदारोपः स्यादिति पारमार्थिकधर्मकतया(२) सिद्धं पारमार्थिकत्वं विकल्पविषयाणामित्यर्थः। ( तन्नामकेति । अव्यपदेश्यभेदस्येत्यर्थः। ) अत एवेति । अतिप्रसञ्जकत्वादेवेत्यर्थः। न हि यमजयोर्भेदो न गृह्यते एतावतैव शुक्तिरजतयोरभेद आरोप्यते, घटस्य वा स्वात्मप्रतियोगिकोऽसद्भेदो न गृह्यते एतावतैव शुक्तिरजतयोरभेद आरोप्यते इत्यर्थः॥

---

नापि न्यायादन्यापोहसिद्धिः, तदभावात्। यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठं यथाऽमूर्तत्वम्, यच्चात्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिरूपम्, इति न्यायौ स्त इति चेन्न। कालात्य-

---

दीधितिः ।

व्यावृत्तिनिष्ठमिति । निष्ठा स्वरूपम् । इति अनेन प्रकारेण । तेनानुरूपो(३)पनयलाभः । कालात्ययापदेशात् धर्मिग्राहकप्रत्यक्षेण विधित्वेनैवोल्लेखात् । अनेकरूपशालिनोपि विधेः

दीधितिटिप्पणी ।

गोत्वस्यान्यव्यावृत्तिनिष्ठत्वेपि व्यावृत्त्यात्मकत्वं न सिद्धमत आह। निष्ठेति । अनुरूपम् प्रकृतानुरूपम् । कालात्ययापदेशे हेतुर्धर्मीति, नह्येतदस्य व्याख्यानं, तत्पदस्य बाधमात्रशक्तेः। विधित्वेनैवेति। तथाच

---

( १ ) पारमार्थिक एव भेदो—पुण० पु० पा० । ( २ ) धर्मवत्तया इति—पुण० पु० पा० ।
( ३ ) तेनो—पुण० पु० पा० ।

यापदेशात् । न हि प्रथमानस्य निष्ठा न्यायसाध्या नाम, प्रथनशरीरं तु(१) चिन्तितमेवेति निष्फलः(२) प्रयासः । यदा चानलीक एव ध्रुवं(३) न्यायस्यानुभवाभासः(४), तदा कैव कथाऽलीके । न हि तस्याप्रतीयमानमपि किञ्चिदस्ति यन्न्यायेन साध्यमित्युक्तम् ।

दीधितिः ।

सम्भवद(प्य)गृह्यमाणं रूपं यदाऽनुभवबाधान्न सिद्ध्यति, तदा कथमसम्भवद(प्य)गृह्यमाणरूपस्यालीकस्यागृह्यमाणमनुभवबाधितं रूपं सेत्स्यतीत्याह । यदा चेति ॥

दीधितिटिप्पणी ।

मूले प्रत्यक्षेण बाधो दृष्ट इत्यर्थः । न हीति मूलम्, इतरथा प्रथमानस्य इतरथा निष्ठा न न्यायसाध्या इत्यर्थः । प्रथनबलादेव सिद्ध्यतीत्याह । प्रथनेति मूलम् । अनुभवात् अनुभवप्रकाशात् । दीधितौ अनुभवबाधात् विरुद्धानुभवबाधात् ॥

कल्पलता ।

गोत्वादीनामन्यव्यावृत्तिरूपत्वे प्रमाणं शङ्कते । यदिति । भावाभावसाधारण्यम् अस्तिनास्तिप्रत्ययविषयत्वम्, आश्रय(५)नाशानाशयोरप्यनाशित्वं वा । अन्यव्यावृत्तिर्निष्ठा स्वरूपं यस्येत्यर्थः । तथा च गोत्वमन्यव्यावृत्तिस्वरूपं भावाभावसाधारणत्वात्(६), अत्यन्तविलक्षणानां शबल(७)धवलादीनां सालक्षण्यव्यवहारहेतुत्वाद्वा । सालक्षण्यम् समानलक्षणत्वम्, सा-

(१) प्रथनशरीरं—पा० २ पु० । (२) निःफलः—पा० २ पु० ।
(३) एवैवं—पुण० पु० पा० । (४) न्यायस्यानुभवात्तव भासः—पुण० पु० पा० ।
(५) स्वाश्रय पुण० पु० पा० । (६) साधारण्यात—पुण० पु० पा० ।
(७) शबला—पुण० पु० पा० ।

कल्पलता।

इत्थं वा। अत्रोभयत्र बाधमाह। नेति। प्रत्यक्षतो विधेः स्फुरणस्य(१) व्यवस्थापितत्वादिति भावः। एतदेवाह। न हीति। यदेति। अनौष्ण्यसाधकमपि न्यायमौष्ण्यग्राहि(२) प्रत्यक्षं बाधते चेत्, तदा अलीकसाधकं सुतरां तद्विरोधिप्रत्यक्षं बाधिष्यत(३) इत्यर्थः। ननु प्रत्यक्षमपि स्वविषये न्यायं बाधतां, विषयान्तरे न्यायः प्रवर्त्तिष्यत एवालीकेपीत्यत आह। न हीति॥

किञ्चेदं भावाभावसाधारण्यं न तावदुभयरूपत्वम्, विरोधात्। न तद्धर्मत्वम्, अनभ्युपगमात्। न हि गोत्वमभावस्यापि धर्म इत्यभ्युपगम्यते। न तद्धर्मित्वम्, अने(४)कान्तात्। व्यक्तिरपि(५) भावाभावधर्मशालिनी, न निषेधैकरूपेति। न तदुभयसादृश्यम्, असम्भवात्।

दीधितिः।

उभयेति। भावाभावावुभयम्(६)। निषेधैकेति। स्वाभावनिषेधरूपत्वेपि(७) स्वतो विधित्वात्। सादृश्यम् सादृश्यरूपत्वम्(८)। असम्भवात् अभावावृत्तित्वेन तथात्वासम्भवात्, उ-

दीधितिटिप्पणी।

स्वत इति। तथाच स्वतो निषेधरूपतैव साध्यं कृतमिति भावः।

(१) विधिस्फुरणस्य—पुण० पु० पा०।

(२) प्रमाणमौष्ण्यग्राहि—पुण० पु० पा०। (३) बाधिस्यत—पुण० पु० पा०।

(४) अने—कालि० सु० पु० पा०। (५) व्यक्तिरपि हि—पा० २ पु०।

(६) यद्यप्येकस्य उभयात्मकत्वं सामान्यत एव विरुद्धम्, तथापि प्रकृतमनुसृत्याह। भावाभावाविति।—गुणानन्दः। (७) निषेधैकेत्यत्र एकपदस्य फलमाह। स्वाभावेति।—गुणानन्दः।

(८) निषेधैकरूपत्वसाध्यं प्रति सादृश्यस्य हेतुत्वे नासम्भवः, उभयवृत्तिधर्माणां बहूनां गोत्वे सत्त्वादतो व्याचष्टे। सादृश्यरूपत्वमिति।

अतन्निवृत्त्यैव तथात्वे(१) साध्याविशेषात्। नाप्यस्तिना-

दीधितिः।

अयवृत्तेरेव धर्मस्य सादृश्यत्वात्। भवेदेवं, यदि गोत्वं भावो भवेत्, न त्वेवम्, किन्तु गवान्यात्मकमहिषादिव्यावृत्तिः, सा च निरात्मके अभावे गवात्मनि च(२) वर्त्तत इत्यत आह। अतदिति। निवृत्त्या निवृत्तिरूपत्वेन। साध्याविशेषात् निवृत्तिरूपत्वस्यैव साध्यत्वात्। केचित्तु गोत्वस्य(३) भावाभावसादृश्यं न भावत्वाभावत्ववत्त्व(४)म्, असम्भवात्। नाप्यन्यव्यावृत्तिमत्त्वम्, व्यक्तावनेकान्तात्(५)। नाप्यन्यव्यावृत्तिरूपत्वम्(६),

दीधितिटिप्पणी।

यथाश्रुते सादृश्याधिकरणत्वमेव गोत्वस्य लभ्यते, तैस्तु गोत्वस्य भावाभाववृत्तितया भावाभावसादृश्यरूपत्वमेवाङ्गीक्रियते, तच्च न लभ्यतेऽतो निरुक्तसाधारण्यस्य सादृश्यधर्मत्वमेव दर्शयति। सादृश्यरूपत्वमिति। एवं अभावावृत्तित्वं, व्यावृत्तिः व्यावृत्तिरूपत्वम्, निरात्मके अलीके, तैरभावरूपालीकेऽतद्व्यावृत्तेर्वृत्तिताङ्गीकारात्। भावस्य वृत्तित्वं दर्शयति। गवात्मनीति। पूर्वोक्तन्यायादत्रापि रूपत्वप्रवेशं दर्शयति। निवृत्त्येति। साध्याविशेषात् सादृश्यहेतुकद्वितीयानुमानसाध्येन सममुपजीव्य तन्निवृत्तिहेतुकसादृश्यानुमानहेतोरविशेषात्। तथाचान्योन्याश्रय इत्यर्थः। सादृश्यपदस्य तत्स्वरूपार्थकत्ववादिमतमाह। केचित्त्विति। तथाचैतन्मते गोत्व एव सादृश्यवत्ता। भाव इति। व्यावृत्तिरूपत्वस्य भावेऽवृत्तेर्न तत् सादृश्यरूपत्वम्, उभयवृत्तेरेव उभयसादृश्यत्वात्। ननु तदुभयसादृश्यं न वाच्यं किन्तु अभावमात्रस्यैवेत्याह।

(१) तथात्वे, सादृश्यरूपत्वे। (२) गवात्मनि—कलि० मु० पु० पा०।

(३) गोत्वस्येति। भावत्वेन भावसदृशत्वे सति अभावत्वेन अभावसादृश्यं भावत्वाभावत्ववत्त्वं एव पर्यवसन्नमिति भावः।—गुणानन्दः।

(४) भावत्वाभावत्व—कलि० मु० पु० पा०।

(५) व्यक्ताविति। तथा चासम्भवादित्यस्य अनैकान्तिकत्वेन अनेन हेतुना साधनासम्भवार्थोऽवसेयः।—गुणानन्दः। (६) अन्यव्यावृत्तिरूपत्वं भावाभावसादृश्यं नेत्यर्थः।

स्तिसामानाधिकरण्यम्(१), विरोधात्, अन्यथासिद्धेश्च । न हि यदस्ति(२) तदेव नास्तीतिप्रत्यय(३)गोचरः (स्यात्)। प्रकारान्तरमाश्रित्य स्यादेवेति चेत्, एवं तर्हि तमेव प्रकार(भेद)(४)मुपादाय विधिव्यवस्थायां

दीधितिः ।

भावे(५) अभावात् । यदि चाभावमात्रसादृश्यमन्यव्यावृत्तिरूपत्वं हेतूकुर्यात्तत्राह । साध्याविशेषादितीत्याहुः । अस्तिनास्तिसामानाधिकरण्यम्(६) तादृशस्य विकल्पस्य व्यपदेशस्य वा विषयत्वम्, स्वलक्षणं तु न विकल्पस्य न वा व्यपदेशस्य विषयः, धर्मधर्मिणोश्चाभेदः(७), नातो व्यभिचार इति भावः । तदेकेन(८) रूपेण विवक्षितं, रूपान्तरेण(९) वा । आद्ये, विरोधादिति । द्वितीये, अन्यथेति । विरोधं विवृणोति । न हीति । न हि येनैव रूपेणास्तीतिविकल्पव्यपदेशयोर्विषयः तेनैव रूपेण नास्तीति विकल्पव्यपदेशयोरपीत्यर्थः । प्रत्ययः प्रतीतिः व्यपदेशश्च

दीधितिटिप्पणी ।

यदि चेति । व्यपदेशस्यापि विकल्पमात्रजनकत्वान्न तद्विषयत्वं । अलीकरूपे धर्मिणि व्यभिचारमाशङ्क्याह । धर्मेति । तथाच साध्यमपि तत्रास्तीत्यर्थः । व्यपदेशपदं नास्ति तत्कुतो व्याख्यातमत आह । प्रती-

(१) अस्ति गोत्वं नास्ति गोत्वमिति लोके प्रयोगात् अस्तिशब्दसमानाधिकरणगोत्वशब्दवत्त्वम्, नास्तिशब्दसमानाधिकरणगोत्वशब्दवत्त्वं हेतुः कर्तव्य इति मूलार्थः ।

(२) यदस्तीति—पुण० पु० पा० ।

(३) नास्तीतिप्रतीति—पा० २ पु० । (४) प्रकारान्तर—पा० २ पु० ।

(५) भावेऽभावादिति असम्भवादित्यस्यार्थविवरणम् ।—गुणानन्दः ।

(६) लाघवादाह—अस्तीत्यादि । अस्तिनास्तीति । अस्तिसामानाधिकरण्यमात्रोक्तौ प्रमेयत्वे व्यभिचारः, अत उक्तं नास्तीति । तन्मात्रोक्तौ च शशविषाणादौ व्यभिचार अत उक्तमस्तीति ।—गुणानन्दः । (७) शशविषाणादौ व्यभिचारमाशङ्क्याह । धर्मधर्मिणोरिति ।—गुणानन्दः ।

(८) तदेकेनेति । आश्रयनाशाभावकालीनत्वावच्छेदेनैवाभयवत्त्वेत्यर्थः ।

(९) रूपान्तरेणेति । आश्रयनाशानाशकालीनत्वरूपाभिन्नाभिन्नधर्मेणेत्यर्थः ।

को विरोधो येन प्रतिबन्धः सिद्ध्येत्(१)। तस्य विधिरूपतायामस्तिना(म) किमधिकमुपनेयमिति चेत्, निषेधरूपत्वे(पि) नास्तिना(म) किमधिकमपनेय(२)मिति समानम्। अत एव साधारण्यमिति चेत्, तथापि किं

दीधितिः।

प्रतीयतेऽनेनेति व्युत्पत्त्या। विधिरूपत्वे बाधकं शङ्कते। तस्येति। अस्तिना विधित्वबोधकेन। उपनेयम् विधेयम्(३)। तथा चास्तीति पुनरुक्तम्। विधित्वशून्यत्वबोधकं च नास्तीति विरुद्धमित्यपि द्रष्टव्यम्। निषेधत्वम् विधित्वशून्यत्वम्। अपनेयम् निषेध्यम्। अत्रास्तीति विरुद्धमित्यपि द्रष्टव्यम्। अत एव पौनरुक्त्यविरोधाभ्यामेव। भावाभावबोधकास्तिनास्ति व्यपदेशा(४)योग्यत्वमेव(५) भावाभावसाधारण्यमभावत्वसाधकम्(६), एकैकव्यपदेशायोग्यत्वेनैकैकान्यात्मकत्वं, एकैकात्मकत्वविरहो(७)

दीधितिटिप्पणी।

यत इति। एतच्च व्यपदेशवाचकत्वे हेतुः। विरुद्धमिति। गौर्नास्तीति विरुद्धमित्यर्थः। विधित्वेन समं साक्षाद्विरोधसूचनायाह। निषेधत्वमिति। तथाच एतदेव साधारण्यपदेन विवक्षितमिति भावः। पूरणेन व्याचष्टे। अत एवेत्यादि। उभयसाधारण्येन विरोध एवायातीत्यभिप्रायेणाभासमाह। एकैकेति। गोत्वं न भावात्मकं तद्व्यपदेशायोग्यत्वात्, एवं नाभावात्मकमित्येव साध्यमत्यत्र हेतुना भवति, ईदृशहेतोरेतद्व्याप्यत्वात्, नतु भवत्साध्यं। एवञ्च भावाभावानात्म-

(१) सिद्ध्येत—पा० २ पु०। (२) किमधिकमुपनेय—कलि० मु० पु० पा०।
(३) उपनीतभानभ्रमं निराकर्तुमाह। विधेयमिति।—गुणानन्दः।
(४) व्यपदेश—कलि० मु० पु० पा०।
(५) पौनरुक्त्यस्य विकल्पपक्षेऽसम्भवादाह। व्यपदेशायोग्यत्वमिति।—गुणानन्दः।
(६) प्रकृते योजयति। अभावत्वसाधकमिति। गोत्वादेरिति शेषः।—गुणानन्दः।
(७) एकैकान्यात्मकत्वम्, एकैकान्यस्वभावकत्वम्, एतच्च एकत्रालीकशशविषाणादिव्यावृत्तम्, तत्साधारणमाह। एकैकात्मकत्वमिति।—गुणानन्दः।

त(१)दुभयात्मक(त्व)मुभयपरीहारो वेत्यशक्यमेतत्।

दीधितिः।

वा सिध्यत् अर्थाद्भावाभावात्मकत्वे भावाभावात्मकत्वविरहे वा पर्यवस्येत्, तच्च विरोधान्न सम्भवतीत्याह। तथापीति॥

दीधितिटिप्पणी।

कत्वं वस्तुनो विरुद्धमित्येतदपि विरोधान्न सम्भवतीत्यर्थः॥

कल्पलता।

किञ्च न्यायोपि विचारं न सहत इत्याह। किञ्चेति। विरोधादिति। न हि य एव भावः स एवाभाव इति भवतीत्यर्थः। न हि(२) गोत्वादेर्भावाभावोभयधर्मत्वमस्माभिरभ्युपगम्यत इत्याह। न तदिति। ननु गोत्वे जातित्वं वर्त्तते, वर्त्तते च गुणाद्यत्यन्ताभावः, इत्युभयधर्मित्वमेव भावाभावसाधारण्यं स्यादित्यत आह। न तद्धर्मित्वमिति। अनैकान्तिकत्वमाह। व्यक्तिरपीति। ननु व्यक्तेरपि स्वाभावनिषेधात्मकत्व(३)मस्त्येवेत्यत आह। निषेधैकेति। विधित्वस्यापि तत्र सत्त्वादित्यर्थः। असम्भवादिति। भावाभावयोर्हि सादृश्यं तदुभयवृत्तितायां गोत्वादेर्भवेत्, नचैतत्सम्भवतीत्यर्थः। ननु भावे चाभावे चातद्व्यावृत्तिरस्त्येवेति तत्स्वरूपं गोत्वं कथं तदुभयसादृश्यं न भवेदित्यत आह। अतद्व्यावृत्त्यैवेति। गोत्वादेरतद्व्यावृत्तिरूपतायां सिद्धायां तथा स्यात्, तद्रूपता च न सिद्धे(४)त्यर्थः। केचित्तु भावाभावाभ्यां गो-

(१) किमेत—पुण० पु० पा०। (२) ननु—पुण० पु० पा०।
(३) स्वाभावनिषेधात्मत्व—पुण० पु० पा०। (४) सिद्ध्येदि—पुण० पु० पा०।

कल्पलता ।

त्वादेः साहचर्यमिति शङ्कार्थमाहुः । गोत्वे च न भावत्वं नाप्यभावत्वमिति परि(१)हारार्थं वर्णि(२)तवन्तः । तच्चिन्त्यम् । अस्तिनास्तिसामानाधिकरण्यमिति । अस्तिनास्तिप्रत्ययविषयत्वमित्यर्थः, तदुभयपदवाच्यत्वं(३) वा । विरोधमेव विवृणोति । न हीति । एकस्य विधिनिषेधप्रत्ययाविषयत्वादित्यर्थः । अन्यथासिद्धिं(४) विपरीतुमा(५)शङ्कते । प्रकारान्तरमिति । आश्रयनाशानाशप्रयुक्तमस्तिनास्तिसामानाधिकरण्यमित्यर्थः । तर्हि तद्घ(६)टितं विधेरपि गोत्वस्यास्तिनास्तिसामानाधिकरण्यं नान्यथावृत्तिरूपतासाधनायालम्, अन्यथासिद्धे(७)रित्याह । तर्हीति । प्रतिबन्ध इति । यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमिति प्रतिबन्ध इत्यर्थः । तस्येति । सामान्यस्य गोत्वादेः, तथा च गौरेतावतैवास्तित्वे लब्धेऽस्तीति पुनरुक्तमित्यर्थः । नास्तीति विरुद्धमित्यपि द्रष्टव्यम् । निषेधेति । नास्तीति पुनरुक्तं अस्तीति विरुद्धमिति समानमित्यर्थः । अत एवेति । अस्मादेव विरोधपौनरुक्त्यभयादित्यर्थः । उभयात्मकत्वम् भावाभावात्मकत्वम् । उभयपरीहारः न भावत्वं नाप्यभावत्वम् । अशक्यमिति । परस्परविरोधे हि न प्रकारान्तरस्थितिरित्यर्थः ।

(१) त्वमिति परी—पुण० पु० पा०। (२) र्थं वाभि—कालि० मु० पु० पा० ।
(३) तदुभयपदवाच्यं—पुण० पु० पा० । (४) अन्यथासिद्धं—पुण० पु० पा० ।
(५) विवरीतुं—पुण० पु० पा० । (६) तदघ—कालि० मु० पु० पा० ।
(७) साधनायामन्यथासिद्धि—कालि० मु० पु० पा० ।

तस्मादस्तिनास्तिभ्यामुपाध्यन्तरोपसम्प्राप्तिः, प्राप्तोपाधिनियमो वेति सार्थकत्वं तयोः । तदेतद्विधावपि तुल्यम् । शान्ताशेषविशेषत्वा(१)दलीकपक्षे कोपाध्यन्तरविधिस्तन्नियमो(२) वेति विशेषदोषः । ततो गोशब्दो गोत्वविशिष्टव्यक्तिमात्राभिधायी(३) पर्यवसितः, तास्तु विप्रकीर्णदेशकालतया नार्थक्रियार्थि(४)प्रार्थना(५)मनुभवितुमीशत इति प्रतिपत्ता विशेषाकाङ्क्षः । सा च तस्याकाङ्क्षा(६) अस्ति गोष्ठे कालाक्षी धेनुर्घटोध्नी महाघण्टा(७) नन्दिनीत्यादिभिर्नियामकैर्वि-

दीधितिः ।

तत्किमस्तिनास्तिव्यपदेशावनुपपन्नावेवेत्यत आह । तस्मादिति । उपाध्यन्तरम् देशकालविशेषसत्त्वासत्त्वरूपम् । तस्याप्राप्तौ(८) प्रापणं, प्राप्तौ तु नियमनमिति । (शान्ताशेषविशेषत्वात् निःस्वरूपत्वात् । प्रतिपत्ता गोपदजन्यगोज्ञानवान् । विशेषाकाङ्क्षः गौरितिवाक्यश्रवणानन्तरं अस्त्यादिविशेषाकाङ्क्षः, गौरितिवाक्यश्रवणानन्तरं अस्त्यादिविशेषमाकाङ्क्षत इत्यर्थः ।)

दीधितिटिप्पणी ।

कालविशेषो वर्तमानत्वादिरूपः । प्राप्तोपाधीत्यादिपूर्वग्रन्थेन पौ-

(१) विशेषवत्त्वा—पा० २ पु० । (२) स्तन्निषेधो—पा० २ पु० ।

(३) गोत्वविशिष्टव्यक्तौ व्यक्तिमात्रमभिधाय—पा० २ पु० । गोत्वविशिष्टव्यक्तिमात्राभिधान—पुण० पु० पा० । (४) नार्थक्रिया—पा० २ पु० ।

(५) प्रार्थनाम्, उपादित्साम् । प्रार्थनामनुभवितुम्, प्रार्थनाविषयतामासादयितुम् ।—गुणानन्दः ।

(६) ङ्क्षः । सा च तस्याकाङ्क्षा—कालि० मु० पु० पा० । (७) महाघण्टी—पुण० पु० पा० ।

(८) अस्तीत्यस्य फलमाह । अप्राप्ताविति । नास्तीत्यस्य तदाह । प्राप्ताविति । प्रसक्ताविस्यर्थः । नियमनम्, इतरव्यावृत्तिः । गुणानन्दः ।

धायकैर्वा निवार्यत(१) इति विधौ न(२) कश्चिद्दोषः। गोत्वविशिष्टसदसद्व्यक्तिमात्रप्रतीतेस्तदेवास्त्यादि(३)-पदप्रयोगवैफल्य(४)मिति चेत्, तावन्मात्रप्रतिपत्त्यर्थमेवमेतत्(५)। अधि(६)कप्रतिपत्त्यर्थन्तु तदुपयोगः, तस्य प्रागप्रतीतेरित्युक्तम्।

दीधितिः।

अस्तित्वादिकं न धर्म्यतिरिक्तं, धर्मधर्मिणोरभेदादित्याशयवाना(७)शङ्कते। गोत्वेति। धर्मधर्मिणोर्भेद एवेत्याशयेनोत्तरयति। तावन्मात्रेत्यादि। अथ भावाभावसाधारणं आश्रयस्य सत्त्व इव विनाशेऽप्यविनाशित्वम्, तदन्यथासिद्धम्(८), नित्यत्वात्, कार्यस्यैवाश्रयनाशनाश्यत्वात्॥

दीधितिटिप्पणी।

नरुक्त्यमाशङ्क्याह। अस्तित्वादिकमिति। तथाच गौरित्यनेनापि धर्मी उक्तः, अस्तीत्यनेनापि च स इति वैयर्थ्यमित्यर्थः। पूर्वं तु एतन्नोक्तमित्यर्थः। स्वयं पूर्वपक्षयति। अथेति। सिद्धान्तयति। तदिति। यदुक्तं तत्। अन्यथासिद्धम् अप्रयोजकमित्यर्थः। तदेवाह। नित्यत्वादिति। गोत्वस्य नित्यतानिबन्धनैवाश्रयनाशेऽप्यविनाशिता, नतु भवदुक्तसाध्यनिबन्धनेत्यर्थः॥

कल्पलता।

निषेधरूपत्वेऽस्तिनास्तिसामानाधिकरण्येन विरोधपौनरुक्त्ये यथा त्वया समाधेये, तथा विधिरूपत्वे मयाऽपीत्युपसंहारव्याजेनाह। तस्मादिति। उपाध्य-

(१) निवर्त्तते इति शङ्करमिश्रसम्मतः पाठः। (२) इति न विधौ-पुण० पु० पा०।
(३) स्तदेवास्ति—पा० २ पु०। (४) वैयर्थ्य—पुण० पु० पा०, पा० २ पु०।
(५) पत्त्यर्थमेव तत्-कलि० मु० पु० पा०। (६) अने—कलि० मु० पु० पा०।
(७) इत्याशयेना—पुण० पु० पा०। (८) अन्यथासिद्धम्, अप्रयोजकम्।—गुणानन्दः।

कल्पलता।

न्तरोपसङ्क्रान्तिमग्रे स्वयमेव स्फुटयिष्यति। त्वत्पक्षे(१) नैतदपि सम्भवतीत्याह। शान्तेति(२)। अलीकस्य केनाप्युपाधिना वैशिष्ट्यमेव न सम्भवतीति न विधिः(३)। स्वपक्षेऽस्तिनास्तिसामानाधिकरण्यं समर्थयति। तत इति। तास्तु व्यक्तयः। अर्थक्रियार्थी गोकार्यदानदोहनाद्यर्थी। तत्प्रार्थनाम्(४) तदुपादित्साम्। अनुभवितुम् प्राप्तुम्, भू प्राप्ताविति धात्वनुसारात्। तदयमर्थः, गां दद्यात् गां धुक्ष्व गां बधानेति देशितः सर्वासां गवां दानादेरशक्यतया तावदुपादित्सैव नोत्पद्यते, दूरे (तु) प्रवृत्तिः, यदा तु विशेषमधिगच्छति, विशेषोपादानमाहिम्ना तदा प्रवर्त्तते, स च विशेषो यत्राप्राप्त एव बोध्यते तदा विधायकैः (सः), यदा तु सामान्यतो देशादीनां प्राप्तानामेव विशेषो बोध्यते तदा नियामकैः, वाकारस्तु व्यवस्थितविकल्पार्थः। सा चाकाङ्क्षा निवर्त्तेत इत्यग्रेतनेनान्वयः। एवं च गौरस्तीति तत्कालीनध्वंसाप्रतियोगित्वं बोध्यते। नास्तीति तत्कालीनध्वंसप्रतियोगित्वं तदाश्रयस्य बोध्यते। आत्मास्तीत्यात्मनो वर्तमानकालसम्बन्धो बोध्यते, नात्मास्तीत्यनाश्रितत्व(५)मात्मनो बोध्यते। गोष्ठे गौरस्तीति देशो नियम्यत इत्याद्यू(६)ह्यम्। ननु गोपदात्सदसद्व्यक्तिमात्रं प्रतीतमेव चेत्, तदाऽस्त्यादिपदवैयर्थ्यं तदवस्थमेवेत्याह। गोत्वेति।

(१) त्वत्पक्षे च—पुण० पु० पा०। (२) शस्तेति—पुण० पु० पा०।
(३) न विधिः संभवतीत्यर्थः—पा० २ पु०। (४) तत्प्रार्थिना—पुण० पु० पा०।
(५) नास्त्यात्मेत्यज्ञानाश्रितत्वं—पा० २ पु०। (६) इत्यू—पुण० पु० पा०।

कल्पलता ।

( तावन्मात्रेति ) । अस्त्यादिपदानामपि यदि गोत्वविशिष्टपिण्डप्रतिपत्तिमात्रं फलं तदा भवत्येव पौनरुक्त्यं, एतदेव तु नास्तीत्यर्थः ॥

यस्तु निपुणम्मन्यो विकल्पमेव पक्षयति स्म, यज्ज्ञानं यद्भावाभावसाधारणप्रतिभासं न तेन तस्य

दीधितिः ।

यस्त्विति । गोत्वं व्यावृत्तिरूपं विधिरूपं वा (न) पक्षः । आद्ये सिद्धसाधनम्, अन्त्ये आश्रयासिद्धिः, सिद्धौ वा(१) बाध इति दोषं परिजिहीर्षुर्निपुणम्मन्यो न तु निपुणः । गोविकल्प इत्यत्रापि गौरनुपाख्यः, स्वलक्षणो वा, विषयतया पक्षता(२)वच्छेदकः, आद्ये अस्माकमाश्रयासिद्धिरसत्ख्यातिविरहात् । द्वितीये च, भवतां स्वलक्षणस्य विकल्पागोचरत्वात्(३), गोचरत्वे वा बाधः, गौर्गौरित्यनुगतव्यवहारहेतुत्वेन पक्षत्वमिति यदि(४), तदा तादृश(व्यवहार)विषयत्वादिना तदिति समा-

दीधितिटिप्पणी ।

बाध इति । विधौ उपस्थितेऽभावत्वसाधनं बाधितमित्यर्थः । इति दोषपरिजिहीर्षानिबन्धनो निपुणम्मन्य इत्यर्थः । कथं न निपुण इत्यत्र हेतुमाह । गोविकल्पेति । प्रकृतपक्षेपि तद्दोषसत्त्वादित्यर्थः । अनुपाख्यः अलीकः । भवतामाश्रयासिद्धेः बाधस्य च अनुमाने सत्त्वादित्यर्थः । समानत्वादिति । मयापि तथैव कर्तव्यत्वादित्यर्थः । तावद्दूरप्रयासवैफल्यमिति(५) । अनेन प्रकारेण व्यक्तिव्यावृत्त्योः पक्षत्वसम्भवादिति भावः । यज्ज्ञानमिति मूलं, यादृशं ज्ञानं यस्य भावेऽभावेपि सति जायते

( १ ) सिद्धौ—कलि० मु० पु० पा० । ( २ ) पक्षता—पुण० पु० पा० ।

( ३ ) स्वलक्षणस्य विकल्पागोचरत्वादाश्रयासिद्धिरित्यनुषज्यते । गुणानन्दः ।

( ४ ) यदा—पुण० पु० पा० ।

( ५ ) समानत्वात्तावद्दूरप्रयासवैफल्यमिति टिप्पणीकृन्मतो दीधितिपाठः प्रतिभाति ।

विषयि(१)त्वम्, यथा गोज्ञानस्याश्वेनेत्यादि । तद्यदि

दीधितिः ।

नत्वात् । इत्यादीत्यादिपदेन(२) गोलक्षणभावाभावसाधारण-प्रतिभासश्च गोविकल्प इत्यस्य(३) सङ्ग्रहः । तद्भावाभावसाधारण्यं हि तस्य सत्त्व इवासत्त्वेऽपि जायमानत्वं वा(४), तदस्तित्व-नास्तित्वयोर्यादृशत्वं तदग्राहकत्वं तादृशत्वं(५) तदग्राहकत्वमि-ति(६) वा, तदस्तित्वनास्तित्वाकाङ्क्षोत्थापकत्वं वा, तद्विरहो वा, तदस्तित्वनास्तित्वाग्राहकत्वं वा । नाद्यः, विकल्पस्य विषयाज-

दीधितिटिप्पणी ।

तस्य स न विषय इत्यर्थः । यथा गोज्ञानमश्वे सत्यसत्यपि जायते तत्राश्वाविषयत्वरूपसाध्यमपि, प्रकृते च गवि सत्यसत्यपि गोज्ञानं जायत इति तस्य स्वलक्षणगवाविषयत्वसिद्धौ अलीकविषयत्वमेवा-याति, अलीके च न भावरूपं गोत्वमिति सिद्धमतद्व्यावृत्तिरूपगोत्ववि-षयत्वं गोविकल्पस्येत्यर्थः। यथेत्यादिना उदाहरणमेव दर्शितं न तूपनय इति तद्दर्शनमप्याह दीधितौ । इत्यादीति । तदस्तित्वेति । तस्य गवा दिव्यक्तेः अस्तित्वनास्तित्वयोर्यादृशत्वं, एतत्समुदायार्थमाह । तदग्रा हकत्वमिति । तस्यापि व्यक्तिरूपस्यापि(७)। एतदर्थमाह । तदग्राहक-त्वमिति । गोज्ञानं गवास्तित्वनास्तित्वाऽग्राहकवत् गोरपि न ग्राहक-मित्यर्थः । तद्विरहः उत्थापकत्वविरहः । द्वितीयविकल्पे यदुदृष्टान्ती-कृतं तन्मात्र एवान्तिमविकल्पं दर्शयति । तदस्तित्वेति । अतो ना भेदः । विकल्पस्येति । विकल्पो यदि विषयजन्यः स्यात्तदैव तज्जन्य-

(१) विषय—कालि० मु० पु० पा० ।

(२) उपनयस्यादर्शितत्वान्न्यूनतामाशङ्क्याह । आदिपदेनेति । गुणानन्दः ।

(३) इत्यस्येत्यनन्तरं उपनयस्येति शेष । (४) जायमानत्वं—कालि० मु० पु० पा० ।

(५) नास्तित्वयोर्यादृशत्वं—कालि० मु० पु० पा० ।

(६) यादृशत्वतादृशत्वयोर्विवरणं तदग्राहकत्वं, साधारण्यशब्दार्थः सादृश्यं, तथा चास्ति-त्वनास्तित्वसादृश्यं तदग्राहकत्वं ज्ञाने रूपे वोच्यते इति विकल्प इति भावः ।

(७) यादृशं तदग्राहकत्वं तस्यापि तदग्राहकत्वमिति वा इति टिप्पणीकृन्मतः दीधितिपाठः प्रतिभाति ।

गोविकल्पस्याश्व(१)विषयत्वमेव तद्भावाभावसाधारण्यं गव्यपि बाह्ये तथा, ततः साध्याविशिष्टत्वम्(२) ।

दीधितिः ।

न्यस्य विनापि विषयमुपपत्तेः, अजनकस्यापि विषयत्वाविरोधात्, कथमन्यथा तत्रालीकं स्वाकारो वा विकल्पविषयः । द्वितीये त्वाह । तद्यदीति । बाह्ये स्वा(३)कारातिरिक्ते वस्तुनि(४) ॥

दीधितिटिप्पणी ।

त्वाभावेन तद्विषयत्वाभावः सिध्येदित्यर्थः । विज्ञानवादिमतेनाह । स्वाकारो वेति । उभयोरप्यजनकत्वादिति भावः । तद्यदीतीति प्रथम- मश्वरूपदृष्टान्ते योजनं । अत्र च साध्याविशिष्टत्वं विकल्पितहेतोस्त- दग्राहकत्वरूपेण विशेष्येण समं बोध्यम् ॥

कल्पलता ।

गोत्वमन्यव्यावृत्तिरूपमित्य(५)त्र विधिरूपतया प्रतीयमानस्य गोत्वस्य पक्षीकरणे बाध एव, अन्यस्य तु गोत्वस्याप्रतीततयाऽऽश्रयासिद्धिरिति तदुभयदोषं(६) परिजिहीर्षुर्ज्ञानश्रीर्विकल्पमेव पक्षयति स्म, तदे- तस्य नैपुण्यम् । विकल्पोपि(७) विषयेण निरूपणीयः, स च विधिरूपतयैव भासत इति तथापि बाधा(८)प- रीहार इति निपुणम्मन्यता । यज्ज्ञानमिति । गोज्ञानं न(९) गोविषयं गोभावाभावसाधारणत्वात् अश्व(१०) ज्ञानवदिति मानार्थः । यद्वा अयं गौरिति विकल्पो(११)

(१) गोविकल्पस्याश्व—कालि० मु० पु० पा० । (२) साध्यावैशिष्ट्यम्-पुण० पु० पा० ।
(३) बाह्ये आ-पुण० पु० पा० । (४) वस्तुनीत्यलीकव्यवच्छेदाय ।—गुणानन्दः ।
(५) गोत्वमन्यव्यावृत्तिरूपम—कालि० मु० पु० पा० ।
(६) तदुभयदोष—पुण० पु० पा० । (७) विकल्पो—कालि० मु० पु० पा० ।
(८) बोधा—पुण० पु० पा० । (९) गोज्ञानं—कलि० मु० पु० पा० ।
(१०) अर्थ—पुण० पु० पा० । (११) गोविकल्पो—पुण० पु० पा० ।

कल्पलता।

न गोविषयकः तद्भावाभावसाधारणत्वात् गां बधानेति गोविकल्पवदिति मानार्थः। यथा गोज्ञानस्याश्वेन विषयेणा(१)विषयित्वमिति वदता अश्वज्ञानस्यापि गवा विषयेणाविषयित्वमिति ध्वनितम्। तथा चाश्वज्ञानमेव दृष्टान्तः, अन्यथोपसंहाराभावात्। गोभावाभावसाधारणत्वं यदि गवाविषयत्वमेव, तदा साध्याविशिष्टत्वमित्याह। तद्यदीति। गोज्ञानस्याश्वेन विषयेणा(२)विषयित्वमश्वाविषयत्वेनैव त्वया वाच्यमिति भावः। गव्यपीति। गोविकल्पस्य गोत्व(३)लक्षणभावाभावसाधारण्यं तदविषयत्वमेव, तथा च साध्यावैशिष्ट्यमित्यर्थः।) यद्वा(४) यो विकल्पो यद्भावाभावसाधारणः स न(५) तेन विषयेण विषयी, यथा गोविकल्पोऽश्व(६)भावाभावसाधारणत्वान्नाश्वेन विषयेण विषयी, तथा (च) गोत्व(७)लक्षणं (न) गोविकल्पविषयो न वा गोत्वं विधिरूपं तद्विषय इति। अत्र त(८)द्भावाभावसाधारणत्वं यत्तदविषयत्वे हेतूकृतं तद्विकल्प्य दूषयति। तद्यदीति(९)। गोविकल्पस्याश्वभावाभावसाधारणत्वमश्वाविषयत्वमेव गोत्व(१०)लक्षणभावाभावासाधारणत्वमपि गोत्व(११)लक्षणाविषयत्वमेव वाच्यं, तथा

(१) विषयेण—पुण० पु० पा०। (२) विषयेण—पुण० पु० पा०।
(३) गोषु—पुण० पु० पा०। (४) यद्वा—नास्ति, पा० कलि० मु० पु०।
(५) साधारणः स—कलि० मु० पु० पा०।
(६) गोविकल्प एवाश्व—पुण० पु० पा०। (७) गोषु—पुण० पु० पा०।
(८) अत्र य—पुण० पु० पा०। (९) तदा ईति—कलि० मु० पु० पा०।
(१०) गोषु—पुण० पु० पा०। (११) गोषु—पुण० पु० पा०।

कल्पलता ।

च साध्याविशिष्टत्वं(१), तदविषयत्वेनैव तदविषयत्वसाधनादित्यर्थः(२)। एवं गोत्वेपि विधि(३)रूपे वाच्यम् ॥

अथास्त्यादिविशेषाकाङ्क्षा, तदाऽसाधारण्यम् । न ह्युदाहृतो गोविकल्पोऽश्वा(४)स्त्यादिविशेषमाकाङ्क्षति । नियमविधौ तु विरोध एव । न ह्यतद्विषयस्य तद्विशेषनियमाकाङ्क्षा नाम, गोज्ञानस्याश्व(५)विशेषनियमाकाङ्क्षाप्रसङ्गात् ।

दीधितिः ।

तृतीये, अस्तित्वादिसामान्याकाङ्क्षोत्थापकत्वं, देशविशेषादिनियततदाकाङ्क्षोत्थापकत्वं वा । आद्ये, अथेति । असाधारण्यम्, दृष्टान्तस्य साधनविकलत्वात् । तदेव विवृणोति । न हीति । विरोधाच्चेत्यपि द्रष्टव्यम् । अतद्विषयविकल्पस्य(६) तत्रास्तित्वाद्याकाङ्क्षाहेतुत्वायोगादिति । अन्त्ये, नियमेति । असाधारण्यं चेत्यपि(७) द्रष्टव्यम् । न चतुर्थः, असिद्धेः । गोविकल्पस्यास्तित्वाद्याकाङ्क्षाहेतुताया अनुभवसिद्धत्वात्, क्वचिदजननस्य कार-

दीधितिटिप्पणी ।

मूले, असाधारण्यमिति । प्रकृतहेतोर्निश्चितसाध्यवति गोविकल्पेऽश्वास्तित्वाद्याकाङ्क्षानुत्थापकतया व्यावृत्ततया असाधारण्यमित्यर्थः । असिद्धेरिति । गोविकल्परूपपक्षे गवास्तित्वनास्तित्वाद्या-

(१) वैशिष्ट्यं—पुण० पु० पा० ।
(२) साधनादिति भावः—पुण० पु० पा० ।
(३) गोत्वेपि विषय—पुण० पु० पा० ।
(४) गोविकल्पोऽश्व—पुण० पु० पा० ।
(५) गोज्ञानस्यापि–कालि० मु० पु० पा० ।
(६) अतद्विषयेति । गोस्वलक्षणाविषयेत्यर्थः । सामान्यतो धर्मिज्ञानस्य जिज्ञासाहेतुत्वादिति भावः ।—गुणानन्दः ।
(७) असाधारण्यञ्चेत्यपीति । तथा चैवकारोऽप्यर्थ इति भावः । तेन पूर्वनये विरोधस्य समुच्चयः, अत्र चासाधारणस्येति ध्येयम् । —गुणानन्दः ।

दीधितिः।

णान्तर(१)विरहप्रयुक्तत्वात् ॥

दीधितिटिप्पणी।

काङ्क्षानुत्थापकत्वरूपो हेतुः स्वरूपासिद्ध इत्यर्थः ॥

---

कल्पलता।

ननु यो विकल्पो यत्रास्त्यादिविशेषाकाङ्क्षामुत्थापयति स तेन विषयेण विषयी (न) भवतीति व्याप्तिर्विवक्षितेत्यत आह। अथास्त्यादीति। गोविकल्पस्याश्वगोचराकाङ्क्षोत्थापकत्वेनाश्वाविषयत्वं यथा तथा (गो)गोचराकाङ्क्षोत्थापकत्वेन गवाविषयत्वं साध्यं, तत्र गोविकल्पस्याश्वगोचराकाङ्क्षोत्थापकत्वमेव नास्ति, येनाश्वाविषयत्वं प्रसाध्य तद्दृष्टान्तेन गवाविषयत्वं सेत्स्यतीत्यर्थः। एतदेवाह। न हीति। दृष्टान्त एवायमनुपपन्नः, साधनविकलत्वपर्यवसायित्वात्, सामान्यतस्तदाकाङ्क्षोत्थापकत्वस्य साधनस्यैव ततो व्यावृत्तेः, अत एवा(स्या)साधारण्यमित्यर्थः(२)। ननु तद्धर्मनियामकत्वं तदविषयकत्वे(३) हेतूकर्त्तव्यमि(४)त्यत आह। नियमेति। गेहे गोष्ठे वा गौरिति तद्धर्मनियामकत्वं तद्विषयतया व्याप्तमतो विरोधात्तदविषयतां न साधयतीत्यर्थः। विरोधमेव स्फुटयति। न हीति। ननु कथमयं विरोध इत्यत आह। गोज्ञानस्येति। अश्वाविषयत्वेनैवोभयासिद्धस्ये(५)त्यर्थः ॥

---

(१) कारणान्तरम्, तज्ज्ञानेष्टसाधनताज्ञानादि।—गुणानन्दः।

(२) व्याप्तिमिति भावः—पुण० पु० पा०।

(३) तदविषयत्वे—कालि० मु० पु० पा०।

(४) कर्त्तव्य इ—पुण० पु० पा०।

(५) सिद्धत्वेने—कालि० मु० पु० पा०।

तदीयसदसत्त्वानुपदर्शनं चेत्, तद्यदि स्वरूपमेव ततोऽसिद्धिर्दोषः। न हि गोविकल्पो गोस्वरूपं नोपदर्शयतीति(१) मम कदापि सिद्धम्, तव चाद्यापि। उपाध्यन्तरं चेदनैकान्तः(२)। न हि यो यस्योपाध्यन्तरं नोपदर्शयेत् नासौ तदपीति(३) नियमः।

दीधितिः।

पञ्चमे त्वाह। तदीयेति। अनेकान्तः व्याप्यत्वासिद्धः(४)॥

दीधितिटिप्पणी।

न हीत्यादितो न नियम इति पदेन व्याप्तेरेव निषेधो दर्शितो मूले, स च व्याप्यत्वासिद्धिरेवेत्यतोऽत्रापि तथा व्याचष्टे। अनेकान्त इति। तथा च व्यभिचारे साध्ये व्याप्यत्वासिद्धेर्व्यभिचारित्वेपि तादात्म्येन व्याप्यत्वासिद्धेः साध्यतेति भावः॥

कल्पलता।

ननु गोविकल्पस्य गोस्व(५)लक्षणसदसत्त्वानुपदर्शकत्वाद्गोस्व(६)लक्षणाविषयत्वं सेत्स्यतीत्यत आह। तदीयेति। सदसत्त्वं यदि गोस्वरूपमेव तदा तदनुपदर्शकत्वं हेतुः स्वरूपासिद्ध एवेत्यर्थः। ननु मया तस्य गोस्वरूपानुपदर्शकत्वमभ्युपगम्यत एवेति कथं स्वरूपासिद्धिरि(७)त्यत आह। तवेति(८)। अद्यापि

(१) न प्रतिपादयतीति—पा० २ पु०। (२) चेदनेकान्तः—पुण० पु० पा०।

(३) तमपीति—पा० २ पु०।

(४) अग्रे नियमाभावस्यैवोपपादनान्नियमाभावपरतया व्याचष्टे। व्याप्यत्वेतीति केचित्। सर्वत्र सहचारदर्शनात्नानैकान्त इत्यतो व्याचष्टे। व्याप्यत्वेति। अनुकूलतर्काभावान्न व्याप्तिरित्यभिप्रायः। अत एवाग्रे अनुकूलतर्कशङ्का ननु नियम एवेति।

(५) गोसु—पुण० पु० पा०। (६) गोसु—पुण० पु० पा०।

(७) मभ्युपगम्यत एव—पुण० पु० पा०। (८) तत्रेति—पुण० पु० पा०।

कल्पलता।

त्वया यत्ने क्रियमाणे(१) तत्स्वरूपानुपदर्शनं न साधितमस्ती(२)त्यर्थः। ननु सदसत्त्वं न वस्तुरूपं येनासिद्धिः स्यात्, अपि तु सत्त्वासत्त्वयोस्तद्गतध(३)र्मयोरनुपदर्शकत्वं हेतुः स्यादत आह। उपाध्यन्तरमिति। धर्मिभिन्नमित्यर्थः। अनैकान्त इति। धर्मानुपदर्शकमपि धर्म्युपदर्शकं भवत्येवेत्यनैकान्त इत्यर्थः। सन्दिग्धानैकान्तिक इत्यन्ये। अनियममेव दर्शयति। न हीति॥

ननु नियम एव। तथाहि। यन्न यत्समवेतधर्म(४)-बोधनं न तत् तत्स्वरूपबोधनं, यथा गोविकल्पशब्दौ तुरगे। तथा च तौ गव्यपि नीलत्वापेक्षयेति व्याप-

दीधितिः।

बोधनत्वं बोधरूपत्वं, बोधजनकत्वं च, व्युत्पत्तिभेदात्(५), तथा च विकल्पे धर्माबोधरूपत्वेन धर्मिबोधरूपत्वाभावः, शब्दे च धर्माबोधकत्वेन(६) धर्मिबोधकत्वाभावः साध्य इति। अथासिद्धो हेतुर्गोधर्मगोत्वबोधनत्वात् तयो(७)रत(८) आह। नीलेति। तथा च यत्किञ्चिद्धर्माबोधनत्वं(९) हेतुर्न तु धर्मा-

दीधितिटिप्पणी।

बोधनपदस्य करणसाधनतायां विकल्पासंग्रहः, तस्य बोधरूपत्वात्, भावसाधने च व्यपदेशासंग्रहः, तस्य बोधस्वरूपत्वाभावादत आह। बोधनत्वमिति। व्युत्पत्तीति। उक्तोभयव्युत्पत्ते-

(१) क्रियमाणेपि—पुण० पु० पा०। (२) साधितमि—पुण० पु० पा०।
(३) स्तद्धर्म—कलि० मु० पु० पा०। (४) यत्समवेतधर्मा—पुण० पु० पा०।
(५) व्युत्पत्तिभेदात्, भावकरणव्युत्पत्तिकृतप्रत्ययभेदात्।—गुणानन्दः।
(६) धर्माबोधकत्वे-कलि० मु० पु० पा०।
(७) तयोः, गोविकल्पगोशब्दयोः।—गुणानन्दः। (८) तयोरस्त्यत-पुण० पु० पा०।
(९) यत्किञ्चिदिति। तन्निष्ठयावद्धर्माग्राहकत्वमिति फलितार्थः।—गुणानन्दः।

कानुपलब्धिः । धर्मिबोधेपि(१) हि धर्माणां कस्यचिद्बोधः कस्यचिदबोधश्चेत्युपकारभेदान्नियमः स्यात्, उपकारभेदश्च(२) शक्तिभेदाद्भवेत् । न चैवं प्रकृते, अनवस्थाप्रसङ्गात् । ततः(३) शक्तेरभेदादुपकाराभेदे(४)

दीधितिः ।

त्राबोधनत्वमिति भावः । नियमं(५) साधयति । धर्मीति । धर्माणां, मध्ये । एतदुक्तं भवति, ज्ञायमाने धर्मिणि धर्मस्य ज्ञानं धर्मिणि(६) सत्तामात्रेण, धर्मिजनितज्ञानानुकूलोपकारशालित्वेन वा, आद्ये अयुगपत्सर्वधर्मग्रहणध्रौव्यं, अन्त्ये धर्मिणोपकारस्य जननं(७) स्वरूपेण, तदनुकूलशक्तिशालित्वेन वा । आद्ये अविशेषात्सर्वत्रोपकाराधानाद्युगपत्सर्वग्रहणम् । द्वितीयेऽपि शक्तिरेका, अनेका वा । एका चेत् पूर्वोक्तम(८)नुवर्त्तते ।

दीधितिटिप्पणी ।

रेव ग्रहणादित्यर्थः । धर्माणां कस्य धर्मस्येत्यनन्वयादाह । मध्य इति । सामुदायिकार्थमाह । एतदुक्तमिति । सत्तामात्रेणेति । धर्मिणि वास्तवधर्माणां सत्ताऽस्तीत्येतन्निबन्धनं धर्मोऽपि तज्ज्ञाने भासत इत्यर्थः । धर्मिजनितेति । उपकारो व्यापारविशेषः । धर्मिणा धर्मज्ञानानुकूलोपकारविशेषो धर्मनिष्ठो जन्यत इति मतादित्यर्थः । तदनुकूलेति । तथाच धर्मिणाऽदौ शक्तिर्जन्यते शक्त्या च धर्मनिष्ठोपकार इति भावः । सर्वत्रेति । सर्वधर्मनिष्ठ एव ज्ञानानुकूलोपकारोपि स्यादित्यर्थः । एका सर्वधर्मोपकारजनिका । अनेका एकैकधर्मोपकारजनिका । पूर्वोक्तम् सर्वधर्मग्रहणप्रसञ्जनम् ।

(१) धर्मिबोधे—पा० २ पु० ।
(२) उपकारभेदः—पुण० पु० पा० । उपकारभेदस्व—पा० २ पु० ।
(३) तत्र—पुण० पु० पा० । (४) द्रुपकाराभेदे—पा० २ पु० ।
(५) यत्किञ्चिद्धर्माबोधनत्वं यत्र तत्र धर्मिबोधनत्वाभाव इति नियममित्यर्थः ।
(६) धर्मिणि—नास्ति, पा० पुण० पु० । (७) जनन-पुण० पु० पा० ।
(८) पूर्वोक्तम्, युगपत्सर्वग्रहणम् ।—गुणानन्दः ।

सर्वोपाधिसहितबोधोऽबोधो वेति द्वयी गतिरिति प्रति-

दीधितिः।

अनेका चेत् तज्जननायानेक(१)शक्त्यन्तराभ्युपगमेऽनवस्था। धर्मिस्वरूपमात्राधीनत्वे(२) धर्मिकारणाधीनत्वे(३) वा शक्तेर्भेदानुपपत्तिः, शक्तियौगपद्या(४)च्चोपकारस्य ज्ञानस्य च यौगपद्यमावश्यकं, तदुक्तम्—

दीधितिटिप्पणी।

अनेका चेदिति। प्रथमं धर्मिणा एकधर्मबोधानुकूला शक्तिर्जन्यते न कथमितरधर्मबोधानुकूला इत्येतदर्थं तादृशशक्तिजनकशक्त्यन्तराभावादित्यभ्युपेयम्, सापि कथं न जायत इत्यत्रापि शक्त्यन्तरं नास्तीत्यभ्युपेयं, एवं चेदनवस्थेत्यर्थः। न च यादृशी शक्तिः प्रथमं जायते सैव तदीयधर्मबोधानुकूलशक्तिजनिकेति वक्तव्यमतो नानवस्थेति वाच्यम्। तेन धर्मिण एव तादृशशक्तीनां तुल्यत्वोपगमेऽनवस्थादानात्, धर्मिणि तादृशशक्तिजनकशक्तिः प्रथमं जायते न त्वन्यधर्मानुकूलेति विचारेणानवस्थापर्यवसानात्। नन्वेता अनेकशक्तयो न शक्त्यन्तराधीना वक्तव्या येनानवस्थास्यात्, किन्तु ताः शक्तयो धर्मिस्वरूपमात्रादेव भवन्तीति वक्तव्यमत आह। धर्मिस्वरूपेति। शक्तेरिति। तथाच कथं विभिन्नाः शक्तय इति मतं, इतरकारणाभावात्तस्मिंस्तद्द्वितीयक्षण एव वा सर्वा जनयितव्याः, तथाच लाघवात्ता एका एव कल्प्यन्त इति भावः। भेदोपपत्तावपि दोषमाह। शक्तियौगपद्याच्चेति। तथाच तदेव पूर्वोक्तदूषणमिति भावः। एकोपकारक इति। एक उपकारको यस्य तादृशो, धर्मे ग्राह्य इत्यर्थः।

(१) चेत्तज्जननायाप्यनेक-पुण॰ पु॰ पा॰। तज्जननाय, अनेकशक्तिजननाय।-गुणानन्दः।

(२) धर्मिस्वरूपमात्राधीनत्वेन-कलि॰ मु॰ पु॰ पा॰।

(३) धर्मिकारणाधीनत्वेन-कलि॰ मु॰ पु॰ पा॰। अनित्ये भावहेतुजेति. मतमनुसृत्याह। धर्मिकारणेति।—गुणानन्दः।

(४) ननु तव पाकजरूपादाविव सामग्रीभेदकं मयापि किञ्चिद्वाच्यमत आह। शक्तियौगपद्यादिति।—गुणानन्दः।

बन्धसिद्धिः।दुष्प्रयुक्तमेतत(१)। उपाधितद्वतां भेदे प्रतिनियतसामग्रीबोध्यत्वादेव तदयौगपद्ये बोधाबोधोपपत्तेः। प्रतिनियतसामग्रीबोध्यत्वस्यापि स्वभाववैचित्र्यनिबन्धनत्वात्, तस्यापि स्वकारणाधीनत्वात्, तस्याप्यन्वयव्यतिरेकसिद्धत्वात्, तस्यापि कार्योन्नेयत्वादिति।

दीधितिः।

एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे।
दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रहः(२) ॥ इति।

टीकाकारोपदर्शितस्तु ग्रन्थो(३) विस्तरभयान्नेह प्रस्तूयत इति प्रमाणटीकायामेवानुसन्धेय इति। तस्य स्वभा(४)ववैचित्र्यस्य(५)। स्वकारणेति जन्य(६)मुपाधिमधिकृत्य। तस्य कारणस्य। स्यादेतत्, सिद्धे बोधकसामग्रीप्रतिनियमे(७) तन्नियामकस्वभाववैचित्र्यमास्थेयं, तदे(८)व तु कुत इत्यत आह। तस्यापीति। तदा(९) व्यवहितस्य गुणीभूतस्यापि सामग्रीप्र-

दीधितिटिप्पणी।

अयमर्थः, ग्राह्यधर्माणामेक एव यदि बोधानुकूलोपकारकः स्वीक्रियते तदा ततो हेतोर्नापरे तत्रोपकाराः, तथाच तस्मिन्यत्किञ्चिद्धर्मे दृष्टे सति ये धर्मा न दृष्टाः तत्कालं वास्तवं न ज्ञाताः तेषामपि निखिलधर्माणां तादृशयत्किञ्चिद्धर्मग्रहकाले ग्रहः स्यादित्यर्थः। धर्मधर्मिणोरभेदे धर्मिबोधे यावद्धर्माबोधोऽनुपपन्न इत्यत आह। उपाधितद्वतां

(१) दुःप्रयुक्तमेतत—पुण० पु० पा०।

(२) ग्राह्ये, धर्मिणि। एकोपकारके, धर्मनिष्ठोपकारानुकूलैकशक्तिमति। ततः एकस्य धर्मेषु स्वज्ञानानुकूलाः अपरे, भिन्नभिन्ना, नोपकारा वक्तुं शक्यन्ते। तस्मिन् धर्मिणि, येऽदृष्टास्तद्ग्रहे धर्मिग्रहकाले, तेषां सकलानां धर्माणां ग्रहप्रसङ्ग इति।— गुणानन्दः।

(३) पन्था-पुण० पु० पा०। (४) तस्य भा—कालि० मु० पु० पा०।

(५) निबन्धनोपसर्जनतयोपस्थितस्य परामर्शस्यास्फुटत्वादाह। तस्य स्वभाववैचित्र्यस्येति। एवमग्रेपि।—गुणानन्दः। (६) नित्येषु धर्मिषु कारणाभावादाह। जन्यमिति।—गुणानन्दः।

(७) बोधकसामग्रीनियमे-पुण० पु० पा०।

(८) तत, बोधकसामग्रीप्रतिनियमस्य सिद्धत्वम्।—गुणानन्दः।

(९) तदा, तच्छब्देन।—गुणानन्दः।

दीधितिः।

तिनियमस्य परामर्शो योग्यताबलात्। कार्यम् धर्मिणि गृह्यमाणे कदाचिदेव कस्यचिदुपाधेर्ग्रहः। अन्वयव्यतिरेकाभ्यां कारणत्वग्रहेऽपि अपरिदृश्यमानकारणस्य कथं सिद्धिरित्यत आह। तस्यापीति। इत्यपि केचित्(१)॥

दीधितिटिप्पणी।

भेद इति मूलम्॥

---

कल्पलता।

ननु यद्यत्समवेतं धर्मं नोपदर्शयति तज्ज्ञानं तमपि नोपदर्शयतीति(२) नियम एव। तथा चायं गौरिति विकल्पः शब्दो वा गोगतं नीलादि नोपदर्शयत्यतो गामपि नोपदर्शयति। तत्समवेतधर्मविषयता(३)व्याप्या तद्विषयता, सा च(४) गोविकल्पशब्दाभ्यां निवर्त्तमाना(५) तद्विषयतामादाय निवर्त्तेत इत्यर्थः। व्याप्तिमेव द्रढयति। धर्मिबोधेति(६)। धर्माणामिति। धर्माणां मध्य इत्यर्थः। उपकारेऽप्यु(७)पकारापेक्षायां शक्तावपि शक्त्यन्तरापेक्षायामनवस्थाभयेन धर्मिधर्मयोर्ग्रहे(८) ग्राहकाणां समानैव शक्तिरिति धर्मिणि गृह्यमाणे तद्गताः सर्व एव धर्मा गृह्येर-

---

(१) केचिदित्यरुचिबीजन्तु क्वाचित्कार्योन्नेयत्वादित्यस्यैवेत्थं वक्तुमर्हत्वामित्यादि।—गुणानन्दः। तस्येतिशब्देन अनुद्दिस्थस्य परामर्श इत्यस्वरस इति केचित्।

(२) ननु यद्यत्समवेतधर्मं नोपदर्शयतीति—कलि० मु० पु० पा०।

(३) तत्समवेतधर्मविषयतया—कलि० मु० पु० पा०।

(४) तद्विषयता च—कलि० मु० पु० पा०।

(५) व्यावर्त्तमाना—पुण० पु० पा०।

(६) धर्मिबोधे हीति—पुण० पु० पा०।

(७) उपकारे ह्यु—कलि० मु० पु० पा०।

(८) धर्मिधर्मग्रहे—पुण० पु० पा०।

कल्पलता।

अतो धर्म्यपि न(१) गृह्यत इत्यायातम्। अत्र च विकल्पशब्दानां स्वलक्षणाविषयत्वमात्रं परस्योद्देश्यं, न तु व्यावृत्तिविषयत्वमपि, तत्परत्वे मानस्यानुपदर्शनादित्यवधेयम्। उपाधितद्वतामिति(२)। भेदस्य बहुशः साधितत्वादिति भावः(३)। तद्यौगपद्य इति। धर्मिग्रहधर्मग्रहसामग्र्योरयौगपद्य इत्यर्थः। ननूक्तं समानशक्तिकत्वमतः प्रतिनियतसामग्रीवेद्यत्वमेव कथमत आह। स्वभाव(४)वैचित्र्येति। ननु विचित्रस्वभाव एवानुपपन्न इत्यत आह। स्वकारणेति॥

यत्तु शक्तेरभेदादित्यादि, तत्तदा शोभेत यदि धर्मि(५)मात्राधीनस्तद्बोधमात्राधीनो वा तावन्मात्र-

दीधितिः।

तद्बोधेति। यद्यपि धर्मबोधस्य धर्मिबोधाधीनत्वे धर्माबोधनत्वेन धर्मिबोधनत्वाभावसाधनं सुदूरनिरस्तं(६), तथापि(७)

दीधितिटिप्पणी।

धर्मिबोधाधीनत्व इति। प्रकृतापाद्ये सत्यपीति(८) शेषः। सुदूरेति। यत् त्वया तत्तदा शोभेतेत्यनेनानीतम्। तथाच कथं तत्तदेत्यादीति, यावद्धर्मबोधजनकस्य यावद्धर्मविषयत्वाभावादित्यर्थः। तथापीति। धर्मिबोधे यावद्धर्मभानं भवत्विति कृत्वा तन्न निरस्यते, किन्तु

(१) धर्म्यपि—पुण० पु० पा०। (२) उपाधितत्त्वादिति-पुण० पु० पा०।
(३) त्वादित्यर्थः—पुण० पु० पा०। (४) अभाव—पुण० पु० पा०।
(५) धर्म-पा० २ पु०।
(६) यत्किञ्चिद्धर्माबोधकत्वेन धर्मिबोधकत्वाभावसाधनं दूरनिरस्तम्, धर्मज्ञानजनकीभूतधर्मिज्ञाने व्यभिचारात्। धर्माबोधकत्वेन धर्मिबोधकत्वाभावसाधनं सुदूरनिरस्तम्, धर्मिबोधजनके व्यभिचारस्य स्पष्टत्वादित्यभिप्रायः।
(७) तथापीति। वस्तुतस्तु एतन्मते विकल्पपक्षेपि बोधनपदं करणसाधनमिति मूलाभिसन्धिः।—गुणानन्दः। (८) सतीति—इति युक्तः पाठः।

(१)बोधसामग्र्यधीनो वा यावदुपाधिभेदबोधः(२) स्यात्, न चैवम्।

दीधितिः।

युगपदशेषधर्मग्रहापादकत्वाभावात्त(३)न्निरस्यत(४) इति भावः। तावन्मात्रम् धर्मिमात्रम्(५)॥

दीधितिटिप्पणी।

एतावदुक्तौ धर्मिबोधानन्तरं यावद्धर्मबोधरूपानिष्टनिवारणार्थमेवेत्यर्थः। तावन्मात्रपदस्य तद्बोधपरामर्शकत्वे मूलीयबोधपदानर्थक्यमत आह। तावन्मात्रमिति॥

कल्पलता।

शक्तेरभेदादुपकाराभेदे(६) सर्वोपाधिसहितबोधोऽबोधो वेति दूषयति। यावदिति। यद्यपि धर्मिमात्राधीनत्वे तद्बोधाधीनत्वे(७) च यौगपद्यबोधनियमो न भवति, तथापि तदपि नेष्यत(८) इति भावः॥

एतेन भेदाद्धर्मिणः प्रतीतावपि शब्दालिङ्गद्वारा

दीधितिः।

एतेन धर्माणां भिन्नसामग्रीबोध्यत्वेन। भेदाच्चेद(९)प्रतीति-

दीधितिटिप्पणी।

भेदाच्चेदित्यादि। तथा च मूले धर्मिणः प्रतीतौ धर्माणां तद्भेदनि-

(१) तन्मात्र—पा० २ पु०।

(२) यावदुपाधिभेदः—पा० २ पु०।

(३) तत्, तदपि।—गुणानन्दः।

(४) धर्मिज्ञानस्याशेषधर्मग्रहापादकत्वाल्लैङ्गिकाविकल्पस्याशेषधर्मग्रहापादकत्वाभावाद्धर्मिविषयत्वं निरस्यमित्यर्थः।

(५) धर्मिमात्रमिति। यद्यपि धर्मस्यापि कस्यचित्फलीभूतज्ञाने भाने न धर्मिमात्रबोधसामग्रीत्वं, तथापि बोधसामग्रीमात्राधीनत्वे तात्पर्यम्। —गुणानन्दः।

(६) दुपकारभेदे—पुण० पु० पा०। (७) तद्बोधमात्राधीनत्वे—पुण० पु० पा०।

(८) नेतव्य—पुण० पु० पा०।

(९) भेदाद—पुण० पु० पा०।

धर्माणां चेदप्रतीतिः, इन्द्रियद्वारापि माभूदित्यादिकं तु कर्ण(१)स्पर्शो कटिचालनमपास्तम् । तत्तदुपाध्युपलम्भसामग्रीविरहकाले प्रसञ्जितस्येष्टत्वात् । विचित्रशक्तित्वाच्च प्रमाणानाम्, लिङ्गस्य प्रसिद्धप्रतिबन्धप्रतिसन्धानशक्तिकत्वात्, शब्दस्य समयसीमातिक्रमत्वात्, इन्द्रियस्य त्वर्थशक्तेरप्यपेक्षणात् । न तु सम्बद्धोऽर्थ इत्येव प्रमाणैः प्रमाप्यते(२), अतिप्रसङ्गात् । यस्य तूपाधेरुपलम्भ एव येन(३) धर्म्युपलभ्यते

दीधितिः ।

रित्यन्वयः । प्रमाणानां धर्मिबोधकत्वाविशेषे धर्मबोधकत्वाबोधकत्वलक्षणो विशेषः कुतस्त्य इत्यत आह । विचित्रेति । प्रतिसन्धानम् पक्षधर्मतानिश्चयः । अर्थस्य शक्तिः योग्यतादिः । अतिप्रसङ्गात् रूपादिप्रतीतौ रसादेरपि प्रत्ययप्रसङ्गात् । एकस्यैव सर्वेषामपि धर्माणामग्रहे धर्मिग्रहणापत्तिरित आह । यस्य त्विति । येन प्रमाणेन(४) । यथा गृह्यमाणे एव रूपे नयनेन

दीधितिटिप्पणी ।

बन्धना चेदप्रतीतिरित्यर्थः । मन्मते तु तयोरभेदनिबन्धनमेव प्रतीतिकमुच्यते इति भावः । योग्यतादिरिति । रूपे चक्षुर्ग्रहणयोग्यतादिरि

(१) माभूदित्यादिकर्ण—पा० २ पु० । (२) प्रत्याप्यते पा० २ पु० ।

(३) येन प्रमाणेन—कलि० मु० पु० पा० ।

(४) यत्पदस्य धर्मपरत्वस्य तृतीयायाः प्रकारत्वपरत्वस्य च भ्रमं निराकरोति । येन प्रमाणेनेति ।—गुणानन्दः ।

तस्यानुपलम्भे स तेन नोपलभ्यते इति परं(१) युज्यते, सर्वोपाध्यनु(२)पलम्भे वा, तथा च सिद्धसाधनमिति(३) सङ्क्षेपः।

दीधितिः।

द्रव्यं, व्यापकतावच्छेदके च लिङ्गेन व्यापकमिति(४)। सः धर्मी(५)। सर्वोपाध्यनुपलम्भे वा स नोपलभ्यत इति युज्यते॥

दीधितिटिप्पणी।

त्यर्थः। द्रव्यं, उपलभ्यते इति शेषः। व्यापकतावच्छेदके च, गृह्यमाणे॥

कल्पलता।

भेदादिति। धर्म(६)धर्मिणोर्भेदादित्यर्थः। शब्दलिङ्गाभ्यां यथा वह्नेः रूपपरिमाणादिकं न गृह्यते, किंतु वह्निस्वरूपमात्रं, तथा प्रत्यक्षमपि धर्मिमात्रविषयमस्तु, प्रमाणानां तुल्यप्रतिभाससामान्या(७)दिति भावः। शब्दलिङ्गस्वाभाव्यं कर्णस्पर्शः, तद्वदेव प्रत्यक्षस्वाभाव्यापादनं कटिचालनम्। यद्वा यावद्धर्माणामग्रहणं कर्णस्पर्शः, तद्वदेव धर्मिणोऽप्यग्रहणापादनं कटिचालनम्। यद्वा यावद्धर्मविशिष्टधर्म्यग्रहणं चेदिति कर्णस्पर्शः, तदा विकल्पाना(८)मतद्व्यावृत्तिविषयतापादनं कटिचालनम्। यथा शब्दलिङ्गे उपाधिं न गृह्णीतः(९), तथा प्रत्यक्षमप्युपाधिं न गृह्णीयादित्या

(१) नोपलभ्यत इति—पुण० पु० पा०, पा० २ पु०।

(२) सर्वोपाध्यु—पा० २ पु०।

(३) धर्मबोधसामान्याभावकाले धर्मिबोधाभावसाधने सिद्धसाधनमित्यर्थः।

(४) व्यापकमित्यादि—पुण० पु० पा०।

(५) उपाधिपरत्वभ्रमं निराकरोति। सः धर्मीति।—गुणानन्दः।

(६) धर्मि—पुण० पु० पा०। (७) सामर्थ्या—पुण० पु० पा०।

(८) विकल्पकाना—कलि० मु० पु० पा०। (९) गृह्णीतव्यः—पुण० पु० पा०।

कल्पलता ।

(१)पादने वैयधिकरण्यान्मूलशैथिल्यमुक्त्वा इष्टापादनमाह । तत्तदिति । तर्कमूलव्याप्तावुपाधिमाह । विचित्रेति । शक्तिवैचित्र्यान्न तुल्यप्रति(२)भासनियम इत्यर्थः । विचित्रशक्तिकत्वमेवा(३)ह । लिङ्गस्येति । प्रसिद्धो दृढतरप्रमाणावधारितो यः प्रतिबन्धस्तत्प्रतिसन्धानं पक्षधर्मं सैव शक्तिर्यस्येत्यर्थः । समयः सङ्केतः सैव सीमा मर्यादा तदायत्तो(४) विक्रमः प्रवृत्तिर्यस्येत्यर्थः । अर्थशक्तेरिति । अर्थशक्तिः इन्द्रियसन्निकर्षः(५), तथा चेन्द्रियार्थसन्निकर्षादि(६)जन्यं ज्ञानं(७) प्रत्यक्षमतो यावद्भिरुपाधिभिः सन्निकर्षस्तावदुपाधिविशिष्टस्य धर्मिणो ग्रहणं स्यादित्यर्थः । ननु रूपस्पर्शसङ्ख्यापरिमाणादिविशिष्टस्यैव वह्नेर्व्याप्यो धूमः शब्दश्च वस्तुगत्या तावदुपाधिविशिष्ट एव सङ्केतित इति तावदुपाधि(८)विशिष्टधर्मिग्रहः स्यादित्यत आह । न त्विति(९) । तावदुपाधिवैशिष्ट्येन न व्यापकता न वा वाच्यतेत्यर्थः । यद्वा ननु यावदुपाधीन्द्रियसन्नि(१०)कर्षे चेत्तावतामुपाधीनां(११) ग्रहणं, तदा सर्वोपाधिविशिष्टग्रहणं प्रत्यक्षेणापद्यत इत्यत आह । न त्विति । तत्रापि दृष्टान्ति(१२)कानुविधाना-

---

(१) दित्यत्रा—पुण० पु० पा० । (२) तुल्या—कालि० मु० पु० पा० ।
(३) शक्तिकत्वमा—पुण० पु० पा० । (४) मर्यादायत्तो—पुण० पु० पा० ।
(५) अर्थशक्तिरिन्द्रियसन्निकर्षः—नास्ति कालि० मु० पु० ।
(६) सन्निकर्ष—पुण०-पु० पा० । (७) ज्ञानं—नास्ति कालि० मु० पु० ।
(८) ताभ्यामप्युपाधि—कालि० मु० पु० पा० । (९) नन्विति—पुण० पु० पा० ।
(१०) यावदुपाधीन्द्रियासन्नि—पुण० पु० पा० ।
(११) चेत्तावदुपायानां—पुण० पु० पा० । (१२) दृष्टान्ति—पुण० पु० पा० ।

कल्पलता।

न्नियम इत्यर्थः। व्यापकतावच्छेदकस्य शक्यतावच्छेदकस्य वा वह्नित्वादेरुपलम्भ एव लिङ्गशब्दाभ्यां वह्निर्भासते इति तदनुपलम्भे वह्निर्न भासतां सर्वोपाध्यनुपलम्भे वा वह्निर्न ताभ्यां भासतामिति(१) चेत् साध्यते, तदा सिद्धसाधनमित्याह। यस्येति। येन प्रकारेणेत्यर्थः(२)। सर्वेति। कस्याप्युपाधेरनुपलम्भ इत्यर्थः॥

---

स्यादेतत्। यदीन्द्रियेण समानविषयावेव लिङ्गशब्दौ, ततः प्रतिभासभेदोऽनुपपन्नः। एकविषयत्वं हि प्रतिभासाभेदेन व्याप्तं सव्येतरनयनदृष्टवत् दृष्टम्, न चेह तथा, यथा हि प्रत्यक्षे चेतसि देशकालावस्थानि-

दीधितिः।

समानविषयत्वं व्यापारानुबन्धितया। प्रतिभासेति(३)। प्रतिभासस्य भेदो न्यूनाधिकविषयत्वं(४), तद्विरह(५)श्चाभेदः, तद्व्याप्यमित्यर्थः। दृष्टवदिति सप्तमीसमर्थाद्वतिः। नयनाभ्यां(६)

दीधितिटिप्पणी।

अभेदपदेन तद्विरह उक्तः। मूले दृष्टमिति व्याप्तमित्यनेनान्वयि, नयनदृष्टं घटाद्येव न तु विषयत्वम्, अतः प्रथमान्तसमर्थाद्वतिरनुपपन्नेत्यत आह। सप्तमीसमर्थादिति। नयनाभ्यामिति। तथा च मूले·

---

(१) तदनुपलम्भे वा वह्निर्न ताभ्यां भासतामिति—कालि० मु० पु० पा०।

(२) येन प्रकारेणेत्यर्थः—नास्ति पा० कालि० मु० पु०।

(३) प्रतिभासेति—नास्ति पा० कालि० मु० पु०।

(४) समानविषयत्वेपि व्यक्तिकृतः प्रतिभासभेदोऽस्त्येव सर्वत्र, लिङ्गशब्दयोश्च जातिकृतोपीत्यत आह। न्यूनाधिकेति।—गुणानन्दः।

(५) प्रतिभासाभेदेनेत्यत्राभेदपदार्थमाह। तद्विरह इति।—गुणानन्दः।

(६) नयनाभ्यां, गोलकाभ्यां। तेन न चक्षुरद्वैतवादाविरोधः। तन्नये गोलकस्यैव ग्राहकत्वात्। —गुणानन्दः।

यतानि परिस्फुटरूपाणि स्वलक्षणानि प्रतिभान्ति, न तथा शब्दे लैङ्गिकविकल्पेपि(१)। तत्र हि विजातीयव्यावृत्तमिव परस्पराकारसङ्कीर्णमिवास्फुटमिव प्रत्यक्षापरिचितं किञ्चिद्रूपमा(२)भासमानमनुभवविषयः, न चोपायभेदमात्रेण(३) प्रतिभासभेद उपपद्यते, न हि प्रतिपत्त्युपायाः प्रतिपत्त्या(४)कारं परिवर्त्तयितुमीशते, न

दीधितिः ।

दृष्टे नयनयोरेकविषयत्वं प्रतिभासाभेदश्चेति । चेतसि ज्ञाने । विजातीयव्यावृत्तमिवेति । व्यावर्त्तक(५)गोत्वादिस्फूर्तावपि व्यावृत्तेरस्फुरणात् । एतच्च गोत्वादेर्विधिरूपतामते । व्यावृत्तिरूपतानये तु व्यावर्त्तकधर्मा(६)स्फुरणात् । परस्परेति । सजातीयान्तराद्व्यावृत्तेरस्फुरणात् । अस्फुटमिति असाधारणधर्मास्फुर-

दीधितिटिप्पणी ।

सव्यतदितरनयनाभ्यां दृष्टवदिति विग्रहः। इव कथं सङ्गतमत आह। व्यावर्तकेति । व्यावृत्तमित्यनेन व्यावृत्तिविशिष्टो बुध्यते, तथा च विशेषणाभावकृत एव विशिष्टाभावः। विधिरूपतामत इति। इतरव्यावृत्तिरूपतामते गोत्वस्फुरणादेव व्यावृत्तिविशिष्टानां स्फुरणात् सादृश्यासङ्गतेः। ननु निषेधरूपतास्फुरणे कथं सङ्गतिः अत आह। व्यावृत्तीति। तथा च व्यावर्तकधर्माद्यस्फुरणनिबन्धनमेव सादृश्यमिति

(१) शब्दलैङ्गिकविकल्पेपि—पुण० पु० पा०, शब्दलैङ्गिकाविकल्पेषु—पा० २ पु० ।

(२) किञ्चिद्रूपा—पुण० पु० पा० ।

(३) न चोपाधिभेदमात्रेण—पाठः । तत्पक्षे न चोपाधिभेदमात्रेणेत्यस्य प्रतिपत्त्युपायोत्पादितेत्यादिः ।

(४) पात्तिपाया—पुण० पु० पा० ।

(५) अगोव्यावृत्तेरेव गोत्वरूपत्वे विजातीयव्यावृत्तेर्भानादिवेत्यस्यासङ्गतिमाशङ्क्याह । व्यावर्तकेत्यादि ।—गुणानन्दः ।

(६) व्यावर्तकधर्मेति । व्यावृत्तिरूपस्यापि गोत्वस्य स्वरूपत एव तैः प्रकारत्वोपगमादिति भावः ।—गुणानन्दः ।

चैकं वस्तु द्व्याकारमिति प्रतिबन्धसिद्धिः। अस्य प्रयोगः, योऽयं(१) क्वचिद्वस्तुनि प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो नासौ तेनैकविषयो यथा घटग्रहणात् पटप्रतिभासः(२), तथा च गवि प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो विकल्पकाल इति।

दीधितिः।

णात्। वैयधिकरण्यं निरस्यन्नाह। अस्य प्रयोग इति। क्वचिद्वस्तुनीति यत्किञ्चिद्विषयापेक्षया न्यूनत्वस्य लाभाय, तथा च यो यत्प्रतिभासविषयात्किञ्चिद्वस्त्वविषयको नासौ तद्विषयविषयक इति व्याप्तिः॥

दीधितिटिप्पणी।

भावः। व्यावृत्तिरूपतेति। व्यावृत्तिरूपतामतेपि व्यावर्तकस्फूर्तौ व्यावृत्तस्फुरणाङ्गीकाराद्व्यावर्तकेत्यपरे। वैयधिकरण्यम्, यदीन्द्रियेणेत्यादौ॥

कल्पलता।

यथेन्द्रियं स्वलक्षणविषयं तथा लिङ्गशब्दावपि यदि तद्विषयौ स्यातां तदा प्रतिभासवैलक्षण्यं न स्यात्, अतस्तौ(३) (न) स्वलक्षणं स्पृशत इत्याह। स्यादेतदिति। यथेत्यादिना प्रतिभासभेदमेव स्फुटयति। परिवर्त्तयितुम् अन्यथाकर्त्तुम्। ननु वस्तुस्वाभाव्यमेव द्विरूपमस्तु भिन्नप्रमाणप्रतिभासं येन स्यादित्यत आह। न चैकमिति। प्रतिबन्धेति। यद्भावाभावसाधारणं(४) तदन्यव्यावृत्तिनिष्ठमिति प्रतिबन्धसि-

(१) यो यः—पा० २ पु०। (२) यथा घटप्रतिभासः—पा० २ पु०।
(३) इत्यतस्तौ—पुण० पु० पा०। (४) यद्भावासाधारणं—पुण० पु० पा।

कल्पलता।

द्धिरित्यर्थः। भावाभावसाधारणत्वस्यैव(१) हेतोरनेन प्रकारेण प्रपञ्चनम्। अस्य प्रयोग इति। अयं(२) प्रघट्टकार्थः प्रयोगमारोप्य दर्श्यत इत्यर्थः। एतत्प्रतिबन्धाधीनः प्रयोगो वेत्यर्थः। वस्तुनीति स्फुटार्थम्, प्रत्यक्षप्रतिभासत्वावच्छिन्नाद्वै(३)परीत्यं न विवक्षितं, तेन (न) दृष्टान्तासिद्धिः, अन्यथा परप्रतिभासस्यापि प्रत्यक्षप्रतिभासत्वावच्छिन्नाद्वैपरीत्यासिद्धेर्दृष्टान्तासिद्धिः स्यात्। गवीति। स्वलक्षणे यः प्रत्यक्षप्रतिभासः निर्विकल्पकं, तद्विपरीतं सविकल्पकमिति न तस्य स्वलक्षणविषयतेत्यर्थः॥

इदमप्यवद्यम्। चित्राचित्रप्रतिभासाभ्यां मिथो विरुद्धाभ्यामेकनीलविषयाभ्यामनैकान्तात्। न हि चित्राध्यक्षे यन्नीलं चकास्ति तदेव पश्चान्न केवलं तदैव वा पुरुषान्तरस्य। येनाकारेणैकविषयत्वं तयोर्न तेनैव

दीधितिः।

परेषां भावानां क्षणिकत्वादाह। तदैवेत्यादि(४)। येना·

दीधितिटिप्पणी।

येनाकारेणेति मूलं, नीलं चित्रमित्येकस्य, इदं नीलमित्यपरस्य च ज्ञानम्, विषये नीले यद्भवता व्यभिचारो दत्तः तत्प्रकृते नास्ति, प्रकृते हि येन नीलत्वप्रकारेण उभयोश्चित्राचित्रप्रतिभासयोरेकविषयत्वमस्ति तेन प्रकारेण विभिन्नविषयतारूपो विरोधो

(१) भावाभावसाधारण्यस्यैव—पुण० पु० पा०। (२) स्वयं—पुण० पु० पा०।
(३) प्रत्यक्षप्रतिभासत्वाद्वै—पुण० पु० पा०।
(४) तदेवेत्यादि—कालि० मु० पु० पा०।

विरोधो येन च विरोधो न तेनैकविषयत्वम्, धर्मान्तराकारेण विरोधो नीलमात्राकारेण(१) चैकविषयतेति चेत्, नन्विहापि धर्मान्तराकारेण विरोधो गोत्ववत्पिण्डमात्राकारेण(२) चैकविषयतेति(३) तावन्मात्रनिराकरणेऽसिद्धो हेतुः। पूर्वत्र सिद्धसाधनम्।

---

दीधितिः।

कारेण, नीलत्वेन। येन विरोधः, चित्रत्वेन। अथैवं यत्प्रतिभासविषयदर्थाविषयको यः प्रतिभासो नासौ तेनार्थेन तत्समानविषय इति पर्यवसिता व्याप्तिः, तथा च यदि प्रत्यक्षविषयगोत्ववत्पिण्डाविषयत्वं हेतूक्रियते तदा स्वरूपासिद्धिः, प्रत्यक्षवच्छब्दादिविकल्पस्यापि गोत्ववत्पिण्डविषयत्वोपगमात्। अथ(४) प्रत्यक्षविषयदेशादिनियमाविषयत्वं, तदा सिद्धसाधनम्, देशादिनियमेनार्थेन प्रत्यक्षसमानविषयताविरहस्य शब्दादिविकल्पेऽस्माभिरभ्युपगमादित्याह, नन्विहापीत्यादिना। धर्मान्तरम् देशकालनियमादि। तावन्मात्रम् गोत्ववत्पिण्डाकारेणैकविषयत्वम्(५)। पूर्वत्र पूर्वाभिहितधर्म्मान्तराकारेणैकाविषयतानिराकरणे॥

दीधितिटिप्पणी।

नास्ति, उभयोरेव नीलत्वप्रकारकत्वात्, तथा च नीलत्वमादाय न हेतुसत्त्वमित्यर्थः। येन चेति। तथा च एतत्प्रकारकत्वमादाय साध्यस्यापि सत्त्वमिति न व्यभिचारः। यदर्थाविषयकेत्यत्र यत्पदेन किं गोत्वरूपं उक्तं, किं वा इतरदित्याह दीधितौ, तथाच यदीति। नियमः प्राप्तोपाधिनियमः?। समुदायार्थं व्याख्याय पदार्थं तथा सङ्गमयति। धर्मान्तरमिति। गोत्ववत्पिण्डेत्यादेः पूर्वाभिहितादित्यर्थः॥

---

(१) नीलविषयाकारेण-पा० २ पु०। (२) गोत्वपिण्डाकारेण-पा० २ पु०।
(३) चैकाविषयत्वमिति-पा० २ पु०। (४) अथ—नास्ति पा० कलि० मु० पु०।
(५) मात्रपदस्यानुपपत्तेराह। गोत्ववदिति।

न हि शाब्दलैङ्गिकविकल्पकाले देशकालनियमादयोऽपि(१) सर्व एव धर्मविशेषा विषयभावमासादयन्तीत्यभ्युपगच्छामः ।

कल्पलता ।

एकमेव नीलं समस्तचित्रपटदर्शिना चित्रत्वेन संवृतापरभागपटदर्शिना चाचित्रत्वेन(२) प्रतीयते, तत्र(३) प्रतिभासभेदेऽपि न विषयभेद इत्यनैकान्त इत्याह । चित्राचित्रेति(४) । यद्यपि तत्र नीलेऽचित्रबुद्धिर्भ्रान्ता, तथापि प्रतिभासभेदोऽस्त्येवेत्यर्थः । ननु चित्रत्वाचित्रत्वाभ्यां विरोधो नीलत्वेन चैकविषयतेति न तत्रानैकान्तिकमिति शङ्कते । येनेति । गोत्वव्यक्तिविषयतया समानविषयत्वं साधयामः, प्रतिभासभेदश्च देशकाल(५)नियतत्वानियतत्वस्फुटास्फुटत्वादिभिः त्वदुपदर्शितैरिति तुल्यमिति परिहरति । नन्विहापीति । तावन्मात्रेति । शाब्दलिङ्गविकल्पानां स्वलक्षणविषयतानिराकरणे प्रतिभासभेदो हेतुः(६) स्वरूपासिद्धः(७), वस्तुनि सर्वेषां समानप्रतिभासत्वादित्यर्थः । पूर्वत्रेति(८) । देशकालनियमादिषु प्रतिभासभेदेन भिन्नविषयत्वं यदि साध्यते तदा सिद्धसाधनं, न हि ये देशावच्छेदाः प्रत्यक्षेण भासन्ते (ते) शब्दलिङ्गाभ्यामपीत्यर्थः ॥

(१) नियमादयः—पा० २ पु० ।
(२) दर्शिना अचित्रत्वेन—पुण० पु० पा० ।
(३) त्वेन तत्र—पुण० पु० पा० ।
(४) चित्राचित्रेति—पुण० पु० पा० ।
(५) प्रतिभासभेदश्च—पुण० पु० पा० ।
(६) अहेतुः—पुण० पु० पा० ।
(७) स्वरूपासिद्धेः—पुण० पु० पा० ।
(८) पूर्ववच्चेति—पुण० पु० पा० ।

ननु धर्मिण्येव स्फुटास्फुटप्रतिभासभेदः कथम्। न कथञ्चित्। यथा यथा हि धर्माः प्रतिभान्ति(१) तथा तथा स्फुटार्थ(२)प्रतिभानव्यवहारः, यथा यथा च धर्माणामप्रतिपत्तिस्तथा तथा प्रतिभानस्य(३)

दीधितिः।

प्रत्ययानां स्फुटास्फुटप्रतिभासत्वं स्फुटास्फुटार्थावगाहित्वं(४), न चैकोऽर्थः(५) स्फुटोऽस्फुटश्च सम्भवति विरोधात्, अतः स्फुटप्रतिभासस्याध्यक्षस्य स्फुटस्वलक्षणविषयत्वं, अस्फुटप्रतिभासस्य च लैङ्गिकादिविकल्पस्यास्फुटालीकविषयत्वमित्याशङ्कते। नन्विति। अध्यक्षाणां नीलपीताद्याकारभेदवदध्यक्षलैङ्गिकयोरपि स्फुटास्फुटप्रतिभासत्वभेदो विषयभेदं विनाऽनुपपन्न इत्याशङ्कते। नन्विति। इत्यपि कश्चित्(६)। धर्मिण्येव एकस्मिन्नेव धर्मिणि। बहुतराल्पतरधर्मवद्धर्मिविषयत्वमेव स्फुटास्फुटप्रतिभासत्वं, नाधिकं, मानाभावात्, तच्च नैकविषयत्वविरोधीत्याह। न कथञ्चिदिति। प्रत्यक्षे एकविषयेपि (७)। न

दीधितिटिप्पणी।

नीलपीतादीति। अत्र यथा विषयभेदो नियामक इत्यर्थः। न चायं कल्पः पुनरुक्तः, पूर्वं नैय्यायिकमतमाश्रित्य स्फुटार्थावगाहनानतिरिक्तमेव स्फुटाऽस्फुटप्रतिभासत्वमुक्तं, इदानीं तु बौद्धमतमालम्ब्य आकारविशेषरूपस्य प्रतिभासत्वस्योपपादकतया विषयभेद उक्त इति न दोषः। नानाधर्मिणि एतत्तु न दोषकृन्मतः पूरयति। एकस्मिन्निति। एवकारस्य धर्मिणि इत्यनेन सम्बन्धे

(१) प्रतिभासन्ते—पा० २ पु०। (२) स्फुटेति—कलि० मु० पु० पा०।

(३) प्रतिभासस्य—पा० २ पु०।

(४) प्रत्ययानां स्फुटास्फुटप्रतिभासत्वं—कलि० मु० पु० पा०।

(५) न चैकार्थः—कलि० मु० पु० पा०। (६) इत्यपि केचित्—[illegible]

(७) एकविषयेपीति। [illegible]

सान्द्यव्यवहारो दूरान्तिकादौ प्रत्यक्षेपि लोकानाम्, न तु सर्वथैवाप्रतिपत्तौ ।

दीधितिः ।

त्विति । तद्(१)ग्राहिणस्तत्रास्फुटप्रतिभासत्वानुपपत्तेरिति ॥

दीधितिटिप्पणी ।

एकाभिन्नधर्मिण्ययोगो गुरुर्व्यवच्छेद्यः स्यादत एकस्मिन्नित्यनेन सम्बन्धे एकान्यत्वप्रतियोगितावच्छेदकं लघु स्यात्, विधेयस्य एकत्वस्यायोगव्यवच्छेदश्च स्यादित्येवकारस्तथा योजितः ॥

कल्पलता ।

ननु यदि शब्दलिङ्गयोरपि धर्म्येव विषयस्तदा स एवैकत्र स्फुटोऽन्यत्रास्फुटः कथं भासतामित्याह । नन्विति । प्रकाशः सर्व एव स्फुटः स्फुटास्फुटव्यवहारश्च बहुतराल्पतरधर्मविषयतानिबन्धन इत्याह । न कथञ्चिदिति । एतदेवाह । यथा यथेति । न त्विति । यदि शब्दलिङ्गयोर्धर्मिविषयता न स्यात्तदा तत्रास्फुटतापि न भवेदित्यर्थः ॥

विदूरादिप्रत्ययोपि पक्ष एवेति चेत् । अस्तु । न तु(२)

दीधितिः ।

दूरदूरतरादि(३)प्रत्यया अपि नास्माकं स्वलक्षणसाक्षिणो न वा(४) साक्षात्कारिणः, परं त्वलीकालम्बना अनादिविकल्पवासनासमुत्थाः समारोपित(५)साक्षात्कारा(६) इत्याशङ्कते । विदू-

(१) यदि शब्दलिङ्गयोर्धर्मिविषयता न स्यात् तदा तत्रास्फुटतापि न स्यात्, इदमेवाह। तद्ग्राहिणेति ।

(२) ननु—पा० २ पु० ।     (३) दूरादि—पुण० पु० पा० ।

(४) ननु स्वलक्षणाविषयकत्वे कथं साक्षात्कारित्वमित्यत्राह । न वेति ।—गुणानन्दः ।

(५) साक्षात्कारित्वेन तत्र व्यवहारमुपपादयति-। समारोपितेति ।—गुणानन्दः ।

(६) तादात्म्येन साक्षात्कारारोपः । समारोपितसाक्षात्कारत्वा इति क्वचित्पाठः ।

तावतापि धर्मधर्मिभेदासिद्धौ प्रत्यक्षबाधस्य तत्सन्दे-

दीधितिः।

रादीति। पक्षः पक्षतुल्यकक्षः(१)। नास्त्वित्यादि। यमर्थमन्वमिनवं(२) तमेव पश्यामीति लैङ्गिकप्रत्यक्षयोरेकविषयताग्राहकोऽनुव्यवसायो धर्मधर्मिणोरभेदात् तत्तद्धर्माग्राहिणो लैङ्गिकप्रत्ययस्य धर्मिविषयत्वानुपपत्त्या बाधकेनाप्रमाणीकर्त्तव्यः, सिद्धे च धर्मधर्मिणोर्भेदे बाधकाभावात् प्रमाणेनानुव्यवसायेन बाधितं लैङ्गिकाध्य(३)क्षयोरेकविषयत्वाभावसाधकमनुमानं, यदा तु धर्मधर्मिणोर्भेदसन्देहस्तदा बाधकसन्देहादापाततोऽनुव्यवसायस्य प्रामाण्यसन्देहेऽपि दूरादिप्रत्ययैः सन्दिग्धानैकान्तिकं(४) तदित्यर्थः। अथ दूरादिप्रत्यया अपि पक्षकुक्षौ निक्षिप्यन्ते(५),

दीधितिटिप्पणी।

पक्षतयाऽनिर्दिष्टत्वादाह। पक्ष इति। मूले धर्मधर्मिभेदासिद्धिपर्यन्तं किमित्यनुधावनमतस्तत्प्रयोजनमाह। यमर्थमित्यादि अप्रामाणीकर्त्तव्य इत्यन्तेन। धर्मधर्म्यभेदासिद्धिर्यदि स्यात्तदा प्रत्यक्षबाधात्मको यमर्थमित्यनुव्यसायोऽप्रामाणं स्यात्, तथाच एतन्मते प्रत्यक्षबाधकथनमसङ्गतमतो भेदमत एवेदमिति भावार्थः। तद्धर्माग्राहिण इति। अनुव्यवसायस्तावत् दृष्टार्थानुमितार्थयोरैक्यविषयकस्तत्र प्रमाणं भविष्यति, तच्च न सम्भवति, लैङ्गिकप्रत्ययस्य प्रत्यक्षविषयीभूतव्यक्तिधर्माग्राहकत्वस्योभयसम्मततया धर्मधर्म्यभेदे स्थिरीभूते तस्य प्रत्यक्षविषयीभूतधर्मिविषयत्वमनुपपन्नं, तथाच क एकविषयत्वं, भेदासिद्धौ तु प्रत्यक्षबाधो लगतीत्याह। सिद्धे चेति। तत्सन्देहेपीति मूलं व्याचष्टे। यदा त्विति। दूरादीति। तत्र स्वमते निश्चित·

(१) लैङ्गिकादिविकल्पानां पक्षत्वात्पक्षकुक्षौ निक्षेपे अग्रिमसन्दिग्धानैकान्तिकदानमयुक्तं स्यादत आह। पक्षतुल्यकक्ष इति।

(२) यमर्थमनुमिनोमि—पुण० पु० पा०। (३) लैङ्गिकप्रत्य—पुण० पु० पा०।

(४) सन्दिग्धानैकान्त्यं—कालि० मु० पु० पा०।

(५) तथाच न सन्दिग्धानैकान्तिकमिति भावः।

हेपि सन्दिग्धानैकान्तिकस्य वा परिहारः, तावतापि प्रतिभासभेदस्योपपत्तेः ।

दीधितिः ।

तदाऽप्रयोजकत्वमित्याह । तावतापीति । धर्म्मधर्म्मिणोरभेदसाधकं तु न मानमस्तीत्याशयः ॥

दीधितिटिप्पणी ।

साध्याभाववति धर्मधर्म्यभेदसंदेहाधीनाद्धेतोर्वृत्तित्वसंदेहाद्व्यभिचारसन्देह इत्यर्थः । अत्र पक्ष एव व्यभिचारसन्देहो न दूषणं, नतु पक्षसमादावपीति मतमाश्रित्य पक्षं विहाय दूरादीत्यनुधावनम्, अत एवाग्रे वक्ष्यति, अप्रयोजकत्वमिति । तथाच तावतापीति मूले एकविषयत्वेपि प्रतिभासभेदो भविष्यतीत्यर्थकेपि साध्याऽसत्त्वेपि हेतुसत्त्वरूपमप्रयोजकत्वं दर्शितमिति भावः । ननु धर्मधर्म्यभेदसाधक एवानुकूलतर्कोऽस्तीत्यत आह । धर्मधर्मिणोरिति ॥

कल्पलता ।

पक्ष एवेति । तत्रापि स्फुटास्फुटप्रतिभासभेदेन(१) सद्द्रव्यपार्थिवादिप्रतिभासभेदेन वा विषयभेदं साधयिष्याम इत्यर्थः । अतद्व्यावृत्तिविषयतां यदि दूरादिप्रत्ययानां साधयसि तदा प्रत्यक्षबाध(२) एव, स्थिरस्फुरणस्य साधितत्वात् । विषयभेद(३)प्रतिभासभेदेन धर्मधर्मिणोर्भेदे(४) दूरान्तिकप्रत्ययानां धर्म्यविषयत्वे साध्ये बाध इत्यन्ये । तच्चिन्त्यम् । प्रतिभासभेदेन(५) विषयभेदमात्रसाधनं तु(६) सन्दिग्धानैकान्तिकपराहतम् । प्रतिभासभेदोपि स्यान्न तु विषयभेद इति विपक्षबाधकाभावात् । तत्सन्देहे धर्मधर्मिभेदसन्देहे वा बाधसन्देहे वा ॥

(१) स्फुटास्फुटप्रतिभासभेदेन–पुण० पु० पा० । (२) प्रत्यक्षबाद–पुण० पु० पा० ।
(३) विषयभेद—नास्ति पा० पुण० पु० । (४) धर्मिणोर्भेदे—कलि० मु० पु० पा० ।
(५) प्रतिभासभेदेन—नास्ति पा० पुण० पु० । (६) साधनं तत्र–पुण० पु० पा० ।

यदि च नैवं, दूरतमादिप्रत्ययेषु कः समाश्वासविषयः। यस्यार्थो लभ्यत इति चेत्, ननु लाभोऽपि पूर्वपूर्वोपलब्धानुपमर्दनेनैव । न हि सत्त्वद्रव्यत्व-

दीधितिः ।

दूरतमादौ(१) सद् द्रव्यमित्यादयः क्रमिकाः(२) प्रत्ययाः यदि नैकविषया न तर्हि सर्वे प्रमाणं, न खलूत्तरोत्तरप्रत्ययोल्लिखितरूपरहितं(३) पूर्वपूर्वप्रत्ययगोचरो(४) वस्त्वन्तरं(५) नाम । अथैक एव प्रमाणं, (ए)कतमस्तथेति कुतो निर्णय इत्याह । यदि चेति। (अनुभूयमानाया(६)मनुगताकारस्य विधिरूपतायां विकल्पस्य च धर्मिविषयतायां न किञ्चिदपि बाधकमस्तीति भावः । भावार्थमभ्युपेत्याह । यस्येति । ) अर्थः विषयः(७) ॥

दीधितिटिप्पणी ।

यदि च नैवमिति मूलस्य व्याख्या, यदि नैकविषया इति । नैकधर्माविष्टविषया इत्यर्थः, तन्मते भावानां क्षणिकत्वादिति । न खल्विति । उत्तरप्रत्ययोल्लिखितांशशून्यत्वाद्यभाववानेव सदित्यादिपूर्वप्रत्ययविषयः स्यात्तदैव एकविषयत्वाभावे सति सर्वे प्रमाणं (न) स्युः, न चात्र भवता एतदङ्गीक्रियते, न वा तादृशवस्त्वन्तरमप्यत्र लक्षितमिति भावः। विकल्पोल्लिखितप्रकारद्वयानङ्गीकारादाह । भावार्थमिति । अत्र अर्थक्रिया नोच्यते, यत्रार्थक्रियेत्यनेन पौनरुक्त्यादत आह। अर्थो विषय

(१) दूरतमादावित्यादिना दूरतरत्वादीनां परिग्रहः ।—गुणानन्दः ।

(२) क्रमिका इति एकपुरुषमधिकृत्य, एकदा तत्तद्देशवर्तिनानापुरुषनिष्ठा इत्यपि सुवचम् । अत एव क्षणिकतानये एकविषयत्वाभावस्य तन्मतसिद्धत्वेऽपि न क्षतिः ।—गुणानन्दः ।

(३) उत्तरोत्तरप्रत्ययोल्लिखितं द्रव्यत्वपृथिवीत्वादि, तद्राहितमित्यर्थः । —गुणानन्दः ।

(४) पूर्वपूर्वेति । तेनेन्द्रियसन्निकर्षाभावात् तादृशप्रत्ययगोचरत्वासम्भवादिति भावः ।—गुणानन्दः ।

(५) अवस्तुनो भानं विनैवेन्द्रियसन्निकर्षं स्यादेवेत्यत आह । वस्त्वन्तरमिति ।—गुणानन्दः ।

(६) लाभो हि सविकल्पकज्ञानान्तरेण विषयीकरणं, न च सविकल्पकस्य प्रमाणविषयविषयतां विना तदुपपत्तिरतो भावं पूरयति । अनुभूयमानेति ।—गुणानन्दः ।

(७) अर्थपदस्य प्रयोजनपरत्वभ्रमं निराकरोति । अर्थो विषय इति ।—गुणान[ndः ।]

पृथिवीत्व(१)वृक्षत्वादिकं परिभूय शिंशपात्वं(२) लभ्यते।

दीधितिटिप्पणी।

इति। तथा च मूले, लभ्यते विषयीक्रियते इत्यर्थः॥

कल्पलता।

यदि च नैवमिति। न विषयभेदः, किं तु दूरदूरतरादिप्रत्यया भिन्नविषया एवेत्यर्थः। ज्ञानविषयस्य(३) प्राप्तिरेव ज्ञानसमाश्वास(४)हेतुरित्याह। यस्येति। सद् द्रव्यं पृथिवी वृक्षः शिंशपेति दूरादिप्रत्यया जायन्ते। तत्र शिंशपात्वेऽपि सदादीनां तावद्धर्मविशिष्टपिण्डगोचरा एव सर्वे प्रतिभासा न तु विषयभेद इत्यर्थः॥

यत्रार्थ(५)क्रियासिद्धि(६)रिति चेत्, सर्वेषामनुवृत्तेः कस्यार्थक्रियेति किं निश्चायकम्। न किञ्चि-

दीधितिः।

अर्थक्रियाकारिण एव सत्त्वात् यस्यार्थक्रिया दृश्यते(७) तद्विषयक एव प्रत्ययः प्रमेत्याशङ्कते। यत्रेति। सर्वेषाम् सदादिप्रत्ययगोचराणाम्(८)। न किञ्चित्, निश्चायकम्(९)।

दीधितिटिप्पणी।

विषयस्यैवार्थक्रियेत्यत आह। सर्वेषामित्यादि। न किंचिदित्यस्य नि-

(१) सत्त्वद्रव्यत्वपार्थिवत्व—कालि० मु० पु० पा०। (२) शिंशपा—कालि० मु० पु० पा०।
(३) धर्मज्ञानविषयस्य–कालि० मु० पु० पा०। (४) ज्ञानसमाधी–कालि० मु० पु० पा०।
(५) यस्यार्थ—पा० २ पु०। (६) स्थिति–पुण० पु० पा०, पा० २ पु०।
(७) शिंशपाया एवार्थक्रिया दृश्यते इति भावः।
(८) सदादीति। तत्तत्प्रत्ययगोचराणां मध्ये यत्रार्थक्रियास्थितिस्तद्विषयकं ज्ञानं प्रमाणमिति फलति। यद्वा सर्वेषामित्यस्य विषयं पूरयति। सदादीति।—गुणानन्दः।
(९) निश्चायकमिति शेषः—कालि० मु० पु० पा०। न किञ्चिदित्यस्य विशेष्यमनुषङ्गेण योजयति। निश्चायकमिति।—गुणानन्दः।

त्, किन्तु(१) सङ्कीर्णार्थक्रियाविरहा(२)देकमेव तत्र वस्तु, न चैकस्मिन् प्रतिभासभेद इत्येक एव प्रत्ययस्तत्र सालम्बन इति ब्रूम(३) इति चेत्, तथापि कतम इत्यनिश्चये स एवानाश्वासः। असङ्कीर्णापि चार्थक्रिया न व्यक्तितः, सामग्रीतः सर्वसम्भवात्। अत एव न सन्तानतो नियमः(४), न ह्येकसन्तान-

दीधितिः ।

पत्रकाण्डविशेषादिलक्षणाऽर्थक्रिया न सदादेः, पनसादेरपि तत्प्रसङ्गात्, किन्तु शिंशपाया एवेत्यस्ति विशेषनिश्चायकमत आह । असङ्कीर्णाऽपीति । न व्यक्तितः नैकव्यक्तिमात्रात्(५), तथा च पूर्वभावित्वस्य नियामकसहकारिसमवधानस्य चाविशेषात् सर्वेषामेव कुतो न साऽर्थक्रियेति । यत्सन्तानियता याऽर्थक्रिया सा तस्यैव नेतरस्य, तत्सत्त्वेपि तदनुत्पत्तेरित्याशङ्क्य निराचष्टे । अत एवेति । तत्सान्तानिकसत्त्वेपि(६) तत्तत्सहकारिविरहेण तत्तदर्थक्रियाविरहदर्शनान्न नियम इति । अन्वयव्यतिरेकाभ्यां

दीधितिटिप्पणी ।

षेध्यमाह । निश्चायकमिति।तथा च न किञ्चिदन्यत् निश्चायकं, किन्तु संकीर्णार्थ(क्रिया)विरहमात्रादेव तत्र एकमिति निर्णीयत इति मूलार्थः।इतरप्रतिक्षेप एवासंकीर्णत्वं लभ्यत इत्यत आह । न व्यक्तित इति । ननु शिंशपासन्तानाधीनैव इयमर्थक्रिया, न तु सत्सन्तानाद्यधीनेत्याह । यत्सन्तानेति । अन्वयव्यतिरेकाभ्यामिति । तथा च विजातीयपत्रादिकं

(१) किन्त्व—पा० २ पु० । दृश्यमानार्थक्रिया यदि सर्वस्य स्यात्तदा नानारूपा स्यादित्यत एकस्य विशिष्यानिश्चयेप्येकमेव तत्र प्रमाणमित्याश्वास एवेति प्रघट्टकार्थः ।

(२) यादर्शना—पा० २ पु० । (३) ब्रूमः—नास्ति पा० २ पु० ।

(४) सन्तानतः—कालि० मु० पु० पा० । (५) एकव्यक्तिमात्रात्, तद्व्यक्तित्वेन तद्व्यक्तिमात्रात् ।

(६) तत्सान्तानिकेति । फलसत्त्वेपि पत्रकार्यं न जायते, एवं च सहकार्यन्तरकल्पनात सदादेरपि हेतुत्वमिति भावः ।

नियता काचिदर्थक्रिया नाम । काञ्चिदर्थक्रियां प्रति प्रत्यक्षानुपलम्भगोचर(१) एव तथा व्यवस्थाप्यत इति चेत्, तर्हि दूरतमाद्युपलम्भा(२) अपि तथा व्यवस्थाप्याः, सर्वेषामेव तेषां तां तामर्थक्रियां प्रति प्रयोजकतया(३) अन्वयव्यतिरेकगोचरत्वादिति ।

दीधितिः ।

विजातीयकार्याणि प्रति विजातीयानां कारणानां हेतुत्वे सुदृढे सदादेः कारणतायां मानाभावेनासत्त्वात्तद्विषयाः प्रत्यया न प्रमाणानीत्याशङ्कते । काञ्चिदिति । निराकरोति । तर्हीति । तथा च वृक्षः शिंशपेति, बीजं धान्यं शालिः कलम(४) इति प्रत्यया उपलभ्यमानसामान्यविशेषभावापन्नपत्रकाण्डाङ्कुरलक्षणार्थक्रियसद्विषयतया(५) प्रमाणीभवन्तोऽभिन्नविषयतया(६)ऽवतिष्ठन्त इति ॥

दीधितिटिप्पणी ।

प्रति शिंशपात्वेनैव कारणत्वे दृढीभूत इत्यर्थः। असत्त्वात् अर्थक्रियाकारित्वरूपसत्त्वाभावात् । तन्मते अर्थक्रियाकारिगोचरज्ञानस्य प्रमाणत्वादिति भावः । सामान्यविशेषेति । यथा शिंशपात्वेन विलक्षणपत्रत्वेनेत्यादिकार्यकारणभावाद्विलक्षणपत्ररूपकार्यवत्तया शिंशपा तत्र वस्तुसती, तथा वृक्षत्वेन पत्रसामान्यत्वेनेत्यादिकार्यकारणभावात् सामान्यकार्यरूपपत्रदर्शनाद् वृक्षोपि वस्तुसन्नित्यर्थः ॥

(१) अन्वयव्यतिरेकगोचर इत्यर्थः ।

(२) दूरतमाद्युपलम्भा—कलि० मु० पु० पा० ।

(३) प्रयोजकतया—पुण० पु० पा०, पा० २ पु० ।

(४) शालिः, मार्गशीर्षोत्पन्नम् । कलमः, तदवान्तरविशेषः ।

(५) सामान्यविशेषभावापन्ना पत्रकाण्डाङ्कुरलक्षणा अर्थक्रिया यस्य तत् सामान्यविशेषभावापन्नपत्रकाण्डाङ्कुरलक्षणार्थक्रियं, एतादृशं यत्सदित्यर्थः । सामान्यं पत्रत्वं, विशेषः पनसीयत्वम् ।—गुणानन्दः ।

(६) अनेकेषां विषयाणामसम्भवादिति भावः ।

कल्पलता।

पत्रकाण्डादिविशेषलक्षणार्थक्रिया शिंशपाया(१) एवेति तल्लाभ एव, अतस्तत्प्रतिभास एव समाश्वास इत्याह। यत्रेति। सत्त्वादीनां पूर्वपूर्वप्रतिभासाविषयाणां चेन्नोपमर्दस्तदा(२) सैवार्थक्रिया कस्येति निश्चायकं नास्तीत्याह। कस्येति। यद्यपि बहवः प्रतिभासा दृश्यन्ते, तथाप्यर्थक्रिया चेदेकैव(३) तदा तद्विषय(४) एव वस्तुभूतः, अन्ये च प्रतिभासा अवस्तुविषया एवेत्याह। न किञ्चिदिति। निश्चायकमित्यनुषज्यते। सालम्बन इति। पारमार्थिकविषय इत्यर्थः। सदादिप्रत्ययानां कतमः प्रत्ययः प्रमेत्यनिश्चये(५) प्रवृत्त्यनध्यवसाय(६) एवेत्याह। तथापीति। दूषणान्तरमाह। असङ्कीर्णापीति। असङ्कीर्णार्थक्रिययापि व्यक्तिविशेषनिश्चयस्तदा स्याद्यदि साऽर्थक्रिया व्यक्तिविशेषमात्राद्भवेत्, न त्वेवं, किंतु सामग्रीतः सर्वसम्भव इत्यर्थः। ननु तयाऽर्थक्रियया एका व्यक्तिर्मा निश्चीयताम्, सन्तानो निश्चेष्यत इत्यत आह। अत(७) एवेति। सामग्रीतः सर्वसम्भवो(८) यत इत्यर्थः(९)। तदेव स्फुटयति। न हीति। न ह्यङ्कुरोपि बीजसन्तानादेकस्मात्, किन्तु तत्रापि धरण्यादिसन्तानापेक्षया(१०) दर्शितत्वादित्यर्थः। ननु यद्यपि सामग्र्यर्था-

---

(१) शिंपाया—पुण० पु० पा०। (२) च नोपमर्दस्तदा—पुण० पु० पा०।
(३) चेदेकैदेव—पुण० पु० पा०। (४) तद्विषय तद्विषय-पुण० पु० पा०।
(५) प्रत्यये निश्चये-पुण० पु० पा०। (६) प्रवृत्त्यनध्याय-पुण० पु० पा०।
(७) इवेत-पुण० पु० पा०। (८) सामग्रीतः सम्भवो—पुण० पु० पा०।
(९) यत एवेत्यर्थः—पुण० पु० पा०। (१०) पेक्षया-पुण० पु० पा०।

कल्पलता ।

नाऽर्थक्रिया, तथाऽप्यन्वयव्यतिरेकाभ्यां प्राधान्येनाङ्कुरं प्रति बीजस्यैव प्रयोजकत्वं गृहीतमिति तयाऽर्थक्रियया तदेव निश्चीयते इत्यत आह(१) । काश्चिदिति । तर्हि द्रव्यं पृथिवी वृक्षः(२) शिंशपेत्यत्रापि द्रव्यत्वेन संयोगं प्रति पृथिवीत्वेन गन्धं प्रति वृक्षत्वेन पत्रकाण्डादिकं प्रति शिंशपात्वेन तद्विशेषं प्रति अन्वयव्यतिरेकाभ्यां कारणत्वावधारणात् सर्वे प्रत्यया यथार्था इत्यायातमित्याह । तर्हीति ॥

स्यादेतत् । न धर्मान्तराकारेण(३) प्रतिभासभेदो भेदहेतुः, किन्तु परोक्षापरोक्षरूपतया(४) । सा हि

दीधितिः ।

किन्त्विति । पारोक्ष्यापारोक्ष्ये(५) परोक्षापरोक्षविषयकत्वे । न चैकं वस्तु परोक्षमपरोक्षं च सम्भवति, विरोधात् । तथात्वे(६) वा तद्विषयकस्यैकस्य(७) विज्ञानस्य परोक्षापरोक्षोभयरूपतापत्तेः(८) । परोक्षत्वापरोक्षत्वे(९) रूपस्पर्शाविव धर्मिणो धर्मभेदौ, तद्विशिष्टश्च धर्मी परोक्षापरोक्षयोर्विज्ञानयोर्विषयः, रूपस्पर्श-

दीधितिटिप्पणी ।

ज्ञानत्वादिवत् पारोक्ष्यापारोक्ष्यस्य ज्ञानवृत्तित्वे न विषयभेद इत्यत आह । पारोक्ष्येति । न च बहुव्रीहिः किमर्थमिति वाच्यम् । विषय-

(१) तया मुक्तिपर्यन्तं तदेव विधीयत इत्यत आह—कलि० मु० पु० पा० ।

(२) वृक्षश्चायं—कलि० मु० पु० पा० । (३) धर्मान्तराकारेण न—पा० २ पु० ।

(४) पारोक्ष्यापारोक्ष्यरूपतया—गुण० पु० पा०, पारोक्ष्यरूपतया—पा० २ पु० ।

(५) परोक्षत्वापरोक्षत्वे—गुण० पु० पा० ।

(६) तथात्वे, एकस्यैव विषयस्य परोक्षापरोक्षोभयरूपत्वे ।—गुणानन्दः ।

(७) तद्विषयकस्यैकस्यैव—गुण० पु० पा० । (८) रूपतापत्तिः—गुण० पु० पा० ।

(९) परोक्षत्वापरोक्षत्वे च—कलि० मु० पु० पा० ।

न धर्मभेदानप्युपादाय(१) समर्थयितुं शक्या, तेष्वपि परोक्षापरोक्षज्ञानोदयात्(२), तत्रापि धर्मान्तरानुसरणेऽनवस्थानादिति चेन्न(३)। तयोरविषयाकारत्वात्। द्विविधो(४) हि ज्ञानधर्मो विषयावच्छेदो जातिभेदश्च। तत्र विषयावच्छेदभेदेन विषयस्य भेदस्थिति(५)रभेदनिराकर-

दीधितिः।

विशिष्ट इव नायनस्पार्शनयोरित्याशङ्कां(६) निराकरोति। सा हीति। तेष्वपीति। तव मत इत्यादि(७)। परोक्षेपि(८) योगिनामपरोक्षज्ञानोपगमात्, अपरोक्षेषु च शाब्दादिपरोक्षज्ञानोपगमात्। विषयावच्छेदः विषयविषयकत्वम्। जातिभेदः विषयास्पर्शी(९) धर्मः। परोक्षत्वस्या(१०)नुभवत्व(११)सङ्करापत्त्या साक्षा-

दीधितिटिप्पणी।

निष्ठपरोक्षत्वादेर्निर्वचने द्विविधो हि ज्ञाननिष्ठधर्म इत्यसङ्गतेः। तद्विशिष्ट इति। न त्वेतावता धर्मिभेदोऽङ्गीकर्तव्य इत्यर्थः। तन्मते तादृशधर्मानङ्गीकारादाह। तव मत इति। तेष्वपीति परोक्षमपि परामृष्टं, तत्र च कथमपरोक्षज्ञानमत आह। परोक्षेपीति। विषय इति शेषः। ननु जातिभेदपदस्य यथाश्रुतार्थकत्वे को दोषः, अत आह। परोक्षत्वस्येति। अनेन ग्रन्थेन परोक्षत्वस्य जातिभेद(त्व)व्यवस्थापनाऽसङ्गते-

(१) धर्मभेदमप्युपादाय—पुण० पु० पा०। (२) पारोक्ष्यापारोक्ष्य-पुण० पु० पा०।

(३) दिति चेत्—पा० २ पु०। (४) द्विधा-पुण० पु० पा०।

(५) भेदासिद्धि-पा० २ पु०। (६) नायनस्पार्शनयोरित्याशङ्क्य—पुण० पु० पा०।

(७) परोक्षत्वापरोक्षत्वयोरस्माभिरनभ्युपगमादाह। तव मत इत्यादीति।—गुणानन्दः।

(८) परोक्षेपि, परोक्षत्वविशिष्टेपि। एवमग्रेपि। परोक्षत्वेनाभ्युपगते अस्मादृशामपरोक्षज्ञानासम्भवादाह। योगिनामिति।— गुणानन्दः।

(९) विषयानिष्ठस्य जातिभेदस्य तथात्वे सिद्धं तदीहितमत आह। विषयास्पर्शीति।—गुणानन्दः। (१०) जातित्वत्यागे प्रयोजनमाह। परोक्षत्वस्येति।—गुणानन्दः।

(११) अनुभवत्वेति। तच्च सति प्रमाणान्तरे जातिरूपं, अन्यथा तु विनिगमकाभावादुभयभेदोपाधिरूपमिति भावः।—गुणानन्दः।

णं वा, न तु द्वितीयेन, तस्य कारणभेदेनैवोपपत्तेः, श्रुत्यनुमितिस्मृतिवत्। यथा च विषयभेदेपि कारणभेदादेवापरोक्षजातीयमिन्द्रियजं ज्ञानं(१), तथा विषयाभेदेपि कारणभेदादेव(२) परोक्षापरोक्षजातीयमिन्द्रियलिङ्गज्ञानं भवत् केन वार्यते। वारणे वा कार्यभेदं प्रति(३) कारणभेदोऽप्रयोजकः स्यात्, तथा चाकस्मिकः स(४) आपद्येत। जातिभेदोऽयं न तू(५)पाधिभेद इति किमत्र निष्टङ्कं(६) कारणमिति

दीधितिः।

त्कारीतरज्ञानत्वरूपत्वोपगमात्, एकस्मिन्नेव विषये शब्दलिङ्गादिरूपकारणवैजात्ये(७) शाब्दत्वानुमितित्वरूपं(८) ज्ञानानां वैजात्यं, भिन्नेपि च घटपटादाविन्द्रियनयनादिरूपकारणसाजात्ये साक्षात्कारित्वचाक्षुषत्वादिरूपं साजात्यमित्युभयतो व्यभिचारात् ज्ञानवैजात्यसाजात्ययोर्विषयभेदाभेदौ न तन्त्रं, किन्त्वन्वयव्यतिरेकाभ्यां कारणवैजात्यसाजात्ये एवेत्याह। न

दीधितिटिप्पणी।

रित्यर्थः। उभयतः अन्वयव्यतिरेकरूपात्। असावयमितिशब्दभेदप्रयो-

(१) मिन्द्रियजज्ञानं–पा० २ पु०। (२) कारणभेदात्—पुण० पु० पा०, पा० २ पु०।
(३) कार्यभेदं प्रति–नास्ति पा० २ पु०।
(४) तथाच स आकस्मिक–पुण० पु० पा०, पा० २ पु०।
(५) जातिभेदोऽयं नो–पुण० पु० पा०, पा० २ पु०।
(६) निष्टङ्क–पुण० पु० पा०, पा० २ पु०।
(७) कारणवैजात्यात्—कालि० मु० पु० पा०। कारणवैजात्ये, तत्तद्वैजात्यनियामककारणवैलक्षण्ये।—गुणानन्दः।
(८) शाब्दत्वानुमितित्वरूप—कालि० मु० पु० पा०।

चेत्, अनुभव एव। न हि व्यवसायकाले(१) पारोक्ष्यापारोक्ष्यस्मृतित्वानुभूतित्वानि परिस्फुरन्ति, असावग्निमानयमग्निमान् सोऽग्निमानिति स्फुरणात्। अनुव्यवसायकाले तु तत्प्रतिभासः, अमुमनुमिनोमि इमं पश्यामि तं स्मरामीत्युल्लेखात्। कथं तर्हि परोक्षोऽर्थः प्रत्यक्षश्चेति व्यवहारः। यथाऽनुमितो दृष्टः स्मृत इति(२)।

---

दीधितिः।

तु द्वितीयेनेत्यादिना प्रघट्टकेन। उपाधिभेदः विषयभेदः(३)। असाविति। अयमग्निमानिति प्रत्यक्षानुमितिशाब्दीनां(४) सोऽग्निमानिति च स्मृत्यनुमितिशाब्दीनां मितानामुदयाच्छब्दभेदोऽप्यकिञ्चित्करः॥

दीधितिटिप्पणी।

जनमाह। अयमित्यादि। भवता शब्दभेदनिबन्धनं प्रत्यक्षे अग्निमानयमिति अनुमितौ असाविति प्रतिवक्तव्यं, तच्च न शक्यते, सर्वाभिलापकशब्दैक्य एव प्रत्यक्षशाब्दाभ्युदयात् शब्दभेदोऽपि न नियामक इत्यर्थः॥

---

कल्पलता।

प्रत्यक्षलैङ्गिकादिविकल्पानां प्रतिभासभेदाद्विषयभेदं शङ्कते। स्यादेतदिति। धर्मान्तराकारमेवाह। परोक्षापरोक्षरूपतयेति। ननु वस्तुधर्मावेव

---

(१) नहि व्यवसायकाल एव-पा० २ पु०। (२) दृष्टः श्रुतश्चेति—पा० २ पु०।

(३) परोक्षत्वस्योपाधित्वोपगमात्मकृतानुपयोगाच्चाह। विषयभेद इति।—गुणानन्दः।

(४) ननु अयमग्निमानिति प्रत्यक्षोल्लेखात् सोऽग्निमानित्यनुमित्युल्लेखात् एकत्र अपरोक्षत्वं अपरत्र परोक्षत्वं भासते इत्यवश्यमभ्युपेयमित्यत आह। अयमिति दृष्टान्तार्थं, सोऽग्निमानित्यादि।

कल्पलता ।

परोक्षत्वा(१)परोक्षत्वे, तद्विषयतया प्रतिभासोऽपि कश्चित्परोक्षः कश्चिदपरोक्ष इत्यत आह । सा हीति । सा परोक्षापरोक्षरूपता । तत्त्वपि धर्मभेदेष्वपि । धर्मप॰ रोक्षताधीना चेत् परोक्षता तदा(२) तत्रापरोक्षज्ञानं न स्यादेवेत्यर्थः । तत्रापीति । परोक्षे धर्मे अपरा परोक्षता॰ ऽपरोक्षे चापरा(३) परोक्षता चेत्तदाऽनवस्थेत्यर्थः । त॰ था च परोक्षापरोक्षलक्षणप्रतिभासभेदाद्विषयभेदः(४) प्रत्यक्षलैङ्गिकादि(५)ज्ञानानामावश्यक इति भावः । परिहरति । न तयोरिति । परोक्षत्वापरोक्षत्वयो॰ र्विषयाघटितत्वादित्यर्थः । तदेवोपपादयति । द्विविधो हीति(६) । विषयावच्छेदः विषयानिबन्धनः, यथा घट॰ ज्ञानपटज्ञानयोरुपाधिभेदः । जातिभेदः कारणभेदप्र॰ योज्यानुमितित्वसाक्षात्त्वादी(७)त्यर्थः । तत्रेति । विषयकृते प्रतिभासभेदे विषयभेद एव तन्त्रम्, न तु जातिकृते, तत्र कारणभेद(८)स्यैव तन्त्रत्वात् । यथा तत्रैव विषये साक्षात्कारिज्ञानमानुमानिकं च ज्ञानं, तथा(९) तत्रैव परोक्षमपरोक्षं चेत्यर्थः । विषयभेदेऽ॰ पि घटपटादिलक्षणविषयभेदेऽपीत्यर्थः । विषयाभेदेऽ॰ पीति । वह्निरूपविषयाभेदेपीन्द्रियादपरोक्षं शब्दलिङ्गा॰ भ्यां च परोक्षं(१०) ज्ञानं स्यादित्यर्थः। कारणे चेति(११)।

(१) परोक्षा—कलि॰ मु॰ पु॰ पा॰ । (२) तदा-नास्ति पा॰ कलि॰ मु॰ पु॰ ।

(३) परोक्षे धर्मे अपरा परोक्षता अपरा च—पुण॰ पु॰ पा॰ ।

(४) भेदेन विषयभेदः-पुण॰ पु॰ पा॰ । (५) प्रत्यक्षे लैङ्गिक-पुण॰ पु॰ पा॰ ।

(६) तद्विरोधो हीति—पुण॰ पु॰ पा॰ । (७) साक्षात्त्ववदि-पुण॰ पु॰ पा॰ ।

(८) तत्र कारण—कलि॰ मु॰ पु॰ पा॰ । (९) तथाच—पुण॰ पु॰ पा॰ ।

(१०) परोक्ष—पुण॰ पु॰ पा॰ । (११) कारणेति—कलि॰ मु॰ पु॰ पा॰ ।

कल्पलता।

कारणभेदपरतन्त्रो यदि कार्यभेदो न स्यात्तदा कार्यवैजात्यमाकस्मिकं स्यादित्यर्थः। जातिभेद इति। परोक्षत्वापरोक्षत्वं च जातिभेदः, न तु विषयकृत उपाधिभेद इत्यत्र किं निश्चायकमित्यर्थः। अनुभव एवेति। अनुव्यवसाय एवेत्यर्थः। तदेव विशदयति। न हीति। असावित्यनुमित्याकारं अयमितिप्रत्यक्षाकारं(१) सोऽग्निमानिति स्मरणाकारं दर्शयित्वा त्रयाणामपि ज्ञानानामनुव्यवसायाकारं दर्शयति। अमुमनुमिनोमीत्यादि(२)॥

यदप्यत्यन्तविलक्षणानामित्यादि, तदपि सन्दिग्धानैकान्तिकम्, विधिनापि तथाभूतेन सालक्षण्यव्यवहारस्य निर्वाहात्। तथा ह्ययं व्यवहारो न निर्निमित्तः, नाप्यनेकनिमित्तः, नाप्यनेकासंसर्ग्ये(३)कनिमित्तः(४), अतिप्रसङ्गात्। ततोऽनेकसंसर्ग्ये(५)कानिमित्तः(६) परिशिष्यते। तथा च(७) तादृशस्य(८) विधिरूपत्वे को विरोधः, येन व्याप्तिः(९) स्यात्, प्रत्युत निषेधरूपतायामेव विरोधो दर्शितः प्रागिति कृतं पल्लवसमुल्लासैः(१०)।

(१) असावित्यनुमित्याकारं अयमिति प्रत्यक्षाकारं—नास्ति पा० कालि० मु० पु०।
(२) अनुमित्यादि—कालि० मु० पु० पा०। (३) नाप्यनेकासंसर्गि—कालि० मु० पु० पा०।
(४) निमित्तकः—पा० २ पु०। (५) ततोऽनेकसंसर्गि—कालि० मु० पु० पा०।
(६) निमित्तोऽयं—कालि० मु० पु० पा०, निमित्तक एव—पा० २ पु०।
(७) तस्य च—पुण० पु० पा०, पा० १ पु०।
(८) तादृश—इति शङ्करमिश्रसम्मतः पाठः। (९) येन प्रतिबन्धः—पा० २ पु०।
(१०) समुल्लासनैः—पुण० पु० पा०, पा० १ पु०।

कल्पलता ।

क्षितीयं परानु(१)मानं दूषयति । यद्यपीति । सन्दिग्धेति । सालक्षण्यव्यवहारहेतुत्वेऽप्य(२)तद्व्यावृत्तिरूपं मास्त्वित्यत्र विपक्षे(३) बाधकाभावादित्यर्थः । अन्यथासिद्धिमुखेन सन्दिग्धानैकान्तिकत्वमेव स्फुटयति । विधिनाऽपीति । विधिरत्र जातिरिति व्यवस्थापयति । तथा हीति । निर्निमित्तत्वे नित्यत्वप्रसङ्गः, अनेकनिमित्तत्वे चाननुगताकारप्रसङ्गः, अनेकासंसर्गै(४)कनिमित्तत्वेऽपि तथेत्यर्थः । तादृशा इति षष्ठी । येन व्याप्तिः(५) स्यादिति । यद्यत्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिनिष्ठमिति तदुपदर्शिता व्याप्तिः सिद्ध्येदित्यर्थः । पूर्वोक्तबाधं स्मारयति । प्रत्युतेति ॥

नापि प्रवृत्त्यादिव्यवहारनिर्वाहकत्वमपोहकल्पनायाः, अन्यावभासादन्यत्र प्रवृत्तावतिप्रसङ्गात् । अध्य-

दीधितिः ।

अपोहमात्रावलम्बी(६) विकल्पो न स्वलक्षणं स्पृशतीति पक्षं निरस्यति । नापीति । अपोहविशिष्टं स्वलक्षणमालम्बते

दीधितिटिप्पणी ।

विकल्पस्य स्वलक्षणास्पर्शित्वमते अन्यावभासो न भवतीत्यत आह । अपोहमात्रेति । यस्माद्विकल्पोऽपोहमात्रावलम्बी अतो न

( १ ) परमार्थ—पुण० पु० पा० ।

( २ ) सालक्षण्यव्यवहारहेतुत्वे हेतुत्वेऽप्य—कालि० मु० पु० पा० ।

( ३ ) विपक्ष—पुण० पु० पा० । ( ४ ) अनेकसंसर्गै—कालि० मु० पु० पा० ।

( ५ ) येन—नास्ति पा० कालि० मु० पु० ।

( ६ ) अपोहविषयकस्य विकल्पस्य स्वलक्षणविषयकत्वोपगमे नानुपपत्तिरित आह । अपोहमात्रेति ।—गुणानन्दः ।

कल्पलता ।

स्येति । स्वलक्षणस्येत्यर्थः । असामयिकत्वात् सङ्केतग्रहाविषयत्वात् (१) । आनन्त्यव्यभिचाराभ्यां स्वलक्षणे समयग्रहानुपपत्तेः, विकल्पोऽप्यनुगतधर्मपुरस्कारेण स्यात्, न च स्वलक्षणं तथेति भावः । तस्मादिति । विकल्पस्यानुगतधर्मविषयत्वाद्वस्तुनश्चाननुगतत्वाद्विरोध एवेत्यर्थः । विरोधमेव दर्शयति । साधारणेति । तस्येति । वस्तुन इत्यर्थः । तथा च वस्त्वात्मतया भानमध्यवसाय इति यदुक्तं तदनुपपन्नमिति भावः ॥

न तृतीयः, प्रवृत्तिसामानाधिकरण्यनियमानुपपत्तेः, भेदाग्रहस्य सर्वत्र सुलभत्वात् । अतेभ्यो भेदो गृहीत इति चेत्, किमतेषु(२) गृह्यमाणेषु अगृह्यमाणेषु वा । नाद्यः, अतेषामपि स्वलक्षणानां विकल्पागोचरत्वात् ।

दीधितिः ।

प्रवृत्तीति । प्रवृत्तेः शाब्दस्य चेदं रजतमित्यादेः सामानाधिकरण्यस्य नियमानुपपत्तेरित्यर्थः । अतेभ्यः अध्यवसेयस्वलक्षणभिन्नस्वलक्षणेभ्यः । अतेषामपीति । न च निर्विकल्पकेनोपस्थितान्यतानि स्वलक्षणानीति वाच्यम्, स्वलक्षणास्पर्शिना वि·

दीधितिटिप्पणी ।

सामानाधिकरण्यस्येति। अत्रायं घट इति शाब्दसामानाधिकरण्यं घटस्वलक्षणं यत्र देशे वर्तते तमादायैव भवति न पट(स्व)लक्षणदेशमादायेति नियमो न स्यात्, यतो भेदाग्रहस्तद्देशमादायेत्युक्तस्य पटस्वलक्षणसाधारणत्वात्। अध्यवसेयः प्रकृते अध्यवसेयः । स्वलक्षणास्पर्शिने·

(१) असामयिकत्वात् सङ्केतग्रहाविषयत्वात्—नास्ति पा० कलि० मु० पु० ।
(२) किमेतेषु—पा० २ पु० ।

न द्वितीयः, अविज्ञाता(१)वधेर्भेदस्याप्रथनात्, प्रथने वा अध्यवसेयाभिमतस्वलक्षणादपि भेदो गृह्येत, अविशेषात्। गृहीतादग्रहो भेदस्यागृहीतेभ्यस्तु तद्ग्रह इति चेत्, यदि धर्मलक्षणो भेदः, तदा विपर्ययः। स्वरू-

दीधितिः।

कल्पेनापोहग्राहिणा चावि(२)कल्पेन तदुभयभेदस्य ग्रहीतुमशक्यत्वात् अनुपस्थितस्वलक्षणान्तरे प्रवृत्तेर्दुर्वारत्वात्। इहोपवने सुरसानि सहकारफलानीत्यादिवाक्यान्नियत(३)विषयेच्छाद्यु(४)त्पादाच्च। गृह्यमाणसाधर्म्यादगृह्यमाणवैधर्म्याच्च ज्ञायमानत्वादपोहे गृह्यमाणेभ्यो भेदस्याग्रहो ग्रहश्चागृह्यमाणेभ्य इत्याशङ्कते। गृहीतादिति। निराकरोति। यदीति। धर्मः अन्योन्याभावः। विपर्यय इति। ज्ञायमानस्यैव प्रतियोगिनोऽन्योन्याभावो गृह्यते नाज्ञायमानस्येत्यर्थः। ज्ञायमानत्वाच्च भेदाग्रहेऽध्यवसेयस्वलक्ष-

दीधितिटिप्पणी।

ति। तथाच कस्तदुभयभेदं गृह्णातु, निर्विकल्पकस्यापोहरूपभेदग्रहणासामर्थ्यात्, विकल्पस्य च स्वलक्षणास्पर्शात्, गृह्यमाणेष्विति पक्षो न घटत इत्यर्थः। स्वयमप्याह। इहोपवन इति। इच्छामादायान्न विशेषः। कीदृशयुक्त्युपष्टम्भेन गृहीतादित्यादि लिखितमतस्तद्दर्शयति। गृह्यमाणेत्यादि। अपोहे अतद्व्यावृत्तिविशिष्टे अलीकघटे गृह्यमाणसाधर्म्यसत्त्वात् गृह्यमाणेभ्यः स्वलक्षणेभ्यो भेदस्याग्रहः, कथं गृह्यमाणसाधर्म्यमपोहेऽस्तीत्यत आह। ज्ञायमानत्वादिति। एवं अपोहे तन्निष्ठागृह्यमाणपटादिवैधर्म्यान्न गृह्यमाणेभ्यः पटादिस्वलक्षणेभ्यो भेदस्याग्रह इति। अपोहनिष्ठतद्वैधर्म्येऽपि ज्ञायमानत्वादिति हेतुर्बोध्यः।

(१) अनिर्ज्ञाता—पा० २ पु०। (२) ग्राहिणा च वि—कलि० मु० पु० पा०।

(३) ननु स्वलक्षणमात्रविषयत्वोपगमे तथात्वेऽपि अपोहप्रकारेण स्वलक्षणे सङ्केते अपोहस्य यद्यत् स्वलक्षणं ज्ञायमानं तत्रैव प्रवृत्तेः सम्भवादाह। नियतेति। नियतविषयकेत्यर्थः।—गुणानन्दः।

(४) विषयेच्छानु—कलि० मु० पु० पा०।

पलक्षणश्चेत्, अविशेषात् सर्वतस्तद्ग्रहोऽन्यत्र तादात्म्यग्रहात्। निःस्वरूपत्वात्तस्य क स्वरूपलक्षणो भेद इति चेत्, अगृहीतादपि तथा स्यात्, अविशेषात्।

दीधितिः।

णानामपि तदानीं ज्ञायमानत्वात्तद्भेदाग्रहात्तत्रापि प्रवृत्तिः स्यादित्यपि द्रष्टव्यम्। स्वरूपम् अधिकरणस्वरूपम्। अविशेषादिति। स्वरूपस्य प्रतियोगिविशेषानियन्त्रितत्वादनियम इत्यर्थः। तदात्मतया प्रतीयमानमधिकरणं न तद्भेदव्यवहारहेतुरत उक्तम्(१), अन्यत्र तादात्म्यग्रहादिति। निर्द्धर्मके चालीके न वैधर्म्यस्य सम्भावना, वैधर्म्यत्वेन च तस्य भानं प्रतियोग्यालम्बनं(२), स्व-

दीधितिटिप्पणी।

ज्ञायमानत्वादित्यादि। घटपटप्रभृतिस्वलक्षणानामेकदा सन्निकर्षे समूहालम्बनरूपमेव निर्विकल्पकं जायते, तदनन्तरं घटमात्रसविकल्पाधीना घटप्रवृत्तिः तत्रस्थपटेऽपि स्यादित्यर्थः। स्वरूपस्येति। स्वरूपभेदस्य तद्व्यक्तिभिन्ननिखिलावधिकतयाऽलीकव्यक्तिभेदग्रहवदध्यवसेयव्यक्तिभेदग्रहस्य सत्त्वादप्रवृत्तिः स्यादित्यर्थः। तदात्मतयेति। तत्प्रतियोगिकभेदाश्रयत्वव्यवहारहेतोरेव तत्प्रतियोगिकस्वरूपभेदात्मकत्वकल्पनादिति। वैधर्म्यरूपभेदमादायानाशङ्कितत्वान्न्यूनतां परिहरति। निर्धर्मक इति। ननु वैधर्म्यमसदेव तत्र भासत इत्यत आह। वैधर्म्यत्वेनेति। तस्य वैधर्म्यस्य ज्ञानं न वैधर्म्यत्वप्रकारं वक्तुं पार्यत इति। प्रतियोगीति। तथाच प्रतियोगिज्ञानं विना कथमस्य सम्भवः। ननु अलीके वैधर्म्यस्य स्वांशे इतराप्रकारकं स्वरूपत एव प्रकारत्वमस्तिव-

(१) हेतुरत आह—कालि० मु० पु० पा०।
(२) प्रतियोग्यालम्बनम्, प्रतियोगिविषयकम्।

निःस्वरूपमपि सस्वरूपमिव भिन्नमिव प्रथितमिति चेत्(१), तत् किमध्यवसेयापेक्षया सस्वरूपमिव न प्रथितम्, अध्यवसेयस्वरूपमिव वा स्फुरितम्। आद्ये अप्रतिपत्तिर्वा स्यात्(२), निःस्वरूपप्रतिपत्तिर्वा स्यात्(३), उभयथापि सामानाधिकरण्य-

दीधितिः।

रूपभानं च साधारणमिति(४) भावः। निःस्वरूपमपीति(५)। अनध्यवसेयापेक्षया सस्वरूपमिव, स्वरूपं च भेदः, अतो भिन्नमिवेत्यर्थः(६)। उभयथापि(७) अज्ञाने निःस्वरूपताज्ञाने च। शाब्दसामानाधिकरण्यप्रवृत्ती नियते न स्याताम्, न ह्यज्ञायमान भेदाग्रहः प्रवृत्त्यादिहेतुः, इदं रजतमित्यादिविकल्पस्य सत्त्व

दीधितिटिप्पणी।

त्यत्राह। स्वरूपभानं चेति। साधारणमिति। निखिलस्वलक्षणवैधर्म्यस्यैवालीके ग्रहान्निखिलस्वलक्षण एव प्रवृत्तिः स्यादित्यर्थः। अनध्यवसेयेति। यादृशानिर्विकल्पानन्तरं प्रवृत्तिर्भवति तादृशानिर्विकल्पाविषयोऽध्यवसेयपदवाच्यः। सस्वरूपत्वेनैव भेदस्यापि प्राप्तौ भिन्नमिवेति निरर्थकं स्यादतः पूरणेन पूर्वस्य हेतुगर्भतामाह। अत इति। स्वरूपञ्च भेद इति ग्रन्थव्याख्यानं न तु पूरणम्। उभयथापीति क्रमेण सङ्गमयति। न हीति। अज्ञायमाने यो भेदाग्रहः। प्रवृत्त्यादीति। आदिपदात्सामानाधिकरण्यपरिग्रहः। तदा दोषमाह। इदमिति। विकल्पस्य असत्त्वेपीति सम्बन्धः।

(१) प्रथितमिति चेन्न–पा० २ पु०। (२) त, अविशेषात्–कालि० मु० पु० पा०।
(३) स्यात्—नास्ति पा० २ पु०।
(४) अध्यवसेयानध्यवसेयेत्यादिः, तथा च उभयस्मादपि भेदो गृहीतः।
(५) निःस्वरूपमपीति—नास्ति पा० पुण० पु०।
(६) स्वरूपं च भेदोऽतो भिन्नमिव—पुण० पु० पा०।
(७) भिन्नमिवेत्यत्र हेतुं पूरयति। उभयथापीति।

दीधितिः ।

इवासत्त्वेपि स्वलक्षणेषु निर्विकल्पकात् प्रवृत्त्याद्यापत्तेः(१)। निःस्वरूपतया ज्ञायमानभेदाग्रहोऽपि(२) न तथा, इदमलीकमिति ज्ञानादपि तद्रापत्तेः(३) । सस्वरूपभानमिति च कोऽर्थः । किं स्वरूपवत्तामात्रभानं(४) अतत्स्वरूप(५)वत्तामात्र(६)भानं वा । न, आद्यं(७) किंचिदितरोपक्षमिति(८) कुतो नियमः । द्वितीये चातत्स्वरूपतया भासमाने कथमतेभ्यो(९) भेदग्रहः । शब्दादित-

दीधितिटिप्पणी ।

निर्विकल्पकादिति प्रकृताभिप्रायम् । उभयथापीत्यस्य द्वितीयमते दोषमाह । निःस्वरूपतयेति । ज्ञायमानेत्यत्र सप्तमीसमासः । स्वयं दूषयति । सस्वरूपभानमिति चेति । तत्र न इति स्वतः पूर्वपक्षप्रतिक्षेपकम्, अत्रैव हेतुमाह। आद्यमिति । आद्यम् स्वरूपवत्तामात्रभानम् । किञ्चिदिति । अनध्यवसेयकिञ्चिदितरेत्यर्थः । अतत्स्वरूपतया अनध्यवसेयस्वरूपतया । अतद्भेदग्रहः अनध्यवसेयभेदग्रहः। प्रत्यक्ष एव कदाचिद्विवादः क्रियतां, शाब्दादौ कथमशक्यभानमित्याह। शब्दादित इति। यद्वा प्रवृत्त्यनुपपत्तिमुक्त्वा शब्देनासामानाधिकरण्यापत्तिं दर्शयति। शब्दादित इति ॥

---

( १ ) प्रवृत्त्याद्यापत्तिः—पुण० पु० पा० । प्रवृत्त्यादीत्यादिपदात् शाब्दसामानाधिकरण्यनिवृत्त्याद्युपग्रहः ।—गुणानन्दः ।

( २ ) ज्ञायमानभेदाग्रहेपि—पुण० पु० पा० ।

( ३ ) तदापत्तेः, प्रवृत्त्याद्यापत्तेः ।—गुणानन्दः ।

( ४ ) किं सस्वरूपतामात्रभानं–पुण० पु० पा० । स्वरूपवत्तामात्रमिति । मात्रेण वक्ष्यमाणातत्स्वरूपवत्तानिरासः । —गुणानन्दः ।

( ५ ) अतत्, अध्यवसेयस्वलक्षणाभिन्नं स्वलक्षणं तत्स्वरूपत एवेत्यर्थः ।—गुणानन्दः ।

( ६ ) अतत्स्वरूपता –पुण० पु० पा० । ( ७ ) नाद्यं,—पुण० पु० पा० ।

( ८ ) किञ्चिद्यदितरदित्यर्थः, तस्य निरवधित्वादिति भावः ।

( ९ ) कथमिति । अन्यथा तादात्म्यग्रहादित्यनेन ततस्तथात्वस्य निरासादिति भावः । इदमुपलक्षणम्, वस्त्वात्मकतया अवस्तुनो भानस्यासम्भवश्च बोध्यः ।—गुणानन्दः । कथमतत्-टिप्पणीकृन्मतः पाठः ।

प्रवृत्ती न स्याताम्। द्वितीयस्तु प्रागेव दूषितः(१)।

दीधितिः।

श्व जायमानो(२) विकल्पः कुतो नियामका(३)दध्यवसेयापेक्षया निःस्वरूपमनध्यवसेयापेक्षया च सस्वरूप(४)मवगाहते अपोहम्। द्वितीयस्त्विति। स्वलक्षणस्य विकल्पविषयत्वायोगात्॥

कल्पलता।

प्रवृत्तीति। प्रवृत्तिनियमस्य शाब्दसामानाधिकरण्यनियमस्य(५) चानुपपत्तेः, भेदाग्रहात् कुत्र प्रवृत्तिः स्यात् कुत्र वायं गौरिति सामानाधिकरण्यं प्रतीयेत। अनियमे हेतुमाह। भेदेति। प्रवृत्ति(६)सामानाधिकरण्यानियमः ज्ञानविषय एव प्रवृत्तिरिति नियमः न स्यादित्येके। प्रवृत्त्या सह ज्ञानस्य सामानाधिकरण्यनियमः समानविषयतानियमः स न स्यादित्यर्थ इत्यन्ये। ननु सामानाधिकरण्यनियमभङ्गस्तदा भवेद्यदि(७) गोविकल्पादश्वे प्रवर्त्तेत, न चैवं, गोविकल्पो ह्यगोव्या(८)वृत्तोयमित्याकारेण जायमानोऽश्वादिव्यवच्छेदं कुर्वन् कथमश्वादिषु प्रवर्त्तयेदित्याशङ्कते।

(१) प्रागेव निरस्तः—पा० २ पु०, प्रागव निराकृतः—पुण० पु० पा०।

(२) शब्दादितस्त्वज्ञायमानो–कालि० मु० पु० पा०। ननु यद्भासते तदपेक्षया निःस्वरूपं यच्च न भासते तदपेक्षयैव सस्वरूपं भासत इति वाच्यमित्यत आह। शब्दादितश्चेति। तत्र स्वलक्षणभानस्यासत्वादिति भावः। इदमुपलक्षणम्, अध्यवसेयस्वलक्षणान्यस्वलक्षणस्यापि तदानीं सम्भवेन तदपेक्षयापि निःस्वरूपताभाने तत्रापि प्रवृत्त्यापत्तिरित्यपि बोध्यम्। —गुणानन्दः।

(३) नियमा—कालि० मु० पु० पा०

(४) च स्वरूप—कालि० मु० पु० पा०।

(५) शाब्दसामानाधिकरण्ये नियमस्य—पुण० पु० पा०।

(६) प्रवृत्तेः—पुण० पु० पा०। (७) स्तदा स्याद्यदि—पुण० पु० पा०।

(८) गोविकल्पो ह्यभ्या–पुण० पु० पा०।

कल्पलता।

अतेभ्य इति। अतेभ्यः अश्वादिभ्यः। अतेषामिति(१)। विकल्पागोचरत्वादिति। तथाच तेभ्यो(२) भेदग्रहोऽस्तु(३)पपन्न इत्यर्थः। अविज्ञातेति(४)। अवधिः प्रतियोगी(५)। प्रतियोग्यस्फुरणे भेदस्यास्फुरणादित्यर्थः। ननु प्रतियोग्यस्फुरणेपि(६) भेदस्फुरणमस्तु को दोष इत्यत आह। प्रथने वेति(७)। एवं सति गोस्वलक्षणादपि गोविकल्पो भेदं गृह्णीयादिश्वप्रवृत्तिरेव स्यादित्यर्थः। अध्यवसेयाभिमत(८)स्वलक्षणः गोस्वलक्षणः। गृहीतादिति। ग्रहणं निर्विकल्पकं, तदनन्तरं यत्सविकल्पकमुत्पद्यते तद्ग्रहणसमानप्रतिभासमतः सारूप्याद्गोस्वलक्षणाद्भेदो(९) न गृह्यते, महिषादिभ्यस्तु भेदो गृह्यत एवेति गोविकल्पो गवि प्रवर्त्तयति न तु महिषमातङ्गादावित्यर्थः। स्वलक्षणान्यव्यावृत्त्योः(१०) ग्रहणविषयत्वसारूप्या(११)द्भेदो न गृह्यत इति तत्र प्रवृत्तिरित्यन्ये। तन्न। उभयोर्ग्रहणविषयत्वस्य परेणानङ्गीकारात्। विपर्यय इति। अपोहे तात्त्विकधर्माभावादित्यर्थः। यद्वा ग्रहणविषयीकृते धर्मिणि भेद एव गृह्यते न तु भेदाग्रह इत्यर्थः।

(१) अतेषामिति-नास्ति पा० पुण० पु०।
(२) विकल्पागोचरत्वात्तेभ्यो-कालि० मु० पु० पा०।
(३) भेदग्रहात्तु-पुण० पु० पा०। (४) अनिर्णीतेति—पुण० पु० पा०।
(५) अवधिः प्रतियोगी—नास्ति पा० कालि० मु० पु०।
(६) प्रतियोग्यस्फुरणेपि—पुण० पु० पा०। (७) प्रथने—कालि० मु० पु० पा०।
(८) अध्यवसेयेति। (सन्)—कलि० मु० पु० पा०।
(९) सारूप्याद्गोलक्षणात्—कालि० मु० पु० पा०।
(१०) स्वलक्षणान्यव्यावृत्तिभ्यो—कलि० मु० पु० पा०।
(११) ग्रहणविषयत्वसारूप्य—पुण० पु० पा०।

कल्पलता।

स्वरूपेति। यथा महिषादिभ्यो भेदग्रहस्तथा गोस्वलक्ष-णादपि स्यादेवापोहस्येत्यर्थः(१)। अन्यत्रेति। तादा-त्म्यग्रहात् अन्यत्र, तादात्म्यग्रहविरहे सर्वतस्तद्ग्रह इत्यर्थः(२)। तादात्म्यग्रह एव भेदग्रहे प्रतिबन्धकः, स चापोहस्य केनापि वस्तुना नास्तीति सर्वत्र प्रवृत्तिर-प्रवृत्तिर्वा(३) स्यादिति भावः(४)। तस्येति। अपोहस्ये-त्यर्थः। अगृहीतादपीति। तथा स्यादिति। भेदा-ग्रह एव स्यादित्यश्वादावपि स एव प्रवृत्तिप्रसङ्गः, न हि तदपेक्षयाऽपोहो न निःस्वरूप इत्यर्थः। निःस्वरू-पमपीति। तथा चाश्वादितो भेदग्रह एवेति तत्र न प्रवर्त्तते इत्यर्थः। तत् किमिति(५)। यथाऽश्वादेर्भिन्न-मिव प्रथितं तथाऽध्यवसेयाद्गोस्वलक्षणादपि कथं न तथा(६) प्रथेतेति तद्भेदग्रहात्तत्रापि न प्रवृत्तिः स्यादि-त्यर्थः। अध्यवसेयेति। स्वलक्षणस्वरूपमिवे(७)त्य-र्थः। आद्य इति। सस्वरूपप्रथा चाप्रतिपत्तौ निः-स्वरूपप्रतिपत्तौ च स्यादित्यर्थः। उभयथापीति। न ह्यप्रतिपत्तौ गौरयमिति सामानाधिकरण्यं प्रवृत्तिर्वा तत्र(८) अवश्यं निःस्वरूपप्रतिपत्तावपीत्यर्थः। प्रागे-वेति। स्वलक्षणस्य विकल्पासंस्पर्शादित्युक्तत्वादित्यर्थः॥

(१) स्यादेवापोहस्येवेत्यर्थः— कालि० मु० पु० पा०।

(२) तादात्म्यग्रहात् अन्यत्र तादात्म्यग्रहविरहे सर्वतस्तद्ग्रह इत्यर्थः—नास्ति० पा० कालि० मु० पु०।

(३) सर्वत्र प्रवृत्तिर्वा—पुण० पु० पा०।

(४) स्यादित्यर्थः—कालि० मु० पु० पा०।

(५) तत्किमिति—नास्ति० पा० पुण० पु०।

(६) कथं तथा न—पुण० पु० पा०।

(७) स्वलक्षणस्वरूपमिव—पुण० पु० पा०।

(८) तत्र—नास्ति पा० पुण० पु०।

नापि चतुर्थः, नीलानुभववासना(१)समुत्थस्य पीतानुभवस्य नीले प्रवर्त्तकत्वप्रसङ्गात्। नानुभवः प्रवर्त्तकः, अपि तु विकल्पः, स च(२) यस्मात् तस्यैव विषय इति चेत्। यस्मादिति साक्षात् परम्परया वा।

दीधितिः।

वस्तुवासना वस्तुग्रहजन्यः(३) संस्कारः, स चातीन्द्रियो वा(४) तदुत्तरभाविवि(५)ज्ञानसन्तानो वा। नाद्यः, भवद्भिस्तदन(६)भ्युपगमात्। न द्वितीयः, नील(७)ग्रहजन्यपीतानुभवजनितपीतविकल्पान्नीले प्रवृत्तिप्रसङ्गात्। अथ वस्तुनो ग्रहणमेव वास्यते अनेनेति व्युत्पत्त्या वासनेति चेत्, तज्जन्यः वस्तुग्रहणसमुत्थत्वेन तादृशविकल्पत्वेन वा। (८) आद्ये, नीलेति। द्वितीयं शङ्कते। नानुभव इति। यस्मात् अनुभवात्। तस्यैव विषये तद्विषयसान्तानिके। विकल्पजनकानुभवविषयस्य चिरातीतत्वात्(९)। प्रवर्त्तक इत्य(१०)नुषज्यते। निर्विकल्पकपृष्ठभाविनः सविकल्पक-

दीधितिटिप्पणी।

अनभ्युपगमादिति। अस्मत्सिद्धसंस्कारस्य तैरनङ्गीकारात्। नीलग्रहणेति। जन्यपदमुत्तरभाविपरम्। नीलेतीति। नीलनिर्विकल्पानन्त-

(१) नीलानुभव—पुण० पु० पा०, पा० २ पु०। (२) स—पा० २ पु०।

(३) वस्तुग्रहणजन्यः—पुण० पु० पा०। (४) स चातीन्द्रियः—पुण० पु० पा०।

(५) तदुत्तरभावि—कालि० मु० पु० पा०।

(६) भवद्भिरन—पुण० पु० पा०।

(७) नीलेति। तादृशविकल्पस्यापि नीलात्मकवस्तुग्रहणेन परम्परया जननादिति भाव।—गुणानन्दः।

(८) भ्युपगमात्। द्वितीये च तत्समुत्थोऽनुभवो वा तथाविधविकल्पो वा—पुण० पु० पा०।

(९) चिरातीतत्वादिति। तैरनुभवविषयमात्रस्यैव क्षणिकत्वोपगमादिति भावः—गुणान...

(१०) विषय इत्यत्र सप्तम्यर्थान्वयिनमनुषङ्गेण योजयति। प्रवर्तक इतीति।—गु...

प्रथमे शाब्दलैङ्गिकविकल्पाना(१)मप्रवर्त्तकत्वप्रसङ्गः। द्वितीये तु(२) स एवातिप्रसङ्गः(३)।

दीधितिः।

स्य साक्षात्त्वारोपपात्रस्य(४) साक्षादनुभवजन्यत्वात् तमुपेक्ष्याह(५)। शाब्देति। तेषां चिरमतीतेऽनुभवे सपरिकरशब्दलिङ्गज्ञानजन्यत्वात्॥

दीधितिटिप्पणी।

साक्षात्त्वाविपीसनिर्विकल्पस्य वस्तुग्रहणसमुत्थत्वसत्त्वादित्यर्थः। साक्षात्त्वारोपेति हेतुगर्भं विशेषणम्। तन्मते साक्षादनुभवजन्य एव साक्षात्त्वारोपात्। तेषां शब्दलिङ्गविकल्पानां, जन्यत्वादित्यनंतरं न साक्षादनुभवजन्यत्वमिति शेषः॥

कल्पलता।

वस्तुवासनासमुत्थ(६)त्वं वेति पक्षं दूषयति। नापीति। स्ववासनापरिपाकवशादुपजायमानैव सा बुद्धिरपश्यन्त्यपि बाह्यं बाह्ये प्रवृत्तिमातनोतीति ज्ञानश्रियाः यत्समाहितं तदपि न सम्भवतीत्यर्थः। अनुभवरूपा वासना अनुभववासना(७), तन्मते तदतिरिक्तस्थायिसंस्काराभावात्, तथा च पीतानुभवोपि नीले प्रवर्त्तयेदित्याह(८)। नीलानुभवेति। पीतानुभवस्यापि नीलानुभवसमुत्थत्वादित्यर्थः। नीलानुभवः नीलनि·

(१) शाब्दलैङ्गिकज्ञानाना—कलि० मु० पु० पा०, शाब्दे लैङ्गिकविकल्पाना—पा० २ पु०।
(२) द्वितीये—पा० २ पु०। (३) स एव पुनरतिप्रसङ्गः—पा० २ पुं०।
(४) साक्षात्त्वारोपमा—कलि० मु० पा०, साक्षात्त्वारोपपद—पा० २ पु०। अरोपपात्रस्य, आरोपविषयस्य।
(५) तदुपेक्ष्याह—पुण० पु० पा०।
(६) वस्तुवासनासमुत्पन्नं—कलि० मु० पु० पा०।
(७) अनुभववासना—नास्ति पा० कलि० मु० पु०। (८) प्रवर्तयेदित्यर्थः—पुण० पु० पा०।

कल्पलता ।

विकल्पकं, तच्च न प्रवर्त्तकमपि तु नीलसविकल्पकं, तच्च नीलानुभवेनैव जनितमतस्तद्विषये नीलस्वलक्षण(१) एव प्रवर्त्तयतीत्याह । नानुभव इति । विषये इति सप्तमी, प्रवर्तक इत्यनुषज्यते(२) । शाब्देति(३) । शाब्दलैङ्गिकविकल्पानां साक्षान्निर्विकल्पकाजन्यत्वेनाप्रवर्त्तकत्वप्रसङ्ग इत्यर्थः । स एवेति । नीलानुभवोऽपि परम्परया पीतसविकल्पकं जनयतीति तस्यापि नीले प्रवर्त्तकत्वप्रसङ्ग इत्यर्थः ॥

अनुभवव्यापारपुरस्कारान्नियम इति चेत् ।

दीधितिः ।

यो विकल्पो यस्यानुभवस्य व्यापारं पुरस्कुरुते स तस्य विषये प्रवर्त्तयतीति नातिप्रसङ्ग इत्याशङ्कते । अनुभवेति । व्यापारः धर्मः(४), स च स्वलक्षण(५)विषयत्वम्, अनुभवत्वम्, प्रामाण्यम्, भेदानवगाहित्वम्, तच्च स्वरूपतो विषयतश्च, आद्यमात्मनो(६)ऽनुभवभेदानवगाहित्वं, द्वितीयं स्वविषयस्यानुभवविषयभेदानवगाहित्वं, अपारोक्ष्यं, सरूप(७)विषयत्वं, सारूप्यं च स्वलक्षणालीक-

दीधितिटिप्पणी ।

निषेध्यसमसङ्ख्यमेवाह । स चेति । अस्यैव भेदमाह । तच्चेति । तदेव विशदयति । आद्यमिति । इतरावपि व्यापारावाह । अपारोक्ष्यमित्यादि । मूललिखितं विषयसारूप्यं ज्ञानावृत्तीत्यतस्तदर्थमाह । सरूपविषयत्वमिति । अस्यैव सरूपपदस्यार्थमाह । सारूप्यमिति ।

(१) तद्विषये स्वलक्षण--पुण० पु० पा० ।

(२) विषय इति सप्तमी, प्रवर्तक इत्यनुषज्यते--नास्ति पा० कालि० मु० पु० ।

(३) शब्देति—पुण० पु० पा० ।

(४) प्रसिद्धव्यापारार्थकत्वे अभिमतविधानुपपत्तेराह । व्यापारो धर्म इति । —गुणानन्दः ।

(५) स्वलक्षणेति । तस्यैवानुभवविषयत्वादिति भावः । —गुणानन्दः ।

(६) आद्यस्यात्मनो-पुण० पु० पा० । (७) रोदपं स्वरूप--कालि० मु० पु० पा० ।

कः पुरस्कारार्थः । न तावदनुभवैकविषयत्वं, विकल्पेन तदसंस्पर्शात् । नाप्यनुभवत्वारोपः, स्वात्मनि कल्पनापोढाभ्रान्तत्वात्, विषये चाभिलापसंसर्गयोग्यप्रतिभास-

दीधितिः ।

योरेकरूपशालित्वं, पुरस्कारश्चानुभवत्वप्रामाण्ययोरारोपः, अपरेषामाश्रयत्वम् । (१)सर्वाणि दूषयितुं पृच्छति । क इति । पुरस्कारार्थः पुरस्कारान्तार्थः(२) । तदसंस्पर्शात्(३) अनुभवविषया(४)संस्पर्शात्(५) । अनुभवत्वारोपः स्वात्मनि(६), स्वविषये वा । आद्यस्यासम्भवमाह । स्वात्मनीति । कल्पनापोढः कल्पनाव्यावृत्तः, प्रमेति(७) यावत् , अतोऽभ्रान्तत्वात् अनारोपत्वात् गुरूणामिव भवतामपि सर्वज्ञानानां स्वात्मन्यनुभवरूपत्वात्(८) । यद्वा(९) कल्पनापोढत्वात् असत्ख्यातिव्यावर्त्तकत्वादिति(१०) परमतेन । अभ्रान्तत्वादिति स्वमतेन(११) । अस्वप्रकाशेपि तदक्षतेः(१२) ।

दीधितिटिप्पणी ।

परमतेन बौद्धमतेन । स्वम् नैयायिकमतम् । ननु स्वमते कथं स्वात्म विषयत्वाभावादभ्रान्तत्वमत आह । अस्वप्रकाशेऽपीति । स्वविषयत्वा।

(१) पः, परेषामाश्रयत्वम् । क्रमेण—पुण० पु० पा० ।

(२) आरोपाश्रयत्वयोरेव पुरस्कारार्थत्वेन वक्ष्यमाणविशिष्टस्य तथात्वकल्पनानुपपत्तेराह । पुरस्कारान्तार्थ इति ।—गुणानन्दः । (३) तदस्पर्शात्—पुण० पु० पा० ।

अनुभवविषयेति । —गुणानन्दः । तत्पदस्यानुभवपरत्वभ्रमं निराकुर्वन्नाह ।

(४) तत्पदस्यानुभवपरत्वभ्रमं निराकुर्वन्नाह । अनुभवविषयेति । —गुणानन्दः ।

(५) विषयास्पर्शात्—पुण० पु० पा० ।

(६) स्वात्मनि स्वस्मिन्, सप्तम्यर्थश्चावच्छेदकत्वं, तथाच स्वप्रकाशस्य तस्य विकल्पस्य स्वात्मकविषयावच्छेदेन अनुभवत्वारोपः, अपोहरूपविषयावच्छेदेन वेति फलितम् । —गुणानन्दः ।

(७) कल्पनाव्यावृत्तेरज्ञानसाधारण्यादाह । प्रमेति ।—गुणानन्दः ।

(८) अनुभवरूपत्वात्, प्रमारूपत्वात् ।

(९) प्रथमं हेत्वाकाङ्क्षाविरहात् तदुक्तौ अप्राप्तकालत्वादाह । यद्वेति ।—गुणानन्दः ।

(१०) तथाच विकल्पस्यालीकप्रतिभासत्वादिति मूलार्थः । प्रतिषेध्यश्चासत्ख्यात्युपनीतः इति भेदः ।—गुणानन्दः ।

(११) स्वमतेऽपि-पाठः । स्वमतेपीत्यपिना परमतस्य समुच्चयः; (१२) तदक्षतेः, अनुभवत्वाक्षतेः ।—गुणानन्दः ।

त्वात्, तथानवभासे(१) वा विकल्पत्वव्याघातात्, विशेषोपलब्धौ चा(२)रोपासम्भवात् ।

दीधितिः ।

द्वितीयस्यापि तमाह(३) । विषये चेति(४) । अभिलापसंसर्गयोग्यम् बाह्यमलीकम्(५) । मा भवतु(६) वा विकल्पः स्वात्मन्यप्यनुभव-रूपः(७), सम्भवतु(८) वा अनुभवत्वारोपस्तत्र तद्विषये वा,(९) तथापि नियतप्रवृत्त्यनुपपत्तिः(१०), अनुभवत्वस्य सर्व-निर्विकल्पकसाधारणत्वात्, ( तत्र ) नीलाद्यनुभवत्वं तु नीला-द्यग्राहिणा विकल्पेन ग्रहीतुमशक्यमिति ॥

दीधितिटिप्पणी ।

भावे तदंशे भ्रान्तत्वं नास्त्येव यत इत्यर्थः । बाह्यमलीकमिति । तथा चानुभवस्य(११) बाह्यालीकत्वाभावान्न विषयांशे आरोपाविषय-त्वमित्यर्थः । मूले एतानि कथं दूषितानि, एतदागमनेपि तत्समीहि-तासिद्धेरित्यभिप्रायेण स्वयं दूषयति । मा भवत्विति । सर्वनिर्विक-ल्पकेति । तथाच स्वविषयकानुभववृत्ति अनुभवत्वं यत्र यत्रारोप्यते स स विकल्पस्तादृशविषयेषु प्रवर्तयतीति भवद्युक्त्या निखिलस्वल-क्षण एव प्रवृत्तिः स्यादित्यर्थः । ननु विषयविशिष्टानुभवत्वमारो-पणीयमत आह । तत्तदितीति(१२) ॥

(१) तथानवभासे, अलीकानवभासे । (२) विषयोपलब्धावा—पुण० पु० पा० ।

(३) तम्, असम्भवम् । (४) विषयेति—कलि० मु० पु० पा० । विषये चेति—पाठः ।

(५) बाह्यम्, अपोहरूपम्, अत एवालीकम्, तथाच विशेषदर्शनसत्त्वान्नारोपसम्भव इति भावः ।—गुणानन्दः ।

(६) मा भवत्विति । स्मृत्यन्यज्ञानत्वं प्रकृते अनुभवत्वं वाच्यं, तच्च नाव्याप्यवृत्तीति भावः ।—गुणानन्दः । (७) स्व आत्मन्यनुभवरूपः—कलि० मु० पु० पा० ।

(८) सम्भवतु वेति । अलीकत्वस्य अलीकविषयत्वस्य चानुभवत्वाभावव्याप्यतया तदानीम-ग्रहादिति भावः ।—गुणानन्दः । (९) वा, न—पुण० पु० पा० ।

(१०) नियतप्रवृत्त्युपपत्तिः—पुण० पु० पा० ।

(११) नुभवत्वस्य—इत्यादर्शपुस्तके पाठः ।

(१२) ह । नीलादीति—इति युक्तः पाठः । ह । तत्तदिति—इति पाठस्तु नीलाद्यनुभवत्वं त्वितिदीधितौ तत्तदनुभवत्वं त्विति पाठमादृत्य लिखित इति प्रतिभाति ।

कल्पलता ।

ननु नीलानुभवस्य व्यापारं नीलविकल्प(१) एव पुरस्करोति, न तु पीतविकल्पक(२) इति न तस्य नीले प्रवर्त्तकत्वं, किन्तु नीलविकल्पस्यैव तत्र प्रवर्त्तकत्वमित्याह । अनुभवेति । व्यापारपुरस्कारश्च जन्यजनकभावव्यवस्थितत्वे त्वयापि वाच्य एवेति भावः । तदसंस्पर्शादिति । अनुभवविषयस्य स्वलक्षणस्यासंस्पर्शादित्यर्थः । नन्वारोपितनीलानुभवात्मा(३) नीलविकल्पो नीले प्रवर्त्तयति, पीतविकल्पे(४) तु वैधर्म्यान्नीलानुभवत्वानारोपादित्यत आह । नापीति । (५) अनुभवत्वं विकल्पस्वरूपे वा समारोप्यते तद्विषये वा । नाद्य इत्याह । स्वात्मनीति । कल्पनापोढत्वेन कल्पनाव्यावृत्तत्वेनाभ्रान्तत्वात् । न हि विकल्पः स्वात्मनि वस्तुभूते कल्पना(६), किं तु स्वविषयेऽलीके(७), तथा च कथमारोप इत्यर्थः । अन्त्य आह । विषये चेति । अभिलापसंसर्गयोग्यो विकल्प(८)विषयोऽलीकं, तत्र चा(९)रोपो न सम्भवति, विशेषदर्शनप्रतिहतत्वादित्यर्थः । ननु मास्तु विकल्पोऽभिलापसंसर्गयोग्यप्रतिभास इत्यत आह । तथेति । ननु भवत्वभिलापसंसर्गयोग्यप्रतिभासस्तथाप्यारोप उपपद्यतामत आह । विशेषेति(१०) ॥

(१) नीलसविकल्पक—पुण० पु० पा० । (२) पीतविकल्प—पुण० पु० पा० ।
(३) नन्वारोपितनीलानुभवत्वेन—पुण० पु० पा० । (४) पीते विकल्पे—पुण० पु० पा० ।
(५) नापीति । विकल्पस्य स्वप्रकाशत्वात् स्वलक्षणरूपतद्विषयत्वांशे अनुभवादिति भावः । पुरस्कारार्थ इत्यनुषज्यते । एवमग्रेपि ।—पुण० पु० पा० ।
(६) ते विकल्पना—पुण० पु० पा० । (७) तु विषयेऽलीके—कलि० मु० पु० पा० ।
(८) संसर्गयोग्यप्रतिभासत्वाद्विकल्प—पाठः ।
(९) तत्र त्वा—कलि० मु० पु० पा० । (१०) विशेषेति—नास्ति पा० पुण० पु० ।

नापि तद्धर्मप्रामाण्यारोपः, तस्यानियतविषयत्वे प्रवृत्तिनियमानुपपत्तेः। परमार्थसद्विषयत्वे च तस्य

दीधितिः।

तद्धर्मः तस्यानुभवस्य धर्मः। प्रामाण्यं प्रामाण्यापोहो वा तत्तत्स्वलक्षणात्मकाविषयगर्भं वा तदन्यापोहरूपविषयघटितं वा।(१) आद्ये, तस्येति। तस्य प्रामाण्यस्य। अनियतविषयत्वे विषयानियमितत्वे(२) विषयाघटितत्व इति यावत्। प्रवृत्तिनियमानुपपत्तेः गवान्यापोहस्य सकलगोसाधारण्यवत् प्रामाण्यापोहस्य(३) सकलानुभवसाधारण्यात्। तदन्यापोहस्य(४) तद्धर्मत्वानभ्युपगमे तु न तथा तद्धर्मवत्त्वारोपसम्भवः(५)। तदन्यापोहस्तत्स्वरूपमेवेति(६) चेत्। अनुभवाग्राहिणो विकल्पस्य तत्स्वरूपतदन्यापोह-

दीधितिटिप्पणी।

प्रामाण्यपदस्यार्थं वितर्कयति। प्रामाण्यापोहो वेत्यादि। अयं प्रामाण्यापोहः प्रामाण्यव्यावृत्तिः। तदन्येति। स्वलक्षणान्येत्यर्थः। प्रामाण्यस्य विषयाभावादाह। विषयानियमितत्व इति। तच्चाविषयाघटितत्वे। ननु प्रामाण्यापोहस्य यद्यनुभवधर्मत्वमङ्गीक्रियते तदानुभववृत्तितया सकलानुभवसाधारण्यं स्यात्, न चैवम्, इत्यत आह। तदन्यापोहस्येति। न तथा न तेन प्रकारेण। अनुभवधर्मप्रामाण्यारोपसम्भवः, तथाच यदुक्तं तन्न सम्भवतीत्यर्थः। तत्स्वरूपमेवेति। तथाच

(१) तस्यानुभवस्य धर्मः यत्र क्वचिद्वा, तदनुभवविषये स्वलक्षणे वा, तदनुभवविषयस्वलक्षणान्यापोहे वा, तद्धर्मं प्रामाण्यमारोपयन् विकल्पस्तद्विषये प्रवर्तयति।—पुण० पु० पा०।

(२) यद्विषयत्वं तन्नियतमेवात आह। विषयानियमितत्व इति। नियमांशस्य दुर्वचत्वादाह। विषयाघटितत्व इति।—गुणानन्दः।

(३) प्रमान्यापोहस्य—पुण० पु० पा०।

(४) ननु वस्तुतो ये ये नीलानुभवास्तदन्यव्यावृत्तेरसाधारण्यं स्यादित्यनुशयादोपान्तरमाह। तदन्यापोहस्येति। सदसतोः सम्बन्धानुपगमात् अनीलादिव्यावृत्त्यादेः नीलादिधर्मत्वानुपगमे न प्रामाण्यारोपस्य तद्धर्मारोपत्वसम्भवः, तस्य तद्धर्मत्वाभावादिति भावः।—गुणानन्दः।

(५) तु न तस्य तद्धर्मारोपत्वसम्भवः—पुण० पु० पा०।

(६) तत्स्वरूपमेवेति। तथाच तस्यापि सत्त्वात्र सम्बन्धविरोध इति भावः।—गुणानन्दः।

विकल्पसंसर्ग(१)प्रसङ्गात् । अलीकविषयत्वे चाप्र-

दीधितिः ।

ग्राहित्वायोगात् । द्वितीये(२), परमार्थेति । परमार्थसद्विषयत्वे परमार्थसत्स्वलक्षणात्मकविषयघटितत्वे । तस्य स्वलक्षणस्य । विकल्पेति । तदग्राहिण(३)स्तद्घटितप्रामाण्यग्राहित्वायोगादिति भावः । तृतीये, अलीकेति । अलीक(४)विषयत्वे अलीकरूपविषयघटितत्वे । असत्त्वादलीकस्यानुभवागोचरत्वाच्च तद्धटितप्रामाण्यस्यानुभवाधर्मत्वादसद्धर्मतया विरोधेन दुर्ज्ञेयत्वाच्च(५) न तदारोपात्प्रवृत्तिनियमः(६) । असतः सत्त्वारोपात्खण्डशः प्रसिद्ध्या-

दीधितिटिप्पणी ।

धर्मधर्मिणोरभेदवादिनां मते तद्धर्मत्वमस्तीति भावः । अलीकस्येति पूर्वपरयोरन्वयि । अत्र च प्रवृत्तिनियमाभावेऽनुभवाधर्मत्वादित्यादि हेतुद्वयम् । अनुभवाधर्मत्वे चासत्त्वादिति हेतुद्वयम् । दुर्ज्ञेयत्वादिति । प्राक् अलीकस्यानुभवागोचरत्वमुक्तं, इदानीं तद्धटितप्रामाण्यस्यालीकविशिष्टबुद्ध्यनुदयात् दुर्ज्ञेयत्वमुक्तम्, एवं अलीकत्वस्य प्रामाण्यविरोधितया तत्प्रकारोपस्थितौ प्रामाण्यं दुर्ज्ञेयमित्यर्थः । असत्ख्यात्युपनीतालीकस्य च तन्मते अखण्डस्यैवारोपोऽङ्गीक्रियते, न तु सखण्डस्येति न कोपि दोषः । असत्त्वप्रकार एव दुर्ज्ञेयत्वं न तु सदुपरागेणेत्यत आह । असत इति । नन्वसति सत्त्वारोपेपि तादृशासद्घटितप्रामाण्यस्याप्रसिद्धौ कथमारोप इत्यत आह । खण्डश इति ॥

(१) विकल्पसंस्पर्श—पा० २ पु० ।

(२) अनियतविषयत्वे नियतविषयत्वेनाप्रयोजकत्वे प्रामाण्यस्य सर्वानुभवसाधारणत्वात् सर्वानुभवविषये प्रवृत्तिप्रसङ्गात् । द्वितीये—पुण० पु० पा० ।

(३) तदग्राहिण इति । आरोपात्मकविकल्पस्येति शेषः ।—गुणानन्दः ।

(४) अलीकेति । अलीकेऽसति ज्ञानस्य प्रमात्वग्रहासम्भवात्प्रवृत्त्यनुपपत्तिरित्यर्थः ।

(५) असद्धर्मतया प्रामाण्यबाधेन तद्धटितधर्मस्य तादृशस्य न तद्धर्मप्रामाण्यत्वमिति तेन रूपेण तस्य दुर्ज्ञेयत्वादित्यर्थः ।—गुणानन्दः ।

(६) तदारोपात्प्रवृत्त्युपपत्तिरित्यर्थः—कलि० मु० पु० पा० ।

वृत्तेः। अलीकस्यानलीकतया स्फुरणं(१) (तु) निषिद्धम्।

दीधितिः।

ऽऽरोप(२) इत्यपि नास्तीत्याह(३)। अलीकस्येति(४)। (असतो निर्धर्मकत्वेन तदुपस्थितेरेव विशेषदर्शनत्वात् सदसतोः सारूप्याभावाच्च नासति सद्धर्मारोप इत्यर्थः। अतद्व्यावृत्तिविषयकत्वेन तत्र प्रवर्तकत्वं स्वनये सम्भवदुपेक्ष्य अनुभवव्यापारपुरस्कारालम्बनं बालकविचेष्टितम्, न वा अनुगतगोत्वादिकमनालम्ब्य गवादिपदाद् गवादिव्यावृत्तिरनतिप्रसक्त्या शक्यप्रतिपदा, तदालम्बने तु किमपराद्धं तद्विषयत्वेन, प्रतिविहितं(५) च तत्रापीति भावः। यद्वा विषयविशेषाघटितं वा तदनुभवविषयस्वलक्षणघटितं वा तदनुभवविषयस्वलक्षणान्यापोहघटितं वा प्रामाण्यमारोपयन् विकल्पस्तदनुभवविषये प्रवर्त्तकः। आद्ये, तस्येति। तस्य प्रामाण्यस्य। द्वितीये, परमार्थेति। स्वलक्षणमगृह्णता तद्घटितस्य प्रामाण्यस्य ग्रहीतुमशक्यत्वात्। तृतीये, अलीकेति। असत्त्वात् अलीकस्यानुभवागोचरत्वाच्च तद्घटितप्रामाण्यस्यानुभवाधर्मत्वात् अमद्धर्मतया विरोधेन दुर्ज्ञेयत्वाच्च न तदारोपात्प्रवृत्तिनियम इत्यर्थः। असतः सत्त्वारोपात् खण्डशः प्रसिद्ध्याऽऽरोप इत्यपि नास्तीत्याह। अलीकस्य चेति) (६)॥

---

(१) तया तत्स्फुरणं—पा० २ पु०।

(२) असतः, निरुक्तप्रामाण्यघटकालीकस्य, सत्त्वारोपात् खण्डशः प्रसिद्ध्या सविषयकत्वस्यारोपः, तथाच तद्विषयेऽसति सत्त्वारोप एव तदारोप इति भावः।—गुणानन्दः।

(३) प्रामाण्यारोपः स्यादित्याह—पुण० पु० पा०।

(४) अलीकस्य चेति—पुण० पु० पा०।

(५) अन्यव्यावृत्यस्फुरणे गां बधानेत्युक्ते अश्वबन्धनं कुर्यादिति पूर्वपक्षे समाधानं कृतमेवेत्यर्थः।

(६) धनुश्चिन्हान्तर्गतो ग्रन्थः पुग० पु० अधिको दृश्यते। क[illegible] ० पु० नास्ति।

कल्पलता ।

नन्वनुभवस्य प्रामाण्यं विकल्पे समारोप्यते, ते नानुभवविषये विकल्पः प्रवर्त्तयतीति नातिप्रसङ्ग इत्यत आह । नापीति । प्रामाण्यमात्रमारोप्यते विषयविशेषोपहितं वा प्रामाण्यम् । आद्ये, तस्येति । विषयनियमाभावात् प्रवृत्तिनियमानुपपत्तेरित्यर्थः । द्वितीये, परमार्थेति । प्रामाण्ये ह्य(१)पधायकं (वस्तु) वाच्यं, तच्च (न) विकल्पे भासत इत्यर्थः । नन्वलीकमेवोपधायकमस्तु, तथा च तत्प्रामाण्यमेव तत्रारोप्यतामित्यत आह । अलीकेति । ननु विकल्पविषयस्यालीकस्यानलीकतया भानं प्रवर्त्तकं स्यादित्यत आह । अलीकस्येति । अनलीकतया पारमार्थिकतयाऽलीकस्य भानं तदा भवेद्यदि परमार्थसद्विषयो(२) विकल्पः स्यात्, तच्च(३) त्वया निषिद्धमित्यर्थः । यद्वाऽलीकस्य ताद्रूप्येणैव प्रतीतेः कथमनलीकतया भानं स्यात्, विशेषदर्शनप्रतिहतत्वादित्यर्थः ॥

नाप्यनुभवात् स्वात्मनो भेदाग्रह(४) एव तद्व्यापारपुरस्कारः, स्वरूपस्य स्वतोऽवगतेः, विषयभेदस्य च

दीधितिः ।

भेदाग्रहः भेदग्राहित्वा(५)भाववत्त्वम् । स्वरूपस्येति । अनु-

दीधितिटिप्पणी ।

भेदाग्रहस्यैव पुरस्कार इत्यनेन मूलेऽभेदान्वयः स्यात्, पुरस्कारपदार्थाश्रयत्वस्यालाभात्, अत आह । भेदाग्रह इति । एवमपारोक्ष्य-

(१) प्रामाण्ये ह्यु—पुण० पु० पा० । (२) परमार्थविषयो—पुण० पु० पा० ।
(३) स्याच—पुण० पु० पा० । (४) स्वात्मनो भेदग्रह—पा० २ पु० ।
(५) भेदग्रहा—पुण० पु० पा० ।—अपरेषामाश्रयत्वादीत्यनुसारेणाह । भेदग्राहित्वेति ।—गुणानन्दः ।

प्रागेव निरूपणात्(१)। नाप्यपारोक्ष्यम्, तस्यापि स्वात्मनि सर्वज्ञानसाधारणत्वात्। विषये च विकल्पस्य तदभावात्। तथाभावेऽप्यन्यत्र नियतप्रवृत्त्यनुपपत्तेः।

दीधितिः।

भवात्मनो(२) भेदस्य स्वप्रकाशतया स्वत एवावगमादित्यर्थः। अनुभवाग्राहकत्वाद्विकल्पेन तद्भेदाग्रहणं तु स्वलक्षणान्तरानुभवसाधारणम्। अपारोक्ष्यम् अपारोक्ष्यवत्त्वम्॥

दीधितिटिप्पणी।

मित्यादावपि बोध्यम्। स्वप्रकाशेति। स्वरूपभेदस्यानतिरेकादित्यर्थः। ननु स्वरूपस्य भेदत्वेन ज्ञाने प्रतियोगिविषयत्वमावश्यकं, अतो विकल्पे स्वलक्षणात्मकप्रतियोगिविषयकत्वाभावान्न तद्भेदग्राहकत्वमत आह। अनुभवाग्राहकत्वादिति। स्वलक्षणान्तरेति। तथा च तद्विषयेपि प्रवृत्तिः स्यादिति भावः॥

कल्पलता।

ननु नीलानुभवनीलविकल्पयोर्भेदो न गृह्यते, ए(३)तावतैव नीलविकल्पो नीलानुभवविषये नीले प्रवर्त्तयतीत्यत आह। नाप्यनुभवादिति। अत्र ज्ञानयोर्भेदाग्रहस्तद्विषययोर्वा। आद्य आह। स्वरूपस्येति। विकल्पस्य स्वप्रकाशतयाऽनुभवभेदेनैव ग्रहादित्यर्थः। अन्त्य आह। विषयेति। अलीके ग्रह(४)विषये पारमार्थिकभेदासम्भवादित्यादिना दूषितत्वादित्यर्थः। ननु यथाऽनुभवेऽपारोक्ष्यं तथा विकल्पेपीत्येव कृत्वा विकल्पोनुभवविषये प्रवर्त्तयतीत्यत आह। नापीति।

(१) निरस्तत्वात्—पुण० पु० पा०। निराकरणात्—पा० २ पु०।
(२) अनुभवात् स्वात्मनो—पुण० पु० पा०।
(३) न गृह्यत एव—कलि० मु० पु० पा०। (४) अलीके—पुण० पु० पा०।

अनुभवव्यापारपुरस्कार इत्यनुषज्यते । अपारोक्ष्य(१)-मात्रस्य प्रयोजकत्वे स्वात्मनि सर्वविकल्पानामप(२)-रोक्षतया सर्वं ज्ञानं सर्वत्र प्रवर्त्तयेदित्याह । त-स्येति । ननु यथाऽनुभवस्य विषयोऽपरोक्षस्तथा वि-कल्पस्यापीति प्रवृत्तिनियमः स्यादित्यत आह । वि-षये चेति । न ह्यलीकमपरोक्षं नामेत्यर्थः । अभ्युपे-त्याह । तथेति । नैतत् प्रवृत्तिनियामकमित्यर्थः ॥

नापि विषयसारूप्यम्, तदभावात् । का हि पर-मार्थसदलीकयोः समानरूपता नाम । यदि रूपशब्दो धर्म्मिवचनः(३) समानशब्दश्चैकपर्य्यायः, कार्थसङ्गतिः प्रकृते । यदि वा रूपं धर्म्मः समानश्चैको वैकजातीयो

दीधितिः ।

विषयसारूप्यम् सरूपविषयकत्वशालित्वम्(४) । न हि सद-सतोः कश्चिदेको धर्मी धर्मो वा एकः एकजातीयो(५) वा अभ्यु-पेयत इत्याह, यदीत्यादिना । असति विधेर्विरोधा(६)द्विधिरेव सदसत्साधारणो नेष्यते, निषेधः पुनरिष्यत एवेत्याशङ्कते । अ-

दीधितिटिप्पणी ।

भावं विहाय कथमतद्व्यावृत्तिरूपनिषेध एव दर्शित इत्यतो भा-वार्थमाह । असतीत्यादि । असति अलीके । ननु या परमार्थसद्व्यावृत-द्व्यावृत्तिरलीके वर्त्तते सा सर्वसाधारणी अतिप्रसक्त्यापादिका, या

(१) अपरोक्ष—पाठः । (२) सर्वविकल्पानामपा—पुण० पु० पा० ।

(३) धर्मिवाचकः—कलि० मु० पु० पा० ।

(४) विषयसारूप्यस्य विषयवृत्तित्वात् नोक्तपुरस्कारत्वसम्भव इत्यत आह । सरूपविषय-कत्वशालित्वमिति ।—गुणानन्दः ।

(५) धर्मिण एकजातीयत्वस्य मूलेऽनभिधानात्पूरणमिदमनुषङ्गेण ।—गुणानन्दः ।

(६) विरोधात्, असम्भवात् ।

वेति, तथापि कार्थसङ्गतिः प्रकृते। अतद्व्यावृत्तिरिति चेन्न। तस्या अ(१)लीकानलीकनिष्ठतया एकत्वैक(२)-जातीयत्वयोरभावात्। आभिमानिकोयं सारूप्यव्यव-

दीधितिः।

तद्व्यावृत्तिरिति। यद्यपि यत्किञ्चिदतद्व्यावृत्तिरतस्मिन्नपि, यावदतद्व्यावृत्तिस्तु नालीकेपि, तथापि परमार्थसद्यावदतद्व्यावृत्तिग्राह्यत्वदोषः। निराकरोति। तस्या इति। तस्येति पाठे तद्वा(३) धर्म्मपरामर्षः। अलीकनिष्ठतयाऽनलीकनिष्ठतया(४) च अलीकानलीकनिष्ठयोरसत्सद्रूपयोरेकत्वैकजातीयत्वयोरभावात्, सदसतोः संसर्गानभ्युपगमादित्यर्थः। नीलविकल्पविषयस्यापि

दीधितिटिप्पणी।

चासाधारणी सा पुनः स्वलक्षणमात्रवृत्तिरिति कुतः समानधर्मवत्त्वमित्याह। यद्यपीति। अतत् स्वलक्षणम्। यत्किञ्चिदित्यतदो विशेषणम्। अतस्मिन्नपि तत्स्वलक्षणभिन्नपटादावपि। नालीक इति। तस्याप्यतत्त्वादित्यर्थः। तथापीति। परमार्थसन्ति यावदतानि तेभ्यो व्यावृत्तिरित्यर्थः। ननु मूले तृतीयान्तहेतुदानं न लगति, तथा अलीकनिष्ठता यदि, तदा कथं न एकत्वम्, एवं साजात्यप्रतियोग्यपि न प्रतीयते, अतस्तस्येत्येकवचनस्य द्वित्वपरत्वं निष्ठतयोश्च विभिन्नत्वमाह। अलीकेत्यादि। तृतीया हेतौ। हेतुद्वयं यथासङ्ख्यं सदसद्रूपान्वयि। अभावादिति। तथा च क एकता, अतद्व्यावृत्तेरुभयवृत्तित्वं वेति भावः। तथापीत्यादिविवक्षिते दोषान्तरमाह। नीलवि-

(१) तस्या—कलि० मु० पु० पा०। तस्य चा-पाठः। अतद्व्यावृत्तिर्यदि वस्तुधर्मः, तदा नालीका, तथात्वे वा नालीकधर्मत्वमित्याह। तस्य चेति।—भगीरथठक्कुरः।

(२) एक—पा० २ पु०। (३) तदा, तत्पदेन।

(४) उभयनिष्ठत्वस्याप्रसिद्धेर्योजयति। अलीकनिष्ठतयेत्यादि। अलीकनिष्ठतयाऽसत्त्वम्, अनलीकनिष्ठतया च सत्त्वम्, न च सदसतोरेकत्वमेकजातीयत्वं वेति भावः। अलीकनिष्ठतया असत्त्वे अनलीकनिष्ठतया च सत्त्वे सदसतोरेकजातीयत्वासम्भवे च युक्तिमाह। सदसतोरिति। अनभ्युपगमादित्यनेन अपसिद्धान्तस्तन्नये सूचितः। तस्य सिद्धान्तत्वानभ्युपगन्तृनये दूषणं पूरयति। नीलविकल्पविषयस्यापीति।—गुणानन्दः।

हारो न पारमार्थिक इति चेन्न। अभिमानस्यैव(१) चिन्त्यमानत्वात्। न हि चिन्तितप्रकारान् परिभूयापरोऽभिमानो नाम।

दीधितिः।

व्यावृत्तेरपीतव्यावृत्तवस्तुव्यावृत्तत्वान्नीलविकल्पस्य पीते प्रवर्तकत्वप्रसङ्गः। उक्तं च(२) अनुगततत्तत्पदार्थानभ्युपगमे न शब्दप्रमत्यावृत्तिस्वरूपनिरूपणमिति॥

दीधितिटिप्पणी।

कल्पेति। तथा च पीतनिर्विकल्पकाविषये नीलविकल्पादपि प्रवृत्त्यापत्तिरित्यर्थः। यावत्परमार्थसतो व्यावृत्तेः सकलविकल्पाविषयसाधारणत्वादित्यर्थः॥

कल्पलता।

विषयेति। अनुभव(विषय)विकल्प(विषय)योः सारूप्यमपि नानुभवव्यापारपुरस्कार इत्यर्थः। (सारूप्याभावमेव दर्शयति।) का हीति। प्रमेयत्वादिना(पि) सा(३) दुर्लभेत्यर्थः। न हि वस्तव(४)वस्तुनोरेको धर्मो, नापि(५) वस्तव(६)वस्तुनोरेक एकजातीयो वा धर्म इत्याह। यदीति(७)। उभयत्रानभ्युपगमादेवासङ्गते(८)रिति भावः। नन्व(९)तद्व्यावृत्ति-

(१) अभिमानस्येति। सद्धर्मे असद्धर्मत्वभ्रमः असद्धर्मे सद्धर्मत्वभ्रमो वा अभिमानः, तस्य च विकल्पतया न सद्ग्राहित्वमिति कथमुभयधर्मग्राही विकल्प इति भावः।—गुणानन्दः।

(२) नन्वध्यवसेयस्वलक्षणाभिन्नत्वे सति यदतोऽन्यावृत्ताभिन्नं तदेवातदिति वाच्यम्, तत्राह। उक्तं चेत्यादि। अध्यवसेयस्वलक्षणाभिन्नत्वादिना तद् ग्राह्यं तत्पूर्वेण वा। आद्ये अध्यवसेयस्वलक्षणस्य विकल्पाविषयत्वप्रसङ्गः। द्वितीये दुर्ग्रहत्वमिति भावः।—गुणानन्दः।

(३) सा च—गुण० पु० पा०।

(४) नहि वस्तु—गुण० पु० पा०।

(५) नहि—गुण० पु० पा०।

(६) वस्तु—गुण० पु० पा०।

(७) यदीत्यादि—गुण० पु० पा०।

(८) नाभ्युपगमादेवासङ्गति—गुण० पु० पा०।

(९) ननु—गुण० पु० पा०।

कल्पलता।

**रेको धर्म उभयसाधारण इति कथं नार्थसङ्गतिरित्याह। अतद्व्यावृत्तिरिति। अतद्व्यावृत्ति(१)रेको वा एकजातीयो वा धर्म इत्यनुषज्यते। अत्रा(प्य)नभ्युपगममाह। तस्येति। अतद्व्यावृत्तिरूपसारूप्यस्येत्यर्थः। तस्या इति पाठे व्यावृत्तेरित्यर्थः। अलीकनिष्ठतया च नैकत्वमनलीकनिष्ठतया च नैकजातीयत्वमिति साध्यद्वये हेतुद्वयमेतत्। अलीकानलीकानिष्ठतये(२)त्येक एव वा हेतुरुभयत्र। अभिमानस्यैवेति। अभिमान एव नानाप्रकारेण विकल्पितः, न तु तेन प्रवृत्तिनियम उपपादित इत्यर्थः॥**

स्वभावादेव कश्चिद्वि(३)कल्पः कस्मिंश्चिदेवास्फुरितेपि प्रवर्त्तयति। किमत्र क्रियताम्। स चास्य स्वभावभेदः स्वकारणादेवायातः(४)। तत्र कः पर्य्यनुयोज्यता(५)मिति चेत्। तत् किमप्रत्यासन्न एव विकल्पस्तत्र

दीधितिः।

शङ्कते(६)। स्वभावादिति। निराकरोति, तत्किमित्यादिना। एकस्मिन्नेव(७) विषये बुद्धीना(८)मिच्छानां कृतीनां

दीधितिटिप्पणी।

तत्त्वेन तत्त्वेन कार्यकारणभावोक्तौ मूलयुक्तिरफला स्यादतः स्व-

(१) वृत्तिव्यति—पुण० पु० पा०। (२) निष्ठतत्र—पुण० पु० पा०।

(३) कश्चिदेव वि—पा० २ पु०। (४) स्वकारणादायातः—पुण० पु० पा०, पा० २ पु०।

(५) पर्यनुयुज्यता—पा० २ पु०।

(६) शङ्कादिसूचकनञ्वादिपदाभावादाह। शङ्कत इति।—गुणानन्दः।

(७) एकस्मिन्, स्वलक्षणे।—गुणानन्दः।

(८) बुद्धीनामिति चालीकात्मकविषयपरम्। स्वलक्षणविषयकानुभवस्य विकल्पाजन्यत्वात्। —गुणानन्दः।

प्रवर्त्तयति, प्रत्यासत्त्यन्तराभावात् स्वभावप्रत्यासन्नो(१) वा, व्यवहृतिरेव वा प्रत्यासत्तिः। न प्रथमः, अतिप्रसङ्गात्। द्वितीये तु स्वभावेनोत्तरं स्यात्, किन्तु तदेव स्फुरणम्। न हि व्यवहारे प्रवर्त्तयितव्ये स्वभावप्रत्यासत्तिमवधूय ज्ञानज्ञेययोरपरः कश्चिद्विषयविषयिभावः। सदसदनिर्वचनीयात्म(२)ख्यातिवादिभिरपि स्वभावप्रत्यासत्तेरवर्जनीयत्वादिति वक्ष्यमाणत्वात्। तृतीये

दीधितिः।

चोत्पादात्तत्तद्विकल्पस्य चाननुगतत्वादनुगतकार्यस्य(३) चानुगतकारणप्रयोज्यत्वादतिरिक्त(४)स्वभावभेदे प्रमाणाभावात्(५) तस्याप्य(६)नुगतस्यानुगत(७)कारणमन्तरेणासम्भवादनुभूय-

दीधितिटिप्पणी।

यमाह। एकस्मिन्नेवेति। बुद्धीनामिति। तथा च एकविषयगोचर(८)ज्ञानेच्छादीनां तत्त्वेन जन्यजनकभावेऽनन्तकार्यकारणभावापत्त्या लाघवात्तद्विषयज्ञानत्वेन तद्विषयकृतित्वेनेत्येक एव कार्यकारणभावः कल्प्यत इति भावः। तस्यापि स्वभावभेदस्यापि॥

(१) स्वभावप्रत्यासन्नः, स्वरूपसम्बन्धेन प्रत्यासन्नः।

(२) सदसदनिर्वचनीयार्थ—कलि० मु० पु० पा०।

(३) अनुगतकार्यस्य, तत्तेचरप्रवृत्तित्वाद्यवच्छिन्नस्येत्यर्थः।—गुणानन्दः।

(४) ननु भाववत् विकल्पवृत्तिः स्वभावभेद एवानुगमको वाच्य इत्यत आह। अतिरिक्तेति। विषयित्वातिरिक्तेत्यर्थः।—गुणानन्दः।

(५) प्रमाणाभावान्न—कलि० मु० पु० पा०।

(६) ननु कारणतावच्छेदकतया तत्सिद्धिः स्यादत आह। तस्यापीति। तादृशस्वभावस्यापीत्यर्थः। —गुणानन्दः।

(७) अनुगतं—गुणानन्दसम्मतः पाठः। अनुगतमिति। आकस्मिकत्वप्रसङ्गादिति भावः।—गुणानन्दः।

(८) विषयावधिर—इत्यादर्शपुस्तके पाठः।

तु व्यक्तमात्माश्रयत्वम्(१), स्वव्यवहार(२)नियमं प्रत्येव निमित्ता(३)नुसरणात् ।

दीधितिः ।

मानस्य(४) चासम्भवद्बाधकस्य विकल्पानामिच्छादिविषयविषयकत्वस्यापलपितुमशक्यत्वात्समानविषयत्वेनैव प्रवृत्तिविकल्पयोः कार्यकारणभाव इति सिद्धान्ततात्पर्यसङ्क्षेपः ॥

कल्पलता ।

प्रवृत्तिनियामकं(५) ज्ञानश्रियो(६) बीजसर्वस्व(७)मुत्थापयति। स्वभावादिति(८)। तदुक्तं ज्ञानश्रिया(९), 'नियतशक्तयो हि भावाः प्रमाणपरिनिष्ठितस्वभावा न शक्तिसाङ्कर्यपर्यनुयोगभाजः, कारणशक्तेरसदुत्पत्तिनियमात्'इति(१०)। ननु स्वभावभेद एव कथमीदृश इत्यत(११) आह। स चेति। प्रत्यासत्यन्तराभावादित्यग्रे(१२) सम्बद्धम्। स्वभावप्रत्यासत्तिरेव ज्ञानविषययोर्विषयविषयिभावः सम्बन्ध(१३) इति सिद्धा विकल्पस्य वस्तुविषयतेति सिद्धं नः समीहितमित्याह ।

(१) व्यक्तमात्माश्रयः—कालि० मु० पु० पा० ।

(२) त्वम् , व्यवहार—पाठः । (३) निबन्धा—पाठः ।

(४) ननु कार्यमात्रवृत्तिजातित्वमेव कार्यतावच्छेदकत्वव्याप्यं, न तु तादृशधर्मत्वमपीत्यनुशयादाह । अनुभूयमानस्येति । तादृशस्वभावस्य च नानुभूयमानत्वमिति भावः । अनुगतकारणेति । तथाच जातिपदं अनुगतपरमिति भावः ।—गुणानन्दः ।

(५) प्रवृत्तिनिमित्तकं—पुण० पु० पा० । (६) ज्ञानाश्रय—पुण० पु० पा० ।

(७) बीजसर्व—पुण० पु० पा० । (८) स्वभावादेवेति—पुण० पु० पा० ।

(९) ज्ञानाश्रया—पुण० पु० पा० ।

(१०) शक्तेरसदुत्पत्तिवान्नियमाव इति—पुण० पु० पा० ।

(११) कथ( मिदृश )मित्यत—कालि० मु० पु० पा० ।

(१२) स चेति । स्वभावप्रत्यासत्त्यभावादित्यग्रे—कालि० मु० पु० पा० ।

(१३) विषयविषयिभावः । स स्वत्व ?—कालि० मु० पु० पा० ।

कल्पलता ।

द्वितीये त्विति(१) । न हीति । ननु तद्गोचरव्यवहार(२)जनकत्वमेव ज्ञानस्य(३) प्रत्यासत्तिरित्यत आह । तृतीये त्विति ॥

---

कारण(४)शक्तेरसदुत्पत्तिव(५)न्नियम इति चेत् । सत्यम् । एतत्तु चि(६)न्तनीयम्, कारणशक्त्यापि(७) नियतजातिनियत(८)या भवितव्यम्, अन्यथा ज्वलनविकल्पाज्जलेऽपि प्रवृत्तिप्रसङ्गात् ।

---

दीधितिः ।

(नियत)जातिनियतयेति । अनुगतरूपावच्छिन्नयेत्यर्थः, अनुगतकार्यस्यानुगतकारण(९)नियम्यत्वात् ॥

दीधितिटिप्पणी ।

सत्त्वद्रव्यत्वादिजातिनियतत्वादुद्देश्यासिद्ध्याऽऽह । नियतजातीति । यत्र जातिर्नास्ति तत्राव्यापकत्वादाह । अनुगतेति । अत्रैव हेतुमाह । अनुगतकार्यस्येति ॥

कल्पलता ।

ननु यथा अ(१०)सत्त्वाविशेषेपि दण्डाद् घट एव

---

(१) द्वितीय एतदेवाह—पुण० पु० पा० । (२) व्यवहार-नास्ति पुण० पु० पा० ।

(३) ज्ञानस्य विषय—कलि० मु० पु० पा० ।

(४) ननु यथा कारणं दण्डादि कार्येण घटादिना असम्बद्धत्वाविशेषेऽपि नियतमेव कार्यं जनयति स्वभावात्, तथा ज्ञानमपि नियतविषये प्रवृत्तिहेतुरित्याह । कारणेति ।—भगीरथठक्कुरः ।

(५) असतो घटस्य यथोत्पत्तिस्तद्वदित्यर्थः ।

(६) एताश्चि—कलि० मु० पु० पा० ।

(७) स्वभावनियमोऽन्वयव्यतिरेकावच्छेदके नियतरूपावच्छेदे सत्येव स्यादिति तद्विषयज्ञानत्वेनैव प्रवर्तकत्वं वाच्यमित्याह । कारणशक्त्येति ।—भगीरथठक्कुरः ।

(८) जातीय—पा० २ पु० । जातिपदमनुगतधर्मपरम् ।—भगीरथठक्कुरः ।

(९) अनुगतकारणेति । तथाच जातिपदमनुगतपरमिति भावः ।—गुणानन्दः ।

(१०) था पूर्व—कलि० मु० पु० पा० ।

कल्पलता ।

जायते, न तु पटस्तथा गोविकल्पात् गव्येव प्रवृत्ति- र्नाश्व(१) इत्याह । कारणेति । यथा दण्डत्वावच्छिन्न- स्यान्वयव्यतिरेकौ घटत्वावच्छिन्नं कार्यमनुविधत्ते तथा गवि प्रवृत्तिं (प्रति) विकल्पस्य जाति(प्रति)नियम- स्त्वन्मते दुरुपपाद इत्याह । कारणशक्त्यापीति । नि- यामकमन्तरेण स एवातिप्रसङ्ग इत्याह । अन्यथेति ॥

दाहादिसमर्था(२)कारविकल्पजातीयं तात्त्विके

दीधितिः ।

विनापि स्वलक्षणविषयत्वमाकारविशेषादेव विकल्पानां स्वलक्षणविशेषे प्रवर्त्तकत्वान्नातिप्रसङ्ग इत्याशङ्कते । दाहादीति । आदिपदात् पाकादिपरिग्रहः। दाहादिसामर्थ्यम् दाहाद्य(३)समर्थ- व्यावृत्तिः,वह्नित्वम्(४) । तत्समर्थेति च तत्तत्फलार्थिन(५)मपे-

दीधितिटिप्पणी ।

वह्नि(त्व)प्रकारकप्रवृत्तौ समानप्रकारक एव विकल्पः कारण- मतो दाहसमर्थाकारलिखनमसङ्गतमत आह । दाहादीति । तदा दाहादिसमर्थेति कथमनुधावनमत आह । तत्समर्थेति । तत्तत् दा हादि । फलार्थिनमिति दाहाद्यर्थिनो न वह्नित्वप्रकारकाविकल्पा- द्वह्नौ प्रवृत्तिर्भवतीति बोधयितुम् । अथ वा उक्तदोषात् यथा-

(१) न पट इति तथा विकल्पो गव्येव प्रवृत्तिं जनयति नाश्व—पुण० पु० पा० ।

(२) दाहादिसामर्थ्या—पा० २ पु० ।

(३) दाहसामर्थ्यस्य विकल्पाविषयत्वे दाहात्मकस्वलक्षणस्य तद्विषयत्वमापद्येतेत्यत आह । दाहाद्येति ।

(४) ज्वलनविकल्पादिति प्रागुक्तदर्शनादाह । वह्नित्वमिति । तथाच न्यायनये यज्ज्ञानमुपा- दानप्रत्यक्षत्वेन कारणं तदाधिकृत्यायं विचार इति भावः। तर्हि कथमित्थमभिधानमित्यत आह । तत्स- मर्थेति च तत्तदिति । तत्तत्प्रवृत्तेस्तत्तत्फलार्थिताधीनत्वद्योतनायेत्यर्थः । तद्द्योतनस्य प्रकृतेऽनुप- योगित्वात् यथाश्रुतरक्षार्थं चाह । सत्यपीति । वह्निरयमित्यादि । तथाच वस्तुतो यदुपादानतावच्छे दकं तत्प्रकारकज्ञाने सत्यपि नेदं तदुपादानमितिभ्रमदशायां प्रवृत्तेरदर्शनेन तत्तदुपादानत्वधीरपि हेतुरिति दाहादीत्युक्तमिति भावः ।—गुणानन्दः । (५) फलार्थिता—पुण० पु० पा० ।

वह्नौ प्रवर्त्तयतीति जातिर्वोपाधिर्वा नियामक इति चेत्। न तर्हि रत्नमरीचिनिचये ततः प्रवर्त्तेत। तज्जातीयस्य दहन एव प्रवर्त्तन(१)सामर्थ्यात्। ताद्रूप्येण तस्यैव प्रथनादिति चेत्। प्रथताम्। न तु तस्य प्रवर्त्तनयोग्यता तत्र प्रथननियता, वह्निस्वलक्षणे

दीधितिः।

विकल्पं दृश्य। सत्यपि वह्निरयमिति विकल्पे दाहादिसमर्थोऽयमिति विकल्पं विना दाहाद्यर्थिनो(२)ऽप्रवृत्तेरावश्यकत्वात्स एव(३) प्रवर्त्तक इति वा(च)ऽभिप्रायः। तदा(४)कारता च विज्ञानवादिनां मते(५) ज्ञानगत आकारभेदो जातिरूपः, अन्येषां(६) तद्विषयत्वम्। निराकरोति। न तर्हीति। ततः वह्निविकल्पात्। तत्रापि(७) तस्यैव

दीधितिटिप्पणी।

अत एव तदर्थ इत्याह। सत्यपीति। तदाकारता चेति बहुव्रीहेरनन्तरो भावप्रत्ययः। अन्येषामिति। तथा च प्रकृतेपि तदेवेति भावः। ननु मरीचिविकल्पादपि प्रवर्तते इति पक्षो वक्तव्य इत्यत आह।

(१) एव प्रवृत्तिजनन-पुण० पु० पा०। (२) दाहार्थिनो—कलि० मु० पु० पा०।

(३) स एव, दाहादिसमर्थाकारविकल्प एव।—गुणानन्दः।

(४) जातिर्वेति ग्रन्थं व्याकरोति। तदेत्यादि। तदाकारता, वन्ह्याकारता। भेदः, विशेषः। विशेषान्तरस्य दुर्वचत्वादाह। जातिरूप इति। तथा च न तत्र विशेषान्तरापेक्षेति भावः।—गुणानन्दः।

(५) रता च बौद्धानां मते—कलि० मु० पु० पा०।

(६) अन्येषामिति। तथा च वादिभेदव्यवस्थितो विकल्प इति भावः।— गुणानन्दः।

(७) तत्रापि, रत्नमरीचिनिचयेपि। रत्नमरीचिनिचयेपि वन्हिविकल्पस्य प्रवर्तकत्वे तस्यैव तत्त्वं, तस्यापीति वा। आद्ये, तस्यैवेति। वह्निविकल्पस्यैव। तदर्थी, तत्तत्फलार्थी। द्वितीये, तस्यापीति। वह्निविकल्पस्यापि। तथा च कश्चिद्वह्निविकल्पः, कश्चिन्मरीचिविकल्प इति भावः। अनियम इति। तथा च तादृशविकल्पजातीयं तात्त्विके वह्नौ प्रवर्तयतीति यो नियम उक्तस्तद्व्याघात इति भावः। मरीचिवह्निगोचरप्रवृत्तौ द्वयोरेव व्यभिचार इति भावः। कारणताबाधकमाह। मिथ इति। वह्निविकल्पस्य रत्नमरीचिविकल्पस्य च मरीचिगोचरप्रवृत्तिजनननियमे दोषमतिदिशति। एवमिति।—गुणानन्दः।

(वह्नि)विकल्पादप्रवृत्तिप्रसङ्गात् । स्वीकुरु वा तस्यापि तत्र स्फुरणं, परिहर वा वह्निविकल्पादवह्नौ प्रवृत्तिमिति ।

दीधितिः ।

प्रवर्त्तकत्वे मरीचिविकल्पात्तदर्थी तत्र न(१) प्रवर्त्तेत । तस्यापीति पक्षेऽनियमो मिथो व्यभिचारश्च(२) । एवं मरीचिनिश्चयविकल्पात्तदर्थी वह्निस्वलक्षणे न प्रवर्त्तेतेति । प्रथतामिति । तदिति(३) विपरिणतेनान्वयः । यदृच्छया(४) चेदम्, मरीचिस्वलक्षणानां विकल्पविषयतायाः परैरनभ्युपगमात् । तस्यापि वह्निस्वलक्षणस्यापि । तत्र वह्निविकल्पे ॥

दीधितिटिप्पणी ।

तस्यापीति । अनियमः वह्निविकल्पादेकदैव वह्निमरीच्योः प्रवृत्तिप्रसङ्गः । एवमिति । तैः(५) वह्निप्रवृत्तौ वह्निविकल्पस्यैव जनकताया अङ्गीकारादित्यर्थः । तस्यैवेत्यस्य षष्ठ्यन्तस्य कर्त्तृतयाऽत्रानन्वयादाह । प्रथतामितीति । इदम् विकल्पे मरीचिप्रथनम् ॥

---

कल्पलता ।

ननु वह्निरयमित्याकारविकल्पत्वावच्छिन्नमेव वह्नौ प्रवर्त्तकम्, तादृशविकल्पत्वं च जातिरुपाधिर्वेत्यन्यदेतत् । न हि तत्रापि जात्यैव कारणताऽवच्छिद्यते, कालाकाशादिशां प्रतिनियतकार्यं प्रत्यकारणतापत्तेरित्याशङ्कते । दाहेति । तत इति । वह्निविकल्पादि-

---

( १ ) तदर्थी तत्र—कालि० मु० पु० पा० । ( २ ) व्यभिचारः—पुण० पु० पा० ।

( ३ ) प्रथतामित्यत्र कर्त्राकाङ्क्षायामाह । तदितीति । तस्यैव प्रथनादित्यत्र पूर्वफक्किकायां यत् षष्ठ्यन्तं पदं तद्विपरिणतम्, षष्ठीं परित्यज्य प्रथमान्तीभूय अत्र कर्तृतयाऽन्वितमिति भावः ।—गुणानन्दः ।

( ४ ) इदम्, मरीचिनिश्चयस्य विकल्पे समर्थताभिधानम् । यदृच्छया, स्वसिद्धान्तमननुरुध्य । तथाचापसिद्धान्तादिदोषो बोध्य इति भावः ।—गुणानन्दः ।

( ५ ) तैः । ताहि—इत्यादर्शपुस्तके पाठः ।

कल्पलता ।

त्यर्थः। न हि बीजादङ्कुरसमर्थात्(१) कुञ्जरोत्पत्तिरिति भावः। एवं रत्ननिचयविकल्पात् वह्नौ(२) प्रवृत्तिर्न स्यादित्यपि(३) द्रष्टव्यम् । ताद्रूप्येणेति । वह्नित्वेन रत्ननिचयस्यैव । प्रथतामिति । त्वन्मते प्रवृत्तिविषयप्रथनमतन्त्रमित्यर्थः । वह्निविकल्पादिति । वह्निस्वलक्षणप्रथनस्य त्वया तत्रानङ्गीकारात्, अङ्गीकारे वा सिद्धं नः समीहितमित्यर्थः । स्वीकुरु वेति(४) । सेयमुभयतःपाशा रज्जुरित्यर्थः ॥

एतेनाकारसारूप्यं नियमहेतुरपास्तः(५) । अर्थनीयसारूप्याभावेपि प्रवृत्तिदर्शनात्(६) । अनर्थनीय-

दीधितिः ।

आकारसारूप्यम् विकल्पप्रवृत्तिविषय(७)योरेकाकारत्वम् । अर्थनीयसारूप्यम् द्वयो(८)रिष्टता(९)वच्छेदकैकाकारशालित्वम्, तदभावेपि रजताकारविकल्पेन(१०) रजतार्थिनो रङ्गेपि प्रवर्त-

दीधितिटिप्पणी ।

रजतस्वलक्षणवृत्तीष्टतावच्छेदकाकारस्य रङ्गे (रजतत्व)प्रकारकविकल्पेऽसत्त्वादत्र तदभावो बोध्यः । द्वयोः प्रवृत्तिविषयविकल्पयोः ।

(१) बीजादङ्कुरसम्बन्धात्—कालि० मु० पु० पा० ।

(२) विकल्पात् वह्निस्वलक्षणेपि—कालि० मु० पु० पा० ।

(३) स्यादिति—पुण० पु० पा० ।  (४) स्वीकुरु वेति—पुण० पु० पा० ।

(५) रपास्तम्—पुण० पु० पा० ।  (६) प्रवृत्तिनिदर्शनात्—पुण० पु० पा० ।

(७) विकल्पश्च प्रवृत्तिविषयश्चेति विग्रहः, विज्ञानवाद इत्याग्रिमग्रन्थानुरोधात् ।

(८) द्वयोः, प्रवर्तकज्ञानप्रवृत्तिविषययोः ।

(९) धर्मान्तरेण सारूप्यसम्भवादाह । इष्टतेति । उपादानतावच्छेदकेत्यपि बोध्यम् ।—गुणानन्दः ।

(१०) रजताकारेण विकल्पेन—कालि० मु० पु० पा० ।

सारूप्यमात्रस्य चातिप्रसञ्जकत्वात्(१)।

दीधितिः।

नात्। अनर्थनीयसारूप्यम् इष्टतानवच्छेदकैकाकारशालित्वम्। अतिप्रसञ्जकत्वात्, सद् द्रव्यं रजतमिति विकल्पाद्रजतार्थिनो लोहेपि प्रवृत्तिप्रसङ्गात्॥

दीधितिटिप्पणी।

सदिति। सदितिज्ञानाकाररूपसत्त्वस्य लोहेपि सत्त्वादित्यर्थः॥

कल्पलता।

यदुक्तं ज्ञानश्रिया, "प्रत्यासत्तिचिन्तायां तात्विकस्यापि वह्नेर्ज्वलनाकारत्वं विकल्पकस्यापि, तावता तत्रैव प्रवर्त्तनशक्तिर्ज्वलनविकल्पस्य(२), न तु जलादौ" इति, तदतिदेशेन दूषयति। एतेनेति। मरीचिनिचये ततः प्रवृत्त्यभावप्रसङ्गेनेत्यर्थः। एतदेवाह। अर्थनीयेति(३)। अर्थनीयः(४) प्रवृत्तिविषयतया इष्टः रत्ननिचयस्तस्य च वह्निविकल्पेन सारूप्याभावादित्यर्थः। तथापि वह्निना वह्निविकल्पस्य सारूप्यमस्त्येवेत्यत आह। अनर्थनीयेति(५)। न हि तत्र वह्निरर्थनीयः(६)। किन्तु रत्नमरीचि(७)निचय एवेत्यर्थः। यद्वा ज्वलनविकल्पाज्जलेपि प्रवृत्तिप्रसङ्गादित्यर्थः॥

(१) ननु स्वाविषयेपि ज्ञानस्य प्रवर्तकत्वे नातिप्रसङ्गः। यद्धर्मविशिष्टोऽर्थः तत्रैव तद्धर्मविशिष्टज्ञानस्य प्रवर्तकत्वादित्यत आह। एतेनेति। वह्न्याकारज्ञानात्तत्स्वरूपे वह्नौ प्रवृत्तिसम्भवेऽपि मरीचिनिचये प्रवृत्तिर्न स्यात्, तत्र वह्नित्वस्य प्रवर्तकज्ञानसारूप्यस्याभावादित्यर्थः।—भगीरथठक्कुरः।

(२) प्रत्यासत्तिचिन्तायां तद्विकल्पोपि वन्हेर्जननाकारत्वविकल्पोल्लेखस्यापि तावता तत्रैव प्रवर्तनशक्तिजननविकल्पस्य—कालि० मु० पु० पा०।

(३) अनुनीयेति—पुण० पु० पा०।

(४) अनुनीयः—पुण० पु० पा०। (५) अननुनीयेति—पुण० पु० पा०।

(६) वह्निरनुनीयः—पुण० पु० पा०। वह्निरवलम्बनीयः—कालि० मु० पु० पा०।

(७) किन्तु वन्हि—कालि० मु० पु० पा०।

न च बाह्यवादे ज्ञानज्ञेययोर्विवक्षितसारूप्यसम्भवः, सामग्रीवैषम्यात् । साम्ये वा जाड्यचैतन्ययोरेकशेषप्रसङ्गात् । न च साम्येप्यवान्तरविशेषात् कार्य्यविशेषव्यवस्था, मिथःसामग्र्यननुविधानेन जायमानत्वात् । न च कार्य्योन्नेयं सामग्रीसाम्यं(१), बाह्यधूमाद्यनुविधीयमानस्य कारणस्य दृश्यमान(२)त्वात्, धूमज्ञानस्य च तद्व्यभिचारोपलम्भात् । न (च) तदेव

दीधितिः ।

विज्ञानवादे ज्ञेयस्य ज्ञानाभिन्नत्वात्सामग्रीसाजात्यात् बाधकाभावाच्च ज्ञानज्ञेययोराकारसाम्यं सम्भवति, न तु(३) बाह्यवाद इत्याह । न चेति । न च(४) ज्ञानज्ञेययोरेकाकारताप्रयोजिका काचनानुगतानतिप्रसक्ता सामग्री, येन तत्साम्येपि विशेषसामग्रीभेदात्कार्यभेद इत्याह । न चेति । कार्यसाजात्योन्नेयं सामग्रीसाजात्यं दूषयति । न चेति । वस्तुतो(५) बाह्यवादे विज्ञानस्य तद्विषयत्वातिरिक्ततदाकारत्वे न किञ्चित्प्रमाणमस्ति,

दीधितिटिप्पणी ।

बाह्यपददानफलमाह । विज्ञानवाद इति । न च तदेव दृश्यमदृश्यं चेत्यादि मूले यदुक्तं तदुभयत्रैवादृश्यकारणोक्तावसङ्गतमत आह । वस्तुत इति॥

(१) सामग्रीसाम्य--पा० २ पु० ।

(२) कारणस्य दृश्य—कलि० मु० पु० पा० ।

(३) ननु—पुण० पु० पा० ।

(४) नच ज्ञानज्ञेययोरित्यादि । तथाच नास्त्येव सामग्रीसाम्यमिति मूलाखण्डलार्थ इति भावः :—गुणानन्दः ।

(५) दृश्यस्यापि तज्ज्ञानेनाकारसारूप्यादेकजातीयतया सामग्रीसाजात्यं स्यात्, इत्यज्ञानवस्था अनादिः प्रामाणिकी इष्यत एव इत्यनुशयानो मूलयुक्तिमाह । वस्तुत इत्यादि ।-गुणानन्दः ।

कारणमेकत्र दृश्यमदृश्यं चान्यत्रेति युक्तम्।

दीधितिः।

येन तद्बलादतीन्द्रियमेव किञ्चित्प्रयोजकं कल्पनीयमिति भावः॥

कल्पलता।

एतच्च सारूप्यमङ्गीकृत्योक्तं, वस्तुतः सारूप्यमेव नास्तीत्याह। न चेति। विवक्षितेति(१)। प्रवृत्तिनियामकत्वेनेष्टेत्यर्थः(२)। सारूप्ये वेति। अभिन्नसामग्रीकत्वेन सर्वमज्ञानं स्यात्, ज्ञानमेव वा स्यात्, वैजात्यं तु(३) न भवेदित्यर्थः। ननु (ज्ञान)सुखयोर्यथा सामग्रीसाम्येपि किञ्चित्कारणभेदाद्वैजात्यं, तथा जडचैतन्ययोरपि स्यादित्यत आह। न चेति। मिथ इति। ज्ञानजडयोर्वि(४)लक्षणसामग्रीजन्यत्वादित्यर्थः। तथाच न सामग्रीसाम्यमिति भावः। बाह्ये धूमा(५)द्यनुविधीयमानस्येति। धूमादिनानुविधीयमानस्य वह्न्यादेः कारणस्य दृश्यत्वात्, धूमज्ञानस्य च वह्निं विनापि जायमानत्वात्, धूमधूमज्ञानयोः क्व सामग्रीसाम्यमित्यर्थः। ननु धूमज्ञानेप्यदृश्यो वह्निः कारणं स्यादिति कथं न सामग्रीसाम्यमत आह। न चेति॥

(१) विवक्षित इति—कालि० मु० पु० पा०।

(२) त्वेनेष्ट इत्यर्थः—कालि० मु० पु० पा०।

(३) वैजात्यं तु तत्र—पुण० पु० पा०।

(४) नचेति। उभयोरपि प्रकाशतमसोर्वि—कालि० मु० पु० पा०।

(५) त्वादित्यर्थः। धूमा—कालि० मु० पु० पा०।

यदि च(१) नीलिमा(दिर्वि)ज्ञानस्य जातिविशेषः, कथं तदतिपत्य ज्ञेयं स्पृशेत्, ज्ञेयस्य चेत्, कथं ज्ञानं तद्विशिंष्या(२)दिति जातिसङ्करापादनप्रस्तावे चिन्तितप्रा(३)यम् । तस्मात् स्फुरित एव ज्ञानं प्रवर्त्तयतीति गले पादु(४)कयाप्यङ्गीकारयितव्यः, गत्यन्तराभावात् ।

दीधितिः ।

जातिसङ्करं साजात्ये बाधकमाह । यदि चेति ॥

कल्पलता ।

आकारसारूप्याद्विकल्पः स्वलक्षणे प्रवर्त्तयतीत्यत्र दूषणान्तरमाह । यदि चेति । आकारो हि नीलत्वं, तद्यदि ज्ञानगता जातिः, तदा (सा) ज्ञेये नीले न वर्त्तेत(५), ज्ञेयगता चेत्, तदा ज्ञाने कथं वर्त्ततामिति नाकारसारूप्यमित्यर्थः । ननूभयत्र वर्त्ततां, को दोष इत्यत आह । जातिसङ्करेति । एवं सति ज्ञानत्वानुभवत्वसाक्षात्त्वादिभिः साङ्कर्यं स्यादित्यर्थः । प्रकृतमुपसंहरति । तस्मादिति ॥

(१) आकारसारूप्ये दूषणान्तरमाह । यदि चेति ।—भगीरथठक्कुरः ।

(२) ज्ञानं न द्विष्या—पुण० पु० पा० ।

(३) चिन्तितामिप्रा—पा० २ पु० ।

(४) गले पादि—पुण० पु० पा०, पा० २ पु० ।

(५) न वर्तते—कालि० उ० पु० पा० । न प्रवर्तेत—पुण० पु० पा० ।

तर्हि स्फुरिते स्वाकार एव प्रवर्त्तयतु, तत्र प्रवृत्त एव चार्थी तत्सदृशमर्थमासादयति, मणिप्रभायां(१) प्रवृत्तो मणिवदिति चेन्न । अभिमता(२)र्थक्रियासाम-

दीधितिः ।

इयता प्रबन्धेनालीकं वेति पक्षं निराकृत्याकारो वेति पक्षं निराकर्तुमुत्थापयति । तर्हीति । अन्यत्र प्रवृत्तौ कथमन्यलाभ इत्यत आह । तत्रेति । मणिवदिति द्वितीयासमर्थाद्वतिः(३) । निराकरोति । नेत्यादि । सामर्थ्यविरहिणि समर्थत्वेनाज्ञाते(४) । न खलु लोकेन वह्निविकल्पः(५) पाकादिसमर्थत्वेन ज्ञातः, अपि तु वह्निः । न चाकारगृहीतार्थक्रियासामर्थ्यबाह्ययोरभेदारोपा-

दीधितिटिप्पणी ।

उत्थापयतीति । अत्र मते विकल्पे आकाररूपं घटत्वादि भासते, एतदन्यत्तु घटत्वादिकं नास्ति, प्रवृत्तिरप्यत्रैव भवतीति, आकारनिर्वाहकतया तु बाह्यपदार्थसिद्धिरिति । आकारस्य निरुक्तसामर्थ्यविरहित्वं कथं ज्ञातं, अत आह । समर्थत्वेनेति । अज्ञातत्वमपि कथं तत्रेत्यत आह । न हीति(६) । आकाराकारिणोरभेदादिदम् । आका-

(१) मासादयति, प्रभायां—कलि० मु० पु० पा० ।

(२) आकारे यदि ज्ञानवृत्तितया ज्ञाते प्रवृत्तिस्तत्राह । अभिमतेति । ज्ञानाकारस्य न दाहादिसामर्थ्यमिति प्रमापयतस्तदसमर्थे तत्र प्रवृत्तिर्न स्यादित्यर्थः । ननु बाह्यनिष्ठतया स्वाकारे ज्ञाते प्रवृत्तिरिति नोक्तदोषः, इत्यत आह । न चेति । बाह्यस्वलक्षणस्य विकल्पेनाविषयीकरणात्, न चारोपविषयाज्ञाने तत्सम्भव इत्यर्थः । न च ज्ञानाकारस्य ज्ञानाभिन्नतया स्व प्रकाशत्वे तत्रार्थक्रियासामर्थ्यमारोप्यमित्यपि सम्भवतीत्याह । न चेति । स्वप्रकाशतया स्वरूपे विशेषे ज्ञानत्वे स्फुरति अस्वरूपस्य बाह्यत्वस्यारोपासम्भव इत्यर्थः ।—भगीरथठक्कुरः ।

(३) आसादयतीति क्रियान्वयानुरोधादाह । द्वितीयासमर्थादिति ।—गुणानन्दः ।

(४) विसम्वादिप्रवृत्तेर्दर्शनादाह । समर्थत्वेनाज्ञात इति । ननु प्रवृत्तिविषयीभूत आकार एव इष्टसाधनत्वेन गृहीत इति का अनुपपत्तिरित्यत आह । न खल्विति । सर्वत्राकार एव तैः प्रवृत्त्युपगमात् कुत एतत्सिद्धमिति चिन्त्यम् ।—गुणानन्दः ।

(५) वह्निविकल्प इत्याकाराकारिणोरभेदमनुसृत्य ।—गुणानन्दः ।

(६) न खल्विति—इति युक्तः पाठः । न हीति-इति पाठस्तु समर्थत्वेनाज्ञाते, न हि-इति दीधितिपाठमभिप्रेत्य लिखित इति प्रतिभाति ।

ऽर्थविरहिण्यप्रवृत्तेः। न च बाह्ये विकल्पाकारारोपसम्भवः, तस्य तेनासंस्पर्शात्। न चाकारे बाह्यत्वा(१)रोपः, स्वरूपे स्फुरत्यस्वरूपारोपानवकाशात्(२)। प्रभायां तु

दीधितिः।

ऽप्रवृत्तिः, आरोपो हि बाह्ये आ(३)कारस्य आकारे वा बाह्यस्य। आद्ये, न चेति। तस्य बाह्यस्य। तेन विकल्पेन। द्वितीये, न चेति। आकारा(४)कारिणोरभेदात्स्वप्रकाशेन ज्ञानरूपत्वे गृह्यमाणे बाह्याभेदारोपासम्भवात्। वस्तुतो(५) बाह्यानुभवस्य(६) विकल्पाकाराग्राहित्वात् विकल्पस्य(७) च बाह्यास्पर्शित्वात् आरोप्यारोपविषयोभयग्राहिणश्चारोपरूपत्वायोगात् बाह्यानुभवो वा, आकारवान् विकल्पो वा, विकल्पान्तरं वा, न विकल्पाकार(८)बाह्याभेदारोपो भवितुमर्हतीति। मणिबुद्ध्या मणित्वेन प्रभाया बुद्ध्या। तदबुद्ध्या तस्याः(९)

दीधितिटिप्पणी।

रेति। गृहीतेत्यादि विशिष्टं बाह्यविशेषणम्। आकाराकारिणोरिति। आकारस्य बाह्यत्वव्यावर्तकधर्मत्वादारोपासम्भव इत्यर्थः। बाह्यानुभवस्य निर्विकल्पकस्य। विकल्पान्तरम् आकारशून्यविकल्परूपं पूर्वमतोक्तम्, तथा च पूर्वोक्तमतेपि एतन्न शक्यत इति भावः। तत्प्रकारकप्रवृत्तिं प्रति तद्बुद्धेर्हेतुत्वं नायातमत आह। मणिबुद्ध्ये

(१) बाह्यरूपत्वा—पुग० पु० पा०। (२) त्यस्वरूपानारोपात्—पा० २ पु०।

(३) बाह्ये स्था—कालि० मु० पु० पा०।

(४) आकारस्य ज्ञानात्मकत्वमुपपादयति। आकारेत्यादि। ज्ञानत्वेन तस्य ज्ञातत्वात् कुतो विशेषदर्शनमत आह। स्वप्रकाशेति।—गुणानन्दः।

(५) ननु बाह्ये ज्ञानभिन्नत्वाग्रहदशायां सम्भवेदारोप इत्यनुशयादाह। वस्तुत इति।—गुणानन्दः।

(६) बाह्यानुभवस्य, बाह्यनिर्विकल्पकस्य। तज्जनकसन्निकर्षादेश्च तत्राभावादिति भावः।—गुणानन्दः।

(७) विकल्पस्येति। तस्य स्वलक्षणावगाहित्वस्य भवद्भिरनभ्युपगमादिति भावः। विकल्पान्तरेत्यत्राप्ययमेव हेतुरवसेयः।—गुणानन्दः। (८) विकल्पाकारे—कालि० मु० पु० पा०।

(९) प्रभाया बुद्ध्या। तस्याः—कालि० मु० पु० पा०।

मणिबुद्ध्यैव मण्यर्थी प्रवर्त्तते, न तु तदबुद्ध्येति दृष्टान्तोप्याभासः।

दीधितिः।

प्रभाया अबुद्ध्या। आभास इति। मणिप्रभाप्रवृत्तमण्यर्थिसमासाद्यत्वेनोपन्यस्तो मणिर्दृष्टान्तोऽभिमतादाकारावभासस्यैव प्रवर्त्तकत्वात् विपरीते बाह्यावभासप्रवर्त्तकत्वे पर्यवस्यन्नाभास इत्यर्थः, ज्ञानस्य स्वविषये प्रवर्त्तकताया(१) भवता(ऽप्य)भ्युपगमात्। अथ यथा भवतां(२) प्रभायां प्रवृत्तस्य मणिप्राप्तिः, तथा अस्माकमप्याकारे प्रवृत्तस्य(३) बाह्यप्राप्तिरित्यभिप्रायः, सोपि न युक्तः, प्रवृत्तो हि मणिप्रभायां तत्सन्निधानाविनाभावान्मणिमासादयति, न चाकारस्य तथा सम्भव इति भावः॥

दीधितिटिप्पणी।

ति। उपन्यस्त इत्यादि। प्रभाकारे प्रवृत्तौ मणिरिति वक्तुमुचितं, तदेवाकार एव प्रवृत्तिरिति प्रकृताभिमतयोग्यदृष्टान्तः स्यात्, प्रभायां तु प्रवृत्तिदृष्टान्तत्वं बाह्यज्ञानस्य प्रवृत्तिजनकतामेव साधयति, न तु आकारज्ञानस्य। अतः प्रकृतेऽभिमतसाध्यविपरीतबोधकत्वादाभास इत्यर्थः। प्रकृतेऽभिमतात्। ननु प्रभायां प्रवृत्तिरित्येवोक्तम्, न तु प्रभाज्ञानस्य प्रवर्त्तकत्वं, येन बाह्यावभासस्य प्रवर्तकता स्यात्, प्रकृते तु आकारज्ञानादेव प्रभायां प्रवृत्तिनिर्वाहो भविष्यतीत्यत आह। ज्ञानस्येति। भवतापीति। तथा च न भवन्मतसिद्धं दृष्टान्तमिति भावः(४)। ननु तव मतेनैव दृष्टान्त एष कृत इत्याशङ्कते। अथेति। इत्यभिप्रायः, दृष्टान्तदार्ष्टान्तिकग्रन्थसमुदायस्य। प्रवृत्तो हीति। तथा च तत्राविनाभावनिबन्धना तत्प्राप्तिर्भवति, प्रकृते तु आकारविषययोरविनाभावो नास्तीति कथं बाह्यप्राप्तिर्भविष्यतीति भावः॥

(१) स्वविषय एव प्रवर्त्तकतया—कालि० मु० पु० पा०।

(२) यथा भवता—कलि० मु० पु० पा०।

(३) प्रवृत्तस्य मणिं—पुण० पु० पा०।

(४) सिद्धो दृष्टान्त इति भावः—इति युक्तम्।

कल्पलता ।

तदनेन प्रघट्टकेन शब्दलिङ्गविकल्पानामलीकविषयत्वं निराकृत्य आकारो वेति सौत्रान्तिकमतं दूषयितुमाशङ्कते । तर्हीति । विकल्पानां प्रामाण्याभिमानमुपपादयति । तत्रेति । संवादात्प्रमाणत्वेनाभिमान इति भावः । परिहरति । नेति । अर्थक्रियासमर्थे ह्य(१)र्थेऽर्थक्रिया(र्थी) प्रवर्त्तते, न तु ज्ञानाकारस्तथेत्यर्थः । ननु बाह्येऽर्थक्रियासमर्थे ज्ञानाकारारोपात्प्रवृत्तिः स्यादत आह । न च बाह्य इति । बाह्यस्य त्वन्मते विकल्पेनासंस्पर्शात् । ननु ज्ञानाकार एव बाह्यत्वमारोप्य प्रवृत्तिः स्यात्, तदर्थक्रियासमर्थमेव यत इत्यत आह । न चेति । स्वरूप इति । स्वप्रकाशे(न) (ज्ञा)नाकारे स्फुरति तत्र विशेषदर्शनादारोपानुपपत्तिरित्यर्थः । अन्यविषयज्ञानादन्यत्र प्रवृत्तिरित्यत्र दृष्टान्तोपि साध्यविकल इत्याह । प्रभायां त्विति(२) ॥

न चाकारवादेऽस्फुरतोऽर्थस्य सत्तायां प्रमाणम-

दीधितिः ।

ज्ञानस्य साकारत्वं निराकरोति । न चेति । ज्ञानं हि बाह्यमवगाहते(३) न वा । आद्ये, तत एव(४) रजतज्ञानमित्यादिव्यवहारोप(५)पत्तावतिरिक्ते आकारे प्रमाणाभावः । न हि(६) ज्ञानं

दीधितिटिप्पणी ।

न हीति । येनाकाराकारिणोरभेदादयमाकाररूप एव सिध्येत् ।

(१) अर्थक्रियासमर्थेष्व—कलि० मु० पु० पा० । (२) प्रभायास्त्विति पाठः ।

(३) अवगाहते, विषयीकरोति ।—गुणानन्दः ।

(४) तत एव, विषयित्वादेव ।—गुणानन्दः । (५) व्यवहाराद्युप—कलि० मु० पु० पा० ।

(६) ननु तद्वृत्तिरजतत्वादिमत्त्वमेव ज्ञानस्य तदवगाहित्वं वाच्यम्, तत्राह । न हीत्यादि । व्यवाजिहीर्षाविषभावेन अव्यवहारोपपत्तेराह । प्रत्येति चेति ।—गुणानन्दः ।

प्यस्ति, आकारकादाचित्कत्वस्य तैमिरिककेशाद्याकारेणानैकान्तिकत्वात् ।

दीधितिः ।

रजतमिति कश्चिद्व्यवहरति प्रत्येति वा, परन्तु रजतस्य ज्ञानमिति । द्वितीये तु न बाह्यसिद्धिः । रजत(मिद)मित्यादिकं हि(१) ज्ञानं रजतादिकमवगाहमानं रजतादिसिद्धिरभिधीयते, तच्चेन्न तदवगाहि, कुतो रजतादिसिद्धिः । आकारात् (कार्यात्) कारणस्य विषयस्य सिद्धिं निराकरोति । आकारेति । कार्याद्धि सामान्यतः कारणमात्रं विशेषतश्च गृहीतहेतुभावं(२) सिद्ध्यति । आद्ये न तेन(३) दहनादिनैव भवितव्यम् । द्वितीये तु विनापि दहनादिकं दहनाद्याकारविकल्पोपगमेन व्यभिचारात् दहनाद्यप्रसिद्ध्या च न कारणताग्रहसम्भवः(४) ॥

दीधितिटिप्पणी ।

द्वितीये त्विति । न च निर्विकल्पकविषयतानिबन्धनैव बाह्यसिद्धिर्भविष्यतीति वाच्यम् । तस्य विषयाव्यवस्थापकत्वात् । तत्रापि विकल्पस्यैव प्रमाणत्वात् । विशेषसामान्ययोः सामान्याकारा(५)भिप्रायेणाह । आद्ये इति । तथा च दहनाद्याकारविकल्पान्न दहनसिद्धिः स्यादिति भावः । विशेषरूपेण कारणानुमानलिङ्गस्यानैकान्तिकत्वमाह । द्वितीये त्विति । गृहीतहेतुभावमित्येव न सम्भवतीत्याह । दहनाद्यप्रसिद्ध्येति ॥

कल्पलता ।

सौत्रान्तिकमते दोष(६)माह । न चेति । अस्फु-

(१) मित्यादिकं च—कलि० मु० पु० पा० ।

(२) गृहीतहेतुभावं वस्तु । – गुणानन्दः ।

(३) तेन, कारणेन ।—गुणानन्दः ।

(४) कारणताग्रहः, दहनत्वादिना । तथा च कथं तेन रूपेणानुमानमिति भावः ।—गुणानन्दः।

(५) विशेषसामान्ययोः काभा—इति सर्वत्र पाठः ।

(६) दोषान्तर—कलि० मु० पु० पा० ।

कल्पलता ।

रतोऽर्थस्य नीलादेः । नन्वाकारकादाचित्कत्वादेव(१) विषयसिद्धिः स्यात्, न हि नीलसन्निधानमन्तरेण नीलाकारं ज्ञानं कादाचित्कं भवेत्, सर्वदैव तदाकारज्ञानप्रसङ्गादित्यत आह । आकारेति । कादाचित्कस्या(२)प्याकारस्यार्थव्यभिचारदर्शनादित्यर्थः ॥

अर्थक्रियासम्वादस्यापि स्फुरितस्याकारमात्रशरीरत्वात्, बाह्यस्य चासिद्धेः । निरालम्बनार्थाकारवच्च(३)

दीधितिः ।

माभूत् ज्ञानगतादहनाद्याकारात् कार्याद्दहनादिसिद्धिः, दाहादेस्तु(४) स्यादत आह । अर्थेति । स्फुरितस्य स्वप्रकाशेनोल्लिखितस्य । बाह्यस्य दाहादेः(५), असिद्धेः दाहाद्याकारेण(६) विज्ञानेनाग्रहणात् । न चागृहीतं लिङ्गं लैङ्गिकमनुमापयति । माभूद्बाह्यो दाहादिर्दहनादेरनुमापकः, ज्ञानाकारस्तु स्यात्, न हि(७)

दीधितिटिप्पणी ।

इदमेव कुतो ज्ञातमत आह । स्वप्रकाशेनेति । अग्रहणादिति । तथा चाज्ञानरूपाऽसिद्धिरित्यर्थः । ज्ञानाकारस्त्विति । पूर्वं दहनाकारो हेतुरुक्तः, इदानीं तु दाहज्ञानाकारस्तथोच्यत इति न पौनरुक्त्यं । ननु दाहाद्याकारः कथं दहनादेः साक्षादनुमापकः स्यादतः परम्परया तदा-

(१) नन्वाकारः कादाचित्कत्वादेर—पुण० पु० पा० ।

(२) कादाचित्कत्वस्या—इति सर्वत्र पाठः । (३) कारवत्—पा० २ पु० ।

(४) दाहादेः, दहनादिलक्षणात् कार्यात् ।—गुणानन्दः ।

(५) कारणीभूतस्य बाह्यस्यासिद्धेः प्रागेवाभिधानादाह । दाहादेरिति ।—गुणानन्दः ।

(६) स्वरूपासतापि हेतुना ज्ञातेन सिद्धेरुपगमादाह । दाहाद्याकारेणेत्यादि । न चागृहीतमिति । स्वप्रकाशात्मकज्ञानलिङ्गकानुमाने लिङ्गग्रहस्यानुमितौ प्रयोजकत्वावसायेनेदम् ।—गुणानन्दः । सौत्रान्तिकमते सर्वस्यैव बाह्यस्यातीन्द्रियत्वात् गृहीतस्य लिङ्गस्य लैङ्गिकानुमापकत्वं कुत्र दृष्टं, येन अगृहीतस्य तस्याननुमापकत्वं तेनोच्येत इति प्रश्नः स्वप्रकाशज्ञानलिङ्गकानुमानमुपन्यस्य अत्र गुणानन्देन समाहितः ।

(७) दहनाद्याकारस्य दहनानुमापकत्वं प्रागेव निराकृतम्, अतोऽर्थक्रियाकारपदं दाहाद्याका-

क्वचिद्वासनावशादर्थक्रियाकारोपि निरालम्बन एव भविष्यतीति विपक्षे बाधकाभावात् प्रतिबन्धस्याप्यसि-

दीधितिः।

विना दाहादिकं दाहाद्याकारं ज्ञानं, न च विना दहनादि दाहादिकमत आह। निरालम्बनेति। निरालम्बनः बाह्याप्रयुक्तः(१)। अर्थाकारः दहनाद्याकारः। अर्थक्रियाकारः दाहाद्याकारः। सन्दिग्धानैकान्तिकत्वं(२) स्थलविशेषाभिप्रायेण, प्रायेण

दीधितिटिप्पणी।

ह। न हीत्यादि। बाह्याप्रयुक्त इति। भ्रमस्थले बाह्यं विनापि तदाकारः सम्भवति, तथा च व्यभिचार इत्यर्थः। (३)*स्वकृतव्याख्यानुसारेण सङ्गमनार्थमाह। अर्थाकार इत्यादि। निरालम्बन एवेति मूले अनैकान्तिकत्वं दर्शितम्, तत्र च भविष्यतीति लिखनात् सन्दिग्धत्वं प्रतीयते, सन्दिग्धस्थल एव भविष्यतिशब्देन लिखनात्, तच्च सन्दिग्धानैकान्तिकत्वं कुत्र स्थले भविष्यतीत्याह। सन्दिग्धेति। स्थलविशेष इति। यस्य धर्मस्य भ्रमोऽस्ति नवेति सन्देहः तदाकारकज्ञानाकारे तद्बोध्यमित्यर्थः। प्रायेण त्विति। प्रायशोऽनेकधर्मस्य भ्रमालिखितत्वानिश्चयादिति(४) भावः। एकत्राप्रामाणिकयोरुभयोरङ्गीकारो वा बाह्यवस्तुसत्त्वे भवतीति प्रकृतेरुभयोरप्रा-

रपरामिति स्फुटयति। नहीत्यादि। तथाच दाहाद्याकारेण दहनादेरनुमितानुमानमिति भावः।—गुणानन्दः।

(१) तदाकारत्वस्यैव तन्नये तदालम्बनत्वमत आह। बाह्याप्रयुक्त इति। दहनाद्याकारेति। तत्र च तत्त्वं प्रागेव साधितमिति न दृष्टान्तानुपपत्तिरिति भावः।—गुणानन्दः।

(२) विपक्षे बाधकाभावात्प्रतिबन्दयसिद्ध्या अप्रयोजकत्वमुक्तं, तच्च सन्दिग्धानैकान्तिकत्वपर्यवसन्नमत आह। सन्दिग्धेति। स्थलविशेषेति। येन रूपेण न भ्रमसम्भवः तदभिप्रायेणाह। प्रायेणेति। अत एव तैमिरिककेशसाक्षात्कारेणेत्यादिना अनैकान्तिकत्वमेवोक्तं प्रागिति भावः।—गुणानन्दः।

(३) *एतत्पुष्पिकाचिन्हमारभ्याग्रिमपुष्पिकाचिन्हपर्यन्तः पाठ आदर्शपुस्तके नास्ति।

(४) भ्रमालिखितेति। भ्रमेणालिखितत्वस्य आलेख्याविषयीकृतत्वस्य निरालम्बनाकारत्वभावस्येति यावत्।

द्धेः। तस्माद् बाह्यासिद्धिः(१) साकारं च ज्ञानमिति बाह्यलोलुपत्वमिति।

दीधितिः।

तु निश्चितव्यभिचारत्वमेव। बाह्यलोलुपत्वमिति। बाह्यविलोपे हि रङ्गज्ञानं रजतज्ञानमिति विशेषो न विनाकारं सम्भवतीति सिद्ध्येदाकारः, बाह्योपगमे तु तत्तद्विषयत्वेनैव तदुपपत्तावाकारे प्रमाणाभावात्(२)॥

दीधितिटिप्पणी।

माणिकत्वमाह(३)। बाह्यविलोपे हीति॥

कल्पलता।

ननु बाह्यार्थक्रियैव बाह्ये प्रमाणं स्यादित्यत आह। अर्थक्रियेति। अर्थक्रियायाः अध्याकारशरीरत्वादित्यर्थः। किं च यदि बाह्यं सिद्ध्येत्तदा(४)र्थक्रियापि प्रतिनियता सिद्ध्येत्, तदेव तु नास्तीत्याह। बाह्यस्य चेति। न चार्थक्रिया बाह्ये प्रमाणं भवितुमर्हति, (तेन) तैमिरिककेशज्ञानवदर्थक्रियाज्ञानस्यापि वासनासमुत्थत्वेनोपप्लवयितुं शक्यत्वादित्याह। निरालम्बनेति। निरालम्बनार्थाकारः तैमिरिक(केश)ज्ञानाकारः। प्रतिबन्धस्यापीति। अर्थक्रियाकारबाह्ययोः प्रतिबन्धस्या(५)सिद्धेः कथमर्थक्रियासम्वादेन बाह्यार्थसिद्धिः स्यादित्यर्थः। बाह्यस्यार्थक्रियैव नास्तीत्यपिना समुच्चिनोति॥

(१) बाह्यसिद्धिश्च—पा० २ पु०। (२) प्रमाणाभाव—पाठः।

(३) एकत्राप्रामाणिकयोरुभयोरङ्गीकारो वा नास्त्येव त्वध्वत्वेतीति प्रकृतेरुभयोरप्रमाणिकत्वमाह—इति आदर्शपुस्तके पाठः।

(४) सिद्ध्येत्तदा तद—पुण० पु० पा०। (५) प्रतिबन्धा—पुण० पु० पा०।

अस्तु तर्हि बाह्यमेव स्वलक्षणं विकल्पविषयः(१)। यद्यपि स्वरूपेणासामयिकतया(२) तन्नाभिलापसंसर्गयोग्यम्, तथाप्यतद्रूपपरावृत्तिप्रत्यासत्त्या साधारणरूपतामापन्नं सत् तथा भवत्येव । यथा ह्येको गौरगोव्या-

दीधितिः ।

बाह्यं वस्तु वेति तृतीयं पक्षमुत्थापयति । अस्त्विति । तथापीति। भवतां विधिरूपस्येव निषेधरूपस्यापि गोत्वस्य योगात् सङ्केतादि(३)विषयत्वमित्यर्थः । तथा अभिलापसंसर्गयोग्यम् । यद्यपि तेषाम(४)सत्याः व्यावृत्तेः(५) सता(६) सम्बन्धस्य सत्त्वस्य वा(७)ऽभ्युपगमेऽपसिद्धान्तः, तथापि तस्य(८) तैर्दोषत्वानभ्युपग-

दीधितिटिप्पणी ।

अस्त्वितीति । नन्विदमसङ्गतं, पूर्वं तच्च अलीकं वेत्यादौ तत्पदेन साधारणं रूपं व्याख्यातं, अतोऽत्रापि साधारणरूपबाह्यस्य विषयत्वापादनं युक्तं, तत्कथमस्त्वित्यादिना स्वलक्षणस्य विषयत्वमापादितमिति । मैवम् । तच्चालीकेत्यादौ तत्पदव्याख्यानीभूतसाधारणपदेन रूपाहितस्योक्तत्वात्, अतः स्वलक्षणमपि पूर्वं तथा विकल्पविषय इति । अत एवात्र तथापीत्यादिमूले साधारणरूपतामापन्नमित्युक्तम् । ननु तदा व्यावृत्तिः सत्येवाङ्गीकार्येत्यत आह । सत्त्वस्य वेति ।

(१) विकल्पस्य विषयः—कलि० मु० पु० पा० ।

(२) स्वरूपेणेति । निर्विकल्पकविषयभूते वस्तुनि शक्तिग्रहो नास्तीत्यर्थः । तदुक्तं भगीरथठक्कुरेण—"स्वरूपेणेति । आनन्त्यव्यभिचाराभ्यां तत्र शक्तिग्रहाभावादित्यर्थः" इति ।

(३) सङ्केतादीत्यादिपदात् प्रवृत्त्यादिपरिग्रहः ।—गुणानन्दः ।

(४) तेषाम्, वैनाशिकानाम् ।—गुणानन्दः ।

(५) मतव्यावृत्तेः—पुण० पु० पा० ।

(६) सता, स्वलक्षणेन ।—गुणानन्दः ।

(७) ननु व्यावृत्तिरपि सती, तथाच न सता सम्बन्धविरोध इत्युपगमे त्वाह । सत्त्वस्य वेति ।—गुणानन्दः ।

(८) तस्य, अपसिद्धान्तस्य । तैः, परैः ।—गुणानन्दः ।

वृत्तस्तथाऽपरेऽपि गाव इति चेत् । अथ कोऽयमगौर्नाम । किमेकस्य गोस्वलक्षणस्यानात्मा, आहोस्वित्तद्गतधर्म्मविरही ।

दीधितिः ।

माह दोषान्तरमाह । अथेति ॥

दीधितिटिप्पणी ।

एतद्दोषं विहाय कथं दोषान्तरमाहेत्यत्र बीजमाह । तथापीति ॥

कल्पलता ।

सम्प्रति बाह्यं वस्तु वेति वैभाषिकमतमुत्थापयन् तृतीयं विकल्पं दूषयति । अस्तु तर्हीति । ननूक्तं स्वलक्षणं नाभिलापसंसर्गयोग्यप्रतिभासमत आह । यद्यपीति । अतद्रूपेति । अगोव्यावृत्तिलक्षणया प्रत्यासत्त्या स्वलक्षणेऽप्य(१)भिलापसंसर्गयोग्यतासम्भवादित्यर्थः । तथा भवत्येव अभिलापसंसर्गयोग्यं भवत्येवेत्यर्थः । तामेव प्रत्यासत्तिमाह । यथा हीति । गोपिण्डभिन्नो वा गोत्वजातिशून्यो वा अगौरिति विकल्पार्थः ॥

प्रथमे न गवान्तरेपि(२) गोशब्दविकल्पौ प्रवर्त्तेयाताम्, अश्वादिवदनात्मत्वाविशेषात् । अतिप्रसङ्गश्च,

दीधितिः ।

एकगोस्वलक्षणभिन्नेभ्यो यावद्भ्यो व्यावृत्तिः यतः कुतश्चिद्वा । आद्ये(३), गवान्तरेपीति । द्वितीये, अतिप्रसङ्गश्चेति । अति-

दीधितिटिप्पणी ।

महिषेत्याद्युक्तहेतोः साध्याविशिष्टत्वदूरीकरणार्थं सामान्यरूपेण

(१) स्वलक्षणा—कालि० मु० पु० पा० ।

(२) प्रथमे गवान्तरेपि न—पुण० पु० पा०, पा० २ पु० ।

(३) अग्रिमदोषद्वयस्य एकस्मिन् कल्पेऽसम्भवाद्विकल्प्य दोषमाह । आद्य इति ।–गुणानन्दः ।

महिषमातङ्गाद्यगोव्यावृत्त्याऽश्वेपि गोव्यवहारप्रसङ्गात्। स गोरपि व्यावर्त्तत इति चेत्। तत् किमभिमतो गौर्गोरपि न व्यावर्त्तते। व्यावर्त्तते, किन्तु स्व-

दीधितिः।

प्रसङ्गः तदयोग्ये(१) तत्प्रसङ्गः। तदुपपादयति। महिषेति। कथञ्चित् प्रकारभेदात्(२) प्रसङ्गादिति पञ्चमी समर्थनीया। गोत्वावच्छिन्नव्यावृत्तयावद्वृत्त्या(३)वृत्तिर्गोव्यवहारे निमित्तमित्याशङ्कते। स इति। गोत्वमनुगतमननुगतं वा। आद्ये, तत् किमिति। द्वितीयं शङ्कते। व्यावर्त्तत इति। अनुगतं गोत्वं

दीधितिटिप्पणी।

साध्यमाह। तदयोग्य इति। इदमेवाह। कथञ्चित् प्रकारभेदादिति। अश्वेपि गोव्यवहारप्रसङ्गादिति विशेषरूपेण हेतुः, अयोग्येपि तत्प्रसङ्ग इति सामान्यरूपेण साध्यमिति न साध्याविशेषः, अतो हेतुत्वबोधिका पञ्चमी नासङ्गता। हेतुत्वमपि तादात्म्येन बोध्यम्। गोरपि व्यावर्तते इति मूलतः एकगोस्वलक्षणभिन्नेभ्यो यावद्भ्यो व्यावृत्तिर्नास्तीति प्रतीयते, एवं तत्किमित्यादिमूलतोपि एकगोस्वलक्षणभिन्नयावद्व्यावृत्तिर्गवान्तरेपि नास्तीति दोषो दत्त इति, एतच्च गवान्तरेप्यादिपूर्वोक्तमूलेन पुनरुक्तमत्रेति एकगोस्वलक्षणभेदं विहाय गोत्वावच्छिन्नभेदघटितं, तावता न कासारो गोत्वावच्छिन्न इति गोत्वावच्छिन्नभेदघटितत्वे तत्किमित्यादिग्रन्थो न लगति, अभिमतस्य गोर्गोत्वावच्छिन्नभेदानधिकरणत्वात्, अतो वितर्क्य सङ्गमयति। गोत्वमिति। न्यूनतां परिहरति। अनुगतं गोत्वमिति। यावदगोव्यावृत्ति-

(१) तदयोग्ये, तादृशसंसर्गाभिलापविकल्पायोग्ये। तत्प्रसङ्गः, तद्योग्यत्वप्रसङ्गः।

(२) ननु प्रसङ्गादिति पञ्चम्यनुपपन्ना, स्वस्मिन् स्वस्याहेतुत्वेन तदर्थानन्वयात्, अत आह। कथञ्चिदित्यादि। प्रकारभेदादिति। तदयोग्ये तत्प्रसङ्गत्वादिना साध्यत्वं अश्वत्वादिना चाश्वे तत्प्रसङ्गत्वादिना च हेतुत्वमित्यर्थः। अत एव पूर्वं तथैव व्याख्यातम्।—गुणानन्दः।

(३) समर्थनीया। एकगोस्वलक्षणभिन्नेभ्यो यावद्भ्यो व्या—पुण० पु० पा०।

यद्यप्यसौ गौरिति चेत् । यद्यगोव्यावृत्तिरेवास्य गोत्वं तदा(१)श्वेपि समानम् । अन्यच्चेत्त(२)दुच्यताम् ।

दीधितिः ।

विधिरूपं चेत्, सिद्धं नः समीहितम्(३) । निषेधरूपं चेत्तत्राह । यदीति । अगोव्यावृत्तिः एकगोस्वलक्षणानात्मकेभ्यो यावद्भ्यो व्यावृत्तिरुत तादृशाद्यतः कुतश्चित् । आद्ये, न तस्य गोत्वं(४), तस्याप्येक(५)गोस्वलक्षणभिन्नत्वात् । द्वितीये त्वाह । तदाऽश्वेपीति । अश्वस्याप्येकगोस्वलक्षणानात्मकयत्किञ्चिन्महिषादिव्यावृत्तत्वात् । तथा च गोत्वावच्छिन्न(व्यावृत्त्यवच्छिन्नमहिषादि)व्यावृत्तिमत्त्वात्तत्रापि(६) गोव्यवहारापत्तिः । विधे(७)रन्यच्चानुगताननतिप्रसक्तं दुर्वचमित्याह । अन्यच्चेदिति । एतेन यावद्गोव्यक्तिव्यावृत्तयावद्व्यावृत्तिर्गोव्यवहारनिमित्तमित्यपि निरस्तम् । विशिष्य(८) यावद्गोव्यक्तीनामसर्वज्ञावेद्यत्वात् एकधर्मोपग्रहं(९) विना यावद्गोव्यक्तिव्यावृत्तेर्दुर्ज्ञेयत्वात् ॥

दीधितिटिप्पणी ।

परत्वे तदन्तःपातीन्यन्यानि, इत्यतो वितर्क्य सङ्गमयति । अगोव्यावृत्तिरिति । अनुगतगोत्वस्याभावे निरुक्तं यत् तन्महिषादावप्यस्तीत्याह । तथाचेति ॥

---

(१) तद—कालि० मु० पु० पा० ।  (२) अन्यच्चे—पा० २ पु० ।
(३) सिद्धमीहितम्–पुण० पु० पा० ।  (४) गोत्वं, स्यादिति शेषः ।
(५) तस्याद्येक–पुण० पु० पा० ।
(६) गोत्वावच्छिन्नं, यत्किञ्चिद्गोव्यक्तिः, तद्व्यावृत्त्यवच्छिन्ना, तद्व्यावृत्तिमत्प्रतियोगिका, या व्यावृत्तिः तद्वत्त्वात् । तत्रापि; अश्वेपि ।—गुणानन्दः ।
(७) अन्यत्वस्य अवध्याकाङ्क्षायामाह । विधेरिति ।—गुणानन्दः ।
(८) विशिष्य, तत्तद्व्यक्तित्वादिना ।—गुणानन्दः ।
(९) एकधर्मेति । अनतिप्रसक्तनिखिलगोवृत्तीत्यर्थः ।—गुणानन्दः ।

कल्पलता ।

गवान्तर इति । तस्यापि अगोत्वादित्यर्थः । महिषादगोर्मातङ्गाच्चाश्वस्यापि(१) व्यावृत्तत्वेन गोव्यवहारप्रसङ्ग(२) इत्याह । अतिप्रसङ्गश्चेति । अश्वादिर्गोरपि व्यावर्त्तते इति न तत्र गोव्यवहार इत्याह । स गोरपीति । एकस्माद् गोपिण्डादपरोपि गोपिण्डो व्यावर्त्तते इति तत्रापि गोव्यवहाराभावप्रसङ्ग इत्याह । तत्किमिति(३) । गोपिण्डादेकस्माद् भिन्नोपि गोपिण्डो गौर्भवत्येवेति तत्र गोव्यवहारः स्यादेवेत्याह । व्यावर्त्तत इति । तदश्वेऽपीति । महिषादगोव्यावृत्तो(४)ऽश्वोपि गौरेव स्यादित्यर्थः । अन्यादिति । गोत्वावच्छिन्नप्रतियोगिकान्योन्याभाववानगौ(५)स्तदन्यश्च गौरित्यर्थः, तथा च सिद्धं गोत्वमिति भावः ॥

द्वितीये तु तद्गतधर्म्मविरहिव्यावृत्तस्तद्वानेव स्यात् । तत्र च न नो(६) विवादः ।

दीधितिः ।

यत्किञ्चित्तद्गतधर्म्मशून्यत्वमतिप्रसक्तं(७), यावत्तद्गतधर्म्मशून्यत्वं चाप्रसिद्धम्, अतस्तद्गतगोत्वशून्यत्वं वक्तव्यं, तथा च सिद्धमीहितमित्याह । तद्गतेति ॥

दीधितिटिप्पणी ।

तद्वानिति लिखितं न युक्तम्, योग्यं तु गतधर्म एवेति लिखितुमत आह । यत्किञ्चिदिति । अतिप्रसक्तम् गवान्तरे ॥

(१) मातङ्गस्यापि—पुण० पु० पा० ।

(२) व्यावृत्तत्वे गोव्यवहारः—कलि० मु० पु० पा० ।

(३) इत्याह । प्रसङ्गतत्किमिति—पुण० पु० पा० ।

(४) महिषादगोव्यावृत्त्या—पुण० पु० पा० । (५) भाववान् गौ—पुण० पु० पा० ।

(६) तत्र च न—कलि० मु० पु० पा० ।

(७) अयन्त्वो दीधितिकारस्य भावः दीधितिटिप्पणीपर्यालोचनेन एवं प्रतिभाति । ननु तद्गत-

कल्पलता।

तद्गतेति। गोत्वात्यन्ताभाववदन्यो गोत्ववानेवेत्यर्थः॥

---

मिथः सम्भिन्नाकाराः पिण्डा एव साधारणं रूपमस्तु, कृतमतद्रूपपरावृत्त्येति चेन्न। सम्भेदाभावात्(१)। स हि न वास्तवः, पिण्डानां विरुद्धधर्म्माध्यस्तत्वात्। नाभिमानिकः, शाबलेयादेर्भेदेनैव(२) प्रथनात्। तद्धर्म्माणां सम्भेदाभिमान इति चेन्न। धर्म्यतिरिक्तधर्मानभ्युपगमात्। अभ्युपगमे वा पर्य्यवसितं विवादेन।

---

दीधितिः।

आकाराभेद एवानुगतमतेरालम्बनमित्याशङ्कते। मिथ इति। सम्भेदः अभेदः। आकारो धर्मी, तद्धर्मो वा। आद्ये, (स हीति। अत्र हेतुमाह।) पिण्डानामित्यादि। द्वितीयं शङ्कते। तद्धर्माणामिति। अननुगतानां धर्माणां भेदावभासादनुगतो धर्मोऽभ्युपगन्तव्यः, तथा च सिद्धमीहितमित्याह। अभ्युपगमे वेति॥

दीधितिटिप्पणी।

तत्तद्व्यक्तिमात्रवृत्तिधर्माङ्गीकारेपि गोत्वासिद्ध्या कथं विवादपर्यवसानमत आह। अननुगतानामिति। प्रकृते अनुगमार्थं तत्तद्धर्मि-

---

धर्मेत्यादिमूले तत्पदेन गोत्वलक्षणस्य परिग्रहे तद्वानेवेति अग्रिममूलस्थतत्पदेनापि तस्यैव ग्रहणप्रसङ्गे अर्थासङ्गतिः, अत आह दीधितौ, यत्किञ्चिदित्यादि। अत्रायमाशयः, स चासौ गतधर्मश्च इति व्युत्पत्त्या गतशब्दस्य ज्ञातार्थकतया तच्छब्देन प्रक्रान्तपरामर्शेन ववतृबुद्धिस्थः लोकप्रसिद्धो गोत्वरूपो धर्मः तद्गतधर्मपदेन विवक्षितः। अग्रे तद्वानित्यत्रापि तच्छब्देन स एव परामृश्यते इति न पूर्वापरविरोधः। अन्यथा तु तच्छब्देन गोत्वलक्षणस्य परिग्रहे पूर्वापरविरोध इव दोषान्तरमपि भवतीत्याह। यत्किञ्चिदित्यादि। स्पष्टमन्यत्।

(१) सन्देहाभावात्—पा० २ पु०।

(२) मिथ इति। अनुगतमतेर्गोपिण्डानामैक्यं विषय इति न ततः सामान्यसिद्धिरित्यर्थः। भेदेनैवेति। मया भेदे भासमाने एषामेदत्त्वेर्जातिनिमित्तकत्वोपगमादित्यर्थः।—भगीरथठक्कुरः।

दीधितिटिप्पणी।

वृत्तितया भेदावभासविषयधर्मस्य धर्म्यतिरिक्तत्वं वक्तव्यं, तादृशावभासविषयत्वं नानुगतो धर्मः, तेषां तत्तद्धर्मिवृत्तितया परस्परं भेदावभासात्, अतोऽननुगतधर्मातिरिक्तो धर्मो वाच्यः, तथाच सिद्धं अनुगतगोत्वादिनेत्यर्थः॥

कल्पलता।

कीर्त्तिमतेनानुगतप्रत्ययस्यान्यथासिद्धिं शङ्कते। मिथ इति। यदाह कीर्त्तिः,

"पररूपं स्वरूपेण यया(१) संव्रियते धिया।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः॥
तया संवृतनानार्थाः संवृत्या भेदिनः स्वयम्।
अभेदिन इवाभान्ति भावा(२) रूपेण केनचित्॥" इति।

स हीति। सम्भेद इत्यर्थः। पिण्डानां वास्तवमेकत्वं, आ(३)भिमानिकं वा। आद्य आह। पिण्डानामिति। भेदेनैवेति। तथाच कैकत्वाभिमान इत्यर्थः। तद्धर्माणाम् शाबलेयादिधर्माणाम्। सम्भेदः ऐक्यम्। शाबलेयादिभिन्नास्त्वन्मते धर्मा एव न सन्ति येषां सम्भेदः स्यादित्याह। नेति। तेभ्यो भिन्नास्तेषां धर्माश्चे(४)त्तदा पर्यवसितं विवादेनेत्याह। अभ्युपगमे चेति॥

दीधितिः।

अनुगतं हि(५) सामान्यमनुगतविकल्पजननार्थं वा कल्प्यते, अनुगतव्यवहारालम्बनतया वा। नाद्यः(६), भिन्नानामपि स्व-

दीधितिटिप्पणी।

अनुगतव्यवहारालम्बनतया अनुगतविकल्पविषयतया। तादृशेति।

(१) यथा—पाठः। (२) भाव—पुण० पु० पा०।
(३) मेकत्वमा-पुण० पु० पा०। (४) तेभ्यो भिन्नं तेषां धर्मश्चे—पुण० पु० पा०।
(५) अनुगतं-कालि० मु० पु० पा०। (६) आद्यं-पुण० पु० पा०।

स्यादेतत् । भिन्नानामेव(१) स्वलक्षणानां समानाकार(२)विकल्पजननसामर्थ्यमस्तु, तदपेक्षया च केचिद्गाव इति व्यपदिश्यन्ते(३) केचिदगाव इति । तच्च सामर्थ्यं(४) स्वकारणनियतत्वादपर्य्यनुयोज्यम् । अन्यथा सामान्ये(ष्व)पि सामान्यान्तरं कल्प्येत, अनु-

दीधितिः ।

कारणाधीनात् सामर्थ्यविशेषादनुगतविकल्पजननोपपत्तेः । न द्वितीयः, तादृशविकल्पजनकत्वस्यैव व्यवहारालम्बनत्वात् । यदि चानुगतविकल्पजनकत्वादतिरिक्तमप्यनुगतव्यवहारालम्बनं कल्पनीयं, तदा सामान्येष्व(५)नुगतसामान्यव्यवहारालम्बनं सामान्यान्तरं कल्प्यं, तत्रापि च सामान्यव्यवहारात् तस्य(६) च स्वात्मनि वृत्तिविरोधात् तत्साधारणमपरं, एवं तत्र तत्रापीत्यनवस्था । एवं यदि स्वभावनियतवृत्तेरपि सामर्थ्यस्य वृत्तिनियमार्थं सामान्यं कल्प्यं, तदा तस्यापि वृत्तिनियमार्थमन्यत् एवं तस्य तस्यापीत्यनवस्थेत्याशङ्कते, स्यादेतदित्यादिना । (विकल्पानां(७)समानत्वम् आकारविशेषः ) ॥

दीधितिटिप्पणी ।

तावद्धर्मिनिष्ठानुगतविकल्पजनकत्वधर्म एव तादृशविकल्पविषय इत्यर्थः । तत्रापीति । स्वाधिकरणसामान्येन सहेत्यर्थः । तथा गोपिण्डेष्वपीतिमूलार्थमाह । एवमिति । वृत्तिरियमात्मवृत्त्यवच्छेदकतया ॥

(१) नन्वनुगतमतिः सामान्यसिद्धौ मानम्, सा चान्यथासिद्धैव । एकजातीयविकल्पजनकत्वादुपाधेर्भिन्नानां व्यक्तीनां तद्विषयत्वादित्याक्षिपति । भिन्नानामेवेति ।—भगीरथठक्कुरः ।

(२) समान—पुण० पु० पा०, पा० २ पु० ।

(३) व्यपदिश्यते—पा० २ पु० । (४) तच्च सामर्थ्यं—कलि० मु० पु० पा० ।

(५) सामान्येषु अ–पुण० पु० पा० । (६) व्यवहारस्तस्य-पुण० पु० पा० ।

(७) असति सामान्ये एकविषयत्वलक्षणस्य समानत्वस्यासम्भवादाह । विकल्पानामित्यादि ।—गुणानन्दः ।

गतव्यवहारानुरोधात्, तथा गोपिण्डेष्वपि गोत्वस्य, तेष्वेव व्यवस्थित्यनुरोधात् , उभयमुखी चैवमनवस्था स्यादिति चेत् ,

कल्पलता ।

कीर्त्तिमतमाशङ्कते । स्यादेतदिति । यथाह कीर्त्तिः,

"एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनाम(प्य)भिन्नता" ॥

इति । तदपेक्षयेति । येषां गवाकारानुगतधीजनन(१)स्वाभाव्यं पिण्डानां ते गावः, येषां तु न तथा सामर्थ्यं ते पिण्डा अगाव इत्यर्थः । ननु ता(२)दृशं सामर्थ्यमेव कुत इत्यत आह । तच्चेति । एतच्च त्वयापि स्वीकर्त्तव्यमित्याह । अन्यथेति । गोत्वाश्वत्वमहिषत्वादिष्विदं सामान्यमिदं सामान्यमित्यनुगतप्रत्ययात्ते(३)ष्वपि सामान्यान्तरमङ्गीक्रियेतेत्यर्थः । किं च गोत्वं गोपिण्डेष्वेव वर्त्तते नान्यत्रेति तद्वृत्तिनियामिका अपरा काचित् , एवं तद्वृत्तिनियामिका चापरेत्यधोधावन्ती अनवस्था स्यात् , सामान्ये च सामान्यान्तराभ्युपगमे चोर्द्धं धावन्तीत्युभयमुख्यनवस्थेत्यर्थः ॥

---

(१) जनक—कलि० मु० पु० पा० ।
(२) नन्वेता—पुग० पु० पा० ।
(३) प्रत्ययार्थं ते—पुग० पु० पा० ।

यद्येवं(१) निमित्तान्तरमनपेक्ष्यैकव्यवहारोऽत्यन्तभिन्नैः, एवं भिन्नव्यवहार एवाभिन्नेनैकेन केनचित् किं न साध्यते, शक्तिस्वभावावलम्बनस्योभयत्रापि तुल्यत्वात्। अथैवं(२) सत्येकव्यवहारः क्वचिदपि न स्यात्, निर्निमित्तो वा भवेत्, उभयमप्यनिष्टम्। तदेतत्तुल्यम्। अनेकव्यवहारोप्येवं(३) सति न स्यात्, निर्निमित्तो वा भवेत्, उभयम(४)प्यनिष्टम्। तस्मादेकेनैकव्यवहारवदनेकेनाप्यनेकव्यवहार एवेति सामर्थ्यनियमः।

---

दीधितिः।

सामर्थ्यं यदि तादृशनिखिलव्यक्तिनिष्ठमेकं, तर्हि किमपराद्धं प्रत्यक्षसिद्धेन गोत्वादिना, अथ प्रतिव्यक्ति भिन्नं, न तर्हि तस्यानुगतविकल्पोत्पादनियामकत्वं, मिथो व्यभिचारादित्याशयेन निराकरोति। यद्येवमिति॥

दीधितिटिप्पणी।

भिन्नानामेवेति यदुक्तं, तद्दूषयति। सामर्थ्यं यदीति। इदमुपलक्षणम्, तादृशविकल्पजनकत्वमप्येवं दूष्यम्॥

---

कल्पलता।

यथात्यन्तभिन्नानामभेदव्यवहारहेतुत्वं, तथा अ-

---

(१) अनेकेनानेकव्यवहार एवेति नियमानभ्युपगमे एकेनैकव्यवहार एवेत्यपि नियमो न स्यादिति स्वलक्षणमपि त्यज्यतामिति वाङ्मवाद्व्याघात इति समाधत्ते। यद्येवमिति। अभिन्नेति। यथा सर्वत्राद्वैतवादिभिर्ब्रह्मणैकेनानेकव्यवहारोऽभ्युपगम्यत इत्यर्थः। अथैवमिति। इतरानिमित्तकोऽयं व्यवहारो यदि तन्निमित्तको न स्यात् अनिमित्तको वा स्यादित्यर्थः।—भगीरथठक्कुरः।

(२) एवम्, भिन्नानामेकव्यवहारहेतुत्वे।

(३) एवम्, एकस्यानेकव्यवहारहेतुत्वे। (४) उभयथा—पा० २ पु०।

कल्पलता।

भिन्नानां भेदव्यवहारहेतुत्वमेव किं न स्यादित्येकैकोपि गोपिण्डो भेदेनैव व्यवह्रियेतेत्याह(१)। यद्येवमिति। एकेना(२)नेकव्यवहारश्चेदनुपपन्नः, तदा(३) अनेकैरे(४)कव्यवहारोप्यनुपपन्न एवेत्याह। अथैवमिति। तुल्यतामेव दर्शयति। अनेकेति। एकेनैव सामान्येन गोत्वादिना गवादिपिण्डानामनुगतव्यवहार इत्युपसंहरति। तस्मादिति॥

का गतिस्तर्हि सामान्येष्वनेकेष्वेकव्यवहारस्य। या चन्द्रमस्येकस्मिन्ननेकव्यवहारस्य। भ्रान्तोऽसाविति चेत्, अयमपि भ्रान्त एव, बाधकस्योभयत्रापि तुल्यत्वात्। सर्वत्र भ्रान्तोऽस्त्विति चेत्, भेदव्यवहारोपि तथा किं न स्यात्। अर्थक्रियाभेद(५)स्थितेरिति चेत्, व्यक्तिभेदाभेदव्यवस्थापकार्थक्रियाभेदाभेदवत् सजातीयासजातीयत्व(६)व्यवस्थापकार्थक्रियासाजात्यवैजात्ये (अपि) किं न पश्यसि। ते अपि भ्रान्ते इति

दीधितिः।

अभ्युपेत्याह। या चन्द्रमसीति। वस्तुतो नित्यानेकसमवेतत्वलक्षणौपाधिकसामान्यनिबन्धनो गोत्वादावनुगतसामान्यव्यवहार इति भावः। सर्वत्र गवादिपिण्डेष्वपि। प्रतिबन्दिमाह। भेदेति। ते अर्थक्रियासाजात्यवैजात्ये। भ्रान्ते भ्रान्त्युल्लिखिते(७)।

(१) व्यवह्रियत इत्यत आह—पुण० पु० पा०।

(२) एकेनाप्य—पुण० पु० पा०। (३) तथा—पुण० पु० पा०।

(४) अनेकैर्न—पुण० पु० पा०।

(५) अर्थक्रिया—कलि० मु० पु० पा०। (६) सजातीयविजातीयत्व—पुण० पु० पा०।

(७) भ्रान्तपदस्य भावकर्मोभयोल्लेखादाह। भ्रान्त्युल्लिखिते इति। -गुणानन्दः।

चेत्, अर्थक्रियाभेदो(१)पि भ्रान्त इति तुल्यम् । अस्त्वेवमिति चेत्, त्यज तर्हि बाह्यव्यसनम् । अयमेवाशय इति चेत्, तत्र वक्ष्यामः ।

---

दीधितिः ।

यदि विनैव बाधकं बुद्धीनां भ्रमत्वं, तदा बाह्यविलोपप्रसङ्ग इत्याह । त्यजेति ॥

दीधितिटिप्पणी ।

बाह्यविलोपप्रसङ्गः बाह्यसाधकप्रमाया अभावात् ॥

---

कल्पलता ।

परापादितामनवस्थामुद्धर्तुमाह । का गतिरिति । यथा कदाचिदेकेनाप्यनेकव्यवहारस्तथा क्वचिदनेकेनाप्येकव्यवहार इति प्रतिबन्दिमुखेनोत्तरमाह । येति । वस्तुतः सामान्येष्वपि तदितरावृत्तित्वे सति सकलतद्वृत्तित्वं ( नित्यत्वे सत्यनेकवृत्तित्वं ) उपाधिसामान्यमेकमस्तीति भावः । सर्वत्रेति । गोपिण्डादिष्वप्य(२)नुगतव्यवहारो(३) भ्रान्तोऽस्त्वित्यर्थः । वेदान्तिमतमा(४)लम्ब्याह । भेदव्यवहारोपीति(५) । अर्थक्रियाभेदात् व्यक्तीनामपि भेद इत्याह । अर्थेति । अर्थक्रियासाजात्यवैजात्यनिबन्धने तर्हि(६) व्यक्तीनामपि साजात्यवैजात्ये स्वीकार्ये एव, अन्यथा तदाकस्मिकत्वप्रसङ्गादित्याह । व्यक्तीति । ते अपीति । अर्थक्रियासाजात्यवैजात्ये इत्यर्थः । तर्हि व्यक्तिभेदको-

---

( १ ) अर्थक्रियाभेदाभेदो—पा० २ पु० । ( ३ ) व्यवहारा—पुण० पु० पा० ।
( २ ) गोपिण्डादिष्व—कालि० मु० पु० पा० । ( ५ ) हारेणेति–पाठः, व्यवहार इति–पुण० पु० पा० ।
( ४ ) वेदान्तिनयमा–पुण० पु० पा० ।
( ६ ) अर्थक्रियासाजात्यवैजात्यनिबन्धने इति—कालि० मु० पु० पा० ।

कल्पलता।

(१)र्थक्रियाभेदोपि(२) भ्रान्त एवेति व्यक्तिभेदोपि न स्यादिति जितं वेदान्तिभिरित्याह। अर्थक्रियेति। व्यक्तिभेदोपि मास्तु, किं नश्छिन्नमित्याह। अस्त्विति। तर्हि चिद्रूपं ब्रह्मैवैकमस्तु(३) किं बाह्येनेत्याह। त्यजेति(४)। लब्धावकाशो(५) वेदान्त्याह। अयमेवेति। बौद्धाभिमानं निराकृत्य तवाप्यभिमानमग्रे निराकरिष्याम इत्याह। तत्रेति॥

माभूद्वाऽर्थक्रियासाजात्यम्(६), भ्रान्त्यनुगमोप्येकं निमित्तमनादृत्य कथम्, तदपि हि कार्य्य(७)-

दीधितिः।

यदि च विनैव कारणसाजात्यं (कार्य)साजात्यं(८), तदा (यथा) भिन्नभिन्नैरेव (पिण्डैरभेदव्यवहारः, तथा भिन्नभिन्नैरेव) बीजादिव्यक्तिविशेषैरनुगताङ्कुरादिकार्यजननोपपत्तावङ्कुरादिसाजात्यानुरोधेन बीजादिव्यक्तिविशेषतत्कारणपरम्परासु कुर्वद्रूप-

दीधितिटिप्पणी।

बीजादीति। तथाच भवता साजात्यानुरोधेन अङ्कुरत्वावच्छिन्नं प्रति बीजादिव्यक्तिविशेषाणां कुर्वद्रूपत्वसामान्यं न कल्प्यताम्। एवं बीजसामान्यकरणेष्वपि कुर्वद्रूपत्वसामान्यं न कल्प्यतां, एवं तत्कारणतत्कारणेष्वपि। इत्थञ्च कुर्वद्रूपत्वपरम्परा न कल्प्यतामित्यर्थः। परम्पराशब्दस्य समुदाये लक्षणया एकजातीयकार्यं प्रत्यपि

(१) व्यक्तिभेदकोप्य—पुण० पु० पा०। (२) भेदा—पुण० पु० पा०।
(३) एकं ब्रह्मैवास्तु-पुण० पु० पा०। (४) त्यजति—पुण० पु० पा०।
(५) लब्धावसरो—पुण० पु० पा०।
(६) माभूद्वा अर्थक्रियासाजात्यवैजात्यावगमः—कलि० मु० पु० पा०। माभूद्वा अर्थक्रिया—पा० २ पु०।
(७) हि कार्य—पा० २ पु०। (८) साजात्यं साजात्यं कार्याणां—पुण० पु० पा०।

साजात्यं सामग्रीसाजात्यमन्तरेणाकस्मिकमापद्येत, अन्यथा तत्परम्परालम्बनमपि(१)(२) विडम्बनमेव। भिन्नैस्तैस्तैरनुगत(३)व्यवहारसिद्धौ व्यक्तिभिरेव तथाभूताभिरभिमतसिद्धेस्तदनुसरणप्रयासवैफल्यात्, तस्मादारोपव्यवहारस्याप्यनारोपितजात्यनादरे असम्भव एवेति।

दीधितिः।

तत्परम्पराकल्पनं विफलमेव भवतामित्याह। अन्यथेति। तत्परम्परेत्यस्य(४) बीजधान्यशालिकलमादिष्वङ्कुरादिसामान्यविशेषकार्यप्रयोजककुर्वद्रूपत्वसमुदायो वाऽर्थः। विना बाधकं तद्बुद्धीनां भ्रमत्वायोगात्तद्बलात्साजात्यवैजात्ये साधयित्वा सम्प्रति भ्रमस्यारोप्यप्रसिद्धिमन्तरेणासम्भवादसत्ख्यातेर्निरासाद्भ्रमबलादेव ते साधयन्नुपसंहरति। तस्मादिति॥

दीधितिटिप्पणी।

तत्सङ्क्रमयति। परम्परेत्यस्येति। अङ्कुरादीति। बीजस्याङ्कुरसामान्यं, धान्यस्याङ्कुरविशेषः। शालिनः तद्विशेषः प्रयोज्यः। इत्थं च एकाङ्कुरजातीयं प्रति कुर्वद्रूपत्वसमुदायो न कल्प्यतामित्यर्थः। आरोप्यम् रजतत्वादि। ते साजात्यवैजात्ये॥

कल्पलता।

माभूद्वेति। अर्थक्रियासाजात्यं कारणसाजात्यो-

(१) तत्परम्परावल—पा० २ पु०।

(२) सर्वधीभ्रमत्ववादिमते भ्रान्तित्वरूपस्य एकस्य भ्रान्त्यनुगमव्यवहारनिमित्तस्य विरहे अर्थक्रियादिप्रतीतीनां भ्रान्तित्वेनानुगमोपि कथं स्यादिति भावः। निमित्तम्, भ्रान्तत्वरूपम्। कार्यसाजात्यम्, भ्रान्तित्वरूपानुगतरूपम्। सामग्रीसाजात्यम्, अनुगतधर्मावच्छिन्नकारणताकम्। परम्परेति च अङ्कुरकारितत्कारिप्रभृतिकुर्वद्रूपत्वपरिग्रहः।—गुणानन्दः।

(३) रभेद—कालि० मु० पु० पा०।

(४) अङ्कुरादीनामित्येकमर्थमुक्त्वार्थान्तरमाह। तत्परम्परेति।

कल्पलता।

ज्ञायकं मास्तु, किञ्चिज्ज्ञानं(१) भ्रान्तं किञ्चिदभ्रान्तमियमपि व्यवस्था कारणसाजात्यनिबन्धनैव स्यात, अन्यथा सर्वं भ्रान्तमभ्रान्तमेव वा भवेदित्यर्थः। भ्रान्त(२)त्वेनानुगतमतिरपि भ्रमः स्यादित्यर्थ इत्यन्ये। तदपि भ्रान्तत्वमपि। ननु भ्रमत्वे सामग्रीसाजात्याप्रयोजकत्वेप्यनाकस्मिकत्वं स्यादित्यत आह। अन्यथेति। तत्प(रम्प)रालम्बनमपीति। भ्रमपरम्परालम्बनमपीत्यर्थः। तदनुसरणप्रयासः भ्रमपरम्परानुसरणप्रयासः। (तदयमर्थः)।

एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता॥

इत्यत्र प्रत्यव(३)मर्षस्य प्रतिसन्धान(४)स्यैकत्वभ्रमादनुगतप्रत्ययानामेकत्वभ्रमाच्च(५) व्यक्तीनामेकत्वभ्रम इति या भ्रमपरम्परा त्वयोक्ता, सापि तव विडम्बनमेव धिक्कार एव, भ्रमक(ा)रणस्याप्यनुगतस्य त्वया(न)ङ्गीकारादिति। यद्वा एकप्रत्यवमर्षस्ये(त्येकजातीयप्रत्यवमर्षस्ये)ति त्वया वाच्यम्, तथा च सिद्धो जातिकृतानुगम(६) इत्यर्थः, तथा च त्वत्कारिकायां तत्परम्परानुसरणं तज्जातीयत्वपरम्परानुसरणमित्यर्थः। यद्वा व्यक्तीनां भिन्नानामेव सामर्थ्यात् सर्वत्राभेदव्यवहारोस्तु,(७) किं प्रत्यवमर्षानुगतधीप-

(१) किञ्च ज्ञानं—पुग० पु० पा०। (२) भ्रान्ति—कालि० मु० पु० पा०।

(३) इत्येव—पुग० पु० पा०। (४) प्रतिसन्धायाल—पुग० पु० पा०।

(५) नुगतप्रत्ययानात्मकत्वभ्रमतो कत्वभ्रमाच-पुग० पु० पा०। अनुगतप्रत्ययानामेकत्व भ्रमः एकत्वभ्रमाच्च-इति पाठो युक्तः प्रतिभाति।

(६) कृतानुगतप्रत्ययः—पाठः। (७) व्यवहारापत्तेः—पुग० पु० पा०।

कल्पलता।

ऽस्पराऽनुसरणेन कारिकास्थे(१)नेत्यर्थः। यद्वा(२) प्रत्ययसमर्थः व्यवहारः। धीः विकल्पकस्वरूपानुगतधीः। तत्परम्परानुसरणम्(फ)लं, व्यक्तिस्वाभाव्या(३)देव तदुपपत्तेरित्यर्थः। एकजातीयं वास्तवमनुसरणीयमेवेत्युपसंहरति। तस्मादिति(४)॥

अस्तु तर्हि जात्यादौ बाधकादपोहसिद्धिरिति चेत् (५), व्यवहारस्या(६)नन्य(७)थासिद्धौ क बा-

दीधितिः।

जात्यादाविति(८)। आदिपदादनेकवृत्तिसंयोगादिपरिग्रहः। बाधकं हि शङ्कितं निश्चितं वा। आद्ये, व्यवहारस्येति।

दीधितिटिप्पणी।

अनेकवृत्तीति। तैरनेकवृत्तिधर्ममात्रस्यैव अनङ्गीकारादिति भावः। क बाधकमित्यनेनैव बाधकनिरासात् न च बाधकमप्यस्तीति पुनर्बाधकनिराकरणं बाधकस्य द्वैविध्येन सङ्गमयति। बाधकं हीति। मूले बाधकव्यसनम् शङ्कितं बाधकव्यसनम्॥

(१) कारिकास्ते—पुण० पु० पा०।

(२) एकजातीयं वास्तवमनुसरणीयमेवेत्युपसंहरति। यद्वा—कालि० मु० पु० पा०।

(३) व्यक्तिस्वाभावा—पुण० पु० पा०।

(४) एकजातीयं वास्तवमनुसरणीयमेवेत्युपसंहरति। तस्मादिति—नास्ति पाठः कालि० मु०पु०।

(५) रिति चेन्न—पुण० पु० पा०।

(६) व्यवहारस्येति। व्यवहारानन्यथासिद्धेरेव न बाधकमित्यर्थः। नापि बाधशङ्का, तस्या एव विपक्षबाधकत्वात्। अन्यथा तव स्वदर्शनव्याघात इत्याह। अन्यथेति। यदि विपक्षबाधकसद्भावेपि शङ्केत्यर्थः।—भगीरथठक्कुरः।

(७) व्यवहारस्या—पा० २ पु०।

(८) गोपदप्रवृत्तिनिमित्तादेर्जातित्वे बाधकादित्यर्थः।—गुणानन्दः।

धकम् । अन्यथा विपक्षे बलवद्बाधकमुपनीया(१)न-
न्यथासिद्धिविश्रान्तोऽपि(२) स्वभावहेतुर्बाधकशङ्कया-
प्युपहन्येत । ततो बाधकव्यसनमपहायानुगत(३)-
व्यवहृतिरन्यथाप्युपपाद्यताम् । न चैतच्छक्यं, गत्य-
न्तराभावात् ।

दीधितिः ।

बाधकम्, शङ्कितम्(४) । स्वभावहेतुः अनुमापको हेतुः । गत्यन्तरेति । ( अथ कोऽयमगौरित्यादिपूर्वोक्ताव्यवहितग्रन्थेन ) अपोहादेरनुगतव्यवहारानुपपत्तेरुपदर्शितत्वादित्यर्थः ॥

कल्पलता ।

बाधकात् अग्रे वक्ष्यमाणा(त्) । व्यवहारस्य अनुगतव्यवहारस्य । अन्यथा सुदृढनिरूपितोऽप्यर्थो(५) बाध्यः स्यादित्याह । अन्यथेति । स्वभावहेतुः प्रसङ्गभिन्नो हेतुः । उपहन्येत आभासः स्यात् । नचै(६)-तदिति । अनुगतव्यवहारस्यान्यथोपपादनं न(७) शक्यमित्यर्थः । गत्यन्तराभावादिति । अन्यापोहादेर्निरस्तत्वादित्यर्थः ॥

(१) बाधकमुन्नीया—पा० २ पु० ।

(२) अनन्यथासिद्धिविश्रान्तोऽपि, अनुकूलतर्कसहकारेण व्याप्यतया निश्चितोऽपि ।

(३) मपहायानुगम—कलि० मु० पु० पा०, पुण० पु० पा० ।

(४) बाधकशङ्कयाप्युपहन्येतेत्यग्रिमदर्शनादाह । शङ्कितमिति ।—गुणानन्दः ।

(५) सुदृढनिरूपितो निरूपणोऽर्थो—कलि० मु० पु० पा० ।

(६) नै—कलि० मु० पु० पा० ।

(७) पादनम—पुण० पु० पा० ।

न च बाधकमप्यस्ति। तद्धि स्वरूपतो वा स्यात्, ज्ञानतो(१) वा स्यात्। स्वरूपतोऽप्यनुपलम्भो वा विरुद्धधर्म्माध्यासो वा।

दीधितिः।

बलवति बाधके जाग्रति नान्यथानुपपत्तेरपि साधकत्वसम्भव इति द्वितीयं(२) निराकरोति। न चेति। स्वरूपतः जातिस्वरूपे साक्षात्। ज्ञानतः जातिविषयकज्ञानस्वरूप(३)तदेक(४)त्वादिनिरासद्वारा॥

दीधितिटिप्पणी।

द्वितीयम् निश्चितमिति पक्षम्। साक्षादिति। जात्यनुपलम्भादेः साक्षादेव जातिग्रहे बाधकत्वादित्यर्थः। जातिज्ञाने कथं बाधकमत आह। तदेकत्वेति। तत जातिज्ञानम्। अनुगतजातिसाधकं तदिदं गोत्वमिति प्रत्यभिज्ञानात्मकजातिज्ञानं, इदं अगृहीतासंसर्गेकधर्मद्वयविषयकं ज्ञानद्वयमेव, नत्वेकं ज्ञानम् एवंरूपेण एकत्वनिरासे सति अनुगतधर्मरूपजातिविषयज्ञानं न सम्भवतीति परम्परया जातिज्ञाने बाधकमित्यर्थः। मूले, विरुद्धधर्माध्यासः तद्व्यक्तिवृत्तित्वे सति एतद्व्यक्तिवृत्तित्वरूपः॥

कल्पलता।

ननु बलवद्बाधकं चेदस्ति, तदा प्रकारान्तरेणाप्यनुगतव्यवहारः परं? चिन्तयितुमर्हतीत्यत आह। न चेति। स्वरूपत इति। जात्यादिकमेवाहत्य बाध्यते जात्यादिज्ञानं वा बाध्यत इत्यर्थः॥

(१) ज्ञानतोपि—पुण० पु० पा०, पा० २ पु०।

(२) द्वितीयम्, निश्चितं बाधकम्, निश्चयविषयस्य बाधकत्वं निराकरोतीति फलितम्।—गुणानन्दः।

(३) जातिज्ञानस्वरूपे, स एवायं घट इति ज्ञानस्य एकत्वे। आदिपदात्प्रामाण्यपरिग्रहः।—गुणानन्दः। (४) तदेक—पुण० पु० पा०।

न प्रथमः, असिद्धेः(१)। स्फुरत एव (हि) साधारणाकारस्य शरीरं चिन्तयितुमारब्धम्, नास्फुरतः। अध्यक्षे साधारणस्फुरणं व्यासेधामः, न तु विकल्पे, तस्य समानशब्द(२)सङ्केतग्रहतिमिरनिकुर(३)म्बकरम्बितदृष्टिभिरेवोत्पाद(४)नात्, न त्वस्माभिः(५), कल्पनाकोषस्या(६)नन्तप्रसव(७)तया तत्त्वाव्यवस्थापकत्वादिति चेन्न। शब्दा(८)नुसन्धानविरहेपि जाय-

दीधितिः।

अनुपलम्भः किं सर्वथैव, अन्तराले(९) वा, विविच्य(१०) वा। आद्ये, नेति। अध्यक्ष इति। अध्यक्षमेव(११) दोषाजन्यतया प्रमाणं, न तु दोषसमुत्थो विकल्प इति भावः। प्रकृते दोषमाह। तस्येति। निकुरम्बः स्तोमः। करम्बितम् कलुषितम्। अस्तु

दीधितिटिप्पणी।

अध्यक्ष एव व्यासेधामः नतु विकल्पे इत्यत्र वीजमाह। अध्यक्षमेवेति। अस्तु तावद्भवन्मतं, यैः समानशब्दसङ्केतेत्यादिरूपेणोपपत्तिः क्रियते तन्मतमेवादौ दुष्टमित्यभिप्रायेण शब्दानुसन्धानविरहेपीति

(१) असिद्धिः—पा० २ पु०।

(२) समान—कालि० मु० पु० पा०। तस्य शब्द—गुणानन्दसम्मतः पाठः। तत्पदस्यानुगतधर्मपरत्वभ्रमं निराकरोति। शब्देति। समानेत्यादिः।—गुणानन्दः।

(३) निकुरु—पा० २ पु०। (४) रेवोपपाद—कालि० मु० पु० पा०।

(५) अस्माभिः, विशेषदर्शिभिः।

(६) कल्पनाकोषस्येति। विकल्पे काल्पनिकस्यैव भानान्न ततोऽर्थासिद्धिरित्यर्थः।—भगीरथठक्कुरः।

(७) प्रसर—कालि० मु० पु० पा०।

(८) शब्देति। एवं सति गोपदवाच्यानाकलने अनुगतिर्न भासेतेत्यर्थः।—भगीरथठक्कुरः।

(९) अन्तराले, एकपिण्डनाशानन्तरं पिण्डान्तरानुत्पादकाले-गुणानन्दः।

(१०) विविच्य, स्वाश्रयव्यक्तिभिन्नतया—गुणानन्दः।

(११) अध्यक्षमेवेति। तथाचानुपलम्भे उपलम्भः प्रमेति भावः।-गुणानन्दः।

सानत्वात् ।

दीधितिः ।

विकल्पादपि वस्तुसिद्धिः, तत्राह । कल्पनेति ॥

दीधितिटिप्पणी ।

मूलम् ॥

कल्पलता ।

असिद्धेरिति । उपलम्भस्य साधितत्वादित्यर्थः(१) । (ए)तदेवाह । स्फुरत एवेति । अध्यक्ष इति । निर्विकल्पक इत्यर्थः । तन्मात्रमेव प्रमाणं यत इत्यर्थः । ननु निर्विकल्पकाभावेपि विकल्परूप एव जात्याद्युपलम्भोस्ती(२)त्यत आह । न त्विति । समानशब्दसङ्केतग्रह एव तिमिरनिकुरम्बः तेन करम्बिता कलुषिता दृष्टिर्येषां तैरेवोपपादनात् । न त्वस्माभिरिति । तत्त्वमात्रदृष्टिभिरित्यर्थः, तथा च विकल्पे गवादिपदसङ्केतग्रहाधीना नामजात्या(३)द्दियोजना, न तु वास्तवीत्यर्थः । तदेवाह । कल्पनेति । अगृहीतसङ्केतानामपि (नाम)जात्यादिस्फुरणादित्याह । नेति(४) ॥

तथापि तद्वासनात एवेति चेत्, किमेकसङ्केत-

दीधितिः ।

तद्वासनातः शब्दवासनात(५) एव दोषात् ।

दीधितिटिप्पणी ।

स्वर्गलोचनादौ तत्सद्भावे अनुमानरूपो द्वितीयः पक्षः प्रकृते

(१) अनुपलम्भस्य बाधितत्वादित्यर्थः—पुण० पु० पा० ।

(२) पलम्भो नास्ती—पुण० पु० पा० । (३) नामसाजात्या—पुण० पु० पा० ।

(४) न शब्देति—पुण० पु० पा० ।

(५) तत्पदस्याननुगतधर्मपरत्वभ्रमं निराकरोति । शब्देत्यादि । समानेत्यादिः । तद्वासनासमुत्थत्वेपि कुतो अप्रमात्वासिद्धिरिति पूरयति । दोषादिति । तस्योत्पादनादित्यत्र च प्राक्तने पञ्चम्यर्थान्वयः ।—गुणानन्दः ।

विषयाभावेपि समानशब्दसङ्केतग्रहवासनावशादेकाकारपरामर्शः तत्सद्भावे वा। न तावदाद्यः(१), नानासास्नादिमद्व्यक्तिवत् स्वर्ग(२)लोचनबाणाम्बुकुलिशादिष्वपि गोशब्दसङ्केतग्रहवासनावशात्तथाविधप्रत्ययानुगमप्रसङ्गात्। इष्ट एवासावर्थ(३) इति चेत्, सोऽयं सास्नादिमतीषु व्यक्तिषु साधारणं रूपं न पश्यति(४), पश्यति तु गोशब्दवाच्येषु दशसु, इति किमत्र वक्तव्यं नूनं रुचिरेवास्य(५) लोचनमिति।

दीधितिः।

दशसु स्वर्गेषु(६)पशुविशेष(७)वाग्वज्र(८)दिङ्नयनमयूखपृथिवीपाथःसु॥

दीधितिटिप्पणी।

इष्ट इत्यभिप्रायेणाह। इष्ट एवायमिति। एतेन यथाश्रुते सोयमित्यादि न लगति, स्वर्गलोचनादावपि तेन साधारणरूपादर्शनात्, एवं तत्सद्भावे वेति द्वितीयपक्षानुद्भावनान्न्यूनत्वं चेति दूषणद्वयमलग्नकं बोध्यम्॥

कल्पलता।

प्राक्तनी सङ्केतग्रहवासना तत्राप्यस्तीत्याह। वा-

(१) नाद्यः—पा० २ पु०। (२) स्वर्गे—पा० २ पु०।

(३) इष्ट एवायमर्थ—पा० २ पु०।

(४) रूपं न—पा० २ पु०।

(५) रुचिरमेवास्य-पाठः।

(६) स्वर्गश्च इपुश्च।

(७) पशुमात्रस्य गोपदाशक्यत्वादाह। विशेषेति।—गुणानन्दः।

(८) वाणिवज्र—पुण० पु० पा०।

कल्पलता।

अनेनेति। सोपि सङ्केतग्रह एकं(१) जात्यादिनिमित्तं तिरस्कृत्य, पुरस्कृत्य वेति विकल्पार्थः। भिन्नप्रवृत्तिनिमित्तेषु गोपदवाच्येषु गवादिषु तथा सत्यनुगतप्रत्ययः स्यादित्याह। नानेति। असाविति(२)। अनुगतप्रत्यय इत्यर्थः। एकजातीयासु व्यक्तिष्वनुगतधीनिमित्तं किञ्चिन्न पश्यति विजातीयासु पश्यतीतीच्छामात्रं, न तु प्रमाणानुरोधः कश्चिदित्यर्थः॥

शक्यमिदमितरेणापि(३) वक्तुमिति चेत्, शक्यम्,

दीधितिः।

इदम् इदमाकारम्(४), स्वर्गादिषु न पश्यति पश्यति तु(५) सास्नादिमतीषु व्यक्तिष्विति। व्यवहारः अनुगतव्यवहारः। तन्मूलः अनुगतधर्ममूलः। विपर्यासयितुम् अन्यथाकर्त्तुम्। कथं तर्हि स्वर्गादावनुगतधर्मोपग्रहमन्तरेणानुगत(६)व्यवहारः। अनुगतप्रत्ययात्(७) सोपि(८) कथमन्तरेणानुगतधर्मम्। क एव-

दीधितिटिप्पणी।

एतद्व्युत्क्रमेणैवापरेण वाच्यमतः कथमिदमिति लिखितमत आह दीधितौ; इदमिति। इदमाकारमेवाह। स्वर्गादिष्विति। मूलतोऽलब्धं स्वयमाह। कथं तर्हीति। सिद्धान्तमाह। अनुगतप्रत्ययादिति। पुनर्दर्शयति। सोपीति। सोपि प्रत्ययोपि। सिद्धान्तयति। क एवमिति। अनुगतधर्मं विनाऽनुगतप्रत्यय इति क आहेत्यर्थः। पुनर्दर्शयति।

(१) एव—कलि० मु० पु० पा०। (२) अयमर्थ इति—पुण० पु० पा०।
(३) मिदमपरेणापि—पा० २ पु०।
(४) शक्यमिदमितीदंशब्दस्य व्याख्या इदमाकारम्। आकारमेव दर्शयति। स्वर्गादिष्विति।
(५) पश्यति—कलि० मु० पु० पा०। (६) स्वर्गादावनुगतो—पुण० पु० पा०।
(७) उत्तरं, अनुगतप्रत्ययादिति।—गुणानन्दः।
(८) शङ्कते, सोपीत्यादि धर्ममित्यन्तेन।—गुणानन्दः।

## न तु व्यवहारस्तन्मूलो विपर्य्यासयितुम् ।

दीधितिः ।

माह(१)। कस्तर्ह्यसौ(२),गो(३)शब्दवाच्यत्वम् । प्रकृतेऽपि(४) तथैव किं न स्यात् । अव्युत्पन्नानामपि(५) सास्नादिमतीषु व्यक्तिष्वनुगतगोप्रत्ययात् । न च स्वर्गादौ तथा(६)स्ति । न वानुगतधर्मोपग्रहमन्तरेणानन्तासु व्यक्तिषु व्युत्पत्तिः(७) सम्भवति । न च तामन्तरेणापूर्वव्यक्तौ पदविशेषवाच्यतानिबन्धनो व्यवहारः । स्वर्गादिषु चानुगतस्वर्गत्वादिनिबन्धना व्युत्पत्तिरिति ॥

दीधितिटिप्पणी ।

कस्तर्हीति । असौ अनुगतधर्मः । सिद्धान्तयति । गोशब्देति । तथा च तच्छब्दवाच्यत्वनिबन्धन एव स्वर्गादौ सर्वत्रानुगतव्यवहार इत्यर्थः। देशयति । प्रकृतेपीति । सास्नादिमद्व्यक्तिष्वप्यनुगतव्यवहारो गोशब्दवाच्यत्वादेव किं न स्यादित्यर्थः। तथा च गोत्वमपि न सिद्ध्येदिति भावः । न स्यादिति सिद्धान्तः । हेतुमाह । अव्युत्पन्नानामिति । अयं च गोशब्दवाच्य इत्यजानतामपि प्रत्यक्षदृष्टेषु नानाव्यक्तिषु एकाकारप्रत्यक्षसत्त्वादित्यर्थः । तथास्तीति । तेन न तन्निबन्धनमनुगतधर्मान्तरं कल्पनीयमिति भावः । इदानीमव्युत्पन्नानामपीत्यपिना सूचितं व्युत्पन्नानां व्यवहारमपि व्युत्पत्त्यभावाद्दूषयति । न वेति । व्युत्पत्तिः शक्तिग्रहः । ताम् व्युत्पत्तिम् । नन्वेवं स्वर्गलोचनादिषु एकानुगतधर्माभावे कथं व्युत्पत्तिरत आह । स्वर्गादिषु चेति । अनुगतस्वर्गत्वादिदशधर्मग्रहनिबन्धनैव व्युत्पत्तिरिति भावः ॥

---

(१) उत्तरम्, क एवमाहेति ।—गुणानन्दः।

(२) पुनः शङ्कते, कस्तर्ह्यसाविति ।—गुणानन्दः।

(३) उत्तरम्, गविति ।—गुणानन्दः।

(४) शङ्कते । प्रकृतेपि सास्नादिमतीषु व्यक्तिष्वपि । तथैव, शब्दविशेषवाच्यत्वनिबन्धन एवानुगतप्रत्ययः ।—गुणानन्दः ।

(५) उत्तरम्, अव्युत्पन्नानामित्यादि ।—गुणानन्दः।

(६) तथा, अव्युत्पन्नानामनुगतप्रत्ययः ।—गुणानन्दः।

(७) व्युत्पत्तिः, सङ्केतग्रहः ।—गुणानन्दः।

कल्पलता ।

शक्यमिदमिति । गोशब्दवाच्येषु साधारणरूपं न पश्यति, पश्यति तु सास्नादिमतीति(१) सौगते- नापि शक्यं वक्तुमित्यर्थः । शक्यमिति । वाङ्मात्रं शक्यं, तात्त्विको व्यवहारोऽन्यथाकर्त्तुं न शक्य इत्यर्थः॥

नन्वेतावतापि विकल्पः सिद्ध्यतु(२), अनुभवस्तु कथम् । सवस्तुकविकल्पसिद्धेरेव । कथं तस्य सवस्तुकतेति चेत्, शब्दवासनादिकारणान्तरविध्वंसादिति तूष्णीम्भव(३) ।

दीधितिः ।

निर्विकल्पकादेव वस्तुसिद्धिर्न सविकल्पकात्, अतिप्रसङ्गादि(४)त्याशयेन पृच्छति । नन्विति । विकल्पोऽतिरिक्ता(५)नुगतधर्मावलम्बी सिद्ध्यतु, असति बाधके सविकल्पकादेव वस्तुसिद्धिरित्याशयेनोत्तरयति । सवस्तुकेति(६) ॥

दीधितिटिप्पणी ।

अनुगतधर्मावलम्बिस्वरूपस्य विकल्पस्य तैरप्यङ्गीकारात् न सिद्ध्यत्वित्यस्यासङ्गतेराह । विकल्प इति । सवस्तुक इतीति । निर्विकल्पकादेव वस्तुसिद्धिर्न सविकल्पकादित्युक्ताक्षेपेऽयमुत्तरः (?) । आक्षेपमध्यनिविष्टवस्तुसिद्धिरित्यस्यानुषङ्गेन सवस्तुकविकल्पसिद्धेरेव वस्तुसिद्धिरित्यर्थः । तथा च निर्विकल्पकानुपगमेऽप्यस्माकं (न) क्वापि क्षतिरिति भावः ॥

---

(१) सास्नादिमतीष्विति—पुण० पु० पा० ।

(२) दशस्वनुगतप्रत्ययाभावात् समानशब्दानुभवस्य तद्वासनाया वा विकल्पाप्रयोजकत्वेऽपि तदजन्योक्तविकल्पः सिद्ध्यतु, स तु न प्रमाणम्, प्रमाणभूतनिर्विकल्पकन्तु नानुगतधर्मविषयकमिति नानुगतधर्मासिद्धिरिति भावः । (३) सवस्तुकतेति चेदिति—पा० २ पु० ।

(४) अतिप्रसङ्गादिति । इदं रजतमित्यादौ । तथाचोक्तम् 'कल्पनाकोपस्येत्यादि ।–गुणानन्दः।

(५) एतस्यैव विकल्पस्यानुगतधर्मे प्रमाणीकर्तव्यत्वादाह । अतिरिक्तेति ।–गुणानन्दः ।

(६) सवस्तुक इति—का० लि० मु० पु० पा०, पुण० ० पा० ।

कल्पलता ।

भासतां सविकल्पकेऽपि जातिः, अनुभवश्चेज्जातिं न विषयीकरोति, तदा न (सा) प्रामाणिकीत्यर्थः(१) । कथमिति । जातिगोचरः सेत्स्यतीत्यर्थः । सवस्तुकेति(२) । विकल्पविषयस्य बाधकमन्तरेणानुभवाविषयत्वश्रौव्यादित्यर्थः(३) । अद्ययावद्विकल्प(४) एव सवस्तुको न सिद्धोऽस्तीत्याह । कथमिति । शब्देति । शब्दवासनादिकारणनिषेधे गौरयमित्यादिविकल्पानामर्थसामर्थ्यसमुत्थत्वमावश्यकम्, तथा च गोत्वादिकमपि वस्तुभूतमेवेत्यर्थः ॥

अन्तराले किमिति नोपलभ्यत इति चेत्,

दीधितिः ।

जातिरव्यापिका चेत्, प्राचीवर्त्तिनि पिण्डे परिदृष्टा प्रतीचीवर्त्तिनि नोपलभ्येत, प्रति(५)सङ्क्रमणाद्यसम्भवात्, अतो व्यापिकैव वाच्या, तत्र द्वितीयमनुपलम्भबाधकमाशङ्कते । अन्तराल इति । मध्यदेश(६) इत्यर्थः । यद्वा(७) जातिरनित्या चेत्, पूर्वपिण्डनाशे उत्तरपिण्डे नोपलभ्येत, तेन नित्या वाच्या, तत्राशङ्कते । अन्तराल इति । एकपिण्डनाशानन्तरं पिण्डान्तरानुत्पाद(८)-

दीधितिटिप्पणी ।

अव्यापकत्वे अनुपलम्भपक्षो नैव लगतीत्यव्यापकत्वखण्डनेनाह । जातिरिति । इदानीं कालिकान्तरालेऽनुपलम्भाभिप्रायेणाह । यद्वेति ।

(१) प्रामाणिकीत्याह । नन्विति—पुण० पु० पा० ।

(२) उत्तरम्, सवस्तुकेति—पुण० पु० पा० ।

(३) दित्यादित्यर्थः –पुण० पु० पा० । (४) अद्यापि यावद्विकल्प-पुण० पु० पा० ।

(५) इति—पुण० पु० पा० ।

(६) मध्यप्रदेशे-पुण० पु० पा० । मध्यप्रदेशे, प्राचीप्रतीचीघटयोर्मध्यदेशे—गुणानन्दः ।

(७) अनेकवृत्तित्वनिरासकं देशिकमन्तरालं व्याख्याय नित्यत्वनिरासकं कालिकं तदाह । यद्वेति ।—गुणानन्दः । (८) नुत्पादक—कलि० वु० पु० पा० ।

उपलब्धिकारणाभावात्(१)।

दीधितिः।

काल इत्यर्थः। उपलब्धेः(२) कारणस्य व्यक्तेरभावादिति॥

दीधितिटिप्पणी।

तथा च पूर्वव्यक्तिनाशे सति उत्तरव्यक्तिर्यावन्नोत्पद्यते अन्तरालरूपतावत्काले कथं नोपलभ्यत इत्यर्थः। आत्मादिरूपकारणसत्त्वात् सामान्याभावाभावात् विशेषाभावमाह। उपलब्धेरिति॥

कल्पलता।

अनुपलम्भान्तरं जातौ बाधकमा(३)शङ्कते। अन्तराल इति। पिण्डयोरन्तराल इत्यर्थः। जातेर्व्यक्तिरभिव्यक्तिकारणम्, सा चान्तराले नास्तीति कथमुपलभ्यतामिति परिहरति। उपलब्धीति॥

पिण्ड एव कुण्डे बदरवत् कुतो नोपलभ्यत इति चेन्न (४)। अनन्यदेशत्वात्। भेदेन तूपलभ्यत

दीधितिः।

तृतीयमनुपलम्भमाशङ्कते। पिण्ड एवेति। विविच्योपलम्भो हि विभिन्नदेशत्वेनोपलम्भः, भेदेन वा। आद्ये, अनन्येति। बदरस्य कुण्डेतरस्वावयवदेशत्ववज्जातेः पिण्डेतरादेशत्वात्।

दीधितिटिप्पणी।

तृतीयम् विविच्येति पक्षम। विभिन्नदेशत्वेन नानाजातीयदेशवृत्तित्वेन। आश्रयात् भेदेन वा। कुण्डेतरो यः स्वावयवः सोपि तदधिकरणमिति स्वस्य नानाधिकरणवृत्तित्वेनोपलम्भः सम्भवत्येवे·

(१) अन्तराले—इत्यादि मूलं नास्ति, २ पु०।

(२) कर्मधारयभ्रमं निराकर्तुमाह। उपलब्धेरिति। किं तत्कारणमित्याकाङ्क्षायां पूरयति। व्यक्तेरिति।—गुणानन्दः।

(३) बाधकं—पुण० पु० पा०।

(४) इति चेत्—पुण० पु० पा०।

एव, पिण्डान्तरासंसर्गिणि पिण्डेऽनुभूयमाने तत्संसर्गितयाऽनुभवात्।

दीधितिः।

द्वितीये, भेदेनेति। पिण्डान्तरासंसर्गिणि पिण्डान्तरानात्मके। एकस्यानेकतादात्म्यानुपपत्तिप्रदर्शनाय चेदम्॥

दीधितिटिप्पणी।

त्यर्थः। तादात्म्यस्यैव प्रकृतत्वादाह। कुण्डान्तरेति। इदम् अनात्मकान्तम्। एकस्येति। यदि इदं व्यक्तितादात्म्येनोपलभ्यते, तदा एतत्पिण्डात्मकतया उपलब्धौ न पिण्डान्तरात्मकतया उपलब्धिः स्यादित्यर्थः। एकस्योभयात्मकत्वाभावादित्यर्थः॥

कल्पलता।

तर्हि पिण्डेऽपि विवेकेनोपलभ्यताम्, नोपलभ्यते चेन्नूनं नास्तीत्याह। पिण्ड एवेति। विवेकेनोपलम्भो यदि पिण्डभिन्नदेश उपलम्भस्तत्राह। अनन्यदेशेति। यदि च भेदमात्रोपलम्भो विवेकेनोपलम्भस्तत्राह। भेदेनेति। विशेषणस्य गोत्वस्य। विशेष्यस्य गोपिण्डस्य भेदेनोपलम्भस्य सत्त्वादित्यर्थः। नन्वयं गौरिति विशिष्टबुद्धौ गोपिण्डान्तरमेव विशेषणत्वेन भासताम्, किं गोत्वेनेत्यत आह। पिण्डान्तरेति। पिण्डान्तरं सम्बद्धं विशेषणं भवेन्न त्वसम्बद्धमपीत्यर्थः॥

नापि द्वितीयं बाधकम्, अवयविसमानयोगक्षेम-

दीधितिः।

विरुद्धधर्मसंसर्गोऽवयविवदिहापि निरसनीय इत्याह। नापीत्यादि(१)। ननु गोष्ठा(२)दौ जायमाने गवि गोत्वस्य

दीधितिटिप्पणी।

रज्ज्वादिवदिति। रज्ज्वादि यथा देशान्तरादानीय गवि सम्ब-

(१) नापीति—पुस्त० पु० पा०। (२) गोत्वा—कलि० मु० पु० पा०।

त्वात्(१)। जायमानपिण्डसम्बन्धानुपपत्तिरप्रतिसङ्क्रमात्तत्रासत्त्वादनुत्पादाच्चेति चेत्, कथं पुनस्तत्रासत्त्वं त्वया व्यज्ञायि। तत्र सत्त्वे तत्रत्याकाशादेरपि गोत्वप्रस-

दीधितिः।

सम्बन्धः न स्कन्धादिवद्देशान्तरादागमनात्, निष्क्रि(२)यत्वात्। न करीषादिवत्तत्रैव सत्त्वात्, प्रागप्युपलम्भप्रसङ्गात्। न पिण्डरूपवत्तदोत्पादात्, प्राचीनपिण्डानामगोत्वप्रसङ्गात्। न च प्रकारान्तरं सम्बन्धोपपादकमस्तीत्याशङ्कते। जायमानेति। तत्रासतोपि(३) स्वभावनियमादेव सम्बन्धो नानुपपन्नः, सतोपि च व्यञ्जकव्यक्तिविरहादेवानुपलम्भ इत्याशयवानाह। कथं पुनरिति। तत्र पूर्वं गोत्वसत्त्वे तत्रत्यत्वाविशेषाद्द्रव्यान्तरेपि गोत्वसम्बन्धे तत्रापि गौरिति प्रत्ययापत्ति(४)रित्यक्षरतात्पर्याभ्या(५)माशङ्कते। तत्र सत्त्व इति। गोत्वस्य यथाकथञ्चित्स-

दीधितिटिप्पणी।

म्यते, गोत्वमपि तथा न सम्भवतीत्यर्थः। हेतुमाह। निष्क्रियत्वादिति। करीषेति। यदा करीषादेस्तत्र जननाधिकरणभूतलादौ सत्त्वनिबन्धनं गवादिसम्बन्धो जायते। तथा गोत्वमेव भूतलादावस्तीति तत्र जातेन गवयेन न शून्येन भविष्यते इत्यर्थः। हेतुमाह। प्रागपीति। तथाच भूतले गौरिति प्रत्ययापत्तिरित्यर्थः। तदोत्पादात् गोजन्मकाले उत्पादात्। इदमपि प्रतियोगिकोटौ अन्वितम्। तत्रत्यत्वेति। भूतलवृत्तित्वाविशेषात् यथा एकस्मिन् भूतलवृत्तौ गोत्वसम्बन्धः तथा अन्यस्मिन्नपि स्यादित्यर्थः। अक्षरेति। कियत्प्रतिपाद-

(१) द्वितीयं बाधकम्, कार्त्स्न्यैकदेशविकल्पेन विरुद्धधर्माध्यासरूपम्। अवयविस्थापनापसर एव दूष्यत्वादित्यर्थः।—भगीरथठक्कुरः। (२) निः क्रि—कालि० मु० पु० पा०।

(३) मूलयुक्तिं पूरयति। तत्रासतोपीति। यथा उत्पत्तिमतः कालान्तरेऽसम्बद्धस्यापि तत्काले सम्बन्धः स्वभावनियमात्, तथा तत्रत्यदेशान्तरेऽसम्बद्धस्यापि तद्देशीयव्यक्तौ तत्सम्बन्धः स्वभावादित्यर्थः।—गुणानन्दः। (४) प्रमोत्पत्ति—पुण० पु० पा०।

(५) सम्बन्ध इत्यन्तं प्रायोऽक्षरार्थः, तत्रापीत्यादि तात्पर्यार्थः, ।—गुणानन्दः।

ङ्गादिति चेत्, न चैतत् पश्चादपि तत्रत्याकाशादिना सम्बध्यते। येन च पिण्डेन सम्बध्यते न तत्र कदापि तन्नास्ति। तत् कुतो विरोधः।

दीधितिः।

म्बन्धो न गौरितिप्रत्ययनियामकः, किं तु समवायः, स चेदुत्तरकालं द्रव्यान्तरे गोत्वस्य स्यात्, कल्प्येतापि पूर्वं तत्र तदभावोपपत्तये गोत्वस्यासत्त्वमित्याशयवानाह। न चैतदिति। अथ तत्रत्यत्वाविशेषेपि(१) क्वचिदेव गोत्वसमवायो नान्यत्रेति कुतो नियम इति चेत्, स्वभावनियमादिति गृहाण। अथ पिण्ड एवोत्पत्तिकाले सतो गोत्वस्योत्तरकाले सम्बन्धो विनोपसर्पणादिकं(२) विरुध्येत, इति चेदत्राह। येन चेत्यादि। जातः सम्बद्धश्चेत्येकः काल इत्यभ्युपगमादित्यर्थः(३)॥

दीधितिटिप्पणी।

कानि अक्षराणि कियत्प्रतिपादकं च तात्पर्यमित्यर्थः। स चेदिति। उत्तरकालमेव गोत्वसमवायो यद्याकाशादौ स्यात् न तु पूर्वं, एवं रीतिर्यदि स्यात्, तदेव पूर्वकालं गोत्वं स्यात्, तत्राकाशादौ अभावोपपत्तयेऽसत्त्वं भूतलादिस्थले कल्प्येत, न चैतदस्ति(४), किन्तु यावत्कालमेव गोत्वस्य न तत्र समवायः, किमर्थं भूतलादाव(५)सत्त्वं कल्पनीयमित्यर्थः। न्यूनतां परिहरति। तत्रत्यत्वेति॥

कल्पलता।

विरुद्धधर्म्माध्यासो वेति विकल्पितविकल्पं दूषयति। नापीति। अवयविनि कात्स्न्यैकदेशविकल्पनिरास(६)वदिहापि तन्निरसनीयम्, न कात्स्न्र्येन वर्त्तते

(१) द्रव्यत्वाविशेषे-पुण० पु० पा०।
(२) उपसर्पणादीत्यादिपदात् उत्पादपरिग्रहः।—गुणानन्दः।
(३) दिति भावः-पुण० पु० पा०।
(४) न त्वेदस्ति—पा० २ पु०।
(५) भूतलादौ च—पा० २ पु०।
(६) विकल्पपरिहार—पुण० पु० पा०।

कल्पलता ।

नैकदेशेन किन्तु स्वरूपेणेत्यर्थः(१) । ननु जायमानपिण्डसम्बन्धः प्रकारत्रयेण सम्भवति । पिण्डान्तराद्गोत्वस्य गमनाद्वा, पूर्वमेव तत्सत्त्वाद्वा(२) (पिण्डेन सह जायमानत्वाद्वा ।) तदेतत् त्रयमप्यनुपपन्नमित्याह । जायमानेति । अप्रतिसङ्क्रमात् अगमनात् । गोत्वप्रसङ्गादिति । तथा च तदनुभवव्यवहारयोः प्रसङ्गादित्यर्थः । समवायवृत्त्या तत्सत्त्वं व्यवहारे तन्त्रं(३),न तु स्वरूपतोऽपीति भावः । यदि(४) समवायेनाकाशादौ गोत्वं(५) स्यात्तदा(६) पश्चादपि स्यात्, न चैवमित्याह। न चैतदिति। सम्बध्यते समवैतीत्यर्थः । जातेपि तत्र पिण्डे(७) गोत्वमाकाशासम्बन्ध्येवेत्यर्थः(८)। तर्हि पिण्डेनापि तत्र न सम्बध्येतेत्याह(९)। येन चेति। तत्र जातः सम्बन्धश्चेत्येक एव काल इति पिण्डेन कदाचिदपि न तस्या(१०)सम्बन्ध इत्यर्थः । कुतो विरोध इति । पिण्डोत्पत्तेः पूर्वमाकाशादौ गोत्वं नासीदुत्पन्ने च पिण्डे तत्र गोत्वमिति विरोधो न सम्भवती(११)त्यर्थः॥

अथ पिण्डमन्तर्गडुमुपादायोपलक्षणतया तत्रेति

दीधितिः ।

अन्तर्गडुम् सम्बन्धघटकम् । उपलक्षणतया परम्परया ।

दीधितिटिप्पणी ।

भूतलगोत्वयोः, सम्बन्धघटकम्, वक्ष्यमाणापसर्पणोपपत्त्या लि

(१) स्वरूपेण वर्तत इत्यर्थः—पुण० पु० पा० ।
(२) गमनाद्वा, तत्र सत्त्वाद्वा—पुण० पु० पा० । (३) व्यवहारस्वतन्त्र—पुण० पु० पा० ।
(४) यदि च—पुण० पु० पा० । (५) गोत्वसत्त्वं—पुण० पु० पा० ।
(६) तदपि—पुण० पु० पा० । (७) गोपिण्डे—पुण० पु० पा० ।
(८) सम्बद्धमित्यर्थः—पुण० पु० पा० । (९) तेत्यत आह—पुण० पु० पा०
(१०) तस्य—पुण० पु० पा० । (११) न भवती—पुण० पु० पा० ।

व्यवहारः, तदा तदुपसर्पणा(१)पसर्पणोत्पत्तिविनाशै-रेव(२) तदुपपत्तौ न यातीत्यादिरपराद्धेषो(३)रिव धानुष्कस्य कण्ठडम्बरः(४)।

दीधितिः।

( तत्रेति व्यवहारः, ) कदाचित्तत्रेति कदाचिच्च(५) न तत्रेति व्यवहारः। तदिति। उपसर्पणोत्पत्तिभ्यामपसर्पणविनाशाभ्यां च तयोः सत्त्वासत्त्वव्यवहारयोरुपपत्तौ।

'न याति न च तत्रासीन्न चोत्पन्नं न चांशवत्(६)।
जहाति पूर्वमाधारमहो व्यसनसन्ततिः ॥'

इति कीर्त्तिकण्ठडम्बरः। पूर्वमित्यनेन भजते परमित्यपि सूचितम्। स्वस्वावयवक्रियानिमित्तके पूर्वापरदेशत्यागा(वा)प्ती न याति नांशवदित्यनेन प्रतिषिद्धे ॥

दीधितिटिप्पणी।

खनात्पूरयति। कदाचिच्चेति। भूतले न गोत्वमिति कादाचित्को व्यवहारो भवतीत्यर्थः(७)। उपसर्पणेति। व्यक्तेरुपसर्पणात् व्यक्तेरुत्पत्तितश्च भूतले गोत्वस्य सत्त्वप्रतीतिर्भवति। एवं व्यक्तेरपसर्पणात् व्यक्तेर्विनाशाच्च भूतले न गोत्वमिति प्रतीतिर्भवतीत्यर्थः। अयं चार्थो यथासङ्ख्येन बोध्यः। कीर्तेः कीर्तिनामकबौद्धस्य। कण्ठडम्बरः वाक्प्रपञ्चः। भजते परमित्यपीति। पूर्वशब्दसहकारेणेत्यर्थः। स्वस्वेति। स्वस्य स्वावयवस्य च क्रिया निमित्तं कारणं यत्रेत्यर्थः। अंशवदित्यस्य अवयवयुक्तमित्यर्थकत्वेनावयवपर्यन्तलब्धेः। प्रतिषिद्धे·

(१ पिण्डोपसर्पणेत्यर्थः। (२) तदुपसर्पणापसर्पणाविनाशोत्पत्तिभिरेव—पा० २ पु०।
(३) रपराधेषो—पा० २ पु०। (४) कण्ठाडम्बरः—पा० २ पु०।
(५) विरोधोपदर्शनार्थमाह। कदाचिच्चेति। तत्रेत्यस्य गोत्वमिति शेषः। —गुणानन्दः।
(६) क्रियाशून्यस्यापि कारणाकारणविभागाधीनस्य पूर्वदेशत्यागस्य सम्भवादाह। न चांशवदिति। अंशः, अवयवः। गमनावयवविभागयोरभावेन त्यागस्यैवासम्भवः। तथा मत्त्वानुत्पन्नत्वयोरभावस्य च कोपयोग इत्याकाङ्क्षायामाह। भजत इति। तथाच न च तत्रासीदित्यत्र तत्पदं भजनीयदेशपरमिति ध्येयम्।—गुणानन्दः। (७) व्यवहार इत्यर्थः—पा० २ पु०।

दीधितिटिप्पणी ।

इति । एवं न तत्रासीत् न चोत्पन्नमित्यनयोरपि जहाति पूर्वं भजते परमित्यस्यानुरूपकथनं स्फुटतया नोक्तम् । उत्पन्नमित्यत्रापि तत्रे-त्यनुषङ्गो बोध्यते । तथा च तत्राधिकरणे तस्योत्पत्तेरप्यभावात्कथं तत्स्यादित्यर्थः ॥

---

कल्पलता ।

ननु पिण्डो निरूपकमात्रं, न तु तत्र गोत्वं समवैति, तथा च तेन ( रूपेण ) निरूप्यमाणं गोत्वमाकाशादौ प्रागासीच्चेत्तदा गोव्यवहारः(१) स्यादिति ब्रूम इत्याह(२) । अथेति । अन्तर्गडुम्(३) निरूपकमात्रम्(४) । एवं सति यथा पिण्डसत्त्वासत्त्वाधीने(५) गोत्वसत्त्वासत्त्वे, तथा गौरस्ति ( गौर्नास्ति ) गौर्जातो गौर्नष्टो गौर्गच्छतीत्यादिव्यवहारा अपि पिण्डोपाधिका एव, तथा चोत्पादविनाशप्रत्ययो(६) गोत्वबाधकत्वेनाशङ्कितो(७) न मनागपि पदमादधाति, तेषां पिण्डोत्पादविनाशविषयत्वात् ।

'न याति न च तत्रासीन्न चोत्पन्नं न चांशवत् ।
जहाति पूर्वमाधारमहो व्यसनसन्ततिः ॥'

इति कीर्त्तेः विरोधकीर्त्तनस्य लक्ष्यं गोत्वं, तच्च ततः प्रच्युतं व्यक्तौ पतितमित्यपराद्धेषुता ॥

---

( १ ) गोव्यवहारस्तत्र—पुण० पु० पा० ।

( २ ) इत्यत आह—पुण० पु० पा० ।

( ३ ) अन्तर्गतत्वपिण्ड—पुण० पु० पा०, अन्तर्गडुत्वम्—का०लि० मु० पु० पा० ।

( ४ ) निरूपकत्वमात्रम्—पुण० पु० पा० ।

( ५ ) पिण्डसत्त्वासत्त्वाधीनौ—पुण० पु० पा० ।

( ६ ) प्रत्यया—पुण० पु० पा० ।

( ७ ) बाधकत्वेन शङ्कितो—पुण० पु० पा० ।

तथाहि। पिण्डमधिकृत्योपसर्पणापसर्पणाभावः(१), तदुपलक्षितं देशमधिकृत्य च सत्त्वासत्त्वे सामान्यस्येति किं केन सङ्गतम्। अथाप्यनुत्पन्ने पिण्डे तस्यासत्त्वं सुलभमेव तदसत्त्वादिति हृदयम्(२), तन्न। स्वरूपसत्त्वासत्त्वयोर्द्वितीयानपेक्षत्वात्(३), सम्बद्धत्वासम्ब-

---

दीधितिः।

पिण्डे उपसर्पणस्य पिण्डाच्चापसर्पणस्य चाभावात्सामान्यस्य किं पिण्डोपलक्षितदेशे सत्त्वासत्त्वे नोपपद्येते, किं वा पिण्डे एव। आद्ये, पिण्डमधिकृत्येति। पिण्डस्योपसर्पणादिभिरेव तदुपपत्तेरिति भावः। द्वितीये तु सत्येव पिण्डे तत्रासत्त्वं प्रागेव निरस्तम्। तेन शिष्यमाणम(४)सति(५) पिण्डे तत्रासत्त्वमाशङ्क्य निराकरोति। अथापीति। तस्य सामान्यस्य(६)। तदसत्त्वात् पिण्डासत्त्वात्(७)। सत्त्वासत्त्वे यदि वर्त्तमानत्वावर्त्तमानत्वे, तत्राह। स्वरूपेति। द्वितीयानपेक्षत्वात् पिण्डाद्याधारानपेक्ष-

दीधितिटिप्पणी।

पिण्ड इति। भङ्ग्या पिण्डमधिकृत्येत्यस्यार्थकथनं कृतम्। तदुपपत्तेः सत्त्वासत्त्वोपपत्तेः। किं सति पिण्डे सामान्यस्य सत्त्वासत्त्वानुपपत्तिः, किन्वाऽसति पिंण्डे सत्त्वासत्त्वानुपपत्तिर्दीयते इति विकल्प्यैव द्वितीयं दूषयति। द्वितीये त्विति। शिष्यमाणम् अवशिष्टम्। स्वरू-

---

(१) सामान्यस्येत्यमेतनं अभाव इत्यत्रापि सम्बन्धनीयम्।

(२) तथा च पिण्डे जाते सत्त्वासत्त्वे विरुद्धे इति भावः।

(३) द्वितीयानपेक्षणात्—पुग० पु० पा०, पा० २ पु०।

(४) शिष्यमाणम्—पुण० पु० पा०।

(५) असतीति। तथा च मौलमनुत्पन्नेति विनष्टस्याप्युपलक्षणमिति भावः।—गुणानन्दः

(६) पिण्डपरत्वभ्रमं निराकरोति। सामान्यस्येति।—गुणानन्दः।

(७) सत्त्वासत्त्वे स्वरूपस्याहेतुत्वादाह। पिण्डासत्त्वेति।—गुणानन्दः।

त्त्वे तु द्वितीयापेक्षे। ततस्तत्रासति नास्तीति कोऽर्थः।

दीधितिः।

त्वात्(१)। न वा सामान्यस्य कदाचिदप्यसत्त्वं, नित्यत्वात्। सम्बद्धत्वेति॥

दीधितिटिप्पणी।

पसत्त्वमपि नास्तीत्याह। न वेति॥

कल्पलता।

ननु सामान्यं पिण्डं नोपसर्पति न चापसर्पति चेत्, तदा तदुपलक्षिते देशे सत्त्वासत्त्वे सामान्यस्येति यथाश्रुते(२) सोपहासमाह। तथाहीति। (उपसर्पणापसर्पणाभाव इत्यत्र सामान्यस्येत्यग्रेतनेन सम्बन्धः। यद्वा, ननु व्यक्तेरुपसर्पणापसर्पणात्तदुपलक्षिते देशे सत्त्वासत्त्वे न सामान्यस्येति यथाश्रुते सोपहासमाह। तथाहीति।) पिण्डे चेन्नोपसर्पणापसर्पणे तर्हि तदुपलक्षिताकाशदेशे सामान्यस्य सत्त्वासत्त्वे स्यातामित्यत्यन्तमसङ्गतमित्यर्थः(३)। ननु सामान्यं स्वरूपतः तद्देशादावस्ति च(४)दस्तु, तथापि यः पिण्ड उत्पन्न एव नास्ति तेन तत्सम्बन्धः कथं स्यात्। न हि सम्बन्ध्यभावेपि सम्बन्ध इति पूर्वपक्षिणो हृदयमाह। अथापीति। सामान्यं स्वरूपतः सर्वत्र देशे कालेऽस्तीत्युक्ते तत्कथमनुत्पन्नेन पिण्डेन(५) सम्बध्यतामि-

(१) वर्तमानत्वावर्तमानत्वे, तत्तत्कालसत्त्वासत्त्वे, तत्र कालरूपद्वितीयस्यापेक्षणीयत्वादाह। पिण्डाद्याधारेति। आदिपदात् पिण्डघटितसम्बन्धेनाधारपरिग्रहः।—गुणानन्दः।

(२) सामान्यसत्त्वासत्त्वे स्यातामिति महद्वैशसमिति —कलि० मु० पु० पा०।

(३) स्यातामित्यनन्तरोक्तमसङ्गतमित्यर्थः।—पुण० पु० पा०।

(४) वस्थिते—पुण० पु० पा०।

(५) मनुपपन्ने पिण्डे—पुण० पु० पा०।

कल्पलता ।

त्यपि किं केन सङ्गतमि(१)त्यर्थः। ननु पिण्डानुत्पत्तिदशायामसता पिण्डेन कथं सम्बध्यतामित्येतदेव प्रश्नविषय इत्यत आह । तत इति ॥

तेना(२)सता(३) न सम्बध्यत इति चेत् । तच्चैवमेतत् । पश्चात्(४) कथं सम्बध्यतामिति चेत् । तस्य सत्त्वात् । असम्बद्धत्वस्य(५) तदसत्त्वप्रयुक्तत्वात् । ततः प्रागसन् पिण्डः पश्चात् कथमुपपद्यतामिति चोद्यनिष्ठा, सा च सत्कार्य्यवादमनुपततीत्यभुक्तवान्तिः ।

दीधितिः ।

यद्यपि सम्बन्धोऽत्र समवायः, स च नित्य एव, तथापि तद्विशेषितः(६) समवायो नास्तीत्यसम्बन्धित्वमङ्गीकृतम् । तस्य पिण्डस्य । तत्र च पिण्डे सतः सामान्यस्य तन्निष्ठाभावप्रतियोगित्वरूपं न तत्रासत्त्वम्, यावत्सत्त्वं तत्र सामान्यस्य सत्त्वात्, असतश्चाभावाधिकरणत्वायोगात् । चोद्यनिष्ठा पूर्वपक्षमर्यादा ॥

दीधितिटिप्पणी ।

तच्चैवमित्यादिलिखनेनासम्बन्धस्याङ्गीकारो न लगतीत्याशङ्क्यते । यद्यपीति । तद्विशेषितः व्यक्तिविशेषितः । व्यक्तेः सत्त्वे असत्त्वे वा व्यक्तौ सामान्यस्यासत्त्वं न सम्भवतीति निष्कृष्य दर्शयति । तत्र त्र पिण्ड इत्यादि ॥

(१) सङ्गच्छत इ—पुण० पु० पा० ।

(२) यद्यपि तयोः सम्बन्धः समवायः, स चास्त्येव, तथाप्यसता पिण्डेन तन्निरूपणं नास्तीत्याह । तेनेति ।—भगीरथठक्कुरः ।     (३) तेन सता—पा० २ पु० ।

(४) पश्चात्तु—पा० २ पु० ।     (५) अथ सम्बद्धस्य—पा० २ पु० ।

(६) तद्विशेषितः, तत्तत्पिण्डविशेषितः । तथा च पिण्डासत्त्वप्रयुक्तमेव तदसम्बद्धत्वमिति भावः ।–गुणानन्दः ।

कल्पलता ।

असता सम्बन्धो न भवत्येवेत्याह । तच्चेति । तस्येति । पिण्डस्येत्यर्थः । तदसत्त्वप्रयुक्तत्वात् पिण्डासत्त्वप्रयुक्तत्वात् । सम्बन्धिनि सति सम्बन्धो भवतीति सर्वजनसिद्धेऽपि तव कथं तथा(१) तवाभिप्राय एवमुन्नीयते । यः पिण्डः पूर्वं नासीत् स पश्चात्कथमुत्पद्यत इत्याह । तत इति । चोद्यनिष्ठा देश्यपर्यवसानम् । अभुक्तवान्तिरिति । साङ्ख्यमतं त्वया न भुक्तं न पाचितमिदानीं तदेव वमसीत्यर्थः । देशे काले च सामान्य(स्व)रूपमस्ति, पिण्डोपगमापगमादिना गौरस्ति गौर्नास्तीति व्यवहारः, यथाऽविचलति चैत्रे दण्डोपगमापगमाभ्यां दण्डी चैत्रो नायं दण्डीति व्यवहार इति प्रघट्टकार्थः ॥

तथापि सामान्यतद्वतोरत्यन्तभेदे कथं सामानाधिकरण्यमिति चेत् । किमिदम् । समानेनाधिकरणेन

दीधितिः ।

धर्मधर्मिणोरात्यन्तिकमभेदं निरस्य पाक्षिकं तं निरसितुं भेदा(२)भेदवादिनमुत्थापयति । तथापीति । किमिदमित्याश्चर्ये ।

दीधितिटिप्पणी ।

पाक्षिकमिति । अङ्गीकृतं अनङ्गीकृतं चेत्यर्थः । भेदाभेदवादिमतं चात्यन्तशङ्कोपन्यासादुद्धृतम् । कथं सामानाधिकरण्यमिति मूलम्, तस्य चायमभिप्रायः, समानेषु परस्परतुल्येषु घटव्यक्तिरूपाधिकरणेषु सामान्यस्यासम्बन्धो न अत्यन्तभेदपक्ष उपपद्यते । ततोऽत्यन्ताभिन्नस्यापि तत्र वृत्तित्वे पटत्वस्यापि घटवृत्तित्वप्रसङ्गः । मन्मते तु घटादत्य-

(१) तत्र कथं—कलि० मु० पु० पा० ।
(२) निरासितुं—पा० २ पु० ।

न तु विरोधस्थानम्। तच्च(१) मैत्रतनयोपि यदि कश्चि-
द्दृश्यमानः स्यात् परिदृश्यमानानामपि तथाभावप्रसङ्ग
इतिवत्(२) क्व नाम दुर्लभम्।

दीधितिः।

तिरेकयोः(३) सहचारमात्रेण विरोधासिद्धे(४)रिति भावः॥

दीधितिटिप्पणी।

भेदस्याविशेषात् गोरपि नानाश्ववृत्तिः स्यादित्यर्थः। नन्विति।
अभेदसामानाधिकरण्ययोः व्यतिरेकः कुत्र दृष्ट इत्येवंरूपव्यतिरेक-
सहचारस्थानं गवाश्वादिकम्। न त्विति। न तु एतावता सहभाव
मात्रेणाभेदाभावस्य सामानाधिकरण्याभावव्यापकत्वरूपः(५) सा
मानाधिकरण्येन सह विरोधः सिध्यतीति भावः॥

कल्पलता।

(धर्मधर्मिणोर्भेदाभेदवा)द्याह। तथापीति।
अत्यन्तभिन्नयोर्गवाश्वयोः) सामानाधिकरण्याभावा-
दित्यर्थः। अत्यन्तभेदेपि सामानाधिकरण्यं नानुप-
पन्नमित्याह। किमिदमिति। ननु भिन्नयोः सामाना-
धिकरण्ये गवाश्वयोरपि सामानाधिकरण्यं स्यादिति
शङ्कते। गवाश्वयोरिति। न ब्रूमो ययोर्भेदस्तयोः
सामानाधिकरण्यमावश्यकमिति, अपि तु कचिद्भेदे
सति सामानाधिकरण्यं, तदभावश्च गवाश्वयोरिति
व्यतिरेकदृष्टान्तस्थानं गवाश्वमित्याह। नन्विति(६)।

(१) तत्तु—पुण० पु० पा०। (२) इति—कलि० मु० पु० पा०।
(३) व्यतिरेकयोः, अभेदसामानाधिकरण्यप्रतियोगिकयोः। गुणानन्दः।
(४) व्यतिरेकयोः, अभेदसामानाधिकरण्याभावव्याप्यत्वासिद्धेरित्यर्थः।
(५) भेदे तुल्याधिकरणकत्वाभावव्याप्यत्वासिद्धेरित्यर्थः। … भेदे तुल्याधिकरणकत्वाभावः व्यापको यस्य तत्त्वरूप इत्यर्थः।
(५) सामानाधिकरण्याभावः।
(६) न त्विति—पुण० पु० पा०।

कल्पलता।

तच्चेति। तच्च व्यतिरेकदृष्टान्तस्थानम्, क्व नाम दुर्लभमिति सम्बन्धः, किन्तु सुलभमेवे(१)त्यर्थः। सौलभ्यमेव दर्शयति। मैत्रतनयोपीति। यथा मित्रातनयः श्याम इति(२) उत्सर्गो न च तावता (श्यामत्वेन) निर्णीतो मित्रातनयः, क्वचिदश्यामस्यापि तस्य(३) दर्शनात्, श्यामत्वेन निर्णीतोऽपि मित्रातनयः स्यादश्यामः, तथा भेदे सति सामानाधिकरण्यमित्युक्ते असामानाधिकरण्येन निर्णीतयोरपि गवाश्वयोः सामानाधिकरण्यं (न) प्रसज्यत इत्यर्थः॥

---

तथापि विशेषो वाच्य इति चेत्। अस्ति(४) स्वाभाविको(५) विशेषो यत् किञ्चिदेव केनचित् सम्बद्धम्,

---

दीधितिः।

एकस्य विज्ञानस्य यथानेकविषयसम्बन्धित्वं, यथा चानेकस्य विषयस्यैकविज्ञानसम्बन्धित्वं, तथैकस्य सामान्यस्यानेकपिण्डसम्बन्धित्वं अनेकस्य पिण्डस्यैकसामान्यसम्बन्धित्वं न

---

(१) सुलभमि—पुण० पु० पा०। (२) श्याम—कलि० मु० पु० पा०।

(३) दश्यामस्यापि—कलि० मु० पु० पा०। (४) अस्तु—पुण० पु० पा०।

(५) अत्र भगीरथठक्कुरः—"विशेषः,' सत्यपि भेदे सामानाधिकरण्यप्रतीतिनियामक इत्यर्थः। अस्तीति। अनेन भेदाभेदसाधके सामानाधिकरण्यव्यतिरेक्यनुमाने साध्याभावप्रयुक्तो न साधनाभावः, किन्तु स्वभावभेदाभावप्रयुक्त इत्युपाधिरप्युक्तः।" इति व्याख्यातवान्। अत्रेदं बोध्यम्। भाट्टसाङ्ख्यपातञ्जलवेदान्तिनः भेदाभेदवादिनः, तैः सामान्यतद्वतोरत्यन्तभेदवादिनं तार्किकं प्रति न्यायप्रयोगः एवं क्रियते। गुणादिकं गुण्यादिना भिन्नाभिन्नं, समानाधिकृतत्वादिति। अस्यार्थः। गुणादिकम्, गुणः, क्रिया, जातिः, गुणकर्मान्यत्वविशिष्टसत्तादिरूपं विशिष्टं, घटादिरूपोऽवयवी, धान्यराशिरूपः अंशी च यथाक्रमं गुण्यादिना, गुणिना, क्रियावता, व्यक्त्या, सत्तादिना केवलरूपेण, मृत्कपालादिरूपेणावयवेन, धान्यादिना अंशेन च भेदाभेदोभयवत्, तथा च गुणो गुणिप्रतियोगिकभेदाभेदोभयवानिति रीत्या क्रमेणान्वयो बोध्यः। समानाधिकृतत्वात्, गुण्यादिविशेषणकाभेदसंसर्गकधीविषयतायोग्यत्वात्। पराभ्युपगतसमवायतादात्म्यभिन्ना ये संयोगादयः तेषामन्यतमस-

म्बन्धेन गुण्यादिविशेषणिका या धीः तदन्या गुण्यादिविशेषणिका या धीः तद्विशेष्यत्वादिति यावत् । अत्र च पराभ्युपगतसमवायतादात्म्यभिन्नौ इत्यस्य समवायत्वेन पराभ्युपगतभिन्नत्वे सति तादात्म्यभिन्ना इत्यर्थः । भेदाभेदिमते समवायस्याप्रसिद्धावपि तत्त्वेन पराभ्युपगतं प्रसिद्धमेव । यद्वा भिन्नान्तं परिचायकमेव । अत्र च हेतुघटिका धीः प्रमारूपा निवेश्या । अन्यथा पटो घट इति भ्रममादाय व्यभिचारात् । तथा च संयोगाद्यन्यसम्बन्धावच्छिन्नगुण्यादिनिष्ठविशेषणतानिरूपितप्रमीयविशेष्यत्वादिति हेतुस्वरूपं पर्यवसितम् । नीलो घटः, चलः पटः, सन् घटः, मृद् घटः, इदं धान्यम्, अयं व्रीहिः, इत्यादिबुद्धिषु गुणादीनां विशेष्यतया हेतोः पक्षधर्मतानिर्वाहः । व्याप्तिश्चात्र नान्वयतः, दृष्टान्तासम्भवात् । किन्तु व्यतिरेकतः, यो घटत्वावच्छिन्नप्रतियोगिताकभेदाभेदोभयाभाववान् स घटत्वावच्छिन्नविशेषणताकोक्तधीविशेष्यत्वाभाववान्, यथा घटत्वावच्छिन्नघटः, पटत्वावच्छिन्नपटश्चेति । घटो घटः, पटो घट इति वा प्रमाया अभावादिति व्यतिरेकिप्रयोगरहस्यम् । इदमेव भगीरथठक्कुरसम्मतम् । तत्र च भेदाभेदोभयाभावो व्याप्यः, समानाधिकृतत्वरूपहेत्वभावश्च व्यापकः, गवाश्वयोः समानाधिकृतत्वाभावरूपव्यापकवत्त्वं प्रति अयुतसिद्धत्वरूपस्वभावविशेषाभाव एव प्रयोजकत्वरूपव्यापकतावान्, भेदाभेदोभयाभाववतोः सामान्यतद्वतोः अवर्तमानत्वेन साधनाव्यापकत्वस्य पूर्वोक्तरीत्या साध्यव्यापकश्चेति उपाधिलक्षणाक्रान्तः अयुतसिद्धत्वरूपस्वभावविशेषाभाव एव प्रोक्तानुमाने दूषणमिति भगीरथठक्कुराभिप्रायः ।

अन्वयतोऽप्यनुमानमत्र सम्भवति । तत्र च प्रयोगे पक्ष-साध्यस्वरूपं प्राग्वदेव, हेतौ तु समानाधिकृतत्वादिति गुण्यादौ गुणादिभेदधीप्रतिबन्धकप्रमाविषयत्वादित्यर्थः । यो यन्निष्ठप्रतियोगिताकभेदधीप्रतिबन्धकप्रमाविषयः स तद्भेदाभेदोभयवानिति व्याप्तिः । निष्कर्षस्तु, यो यद्धर्मावच्छिन्नप्रतियोगिताकभेदनिष्ठप्रकारतानिरूपितस्वावच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्संयोगाद्यसंसर्गकप्रमाविषयः स तद्धर्मावच्छिन्नप्रतियोगिताकभेदाभेदानुयोगितावच्छेदकताद्वयवानिति सामान्यव्याप्तौ घटत्वाद्यवच्छिन्नप्रतियोगिताकभेदप्रकारतानिरूपितस्वावच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्प्रमाविषयो द्रव्यत्वादिर्यथा घटत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभेदानुयोगितावच्छेदक इति दृष्टान्तः । आहार्यस्याप्रतिबन्धकत्वात् घटो घट इति ज्ञानमादाय, भूतलं घटवदित्यादिज्ञानस्य संयोगादिसंसर्गकत्वात् तादृशज्ञानमादाय, घटः पट इति ज्ञानस्य भ्रमत्वात् तादृशज्ञानमादाय च घटयोः, घटभूतलयोः, घटपटयोश्च न तादात्म्यापत्त्याऽर्थान्तरम् । यदि तु संयोगाद्यसंसर्गकेति निवेशेऽननुगम इति शङ्क्यते, तर्हि आधेयतावच्छेदकतानवच्छेदकरूपावच्छिन्नसम्बन्धसंसर्गकत्वं प्रमायां विशेषणीयम् । कपालो घटः, घटो रूपमित्यादिप्रतीतिमादाय समन्वयः । घटे रूपमित्यादयस्तु प्रत्यया भ्रमरूपा एव । 'गुणे शुक्लादयः पुंसि' इति कोशस्य तु, नामान्तराविशेषणस्य गुणपदस्य, तद्विशेषणगुणपदस्य च, पुंस्त्वनामान्तरसमलिङ्गत्वबोधने तात्पर्यम् । 'आकाशं शब्दमात्रं तद् स्पर्शमात्रं समाविशेत्'इत्यादिपुराणवचनात् ।

ननु कथं भेदाभेदयोरेकधर्मिप्रतियोगिगतत्वं अवच्छेदकभेदमस्वीकृत्योच्यते । नच अवच्छेदकभेदं स्वीकृत्यैव तौ वाच्याविति वाच्यम् । मणिकारायुक्तिविरोधात् । मणिकारेण हि वृक्षे कपिसंयोगतद्भेदौ स्वीकृत्य "न चैवं भेदाभेदः"इत्यनेन भेदाभेदमतमापाद्य"अवच्छेदकभेदाभ्युपगमात्" इत्यनेन उक्तमतापत्तिः परिहृता । तथा च भेदाभेदमतं अवच्छेदकभेदानिरपेक्षमिति तदभिमतम् । किञ्च अवच्छेदकभेदेन गुणगुण्यादिषु भेदाभेदानुमाने तार्किकादीन्प्रति क्रियमाणे सिद्धसाधनतापत्तेः । न

**न सर्वं सर्वेणेति । तथाऽ(१)नुगमानियमोपि स्वभा-**

दीधितिः ।

**विरुध्यते, मानाभावात्, अन्तरेण चैकं(२)धर्ममनेकेष्वेकव्यव-**

हि तार्किकादिभिः कुण्डलादौ हेमत्वाद्यवच्छिन्नाभेदो न स्वीक्रियते । अपि च हेमत्वादिना कुण्डलादावभेदस्वीकारे भेदोपि तेनैव रूपेण स्वीकार्यः । अन्यथा हेम कुण्डलमिति सामानाधिकरण्यप्रत्ययानुपपत्तेः । नहि द्रव्यत्वघटत्वाभ्यां भेदसत्त्वेपि घटः कलश इति सामानाधिकरण्यधीर्भवति । न चैवम् ।

'कार्यात्मना तु नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥'

इति भेदाभेदवादिकारिकया विरोध इति वाच्यम् । पूर्वोक्तानुपपत्तिपरिहाराय तस्या अन्यथा व्याख्येयत्वात् । तथा हि, कार्यात्मना, कार्यमात्रगतकटकत्वकुण्डलत्वादिरूपैः कटककुण्डलादीनां मिथो भेद एव, कारणात्मनेत्यत्र कार्यात्मनेत्यनुषज्यते, तथा च कारणगतेन रूपेण कार्यमात्रगतेन रूपेण च हेमत्वकुण्डलत्वादिभ्यां अभेदः, नानात्वमित्यनुषज्यते । तथा च कारणात्मनेत्यस्य हेमत्वकुण्डलत्वाभ्यां कटककुण्डलयोर्भेदाभेदावित्यर्थः । कुण्डले कुण्डलत्वावच्छेदेन हेमत्वावच्छिन्नकटकस्य भेदाभेदाविति यावत् । एवं च हेम कुण्डलमिति प्रत्ययोपपत्तिरिति भावः । हेमात्मना यथाऽभेद इति । अभेदः, अभेदोपीत्यर्थः । तेन भेदस्यापि लाभः । कुण्डलाद्यात्मना भिदेत्यत्र तु, भिदा, भिदैवेत्यर्थः । एवकारेण अभेदव्यवच्छेदः । इति रीत्योक्तकारिकाया व्याख्यानस्य वाच्यत्वेन एकरूपेणैव भेदाभेदौ वाच्यौ, तथा च भावाभावयोरवच्छेदकभेदं विना विरोधादसङ्गतिरिति चेन्न ।

अवच्छेदकाभेदेन संयोगतदभावयोर्विरोधः, घटत्वतदभावयोस्तु अवच्छेदकभेदानिरपेक्ष एव विरोधः, इति हि अनुभवबलादेव स्वीक्रियते । तथा चावच्छेदकभेदं विनापि गुणगुण्यादिस्थले भेदाभेदावपि सामानाधिकरण्यप्रत्ययादेव स्वीक्रियेते । अत्यन्ताभेदे, अत्यन्तभेदे वा उक्तप्रत्ययासम्भवात् । तदुक्तं तैः, "विरुद्धमिति नः क्व प्रत्ययः, यत्र प्रमाणगोचरः । प्रकृते च प्रमाणसत्त्वान्न विरोधप्रत्ययः । सामानाधिकरण्यप्रत्यये हि भेदाभेदौ भासेते ।" इति । इदमत्र तत्त्वम्, द्रव्यत्वघटत्वयोः शुद्धयोर्भेदानुभवे भासते यो भेदः तस्यैव द्रव्यं घट इत्यनुभवे द्रव्यत्वतदुपहितानुयोगिकतया घटत्वतदुपहितप्रतियोगिकतया च भानम् । औपाधिकभेदधीस्थले तथैवानुभवात्, तथा च द्रव्यत्वघटत्वोपहितयोर्भेदस्य अनुभवसिद्धत्वात् तन्न्यायेन विशिष्टज्ञानमात्रस्य विशेष्यविशेषणभेदविषयत्वमव्याहतम् । अन्यथा विशेष्यविशेषणयोरभेदस्थले घटो घट इत्यादिप्रत्ययप्रसङ्गात् । न चैवं घटो द्रव्यं न इत्यादिधीरपि प्रमा स्यादिति वाच्यम् । नञ्भेदादिपदाभिलप्यज्ञाने तादात्म्यविरोधित्वविशिष्टभेदस्यैव विषयत्वात् । तस्मादुक्तरीत्या भेदाभेदयोः अविरोधित्वादिकं भट्टप्रभृतिभिरुच्यमानमुपपद्यते एव । वेदान्तदर्शने तु एकाधिकरणकस्वाप्नभावाभावदृष्टान्तेन भेदाभेदयोराविरोधः । अथ वा व्यवहारदशायामेव अवयवावयविगुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्चयात् तादृशभेदः प्रातीतिकः, अभेदस्तु व्यावहारिक इत्याविरोधः ।

तदिदं भेदाभेदमतं न्यायसिद्धान्ते कपाले घटः, घटे रूपमित्यादिप्रत्ययस्य प्रमात्वाभ्युपगमान्नाङ्गीक्रियते इति सुधीभिर्विभावनीयम् । विस्तरस्तत्रत्य आकरेषु द्रष्टव्य इत्यलम् ।

(१) अथाऽ—पा० २ पु० । (२) अन्तरेण चैक—का० लि० मु० पु० पा० ।

वादेव(१) किं न स्यादिति चेत्(२)। एकस्यानेकसम्बन्धेऽनेकस्य चैक(३)सम्बन्धेऽविरोधात्. एकानेकयोरनेकव्यवहाराविरोधादिति ।

दीधितिः ।

हारो न सम्भवति, कारणाभावात्, अन्यथाऽतिप्रसङ्गाच्चेत्याह । एकस्येत्यादि । एकेति । यथा(४) एकस्मादनेकव्यवहारो नोपपद्यते, तथाऽनेकेभ्योऽप्येकव्यवहारो नोपपद्यत इत्यर्थः(५) ॥

दीधितिटिप्पणी ।

विशेष इति । अत्यन्तभेदस्याविशेषात् गोत्वमेव गवि नाश्वादावित्येवं विशेष इत्यर्थः ॥

कल्पलता ।

विशेष इति । भिन्नयोः क्वचित्सामानाधिकरण्यं क्वचिच्च नेत्यत्र विशेषो वाच्य इत्यर्थः । स्वभाव एवात्र नियामक इत्याह । अस्तीति । स च (६) स्वभावः प्रतीतिसाक्षिक इति भावः । तर्हि व्यक्तिविशेषानुगतमति(७)नियमोऽपि स्वभावादेवास्तु, किं जात्येत्याह । तथेति(८)। एकस्येति । यद्येको धर्म्मोऽनेकसम्बन्धी न भवति, तदा तेनानुगतप्रत्ययो(९) न भवेत्, न चैवम्, यदि वाऽनेकेषां धर्म्मिणामेकधर्म्मसम्बन्धविरोधः स्यात् तदा तथा कल्प्येत, न चात्र विरोध इत्यर्थः । एकानेकयोरिति । एकेन यथा नाने-

(१) स्वभावादेवेति—पुण० पु० पा० । (२) चेन्न—पुण० पु० पा० ।

(३) ऽनेक—पा० २ पु० ।

(४) एकस्मादनेकव्यवहारस्याप्रक्रान्तत्वात् दृष्टान्तपरतया योजयति । यथेति ।—पुणानन्दः ।

(५) अनेकव्यवहार इत्यर्थः—पुण० पु० पा० ।

(६) अस्तीति । तत—कालि० मु० पु० पा० । (७) व्यक्तिरेवानुगम—पुण० पु० पा० ।

(८) त्याह । अथेति—पुण० पु० पा० । (९) प्रत्ययोपि—पुण० पु० पा० ।

कल्पलता ।

**कव्यवहारः(१), तथाऽनेकैः पिण्डै(२)रेकव्यवहारोऽपि न सम्भवतीत्यर्थः ॥**

नापि ज्ञानतो बाधकम्, तत्स्वरूपप्रतिक्षेप(३)स्यानुभवबाधितत्वात् । कारणप्रतिक्षेपस्य तज्जन्म(४)नैवापास्तत्वात् । एकत्वप्रतिक्षेपस्य(५) विरुद्धधर्म्माध्यासविरहप्रतिहतत्वात् । पारोक्ष्यापारोक्ष्यादेरसिद्धेः(६) ।

दीधितिः ।

ज्ञानतो वेति द्वितीयं विकल्पं निरस्यति । नापीति । बाधकं हि ज्ञानस्वरूपत्वे तदेकत्वे वा । तदेवेदमिति विज्ञानं तदिदन्तास्पदयोरेकधर्मवत्त्वमवगाहमानं सामान्ये प्रमाणं भवेत्, यदि च तदिदङ्ग्राहिणी विज्ञाने मिथो भिन्ने, क्व तदा सामान्यसिद्धिवार्तेति भवति ज्ञानैकत्वबाधात्सामान्यबाधः । तत्प्रामाण्ये वा आद्यमपि । ज्ञानस्यानुपलम्भो वा कारणाभावो वा । आद्ये, तत्स्वरूपमिति । चरमे, कारणेति । द्वितीये, एकत्वेति । पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्माध्यासोऽस्तीत्यत आह । पारोक्ष्येति ।

दीधितिटिप्पणी ।

दीधितौ, तदेकत्वे वेति । ज्ञानैकत्वे इत्यर्थः(७) । ज्ञानैकबाधकरूपं ज्ञानतो बाधकं कथं पूर्वोक्तसामान्यसिद्धौ बाधकमत आह । तदेवेदमिति । सामान्यसिद्धिवार्तेति । प्रत्यभिज्ञानरूपत्व एवाभेदावगाहनात्, विभिन्नज्ञानत्वे तु प्रत्यभिज्ञानरूपत्वाभावान्न भेदसाधकत्वमिति भावः । तत्प्रामाण्ये वेति । बाधकं हीत्यन्वयि, इदञ्च तदेकत्वे वेत्यनन्तरमेव बोध्यम्, किन्तु तद्विवरणव्यवधानाद्व्यवहितमिव भाति । चरमे आत्मीयचरमे ।

(१) यथाऽनेकव्यवहारः—पुण० पु० पा० । (२) तथा पिण्डै—कलि० मु० पु० पा० ।
(३) प्रतिषेध—पा० २ पु० । (४) प्रतिक्षेपस्य च जन्म—कलि० मु० पु० पा० ।
(५) प्रतिक्षेपस्य—पा० २ पु० । (६) रमासिद्धेः—पा० २ पु० ।
(७) ज्ञानैकत्वे—पा० २ पु० ।

विषयमप्रतिक्षिप्य तत्प्रामाण्यस्य प्रतिक्षेप्तुमशक्यत्वात्, तदप्रतिक्षेपस्य च दर्शितत्वात्। इन्द्रियजत्वप्रतिक्षेपस्य चेन्द्रियान्वयव्यतिरेकानुविधानबाधितत्वात्। साक्षात्कारित्वविश्रान्ते च(१) तदनुविधानस्याव्यभि-

दीधितिः।

संस्कारेण स्मृत्या वोपनीते विशेषणेपि विशिष्टज्ञानस्यापरोक्षताया व्युत्पादितत्वात्। तृतीयमपि(२)विषयबाधो वा,व्यापका(३)नुपलम्भो वा।आद्ये, विषयमिति। स्यादेतत्। अर्थसमुत्थं(४) हि ज्ञानं प्रमा,अर्थनिरपेक्षाणां वासनामात्रसमुत्थानां शशविषाणादिविकल्पानामप्रमाणत्वात्। अर्थश्चेन्द्रियसापेक्ष एव प्रमामाधत्ते, न च विकल्पा इन्द्रियजन्मान इति द्वितीयं निरस्यति। इन्द्रियजत्वेति।अथ विनापीन्द्रियव्यापारं शशविषाणादिविकल्पोत्पादाद्व्यभिचारेण विकल्पाकारणमिन्द्रियं तज्जनकनिर्विकल्पक एवोपक्षीणं, वन्ह्यनुमितिजनकधूमज्ञान इवेत्यत आह। साक्षात्कारित्वेति।

दीधितिटिप्पणी।

संस्कारेणेति। प्रत्यभिज्ञानस्य तत्तांशमादाय उपनीतभानरूपत्वेपि इदन्तांशमादायापरोक्षविशिष्टज्ञानरूपत्वं व्युत्पादितमिति एकत्रैव पारोक्ष्यापारोक्ष्यसत्त्वात् न विरुद्धत्वं तयोरित्यर्थः। व्यापकेति। प्रामाण्यीयव्यापकानुपलम्भेत्यर्थः। प्रामाण्यव्यापकस्य इन्द्रियजत्वस्य प्रतिक्षेपं दर्शयति। स्यादेतदित्यादिना। ननु प्रामाण्यव्यापकं कथमिन्द्रियजत्वमत आह। अर्थसमुत्थमिति। विषयजन्यमित्य-

(१) विश्रान्तेश्च-पा० २ पु०।
(२) तृतीयम्, तज्ज्ञानप्रामाण्ये बाधकम्।—गुणानन्दः।
(३) व्यापकम्, तन्नये प्रमात्वस्येन्द्रियजत्वम्।—गुणानन्दः।
(४) अर्थसम्बद्धं-पाठः।

चारात्(१).* ।

दीधितिः ।

साक्षात्कारित्वावच्छिन्नं(२) प्रत्यव्यभिचारेणेन्द्रियस्य कारणत्वात् ॥

दीधितिटिप्पणी ।

र्थः । धूमज्ञाने यथा इन्द्रियमुपक्षीणं नानुमितिहेतुरित्यर्थः ॥

कल्पलता ।

मूलद्विकल्पद्वये द्वितीयं विकल्पं दूषयति । नापीति । ज्ञानतो बाधकमिति कोऽर्थः, किं सामान्यविषयं ज्ञानमेव नास्ति, अकारणकं वा, नानाविषयकं वा, परोक्षाकारं वा, निर्विषयत्वेनाप्रमारूपं वा, अनिन्द्रियजं वा, असाक्षात्कारि वा । तत्र नाद्य इत्याह । तत्स्वरूपेति । द्वितीयं दूषयति । कारणेति । तृतीये त्वाह । एकत्वेति । चतुर्थं दूषयति । परोक्षेति । विषये तावन्न पारोक्ष्यं नाप्यपारोक्ष्यं, तदुभयस्य ज्ञानधर्मत्वात्, तथा च जातिगोचरज्ञानमिन्द्रियजमपरोक्षमेव, अनिन्द्रियजं तु परोक्षमिति नैतत् जातौ बाधकमित्यर्थः । पञ्चमं दूषयति । विषयमिति । विषयप्रतिक्षेपाधीनो हि प्रामाण्यप्रतिक्षेपः, स च प्रकृते नास्तीत्यर्थः । षष्ठं दूषयति । इन्द्रियजेति । सप्तमं दूषयति । साक्षादिति(३) । अयं गौरित्यादिविकल्पानां साक्षात्त्वमनुभवसिद्धमतोऽपीन्द्रियजत्वमित्यर्थः ॥

(१) [illegible]

* इतः परं [illegible]

[illegible]

[illegible] । तृ. १ [illegible]

(२) [illegible]

(३) [illegible]

अन्यथा निर्विकल्पकस्याप्यनिन्द्रियजत्वप्रस-

दीधितिः ।

यदि च यथाकथञ्चित्तत्सधर्म्मणो विकल्पस्येन्द्रियव्यभिचाशरात्साक्षात्कारिणोपि तस्येन्द्रियाजन्यत्वं, तदा निर्विकल्पकसधर्मणोऽस्फुटावभासस्य(१) कामातुरकामिनीज्ञानस्येन्द्रियाजन्यत्वान्निर्विकल्पकमपीन्द्रियजन्यं न(२) स्यादित्याह। अन्यथेति। इदञ्च(३) भावनावशात् स्मृत्युपनीतकामिन्यां पुरोवर्त्तित्वारोपः,तत्र च(४)दर्शनत्वारोप इति मतेन(५)। भावनापरिपाकवशाद्योगिनामात्मनीव कामातुरस्य कामिन्या निर्विकल्पकमिति मतेनेदम्। तथा च यथाश्रुत-

दीधितिटिप्पणी ।

यथाकथञ्चिदिति। यं कञ्चिदपि धर्ममादायेत्यर्थः। विकल्पस्य शाब्दलिङ्गादिजविकल्पस्य। तस्य विकल्पस्य। तदेति। अस्फुटावभासत्वमादाय समानधर्मवत्त्वं वाच्यम्(६)। न स्यादिति। जन्यताविघटकस्य व्यभिचारिणा समानधर्मत्वस्य सत्त्वादित्यर्थः। ननु पुरोवर्त्तिलतादौ कामिनीत्वारोपरूपस्य कामातुरकामिनीज्ञानस्य लतागोचरनिर्विकल्पकसापेक्षतया कथं तदन्तरेणेत्यादिकथनमत आह। इदञ्चेति। पुरोवर्त्तित्वारोप इति। कामिनी पुरोवर्तिनीत्यनुभवादित्यर्थः। कामिनीं पश्यामीति कथमनुव्यवसाय इत्यत आह। तत्र चेति। तत्र ज्ञाने। आत्मनीवेति। यथाऽऽत्मानं सर्वे पश्यत इत्यर्थः। कामातुरस्य कामिनीज्ञाने निर्विकल्पकत्वं नास्तीति स्वयं यथाकथञ्चित् समानधर्मवत्त्वरूपेण व्याख्यातम्, इदानीं निर्विकल्पकत्वरूपधर्ममादाय कामिनीज्ञानस्य व्यभिचारादित्यत आह। भावनेति। कामिन्याम् असन्निकृष्टकामि-

(१) मानस्य-पुण० पु० पा०। (२) न्द्रियाजन्यं-पुण० पु० पा०।

(३) भावनावशात् कामिन्या अपि साक्षात्कारे क्व इन्द्रियजत्वव्यभिचार इत्याशङ्क्याह। इदञ्चेति। वस्तुतस्तु अस्फुटावभासत्वेन सजातीयता, व्यभिचारश्च परनयमाश्रित्येति यथाश्रुतमेव ज्यायः।—गुणानन्दः। (४) रोपस्तत्र—पाठः।

(५) अयमभिप्रायः, स्मृत्युपनीतकामिन्यां कामिनीत्वांशप्रमोषेण पुरोवर्तित्वावभासे पुरोवर्तित्वानिष्ठप्रकारतानिरूपितविशेष्यता निरवच्छिन्नेति कृत्वा उक्तावभासस्य धर्म्यंशे, अन्यत्र च निरवच्छिन्नविषयताकत्वरूपं निर्विकल्पकसधर्मत्वं अस्फुटावभासपदवाच्यं वर्तत एवेति तस्यानिन्द्रियजत्वे निर्विकल्पस्याप्यनिन्द्रियजत्वापत्तिरिति मघट्टकार्थः। (६) त्वं बोध्यम्—पा० २ पु०।

ज्ञात। कामातुरकामिनीज्ञान(१)स्य तदन्तरेणाप्युपपत्तेः। बाधकाभावाच्च दर्शनव्यापारस्योपाधि(२)त्वकल्पनानव-

दीधितिः।

मेव(३)साधीय इत्यपि कश्चित्(४)। यदा च भावनावशात्पुरोवर्त्तिलतादावेव कामिनीत्वारोप इति मतं(५), तदापि निर्विकल्पकत्वापेक्षया लाघवेन साक्षात्कारित्वमेवेन्द्रियजन्यतावच्छेदकम्। नित्येश्वरप्रमाभ्युपगमे तु क्वार्थसमुत्थत्वादेः प्रामाण्यव्यापकत्वसम्भावने(६)ति मन्तव्यम्। केचित्तु, अन्यथेति। साक्षात्कारित्वे सत्यप्यनिन्द्रियजन्यत्व इत्यर्थः। अथेन्द्रियजन्यत्वाधीनं न सविकल्पकस्य साक्षात्कारित्वमपि तु निर्विकल्पकजन्यत्वाधीनमत आह। कामातुरेति। लतादौ कामिन्यारोपस्य विनापि निर्विकल्पकमिन्द्रियजन्यतामात्रेण साक्षात्कारित्वादित्यर्थ इत्याहुः। तच्चिन्त्यम्(७)।

दीधितिटिप्पणी।

न्याम्। इति मतम्,तथा च पुरोवर्तिलतादिविशेष्यककामिनीज्ञानस्य विशेष्यांशे लौकिकतया इन्द्रियजत्वेन तदन्तरेणेत्यादिग्रन्थासङ्गतिः स्यादित्यर्थः। असङ्गतिमुद्धरति। तदापीति। तथा चास्य ग्रन्थस्य निर्विकल्पकत्वं न जन्यतावच्छेदकं स्यादित्यत्र तात्पर्यमिति भावः। नन्वेतावतापि निर्विकल्पकस्य साक्षात्कारित्वं इन्द्रियजत्वनियतं स्यात्, न तु विकल्पस्य तत्साक्षात्कारित्वं, तस्य निर्विकल्पकजत्वाधीनमेव स्यादित्याशङ्कते। अथेति। तच्चिन्त्यमिति। लतादौ का-

(१) कामिनीसाक्षात्कार-पा० २ पु०। (२) व्यापारोपाधिक-पा० २ पु०।

(३) श्रुत एव-पाठः। यथाश्रुतमेवेति। निर्विकल्पकत्वावच्छिन्नं प्रत्येव व्यभिचारोपदर्शनोपपत्तिरित्यर्थः—गुणानन्दः। (४) कश्चिदित्यरुचिबीजं निर्विकल्पकोपगमे इन्द्रियजन्यत्वावश्यकत्वमिति क्व व्यभिचारशङ्का। विनैवेन्द्रियं निर्विकल्पकज्ञाप्रामाणिकमित्यादि।—गुणानन्दः।

(५) तथा च नेन्द्रियजत्वव्यभिचारः, स्मृत्युपनीतकामिन्या पुरोवर्त्तित्वारोपे तु पूर्वोक्ते इन्द्रियाजन्यत्वमेव, बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमेन असन्निकृष्टकामिनीमुख्यविशेष्यकस्य तस्य इन्द्रियजन्यत्वानुपपत्तेरित्याशयः। (६) च्छेदकमि-पाठः।

(७) तच्चिन्त्यमिति। बौद्धैरारोपस्य साक्षात्कारित्वानुपगमेन उभयासिद्धतया प्रमाप्याकृतत्वादित्यादिदूषणेनेत्यर्थः।—गुणानन्दः।

काशात्। अवकाशे वा विपर्य्ययकल्पनाया अपि प्रसङ्गात्। इन्द्रियमनपेक्ष्य(१) साक्षात्कारिसमनन्तरप्रत्ययमहिममात्रेण साक्षात्कारिविकल्पोत्पत्तौ तद्विपरीतानुत्प-

दीधितिः।

भवेदेवं यदि सविकल्पकस्य साक्षात्कारित्वं स्वाभाविकं भवेत्, न त्वेतदस्ति, निर्विकल्पकसाक्षात्त्वस्य तत्रारोपादित(२) आह। बाधकाभावाच्चेति। दर्शनम्(३) निर्विकल्पकम्। व्यापारः धर्मः, उपाधीयत इत्युपाधिरारोप्यः(४)। विपर्ययः विकल्पधर्मस्य(५) निर्विकल्पके समारोपः। अथ समनन्तरप्रत्यय(६) एव विकल्पजनको नेन्द्रियम्, स च साक्षात्कारीति करणसारूप्याद्विकल्पोपि साक्षात्कारीत्यत्राह। इन्द्रियमिति। विपरीतस्यासाक्षात्कारिविकल्पस्यानुत्पत्तिप्रसङ्गात्, सविकल्पकमात्र एवालयविज्ञान(७)हेतुतायास्त्वयोपगमात्। यदीन्द्रियं

दीधितिटिप्पणी।

मिनीत्वारोपस्य कामिन्यंशेऽलौकिकतया सविकल्पकतया साक्षात्कारित्वमेव नास्तीत्यस्वरसः। दर्शनमिति। तथा चात्र बहुव्रीहिर्बोध्यः। समनन्तरप्रत्ययः निर्विकल्पकम्, सः उक्तप्रत्ययः। ननु कथमसाक्षात्कारिविकल्पस्यानुत्पत्तिप्रसङ्ग इत्यत आह। सविकल्पकमात्रेति। त्वया निखिलसविकल्पक एवालयविज्ञानरूपनिर्विकल्पहेतुः स्वीक्रियते। तथा च यदि निर्विकल्पकजन्यत्वमेव साक्षात्कारित्वे बीजम्, तदा शब्दलिङ्गविकल्पयोरपि आलयरूपनिर्विकल्पकजन्यतया सा-

(१) इन्द्रियमन्तरेण—पा० २ पु०। (२) दित्यत—पाठः।

(३) दर्शनमिति। तथा च निर्विकल्पकस्य यो धर्मः साक्षात्कारित्वं तदुपाधित्वकल्पनाया इत्यर्थोवसेय इति भावः।—गुणानन्दः। (४) रारोपः—पाठः।

(५) विकल्पधर्मस्य साक्षात्त्वस्य—पुण० पु० पा०।

(६) समनन्तरप्रत्ययः, तन्नये आत्मस्थानीयः अहमित्याकारः।—गुणानन्दः।

(७) आलयविज्ञानं, समनन्तरप्रत्ययः अहमित्याकारकः पूर्वोक्त एव।

त्तिप्रसङ्गात्। प्रथममनुत्पत्तेः पूर्वस्मरणादिसहकारिवैधुर्यनिबन्धनत्वादित्येषा दिक्।

दीधितिः।

विकल्पजनकं तदा तदापातमात्रेण(१) तदिदमित्यादिविकल्पापत्तिः, अत्राह। प्रथममिति। पूर्वस्मरणम्(२) पूर्वानुभूतव्यक्तिस्मरणम्। साधितं चार्थासमुत्थानामनिन्द्रियजानामनुमित्यादिविकल्पानां विषयाबाधेन प्रामाण्यम्, अप्रामाण्ये चाप्रयोजकं नामजात्यादियोजनावगाहित्वादिकमित्यनुसन्धायाह। एषा दिगिति॥

दीधितिटिप्पणी।

क्षात्कारित्वमेव स्यादित्यर्थः। तदापातेति। तस्य इन्द्रियस्य आपातमात्रेण संयोगमात्रेणेत्यर्थः। स्मरणस्य पूर्वत्वमनुपयुक्तमत आह। पूर्वानुभूतेति। दिगर्थव्यक्तेन व्यापकानुपलम्भरूपदोषं खण्डयति। साधितञ्चेत्यादि। ननु बौद्धमते नामजात्याद्यवगाहित्वरूपं विकल्पत्वमेव प्रामाण्ये प्रयोजकमङ्गीक्रियतेऽत आह। प्रामाण्येति॥

कल्पलता।

अन्यथेति। साक्षात्त्वे सत्यप्यनिन्द्रियजत्वं चेदित्यर्थः। ननु निर्विकल्पका(३)नन्तरभावित्वाधीनं तस्य साक्षात्त्वं, न तु इन्द्रियजत्वाधीनमित्यत आह। कामातुरेति। यत्र स्तम्भादौ कामिनीसमारोपस्तत्र निर्विकल्पकं विनापि इन्द्रियजत्वमात्रादेव तस्य साक्षात्त्वमित्यतोऽपीन्द्रियजत्वमि(४)त्यर्थः। तदन्तरेणापि निर्विकल्पकमन्तरेणापि। ननु गौरयमिति विकल्पः साक्षात्कारी न भवत्येव, येनेन्द्रियजः स्यात्, साक्षात्त्वं तु तस्य निर्वि-

(१) तदापातमात्रेण, इन्द्रियसन्निकर्षमात्रेण। —गुणानन्दः।
(२) सहकारितामात्रेण पूर्वत्वलाभात् तस्य वैयर्थ्यमाशङ्क्याह। पूर्वानुभूतेति। —गुणानन्दः।
(३) ननु विकल्पा—पुग० पु० पा०। (४) साक्षात्त्वमि—पाठः।

कल्पलता।

कल्पकसाक्षात्त्वौपाधिकमित्यत आह। बाधकाभावादिति। दर्शनव्यापारः साक्षात्त्वम्। यद्वा दर्शनं साक्षात्कारिज्ञानं,तद्व्यापारस्तत्कार्यो विकल्प इत्ययमेवोपाधिः सविकल्पकसाक्षात्त्व इत्यर्थः। स्वाभाविकत्वे बाधके सत्येवौपाधिकत्वकल्पना, तच्चेह नास्तीत्यर्थः। विपक्षदण्डमाह। अवकाशो वेति। सविकल्पकसाक्षात्त्वमेव निर्विकल्पकेप्युपाधिः स्यादित्यर्थः। नन्वस्तु विकल्पेपि स्वाभाविकं साक्षात्त्वं, न हिवन्द्रियजत्वाधीनं, किन्तु साक्षात्कारिज्ञानजनितत्वमात्रेणेत्यत आह। (इन्द्रियमिति। एवं तर्हि साक्षात्कारिणः समनन्तरप्रत्ययादसाक्षात्कारिज्ञानं न स्यादेव, तच्च तवानुमतमित्यर्थः। नन्विन्द्रियमेव यदि साक्षात्कारिसविकल्पकजनकं तदेन्द्रियापातमात्रेणैव जायेत, समर्थस्य क्षेपायोगादित्यत आह।) प्रथममिति। सहकारिविलम्बेन विलम्बस्य स्थिरपक्षे साधितत्वादित्यर्थः। नन्वभिलापसंसर्गयोग्यप्रतिभासत्वान्न तदिन्द्रियजमित्यत आह। इत्येषा दिगिति। इन्द्रियजत्वेऽप्यभिलापसंसर्गयोग्यप्रतिभासत्वमविरुद्धमित्यादि तात्पर्यपरिशुद्धौ विस्तर इत्यर्थः॥

अस्तु तर्हि प्रयोजनानुरोधादपोहस्वीकारः। सर्व्वध-

दीधितिः।

सर्वधर्मेति। शब्दा हिताहितत(१)त्साधनानि तत्तद्धर्मविशिष्टानि बोधयन्तस्तत्र तत्रार्थिनः प्रवर्त्तयन्ति निवर्तयन्ति च।

(१) हिताहित—पाठः।

र्म्मावाच्यत्वसिद्धिर्हि परमं प्रयोजनम्, कल्पनाजाल(१)विधूननेन गम्भीरोदारसमाधिसमधिगमादिति चेत्, निष्प्रमाणकमिदं कः श्रद्दध्यात् । प्रमाणं

दीधितिः ।

न चैतत्प्रतिपाद्यानि(२) वस्तूनि भवितुमर्हन्ति, सर्वधर्माणामवस्तुत्वात्, वस्त्ववस्तुनोः(३) सम्बन्धनिषेधात्, अवस्तुनैवान्यापोहेन व्यवहारनिर्वाहात्, निर्णीते चैवं वाह्याना(४)मवस्तुत्वे तदर्थनाविरहेण ततो विरतव्यापारं मनो नैरात्म्यभावनानिरतं(५) समाहितं भवतीति । परमम् उत्कटम्(६) । गम्भीरः मिथ्याज्ञानवासनासमूलोन्मूलनसमर्थः । उदारः फलाव्यभिचारी(७) । इदम् वस्तूनां सर्वशब्दावाच्यत्वस्य सिद्धेः(८) समा-

दीधितिटिप्पणी ।

वस्तूनीति विधेयम् । सर्वधर्माणामिति । अनेन चावश्यं धर्मविशिष्टतयैव बोधजननात् न केवलं बोधयितुं पार्यते, अत एव तत्तद्धर्मविशिष्टानीत्युक्तम् । अवस्तुधर्मविशिष्टान्येव वस्तूनि बोध्यन्तामत आह । वस्त्ववस्तुनोरिति । व्यवहारानुरोधाद्वस्तुरूपोऽप्यनुगतधर्मः सिद्ध्यतीत्यत आह। अवस्तुनैवेति। अवस्तुत्वज्ञानात्, तेषाम् वाह्यानाम्, अर्थनाविरहेण, नैरात्म्यभावना न किञ्चिदपि वस्तु स्थिरमित्यादिभावना, समाधिर्वा । ननु भवन्मते वस्तूनां पारमार्थिकताज्ञानात्ततो

(१) मूले, कल्पनाजालविधूननम्, सविकल्पकविषयाणामवस्तुत्वाभिधानम्, सविकल्पकमात्रस्याप्रमात्वज्ञानं वा सिद्ध्येदित्यादि ।—गुणानन्दः ।

(२) एतत्प्रतिपाद्यानि, शब्दप्रतिपादितानि । वस्तूनि, प्रामाणिकानि । सर्वधर्माणाम्, अनुगतानाम् । तत्पुरस्कारेणैव शब्दप्रवृत्तेरिति भावः ।—गुणानन्दः । (३) स्तुनोश्च-पाठः ।

(४) वाह्यानाम्, शब्दबोधितानाम् । इत्थञ्च सर्वधर्मावाच्यत्वसिद्धिर्हीत्यस्य मूलस्य वाच्यानां सर्वधर्माणामवस्तुत्वसिद्धिरित्यर्थ इति भावः ।—गुणानन्दः । (५) नियतं—पाठः ।

(६) उत्कटमिति । तच्च मु(मु ?)क्तिरूपम् ।

(७) एतयोः पदयोरर्थनियमस्तु आकरमनुसृत्याभिहितः ।—गुणानन्दः ।

(८) वाच्यत्वस्य—पाठः ।

चात्र न प्रत्यक्षानुमाने । आगमश्च न किञ्चिद्वदती-ति(१) त्वयैव ग्राहितः शिष्यः ।

दीधितिः ।

धिहेतुत्वम् । यथा च(२) वास्तवत्वेपि धर्माणां निर्विंद्यते चे-तस्तथोपपादितमाकरे । अथ मदीया(३) एवागमाः प्रमाणम-स्मिन्नर्थे, तत्राह । आगमश्चेति । अयमर्थो वस्तुभूतो न वा । न चेत् , कथमत्र प्रमाणसम्भावना । वस्तुभूतश्चेत् , न तर्हि श-ब्द(४)प्रतिपाद्यः ॥

दीधितिटिप्पणी ।

निर्विण्णं मनो न स्यादत आह । यथा चेति । न किञ्चिद्वक्तीत्यादेर्नि-ष्कृष्टार्थमाह । अयमर्थ इति । वस्तूनां शब्दावाच्यत्वं समाधिहेतुरि-त्येवंरूपोऽर्थः, नाऽऽगमरूपशब्दप्रतिपाद्यः ॥

कल्पलता ।

प्रयोजनमाह(५) । कल्पनाजालेति । जात्यादिकं यदि(६) पारमार्थिकं न भवति, तदा शाब्दलैङ्गिकवि-कल्पाधीने प्रवृत्तिनिवृत्ती न भवतः, ततो बहिर्व्यापा-रादुपरतं मनो नैरात्म्यमात्रभावनपरं समाहितं भव-ति, अनुगतप्रत्ययस्त्वपोहेनैव तुच्छेन भवति, व्याप्ति-शक्तिग्रहावप्यपोहानुगमसाध्याविति भावः(७) । ग-म्भीरत्वम् सवासनमिथ्याज्ञानोन्मूलनक्षमत्वम् । उदा-रत्वम् नैरात्म्यसाक्षात्कारप्रापकत्वम् । समाधेः सम-धिगमः प्राप्तिः । इदमिति । सर्वधर्मावाच्यत्वप्रसि-

(१) किञ्चिद्वक्तीति—पुण० पु० पा० ।
(२) ननु समाध्यन्यथानुपपत्तिरेव मानं स्यादित्यत आह । यथा चेति ।—गुणानन्दः ।
(३) आस्तिकागमस्य तदबोधकत्वादाह । मदीया इति ।—गुणानन्दः ।
(४) शब्दा—पाठः । (५) जनमेवाह-पुण० पु० पा० ।
(६) जात्यादिकं-पाठः । (७) वित्यर्थः—पुण० पु० पा० ।

कल्पलता।

द्धेः(१) अपोहस्वीकारस्य कल्पनाजालविधूननस्य वा स(२)माधिसमधिगमकारणत्वमित्यर्थः । नात्र प्रत्यक्षानुपलम्भौ प्रभवतः(३), येन प्रत्यक्षमनुमानम्वा प्रमाणमिह स्यादित्याह। प्रमाणश्चेति। ननु सुगतागमप्रतिपाद्यमेवैतत्, यथा तत्र श्रवणमननादीनामात्मसाक्षात्कारकारणत्वमागमैकसमधिगम्यमित्यत आह। आगमश्चेति। सर्व्वधर्म्मावाच्यत्वे स्वलक्षणं किंधर्म्मोपग्रहेण शब्दः प्रतिपादयेदिति शिष्यास्त्वयैव बोधिता इत्यर्थः॥

---

न चैवं चेतनो ग्राहयितुमपि शक्यते, स्ववाग्विरोधस्योद्भटत्वात्। तथाहि,

शब्दस्य(४) क्वाचिदपि वस्तुनि मानसिद्धा
बाधाविधि(५)व्यवहृतिः क्वचिदस्ति(६) नो वा।
अस्त्येव चेत् कथमियन्ति न दूषणानि

---

दीधितिः।

इयन्ति(७) स्वलक्षणानामननुगमात्(८) कथं तत्र सङ्केतग्रहः, अनुगतं धर्म्मं पुरस्कृत्य तद्ग्रहे तस्य वास्तवत्वे न कथं भव-

दीधितिटिप्पणी।

अनुगतधर्मस्य वास्तवत्वे। एवं अलीकत्वे इत्यत्रापि।

---

(१) इदामिति।—पुण० पु० पा०।

(२) जालविलक्षणस—पाठः। (३) प्रवृत्तौ-पाठः।

(४) मूले, शब्दस्येत्यादि। इह, विचारे अयं प्रश्नः। तदाकारमाह। शब्दस्येति। वस्तुनि, प्रामाणिके, बाधाविधिव्यवहृतिः, निषेधविधिव्यवहारविषयता प्रमाणसिद्धा अस्ति न वा।-गुणानन्दः

(५) बाधावधि-पाठः। (६) हृतिः किमिहास्ति-पुण० पु० पा०।

(७) इयन्तीति। अस्य गृहीतग्रन्थस्य स्वलक्षणानामित्याद्यभिप्रायेतनेत्यादीत्यनेन सम्बन्धः।—गुणानन्दः। (८) मननुगतत्वात्—पुण० पु० पा०।

नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥
इति तवैव विषयसञ्चारमात्रेण श्लोकः ।

दीधितिः ।

न्मतव्याघातः, अलीकत्वे वस्त्वलीकत्वयोर्न कथं सम्बन्धविरोधः, स्वलक्षणस्य विषयत्वे कल्पनापोढत्वमित्यादीनि । धर्म्मस्य कस्यचिदवस्तुनीति(१) परगाथा ॥

दीधितिटिप्पणी ।

स्वलक्षणस्य शाब्दबोधरूपविकल्पविषयत्वे ( कथं ? ) विकल्पस्य कल्पनापोढत्वम् भ्रमासिन्नत्वमायातमित्यर्थः ॥

कल्पलता ।

त्वमिव तव शिष्योऽप्यचेतन एव, येनैतादृशादुपदेशात् स प्रतीतो विरोधं स्फुटतरमवधीर्य्येत्याह(२)। न चैवमिति । आगमो न किञ्चिदस्तीत्ययमप्यागम एव, तथा च स्ववाग्विरोधः (इत्यर्थः) । विरोधान्तरमाह । शब्दस्येति । शब्देन वस्तुनि विधिनिषेधौ व्यवह्रियेते(३) न वा । यदि न व्यवह्रियेते(४) तदा स्वलक्षणं न सङ्केतविषयः, अननुगमात्(५), स्वलक्षणं न शाब्दज्ञानविषयः, अभिलापसंसर्गायोग्यप्रतिभासत्वात्, अतद्व्यावृत्तिधर्म्मवत्तयापि स्वलक्षणं न वाच्यम्, अलीकस्यालीकधर्म्मानाश्रयत्वादित्यादीनि दूषणानि त्वयोक्तानि त्वय्येव पर्य्यवसन्नानीत्यर्थः ।

(१) धर्मस्य कस्याचिदवस्तुनीति। तदर्थश्च अवस्तुनि, शशविषाणादौ, धर्मस्य विधिनिषेधव्यवहारविषयताऽस्ति न वा । अस्तीति पक्षे अज्ञाते कथं व्यवहार इत्यादीनि दूषणानि । नास्तीति पक्षे विधिनिषेधव्यवहाराविषयत्वेनैव व्यवहारात्स्ववचनविरोध इत्यर्थः ।—गुणानन्दः ।

(२) त्यत आह—पाठः । (३) षेधौ क्रियेते—पाठः । (४) यदि क्रियेते—पाठः ।

(५) अननुगतत्वात्—पुण० पु० पा० ।

कल्पलता।

नास्त्येवेति। वस्तु विधिनिषेधव्यवहारभाजनं न भवतीति वदता त्वयैव तादृप्येण वस्तु व्यवहृतमिति स्ववचनविरोध एव सिद्ध इत्यर्थः। विषयेति। शब्दस्य कस्यचिद्वस्तुनि मानसिद्धेत्यादिगाथाऽस्मांल्लक्षीकृत्य विरोधदानार्थं त्वया पठिता, सा चावस्तुपदस्थाने वस्तुपदसञ्चारेण मया पठनीयेत्यर्थः॥

न चास्माकमिव तवाप्यत्र मूकतैव शरणम्, सर्वथा वचनविरोधे ह्युदासीनस्य(१) सा शोभते, न चात्र विधौ विरोधः कश्चित्, न च त्वमुदासीनः, प्रयोजनेन(२) प्रवृत्तत्वात्, तस्मादलमङ्गुलिदीपिकया ध्वान्तध्वंसविधि(३)मनुष्ठायेति।

दीधितिः।

प्रयोजनेनेति। वस्तुनः शब्दाप्रतिपाद्यत्वप्रतिपादनं तव प्रयोजनमौदासीन्ये न सिध्यतीति वस्तु न शब्दप्रतिपाद्यमित्यवश्यमभिधानीयम्, तथा च यद्यनेन शब्देन वस्तु न प्रतिपाद्यते, क्व ते प्रयोजनसिद्धिः। अथ प्रतिपाद्यते, स्ववचनविरोधो दुर्वारः॥

कल्पलता।

ननु मद्गाथायां त्वया मूकता यथा अवलम्बिता, तथा विषयसञ्चारेण पठ्यमानायामस्माकमपि मूकतैव शरणम्, अन्यथा विरोध एव स्यादित्यत आह। न चेति। सत्त्वक्षणिकत्वव्यतिरेकदृष्टान्ते कूर्मरोमादौ त्वयोदाहृतेऽस्माभिर्निषेधश्चेत्क्रियते(४), तदा

(१) मूले, उदासीनस्येति। शशविषाणादौ तादृशव्यवहारकर्तुरस्मदादेरित्यर्थः।—गुणानन्दः।
(२) प्रयोजने—पाठः। (३) ध्वान्तविध्वंस—पाठः। (४) क्रियेत-पु[illegible] पा०।

कल्पलता ।

( मम ) स्ववचनविरोधः स्यात्, तेन तत्र यथा मम सूक्तता तथाऽत्र(१) न तवोचिता, कल्पनाजालविधूननस्य समाधिसमाधिगमहेतुभावस्य त्वयाऽवश्यनिर्वाह्यत्वात्, तन्निर्वाहकञ्च न प्रत्यक्षम्, नानुमानम्, अतश्च शब्द एव वाच्यः, तत्र मत्पठितगाथायां त्वया स्थापनावादिनावश्यं किञ्चिद्वाच्यम्, तथा च स्ववचनविरोधस्तव स्यादेवेत्यर्थः । न च त्वमुदासीन इति । अङ्गुलिदीपिकयेति । स्ववाग्विरोध(२)मङ्गीकृत्य कल्पनाजालविधूननेन प्रयोजनेनापोहाभ्युपगमस्तवालमित्यर्थः ॥

आगमस्य तत्त्वार्थपरिस्पर्शित्वविरोधे न(३) स्वर्गापवर्गार्थिनां प्रवृत्तिः सिद्धयतीति प्रयोजनमस्माद्विचारस्यैव परं(४) सुन्दरम् ।

कल्पलता ।

नन्वागमस्य वस्तुविषयतया प्रामाण्याभ्युपगमे तव कथं निर्बन्ध इत्यत आह । आगमस्येति ॥

तस्माच्छब्दैः किं वाच्यमित्यनुयोगे किं प्रतिभा-

दीधितिः ।

प्रतिभासः ज्ञानजननम् । शब्दजन्यज्ञानविषयः क इति

दीधितिटिप्पणी ।

मूले, प्रतिभासादित्यादि सर्वत्र पञ्चमी ल्यब्लोपे(५)। ज्ञानजननार्थकत्वेन कोऽर्थो लब्ध इति दर्शयति । शब्दजन्येति ॥

(१) तथा तत्र—पाठः । (२) सम्यग्विरोध-पाठः ।
(३) तत्त्वार्थस्पर्शो त्वविरोधेन-पुण०पु०पा० । (४) स्यैव-पाठः । स्यैव वरं-पुण०पु०पा० ।
(५) प्रासादात् प्रेक्षते इत्यादौ ल्यब्लोपपञ्चमीमङ्गीकृत्य प्रासादमारुह्य प्रेक्षते इत्यर्थकरणवत् प्रतिभासादित्यादौ ल्यब्लोपपञ्चम्याश्रयणेन प्रतिभासमादायेत्यादिरर्थो बोध्य इति भावः ।

सात्; अथाध्यवसायात्; यद्वा तत्त्वत इति विकल्प्य(१) विकल्पस्थोऽन्यापोढाकारः; अन्यापोढस्वलक्षणं; न किञ्चित्; इति यत् क्रमेण प्रयुक्तम्(२), तत्र प्रथमे समयविपर्य्यासः, विकल्पाकारस्य समयाविषयत्वात् , द्वितीये(३) प्रवृत्तिविपर्य्यासः, अदृष्टे नियामकाभावात् , तृतीये स्ववाग्विरोधः(४), अस्यैवार्थस्यानेन तत्त्वतो निर्वचनात्(५), अवचने(६) तत्त्वतोऽनुत्तरत्वा(७)दित्युपसंहारः । तस्मात्(८) सिद्धमेतत् न क्षणिकत्वमात्मनि बाधकमिति । इति प्रथमविप्रतिपत्तिः ॥

दीधितिः ।

प्रश्ने अतद्व्यावृत्तो विकल्पनिष्ठ आकार(९) इत्युत्तरम् । अध्यवसायः प्रवृत्तिजननम् । शब्दजन्यप्रवृत्तिविषयः क इति प्रश्ने(१०) अतद्व्यावृत्तस्वलक्षणमिति । तत्त्वतः वस्तुतः। किं वस्तु शब्दवाच्यमिति प्रश्ने च न किञ्चिदिति । विपर्यासः बाह्यविषयिण्याः शक्तेर्विकल्पाकारे सञ्चारः। प्रवृत्तिविपर्ययः(११) नियतविषयकप्रवृत्त्यनुपपत्तिः, नियामकाभावात्, भेदाग्रहादेर्नियामकत्वस्य निरस्तत्वात् ।अस्यैवेति । किमपि वस्तु न शब्दवाच्यमित्यस्यार्थस्य वस्तु(१२)घटितमूर्त्तिकत्वादिति ॥

इति क्षणभङ्गवादः ॥ इति प्रथमविप्रतिपत्तिः ॥

(१) विकल्प्य—नास्ति २ पु० । (२) यत् प्रत्युक्तम्—पाठः ।

(३) द्वितीये तु—पाठः । (४) वाग्निरोधः—पाठः ।

(५) तत्त्वतावचनात्—पाठः । तत्त्वतो वचनात्—पुण० पु० पा० ।

(६) अवचने वा—पुण० पु० पा० ।

(७) मूले, तत्त्वतोऽनुत्तरत्वादिति । तत्त्वतः किं वाच्यमिति प्रश्ने तव अनुत्तरत्वात्, तथा चाप्रतिभयैव निग्रह इति भावः ।—गुणानन्दः । (८) तत्—पुण० पु० पा० ।

(९) विकल्प-पा० २ पु० । (१०) प्रश्ने च—पुण० पु० पा० ।

(११) प्रवृत्तिविपर्यास इति मूलस्यार्थतः प्रतीकधारणमिदम् । सर्वेषु पुस्तकेष्वेवमेव पाठः ।

(१२) वर्ण—पा० २ पु० ।

कल्पलता ।

तस्मादिति । शब्दैः किं वाच्यमिति नैयायिकैः प्रश्ने कृते ज्ञानश्रिया विकल्प्य यदुत्तरं दत्तं, तदपि न सम्यगित्यर्थः । प्रतिभासादिति (प्रतिभासवशात् शब्दवाच्यतामाप्नोति यत्, एवमध्यवसायवशाच्छब्दवाच्यं यत्, एवं तत्त्वतो यद्वाच्यं, तत्किमिति विकल्पयेत्यन्वयः । तथा च) शब्दैः किं(१) वाच्यमिति कुत्र प्रतिभासो जन्यत इति यदि प्रश्नार्थः, तदान्यापोढाकारे(२) प्रतिभासो जन्यत इत्युत्तरम् । कुत्राध्यवसायो जन्यत इति यदि प्रश्नः, तदा अतद्व्यावृत्तस्वलक्षण इत्युत्तरम् । किं वस्तु शब्दवाच्यमिति यदि प्रश्नः(३), तदा न किञ्चिदित्युत्तरमित्यर्थः । तदेतदुत्तरत्रयं दूषयति । प्रथम इति । समयविपर्यासः सङ्केताग्रहोऽन्यत्र सङ्केतग्रहो वा, न ह्यन्यापोढा(४)कारे सङ्केतग्रहो येन तत्र प्रतिभासः स्यादित्यर्थः । द्वितीय इति । अन्यापोह(५)स्वरूपेऽध्यवसायेन प्रवृत्तिः स्वलक्षणे कथं स्यात्, अध्यवसायस्य भेदाग्रहरूपत्वादिना विकल्पय(६) पूर्वमेव कदर्थितत्वात् । अस्यैवेति । तत्त्वतो न वाच्यमित्यनेनैव शब्देन तत्त्वतः कस्यचिदर्थस्याभिधानादित्यर्थः । अवचन इति(७) । तत्त्वतः किं वाच्यमित्यत्र (त्वया) यद्युत्तरं न देयं तदाऽप्रतिभा, उत्तरदाने तु स्ववाग्विरोध इत्यर्थः । उपसंहार इति । क्षणिकतावादापोहवादयोरित्यर्थः । प्रधानार्थमुपसंहरति । तदिति ॥

इति क्षणभङ्गवादः ॥ इति प्रथमविप्रतिपत्तिः ॥

---

(१) किं शब्दैः—पुण० पु० पा० । (२) पोढाकार—पाठः ।
(३) तद्वतः किं वाच्यमिति यदि प्रश्नः—पुण० पु० पा० । (४) पोढा—पुण० पु० पा० ।
(५) पोढ—पुण० पु० पा० । (६) विकल्पस्य—पा० । (७) स्ववचन इति—पुण० पु० पा० ।

## अथ बाह्यार्थभङ्गवादः ॥

विज्ञानवादिनि जागरूके बाह्यमेव नास्ति, कुत आत्मेति चेत्, स तावदिदं पृष्टो व्याचष्टां, किं ते(१) ग्राह्यग्राहकभागयोः(२) परमार्थसतोरेवाभेदो विव-

दीधितिः ।

### अथ बाह्यार्थभङ्गवादः ॥

बाह्यार्थभङ्गं द्वितीयं बाधकमाशङ्कते । विज्ञानवादिनीत्यादि । बाह्यम् ज्ञानभिन्नम् । आत्मापि च बाह्यभेदः(३) । अत्र ज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं न वेति विप्रतिपत्तिः । अलीकस्य ग्राह्यत्वेपि न प्रमेयत्वं, तदंशे(४) ज्ञानस्याप्रमात्वा-

दीधितिटिप्पणी ।

### अथ बाह्यार्थभङ्गवादः ॥

ननु बाह्यपदेन मनोमात्रग्राह्यभिन्न एवोच्यते, एवं चात्मनोपि न बाह्यत्वमिति बाह्यनिषेधे आत्मा कथं न सिध्येत्, अत आह । ज्ञानभिन्नमिति । तथा चात्मनोपि उक्तबाह्यत्वमस्तीति भावः । एतदेव दर्शयति । आत्मापि चेति । तदंशे प्रमाविषयत्वाद्युक्तौ गौरवादाह । सत्त्वस्य वेति । भावत्वस्येत्यर्थः । ननु तैरलीकस्य ज्ञानभिन्नत्वाङ्गीकारात्तत्र प्रमेयत्वं ज्ञानत्वं विनापीति कथं व्यापकत्वम् । न चालीके प्रमाविषयत्वमेव नास्तीति वाच्यम् । अलीकज्ञानस्यापि स्वांशे प्रमारूपतया तद्विषयत्वादेवालीकस्य प्रमेयत्वात्, अत आह । अलीकस्येति । तदंशे अलीकांशे । प्रमेयत्वपदेनात्र तदंशे प्रमाविषयत्वस्य विवक्षितत्वादित्यर्थः । निखिलस्य ज्ञानात्मकत्वसिद्धावपि न ग्राह्-

(१) किं तेन—पा० २ पु० ।  (२) ग्राह्यग्राहकयोः—पा० २ पु० ।

(३) बाह्यभेद एवेति भावः—पा० २ पु० । बाह्यभेदः, बाह्यविशेषः इत्यर्थः, ज्ञानभिन्नस्यैव बाह्यपदार्थत्वादित्यभिप्रायः ।

(४) असत्ख्यातेरपि स्वप्रकाशतया स्वांशे प्रमात्वादाह । तदंश इति । तथा च भ्रमभिन्नज्ञानविषयत्वमेव प्रमेयत्वं वाच्यमिति भावः । इत्थञ्च पारमार्थिकस्यैव किञ्चित्पदार्थस्य भ्रमभिन्नेनैव ज्ञानेन विषयीकरणासम्भावनायां तत्र ज्ञानत्वासिद्धिप्रसङ्ग इत्यरुचेरेव सत्त्वस्य वेत्यभिहितमिति ध्येयम् । तथाऽर्थक्रियाकारित्वम् ।—गुणानन्दः ।

क्षितः, उताहोऽ(१)भिन्नजातीयत्वं, अथ ग्राह्यांशस्यालीकत्वमिति ।

दीधितिः ।

दिति सम्प्रदायः । एतज्ज्ञानविषयो नीलादिरेतज्ज्ञानभिन्नो न वेति नव्याः ॥

दीधितिटिप्पणी ।

कस्य ग्राह्याभेदसिद्धिः, समानजातीयत्वेनाप्युपपत्तेः, तथा च कुतो ग्राह्यग्राहकभागयोरभेद इत्यादिलाभ इति सम्प्रदायकृतविप्रतिपत्तौ दोषं वीक्ष्य स्वयं विप्रतिपत्तिमाह । एतदिति । उभयत्र एतत्पदं ग्राह्यग्राहकयोरभेदलाभाय । एतज्ज्ञानस्याप्येतज्ज्ञानविषयतया अंशतः सिद्धसाधनवारणायाह । नीलादिरिति । न चावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया नात्र तद्दूषणमिति वाच्यम् । नीलादिरितिपदादाने अवच्छेदकावच्छेदेन सा उद्देश्येतिनिर्णयासम्भवात्, लिखनस्य साधारणत्वात्, नीलादिरिति दत्ते च सामानाधिकरण्येपि न क्षतिरिति तदनिर्णयो न क्षतिकरः ॥

कल्पलता ।

## अथ बाह्यार्थभङ्गवादः ॥

द्वितीयमात्मनि बाधकं निराकर्तुमुत्थापयति । विज्ञानेति । जागरूक इति । बाह्यम् नीलादि । स्थैर्यसिद्धावपि न तेषां वस्तुत्वं, वस्तुत्वेपि न ज्ञानभिन्नत्वं, ज्ञानं च क्षणमात्रस्थायि नीलपीताद्याकारमिति योगाचारः । सिद्ध्यतु स्थैर्यं, तथा नः समीहितम्, तच्च स्थिरं चिदानन्दस्वरूपं ब्रह्मैव, बाह्यं तु नीलादिप्रपञ्चमात्रमलीकम्, अनाद्यविद्यावशात्तु तदाकारनिकरप्रतिभासमात्रमित्येकदण्डिनः(२) । एकमेव विज्ञानं पर-

(१) उता—पा० २ पु० ।
(२) बौद्धखण्डनप्रकरणे वेदान्तिनामुपस्थितिरेव नास्ति, तदकाण्डे तत्खण्डनपरतया मूलया-

कल्पलता।

मार्थसत्, न तु नीलाद्यपि वस्तुसत्, परन्त्वनादिवासनापरिपाकमाहात्म्यासादितनीलपीताद्याकारनिकरकरम्बितम्, अत एव तच्चित्रमित्युच्यते इति तदेकदेशिनः। तदेतेषां जागरूकतया क्व बाह्यस्यात्मनः सिद्धिशङ्का, अभेदे सति ग्राह्यग्राहकभाव एव नास्ति, न वा धर्मधर्मिभाव इति भावः। बाह्यमेवेति। सामान्याभावे विशेषाभावस्य सुलभत्वात्, ज्ञानानात्मकस्य सर्वस्यैव बाह्यत्वादिति भावः। सः विज्ञानवादी। इदम् अग्रे वक्ष्यमाणम्। पक्षत्रयाभिप्रायं विकल्पयति। परमार्थेति। नीलादि स्वग्राहकज्ञानव्यक्त्यभिन्नम्, स्वग्राहकज्ञानजातीयम्, अलीकमेव वेति विकल्पार्थः। अत्र प्रमेयत्वं ज्ञानत्वव्याप्यं न वा, विवादपदं नीलादि ज्ञानत्वाश्रयो न वा, ज्ञानत्वं प्रमेयत्वव्यापकं न वा, ज्ञानविषयता ज्ञानत्वाश्रयो न वेति विप्रतिपत्तयः॥

---

तत्र प्रथमे साध्ये यः कश्चिद्धेतुरुपादीयते,

---

दीधितिः।

तत्र(१) ग्राह्यग्राहकयोरभेदे सर्व(२) एव हेतुः आभासः।

दीधितिटिप्पणी।

मूले, तथाहीत्यादिना आभासत्वविवरणे उद्यतं, न त्वाभासत्वं दर्शितं, अतः स्वयं आभासत्वं प्रतिज्ञाय तद्दर्शयति। तत्रेत्यादि। केचि-

---

जनमिदमुपहासास्पदं ग्रन्थकर्तुरकारणविद्वेषं वेदान्तिषु प्रकटयति। न च कल्पलताकृदुक्तरीत्या खण्डनं किमपि वेदान्तिमतमास्कन्दतीति तत्र तत्र टिप्पण्यां प्रदर्शयिष्यामः। अत्रैवोद्धरणे नीलादिकमलीकमिति यदुच्यते, तदसङ्गतम्, नीलादीनां शशशृङ्गादिविलक्षणतयैव वेदान्तिभिरभ्युपगमात्।

(१) अत्र-पा० २ पु०। आचार्यवक्ष्यमाणदोषेभ्योऽतिदुरुद्धरं दोषमाह। तत्रेत्यादि। अभेदे, अभेदनये। वन्ह्यादिसाध्यको धूमादिहेतुर्वक्ष्यमाणदोषेणाभासः।—गुणानन्दः।

(२) यः कश्चिदिति मूलांशस्य व्याख्या, सर्व इत्यादीति केचित, एतन्मतं दीधितिटिप्पण्यां खण्डितम्।

दीधितिः ।

तथाहि(१)। हेतुर्हि पक्षधर्मतया ज्ञायमानोऽनुमितिनिमित्तं, अनुमितिरपि च पक्षसाध्यविषयिणी, तथा च परामर्शहेतुपक्षसाध्यानुमितीनामभेदे कुतो हेतुहेतुमद्भावः(२)। किञ्च(३) भिन्नस्य ग्राह्यत्वे सर्वज्ञानानां सर्वविषयत्वा(४)पत्तिरित्यादिरतिप्रसङ्गो यदि न गृहीतः, न तर्हि व्याप्तिसिद्धिः, विपक्षे बाधकाभावात् ।

दीधितिटिप्पणी ।

नु तत्रेत्यादिना मूलीयतत्रेत्यस्यार्थः कथितः इति वदन्ति । तन्न । तदा प्रथम इति मूलस्य पौनरुक्त्यापत्तेः । हेतुर्हि सहोपलम्भनियमादिरूपभवदुपन्यसनीयहेतुर्हि । अनुमितिरपीति । अपिकारात् परामर्शो बोध्यः । अभेद इति । भवन्मते हि ज्ञानपक्षयोरभेदात् साध्यपक्षरूपविषयाभ्यां सह परामर्शस्याभेदः, एवं तत्साध्यपक्षविषयतयानुमितेरपि तैः सहाभेद इत्यर्थः । परामृश्यमानलिङ्गानुमित्योर्हेतुहेतुमद्भावः कुतः, तथा चानुमितिजनकताया अभावादाभास इत्यर्थः। यद्वा कुतो हेतुमद्भावः हेतुमत्त्वेत्यर्थः(५), तथा च स्वस्य स्वानधिकरणतया स्वरूपासिद्धिरित्यर्थः । व्याप्यत्वासिद्धिमप्याह । किञ्चेति । भवताऽस्मान् प्रति यमतिप्रसङ्गं दत्वा प्रकृतहेतोर्व्याप्तिसिद्धिः क्रियते, सोऽतिप्रसङ्गो भवता ज्ञायते न वा । विपक्ष इति । एतस्ये-

(१) आभासत्वे स्वयं हेतुमाह । तथाहीति ।

(२) परामर्शाभिन्नपक्षाभिन्नानुमितेः परामर्शाभिन्नतया कुतः परामर्शानुमित्योः कार्यकारणभावः, कुतश्च हेत्वभिन्नपरामर्शाभिन्नानुमित्यभिन्नतया साध्यस्य हेत्वभिन्नत्वे साध्यहेत्वोर्गम्यगमकभाव इत्यर्थः ।—गुणानन्दः ।

(३) ननु परामर्शविषयेणानुमितिविषयस्याभेद एव नाभ्युपेयते तैः, कथमेतत्पदार्थनिकरगर्भहेतुज्ञानमित्यनुशयादाह । किञ्चेति ।—गुणानन्दः । (४) विषयता—पा० २ पु० ।

(५) हेतुमांश्च हेतुमांश्च हेतुमन्तौ, हेतुश्च हेतुमन्तौ च हेतुहेतुमन्तः, हेतुहेतुमतां भावो हेतुहेतुमद्भाव इति हेतुमत्पदद्वयघटितसमासाश्रयणेनैकं हेतुमत्पदं साध्यपरमपरं च हेतुमत्पक्षपरमिति तद्भावपदेन हेतुसाध्यभावस्य हेतोः पक्षधर्मतायाश्च लाभ इत्याशयः । ज्ञानाश्रयत्वमात्मनो नैयायिकाभिमतं बोधयितुमेव विज्ञानवादिना स्वमतोपन्यासादभेदेऽपि घटाभावादौ घटाभावादेरिवाधाराधेयभावाभ्युपगमे नैयायिकाभिमतस्य ज्ञानाश्रयत्वस्यात्मनो ज्ञानरूपत्वेऽप्युपगमसम्भवात्तन्मतबाधनानुपपत्तिरित्यकामेनापि विज्ञानवादिनाऽभेदे आधाराधेयभावः सर्वथा नास्तीत्येव वक्तव्यं, इति तन्मते पक्षहेत्वोरभेदे हेतोः पक्षधर्मता कथमपि न सिद्ध्येदित्युक्तिर्युक्तैवेति विशेषमालोच्येदं पक्षधर्मतापरतया दीधितिविवरणं विशेषतः सुन्दरम् ।

सहोपलम्भनियमो वा, ग्राह्यत्वं वा, प्रकाशमानत्वं वा,

दीधितिः।

गृहीतश्चेत्, न कथमन्येनान्यग्रहणम्, अस्यैवार्थस्यानेकपदार्थघटितस्यैकेन ग्रहणादिति(१)। सहोपलम्भनियमः नियमेनैकवित्तिवेद्यत्वं, तदविषयक(२)ज्ञानाविषयत्वं वा, तेषां ज्ञानस्य स्वप्रकाशत्वात्। ज्ञानज्ञेययोरभेदे च ज्ञानज्ञेयग्राहकाभ्यां ज्ञेयज्ञानयोरपि ग्रहणान्नासिद्धिः। (ग्राह्यत्वं प्रकाशमानत्वं वेति।) ज्ञेयस्य ज्ञानाभिन्नत्वे साध्ये ग्राह्यत्वं हेतुः, ज्ञानस्य ज्ञेयाभेदे च णिजर्थान्तर्भावात् प्रकाशमानत्वम् प्रकाशकत्वमिति(३)। (ग्रा-

दीधितिटिप्पणी।

वातिप्रसङ्गस्य ज्ञानाविषयत्वेन सर्वज्ञानानां सर्वविषयत्वापादनरूपातिप्रसङ्गासम्भवेनातिप्रसङ्गरूप-विपक्षे बाधकाभावादित्यर्थः। कथमन्येनान्यग्रहणमतो हेतुमाह। अस्यैवेति। उक्तातिप्रसङ्गरूपभवदीयतर्कस्येत्यर्थः। अनेकेति। अनेकपदार्थघटितत्वे सुतरां ग्राहको विषयादन्य इत्यर्थः। ननु ज्ञानाविषयकज्ञानाविषयत्वं कथं घटादेः, व्यवसायस्यैव तदविषयत्वादित्यत आह। तेषामिति। ननु तथापि शब्दादिजन्यज्ञानान्तरस्य प्रत्येकग्राहकतया न नियमसिद्धिरत आह। ज्ञानज्ञेययोरिति। ज्ञेयस्येति। ज्ञेयं पक्षीकृत्येत्यर्थः। एवं ज्ञानस्येत्यत्रापि। प्रकाशमानपदेन विषय एवोच्यते, तथा च विषयपक्षके ग्राह्यत्वेन पौनरुक्त्यं, ज्ञानपक्षके च स्वरूपासिद्धिः, इत्यत आह। णिजर्थेति। अन्तर्भूतणिजर्थ इत्यर्थः। णिचा प्रकाश-

(१) अत्रायं निष्कृष्टोऽर्थः। ज्ञानं यदि स्वभिन्नग्राहकं स्यात् सर्वविषयकं स्यादित्यापत्तिद्वारा भिन्नाग्राहकत्वं ज्ञाने प्रसाध्य, ज्ञानं ग्राह्याभिन्नं, भिन्नाग्राहकत्वे सति ग्राहकत्वादिति विज्ञानवादिभिर्वक्तव्यम्। तत्र पूर्वोक्तापत्तौ विषयो ज्ञानस्य सर्वविषयकत्वं तावदापाद्यम्, तदेव च दीधितावतिप्रसङ्गपदेन निर्दिष्टमत्र, तादृशोऽतिप्रसङ्गो बहुतरानेकसर्वपदार्थघटितो ज्ञानेन केनचिद्गृह्यते विज्ञानवादिना मते न वा। गृहीतश्चेत्, आयातं भिन्नस्य ग्राहकत्वम्। न चेत्, उक्तातिप्रसङ्गापादकतर्कस्यैवाभावे भिन्नाग्राहकत्वरूपद्वितीयानुमानहेतोरसिद्धिरेवेति विज्ञानवादिकथनं सर्वथाऽसङ्गतमिति।

(२) ग्राह्यग्राहकयोरभेदनये नियमेनेत्यस्य वैयर्थ्यमाशङ्क्याह। तदविषयकेति।-गुणानन्दः।

(३) प्रकाशकत्वं प्रकाशमानत्वम्-पुस्त० पु० पा०।

स व्यक्तमाभासः ।

दीधितिः ।

तस्य ज्ञानस्य ग्राहकज्ञानाभिन्नत्वे साध्ये तद्ग्राह्यत्वं हेतुः, ग्राहकज्ञानस्य च तद्ग्राह्याभिन्नत्वे साध्ये प्रकाशमानत्वं तस्य ग्राहकत्वमिति यावत्, तेषां ग्राह्यग्राहकयोः स्वप्रकाशत्वान्न दृष्टान्तासिद्धिरित्येके । )(१) एकत्र साक्षात्कारोऽन्यत्र ज्ञानसामान्यमतो भेद इत्यन्ये ॥

दीधितिटिप्पणी ।

कारित्वं प्रकाशपदेन विषयतैव उच्यते, तत्कारित्वं प्रकाशकत्वं, ग्राहकत्वं, विषयताशालित्वमिति यावत् । अत्र च हेतुरित्यनुषङ्गः । णिजर्थानन्तर्भाविनां मते अपौनरुक्त्यं दर्शयति । एकत्रेति । एवं चोभयत्रैव विषयः पक्ष इति भावः । अतो भेद इति । ग्राह्यत्वप्रकाशमानत्वयोर्हेत्वोर्भेद इत्यर्थः ॥

कल्पलता ।

सहेति । यद्यप्यभेदे सहेत्येव विरुद्धं, तथापि तद्विषयकज्ञानाविषयत्वं हेतुः । आभास इति । कालात्ययापदेशादनैकान्तिकत्वाद्वा, अङ्गुलीनिर्देश्यग्राह्यात्मकतया ज्ञानस्य बाधितत्वात्, विरुद्धधर्मसंसर्गप्रतिहतत्वादित्यर्थः ॥

तथाहि । नीलधवलादिपरस्परविरुद्धाकारनिकरा(२)वगाहि विज्ञानमनुभूयते, तदिदं तस्य स्ववधाय

दीधितिः ।

इदम् विरुद्धानेकावगाहित्वम् । तस्य ज्ञानस्य । स्ववधाय

दीधितिटिप्पणी ।

ज्ञानस्याप्राणित्वाद्वधासम्भवादाह । स्ववधायेति । ज्ञानस्येत्यन

(१) असङ्गतोऽयं पाठः इति पुस्तकान्तरेष्वपि लिखितेषु कुण्डलित एवोपलभ्यते ।
(२) विरुद्धनिकरा—पा० २ पु० ।

कृत्योत्थापनम्।

दीधितिः।

भेदाय। कृत्यारूपं जातम्(१)॥

दीधितिटिप्पणी।

न्तरं वधायेत्युक्त्यैव ज्ञानीयभेदलब्धेः स्वपदस्य निरर्थकत्वा(२)त्त-स्यार्थं विहाय केवलं भेदायेत्युक्तम्। उत्थापनत्वे परम्परया भेदकत्व-मवाप्यतेऽतः साक्षात्तल्लाभायाह। कृत्यारूपमिति॥

कल्पलता।

एतदेव स्पष्टयति। तथाहीति। योगाचारमते वे-दान्तिमते(३) च समानं दोषमाह। नीलधवलादीति। समूहालम्बने योगाचारस्य नीलधवलाद्यात्मकत्वं, वेदान्तिनां तु तत्रान्यत्रापि क्रमवन्नीलादिज्ञानवि-रोधापादनमेव, एकस्यैव तन्मते क्रमिकनीलधवलाद्या-त्मकत्वात्(४)। तदिदमिति। आकारनिकरावगाहि-त्वमित्यर्थः। स्ववधाय स्वभेदाय॥

यदि हि मिथःप्रत्यनीक(५)धर्मोल्लेखि तत्,

दीधितिः।

तदेव स्पष्टयति। यदि हीति। अथैकत्वान्यथानुपपत्त्या

दीधितिटिप्पणी।

न चेदुल्लिखेदिति न युक्तं, अनुभूयत इत्यन्तेन उल्लिखितत्वे-नानुभवस्योक्तत्वात्, अत आह। अथैकत्वेति। को दोषोऽत आह

(१) कृत्या शूलादिना भेदाय प्रभवतीति समता। तस्यैव भेदकतया उत्थापनपदं स्वरूप-परतया व्याचष्टे। कृत्यारूपमिति।—गुणानन्दः। (२) स्वपदस्यानर्थकत्वा-पा० २ पु०।

(३) वेदान्तिमत इत्यसङ्गतमेव, तैर्वास्तवतादात्म्यस्य विषयेण सह ज्ञानेऽनभ्युपगमात्, अनिर्वचनीयमिथ्याभूततादात्म्यावलम्बनेन तदभिन्नाभिन्नस्य तदभिन्नत्वापादनस्यासम्भवात्।

(४) उपाधिगतक्रमस्यैकस्मिन्नपि तत्रारोपसम्भवोदकस्य वेदान्तिसम्मतज्ञानस्य नानुप-पत्तिः। क्रमिकत्वानुपपत्तिरित्ययं कल्पलताकृतैवोद्भाव्यते, न मूलेनेत्यपि विशेषोऽवधेयः।

(५) प्रत्यलीक—पुग० पु० पा०।

नीलं यदि पीताभिन्नतज्ज्ञानाभिन्नं स्यात्, पीताभिन्नं स्यात् तदभिन्नाभिन्नस्य तद-भिन्नत्वनियमात्। यद्वा नीलं यदि स्वतादात्म्यापन्नतज्ज्ञानतादात्म्यसम्बन्धेन पीतवत् स्यात् पीत-तादात्म्यवत् स्यात्, यो यः स्वतादात्म्यापन्नेत्यादिसम्बन्धेन यद्वान् स तत्तादात्म्यवानिति सामान्य-

कथमेकं सत्तदात्मकं भवेत्। न चेदुल्लिखेत्, कथं तदाकारं नाम, स्वसंवेदनस्यानुल्लिखितरूपाभावात्।

दीधितिः।

अनुभूयमानमपि नानार्थावगाहित्वमपलपनीयं, तत्राह। न चेदिति। अथानुल्लिखितो(१)ऽप्याकारो भविष्यति, तत्राह। स्वसंवेदनस्येति। तदा(२)काराकारिणोरभेदादिति भावः। भेदेऽपि विरोधोऽग्रे व्यक्तीभविष्यति। वस्तुतो नानाविषयत्वमेकत्वं च स्वसंवेदनेनानुव्यवसायेन वा सिद्धं न बाध्य(३)बाधकभावमासादयति, अविरोधात्, विनिगमकाभावाच्च; ग्राह्यग्राहकभावस्तु(४) विनाप्यभेदमुपपद्यमानो न तं साधयितुमीष्टे इति॥

दीधितिटिप्पणी।

तदेति। आकाराकारिणोरभेदे स्वप्रकाशस्य कथमनुल्लिखितरूपमस्ति, तथात्वे स्वप्रकाशत्वव्याहतेरित्यर्थः। ननु तयोर्भेदपक्षोऽङ्गीकर्तव्य इत्यत आह। भेदेपीति। भेदपक्षेपि अनुल्लिखितरूपस्याकारत्वे अनुल्लिखितनिखिलपदार्थ एवाकारः स्यादेवंरूपो विरोध इत्यर्थः। मूलयुक्तिखण्डनपूर्वकं स्वयं युक्तिं वदति। वस्तुत इति। न बाध्यबाधकेति। तथा च नानाविषयत्वानुभवेन एकत्वधीर्न बाधितुं शक्यते, न वा एकत्वज्ञानेन नानाविषयत्वज्ञानं बाधितुं, विनिगमनाविरहात्, एवं च नानाविषयत्वेनैकत्वं बाध्यत इति मूललिखनं दूषितमिति बोध्यम्। नन्वेवं मूलीययुक्तिदूषणेऽभेदसिद्धिः कुतो न भवतीत्यत आह। ग्राह्यग्राहकभावस्त्विति॥

मुखी व्याप्तिः, तेन प्रथमापादने पीताभिन्नतज्ज्ञानरूपापादकतावच्छेदकस्य स्वमतेऽप्रसिद्धावपि न क्षतिः। आपाद्यव्यतिरेकं सूचयति। प्रत्यनीकेति। विरुद्धेत्यर्थः, भिन्नेति यावत्। ननु नीलपीतावगाहिनो ज्ञानस्य नीलपीततादात्म्यं न मेऽभिमतम्, अस्मन्मते तादात्म्यस्वरूपतदवगाहित्वस्यास्वीकारसम्भवादित्याशङ्कां अपसिद्धान्तोद्भावनेन निराकरोति। न चेदिति। तदाकारं नामेति। स्वसिद्धान्ते तादात्म्यस्यैव तदवगाहितारूपत्वाभ्युपगमादिति भावः। वस्तुगत्या तत्तादात्म्यसत्त्वेऽपि तस्यानुल्लिखितत्वात्तदापादकज्ञानाभावादेव नोक्तापत्तिरित्याशङ्कायामाह। स्वसम्वेदनेति।

(१) नुल्लेखितो—पुण० पु० पा०।

(२) तवेति। तथा चानुल्लिखितरूपेत्यस्य मूलस्याकारभिन्नेत्यर्थ इति भावः।–गुणानन्दः।

(३) न वाध्येति। नानाविषयत्वं न वाध्यतां एकत्वं न वाधकतामासादयतीत्यर्थः।–गुणानन्दः।

(४) ननु भेदे ग्राह्यग्राहकभावानुपपत्तिरेव विनिगमिका भविष्यतीत्यत आह। ग्राह्यग्राहकभावस्त्विति।–गुणानन्दः।

कल्पलता ।

प्रत्यनीकधर्माः विरोधिनो नीलधवलादिधर्माः । कथं तदात्मकमिति । एकस्यानेकात्मकत्वानुपपत्तेः । कथं तदाकारमिति । तदुल्लिखितस्यैवाकारत्वादित्यर्थः । नन्वेतादृशं बुद्धिस्वरूपमेव नास्ति, तथा च विचारोयं निराश्रय इति । तदुक्तम्,

'बाह्यं न पश्यति भिदात्मतयाऽर्थसत्त्वा-
दार्थक्रियाविरहसङ्करता त्वभेदे ।
बुद्धिस्तु नश्यति भिदेव भिदैव सत्त्वा-
च्चित्राप्यतो न भिदमेति किमत्र कुर्मः(१) ॥'

इति । मैवम् । बुद्धेरनुभूयमानत्वात् । तस्यास्तु विषयभेदाभेदाभ्यां विवादात् ॥

---

(१) बाह्यम्, ज्ञानभिन्नं, न पश्यति, बुद्धिरिति शेषः, तथा च ज्ञानभिन्ने नीलपीते न ज्ञानविषयाविति प्रतिज्ञालाभः । अत्र हेतुमाह । भिदात्मतयेत्यादि । परस्परभिन्नतयाऽर्थयोर्नीलपीतयोः सत्त्वादित्यर्थः । यत् परस्परभिन्नं, न तत् ज्ञानादिरूपैकतृतीयाभिन्नमिति व्याप्तेरिति भावः । नीलपीतयोः परस्परभिन्नत्वमेवासिद्धमित्याशङ्क्याह । अर्थक्रियेत्यादि । अभेदे, परस्पराभेदे । अर्थक्रियायास्तद्विरहस्य च सङ्करप्रसङ्ग इत्यर्थः । नीलार्थिनः प्रवृत्तिरूपाया अर्थक्रियायाः पीते आपत्तिरर्थक्रियासङ्करः, पीतस्य तत्र तादात्म्येन प्रतिबन्धकत्वमभ्युपगम्य तद्वारणे नीलेपि तदनुपपत्तिरर्थक्रियाविरहसङ्करः, तथा च नीलपीतयोः परस्पराभेदे एतदन्यतरप्रसङ्ग इत्यर्थः । कथं तर्हि समूहालम्बनस्य नीलपीतावगाहित्वं तादात्म्यरूपतद्विषयत्वाभावे इत्याशङ्क्याह । बुद्धिस्त्विति । नश्यति, अलीकेत्यर्थः । तथाच समूहालम्बनबुद्धिरलीकैवेति भावः । भिदेवेति दृष्टान्तः, ज्ञानज्ञेययोर्भेद इवेत्यर्थः । अलीकाया अपि भानं शशविषाणादिवद्विकल्पेनैवेति भावः । अलीकत्वे हेतुमाह । भिदैवेति । सत्त्वं चित्रबुद्धेः विषयभेदव्याप्यं यत इत्यर्थः । कथं तर्हि चित्रतेत्यत आह । अत इति । अलीकत्वादेवेत्यर्थः । सत्त्वस्य तादृशभेदव्याप्यत्वेऽपि अलीकत्वं नानुपपन्नमिति भावः । विज्ञानवादिनो विज्ञानालीकत्वेऽपसिद्धान्तस्तु नाशङ्कनीयः, बाह्यालीकत्वप्रसाधनमुद्दिश्यैव तत्प्रवृत्तेर्विज्ञानालीकत्वेन शून्यताप्रसङ्गेऽप्यनभीष्टार्थसिद्धेरभावेनापसिद्धान्तस्यादूषणत्वादिति तदाशयः । खण्डयति । मैवमिति । अनुभूयमानत्वात्, नालीकत्वमिति शेषः ।

वाह्यं न नश्यति भिदात्मतयाऽथ सत्त्वादर्थक्रियाविरहसङ्करता त्वभेदे ।
बुद्धिस्तु नश्यति भिदेव सत्त्वाच्चित्राप्यतो न भिदमेति किमत्र कुर्मः ॥

इति पा० कालि० मु० पु० ।

बाह्यस्यैवंविधविरुद्धधर्माध्यासाद्भेदः, तथात्वेप्य-भेदेऽर्थक्रियाचेतनप्रवृत्तीनां सङ्करप्रसङ्गात्, विवेच-नानुपपत्तिप्रसङ्गाच्च(१), न तु विज्ञानस्य, न हि तस्या-र्थक्रियाधीनं सत्त्वम्। अपि तु प्रतिभासमात्राधीनम्। नापि तत्रार्थ(२)क्रियार्थिनः क्वाचित् प्रवृत्तिः, स्वरस-वाहिविज्ञानप्रवाहातिरिक्ताया अर्थक्रियायाः तदर्थि-न(३)श्चाभावात्, विवेचनाभावश्चात्र परमो निर्वाहः,

दीधितिः।

तथात्वेपि विरुद्धधर्माध्यासेपि ( यद्यभेदः, तदा ) दहना-दुदन्योपशमनमुदकाच्च दाहः, दाहार्थमुदके उदन्योपशमनार्थं दहने प्रवृत्तिश्च(४) स्यादिति सङ्करः। विवेचनम् एकाग्रहणे-ऽन्यस्य ग्रहणम्। भेदज्ञानमित्यन्ये। परम इति। भेदे हि क-दाचिदेकाग्रहेपीतरद्गृह्येत, न चेह तदस्ति, नीलधवलाकारत्वे-

दीधितिटिप्पणी।

अर्थक्रियासाङ्कर्यं दर्शयित्वा प्रवृत्तिसाङ्कर्यं दर्शयति। दाहा-र्थमिति। न चात्रेति(५)। तत् उक्ताविवेचनम्। हेतुमाह। नीलेति। ननु

वाह्यं न नश्यति भिदार्थितयापि सत्त्वादर्थक्रियाविरहसङ्करता त्वभेदे।
बुद्धिस्तु नश्यति भिदेव भिदैव सत्त्वाच्चिचाप्यतो न भिदमेति किमत्र कुर्मः॥
इति पुण० पु० पा०।

वाह्यं न पश्यति भिदात्ततयाऽर्थसम्वादार्थक्रियाविरहसङ्करता तु भेदे।
बुद्धिस्तु नश्यति भिदेव सत्त्वाच्चिचाप्यतो न भिदमेति किमत्र कुर्मः॥
इति न्यायव्याकरणाचार्यश्रीपण्डितप्रवरसूर्यनारायणशुक्लहस्तलिखितपुस्तके पाठः। पाठत्र-यमप्यशुद्धमिति बहु विचार्य त्रिभ्योऽपि सारमादाय शुद्धः पाठः समुन्नीत उपरि स्थापितटिप्पण्या व्याख्यातश्चेति ज्ञेयम्।

(१) प्रसङ्गाद्—पा० २ पु०।
(२) तत्र—पा० २ पु०।
(३) अर्थक्रियाया अर्थक्रियार्थिन—पा० २ पु०।
(४) प्रवृत्तिः-पुण० पु० पा०।
(५) न चेहेति-इति तु प्रतीकधारणं युक्तमिव प्रतिभाति :

स्वसंवेदन(१)रूपत्वादिति चेत्,

दीधितिः ।

नैव स्वप्रकाशेन ग्रहणात्, भिन्नत्वादेरेव(२) च ज्ञानान्तरेणाग्रहणात्, तथा च विवेचनाभावादेवाभेदसिद्धिरित्यर्थः ॥

दीधितिटिप्पणी ।

स्वप्रकाशेऽविवेचनेपि ज्ञानान्तरेणैतद्विषयग्रहणे विवेचनं स्यादत आह । भिन्नत्वादेवेति । विषयस्वरूपात्(३) ज्ञानान्तरस्य भिन्नतया न भिन्नग्राहक(४)त्वमित्यर्थः । तथा चेति । तथा च व्यापकस्य विवेचनस्याभावाद्व्याप्यस्य भेदस्याभावोऽत्र सिद्ध्यतीत्यर्थः ॥

कल्पलता ।

रत्नकीर्त्तिः समाधिमत्र दूषयितुमुपन्यस्यति । बाह्यस्यैवेति । बाह्ये विरुद्धधर्माध्यासभयं दर्शयति । तथात्व इति । विरुद्धधर्माध्यासेप्यभेदे नीलधवलादीनां प्रतिनियतार्थक्रियाकारित्वं दृष्टमेव विघटेत, न तु प्रतिनियतार्थप्रवृत्तिः स्यात् । भयान्तरमाह । विवेचनेति । विविच्यते हि नीलं धवलभिन्नत्वेन, धवलं च नीलभिन्नत्वेन, तदेतन्न स्यादित्यर्थः । न तु विज्ञानस्येत्यत्र विरुद्धधर्माध्यासाद्भयमित्यनुषज्यते । प्रतिभासमात्राधीनम् स्वप्रकाशाधीनम् । नापीति । न हि घटपटार्थिनो ज्ञाने प्रवर्त्तन्ते, अपि तु तन्तुकपालादावेव । नन्वत्रापि भयं तदवस्थमेवेत्यत आह । स्वरसेति । अर्थक्रियाप्रवृत्तितदर्थिनामपि ज्ञानात्मकत्वादित्यर्थः । नन्विदं नीलज्ञानमिदं पीतज्ञानमिति विवेचनं ज्ञानेप्यस्ति,

(१) सम्विदित—पा० २ पु० । (२) भिन्नत्वादेव—पा० २ पु० ।
(३) विषयस्वरूपे भङ्गाना—इत्यादर्शपुस्तके पाठः ।
(४) भिन्नग्राह्य—पा० २ पु० ।

कल्पलता ।

तथा च विरुद्धधर्माध्यासेऽप्यभेदे तत्र स्याद्वित्यत आह । विवेचनेति । परमो निर्वाह इति । अत्यन्तं साधकः, सिद्धिर्वेत्यर्थः । स्वसंविदितेति । ज्ञानयोर्हि भेदग्रहो न ताभ्यामेव, तयोः स्वमात्रमानत्वात्, भेदस्य स्वभिन्नत्वेनाग्राह्यत्वात्, अत एव न ज्ञानान्तरेणापीत्यर्थः । तदुक्तं ज्ञानश्रिया,

'भावं कञ्चित्पुरस्कृत्य भेदाभेदावुदीरयेत् ।
देशकालादिभेदेन चिन्मात्रे तत्र कः क्रमः(१) ॥'

इति । कीर्त्तिरप्याह,

'स्वरूपं बुद्धिरपरैर्नायाति न भिनत्ति च ।
स्वपरप्रविभागो हि धियो याचितमण्डनम्(२) ॥'
इति ॥

---

(१) भावमिति । प्रत्यय इत्यादिः । प्रत्ययः भेदाभेदौ समुदीरयेत्, भेदाभेदबोधकः, विषयभिन्नाभिन्नत्वेन ज्ञायते, विषयभिन्नाभिन्न इति यावत् । अत्र हेतुमाह । भावं काञ्चित् पुरस्कृत्येति । भावविषयकत्वादित्यर्थः । पुरोवर्तित्वं विषयत्वम्, पुरस्करणं तु विषयित्वमिति विवेकात् । सर्वथाऽभिन्नत्वे बहिर्देशावस्थितत्वरूपपुरोवर्तित्वनियतविषयत्वस्यान्तर्देशावस्थितत्वरूपविषयित्वविरुद्धस्यानुपपत्तेः, सर्वथा भिन्नत्वेऽपि च स्वस्वमात्रमग्नयोर्विषयविषयिभावानुपपत्तेरित्याशयः । विज्ञानं तु न भिन्नतया ज्ञायते, पुरोवर्तित्वासम्भवादित्याह । चिन्मात्र इति । अन्तर्देशावस्थितत्वनियतप्रतीतिक इत्यभिप्रायः । अत्र,

भावं किञ्चित्पुरस्कृत्य भेदाभेदावुदीरयेत् ।

इति पूर्वार्धे पुण० पु० पा०, कलि० मु० पु० पा० । भावः काञ्चिदित्यादिः श्रीशुक्लमहोदयपुस्तकपाठः । उत्तरार्धे च,

देशकालावच्छेदेन चिन्मात्रे तत्र कः क्रमः ।

इति पुण० पु पा० । सर्वत्र सारग्रहणेन पूर्वोक्तार्थसिद्धिः ।

(२) विज्ञानस्य विज्ञानस्वरूपतादात्म्यं तद्भिन्नत्वं च नान्यकृतमिति साधयति । स्वरूपमिति । बुद्धिनिष्ठतादात्म्यभिन्नत्वे नान्यकृते इत्यर्थः अन्यः तत्प्रयोजको नेति यावत् । अत्र हेतुमाह । स्वपरेत्यादि । याचितमण्डनमिति । विज्ञानान्यस्यालीकत्वादित्यर्थः । तथाच विज्ञानान्यो न तत्प्रयोजकः, किञ्चित्प्रयोजकत्वविरुद्धालीकरूपत्वात्, शशविषाणवदिति प्रयोगः । अत्र,

स्वरूपबुद्धिरपरैर्नायाति ( न याति ) न भिनत्ति च ।

इति लिखितपुस्तकेषु पाठः । स च भिनत्तीत्यस्य कर्माकाङ्क्षणो विरुद्धः ।

तत् किमङ्ग(१) परिणतशान्तेराश्रमपदमिव विज्ञानमासाद्य व्यालनकुलादेरिव नीलधवलादेः शाश्वतिकवैर(२)त्यागः, निभृतवैरिणां तत्फलत्यागो वा ।

दीधितिः ।

तत् किमित्यादि । नीलधवलादीनां ज्ञाने न विरोधः, सत्यपि वा तस्मिन्न ज्ञानभेदकत्व(३)मिति विकल्पार्थः ॥

दीधितिटिप्पणी ।

विकल्पार्थः विकल्पद्वयार्थः ॥

कल्पलता ।

अङ्गेति सम्बोधने । ज्ञानाकाराणां नीलधवलादीनां विरोध एव नास्ति, विरोधे सत्यपि वा भेदकत्वं नास्तीति विकल्पार्थः ॥

न तावत् प्रथमः, परस्परविधिनिषेधनान्तरीयकनिषेधविधिक(४)योरविरोधे जगति विरोधोच्छेद-

दीधितिः ।

परस्परेति । यद्यपि नीलधवलादीनामेकविधावितरनिषेधध्रौव्येऽपि नैकनिषेधे इतरविधिध्रौव्यं, तृतीयप्रकारस्यापि सम्भ-

दीधितिटिप्पणी ।

नैकनिषेध इति । नीलत्वनिषेधे पीततया विधित्वानियमात्, रक्ततायामपि तथात्वसम्भवात्, अत एवाह । तृतीयेति । भावाभा-

(१) ज्ञाने विरुद्धधर्माध्यासाद्यन्न भयं तत् किं तन्निष्ठधर्मयोर्विरोध एव नास्ति, भवन्नपि वा स न भेदायेत्याह । तत् किमिति । अङ्गेति साक्षेपसम्बोधनम् ।—भगीरथठक्कुरः ।

(२) शाश्वतिकविरोध—पा० २ पु० ।

(३) ज्ञानभेदकत्वमिति । तथाच मौलं तत्फलपदमेतत्परमिति भावः ।—गुणानन्दः ।

(४) नान्तरीयकविधिनिषेध—पा० २ पु० ।

प्रसङ्गात्। न चैवमस्त्वित्युत्तरेपि निवृत्तिः, कथमप्युक्तरूपताया अनिवृत्तेः, तावन्मात्रशरीरत्वाच्च विरोधस्य,

दीधितिः।

वात्, तथापि परस्पराभावव्याप्यत्वमात्रे तात्पर्यम्। समुदितं(१) भावाभावाभिप्रायेण, नीलधवलाद्यभिप्रायेण त्वाद्य(२)मात्रमित्यपि वदन्ति। परस्पराभावव्याप्ययोरपि नीलधवलयोराविरोधेऽविशेषात् तथाविधानामपरेषामप्यविरोधापत्तिः, तथा च बाह्यानामपि नीलधवलादीनां गवाश्वादीनां च भेदो न सिद्ध्येत्, तन्मूलस्य विरुद्धधर्माध्यासस्य निरासादित्यर्थः।(३) विज्ञानवादिनां नेदमनिष्टमित्यभिप्रायिकामाशङ्कां निरस्यति। न चैवमिति। उक्तरूपतायाः परस्पराभावव्याप्यतायाः। तावन्मात्रशरीरत्वात् परस्पराभावव्याप्यत्वमात्ररूपत्वात्। अन्यथा बाह्यानां

दीधितिटिप्पणी।

द्वयोरेव तथात्वात्, तथा च कथं नीलधवलाद्यभिप्रायेणैतत्लगतीति भावः। आद्यमात्रम् एकविधावपरानिषेधसमर्पकमूल(४)मात्रम्। एवं चैतन्मते विधिनिषेधनान्तरीयकनिषेधविध्योरित्येव पाठः, तदैव निषेधस्याद्यत्वसम्भवात्। भावाभावयोरत्राप्रस्तुतत्वमित्यस्वरसः। ननु विरोधाद्भेदस्तेन इष्ट एवेत्यतोऽनिष्टमाह। परस्परेति। इयं च प्रकृतव्याख्यानुसारेण व्याख्या। इतरेषाम्(५) गवाश्वादीनाम्। अथैतदेवाऽस्त्वित्यभिधीयते, अ(६)त आह। विज्ञानेति। कथमपीति मूलम्, तथा च यादृशस्तादृशो भवतु, अवश्यं परस्पराभावव्याप्यत्वं सर्वजनसिद्धं निरसितुं न शक्यत इत्यर्थः। एतावता विरोधस्य किमायातमत आह। तावन्मात्रेति। बाह्यानां प्रत्येकं तदे-

(१) समुदितम्, परस्परेत्यारभ्य विधिकयोरित्यन्तमूलम्।
(२) यत्रैकस्य विधिस्तत्रापरस्य निषेध इत्येतत्। (३) दिति भावः।—पा० २ पु०।
(४) समर्थमतं-इत्यादर्शपुस्तके पाठः। समर्पलचन्तं—पा० २ पु०।
(५) द्वया अपरेषाम्—इति पाठो युक्त इव प्रतिभाति।
(६) असत ए—इत्यादर्शपुस्तके पाठः। द्वितीयपुस्तकेपि तथैव।

## तत्सिद्धिरेव च भेदसिद्धिः, अतो न द्वितीयोपि।

दीधितिः।

बाह्यविज्ञानयोर्विज्ञानानां च भेदविरहेऽद्वैतमतावलम्बनम्, न च विना भेदाभ्युपगमं विचारारम्भसम्भव इत्यग्रे व्यक्तीभविष्यति। तत्सिद्धिरेव(१) विरोधसिद्धिरेव, भेदसिद्धिः, तत्पर्यवसायिनी वा॥

दीधितिटिप्पणी।

वावलम्बनीयमत आह। न च विनेति। वादिनोः पक्षयोश्चाभेदे कस्य केन सह विचार इत्यादीत्यर्थः। अग्रे कं च बोधयितुमित्यादौ। विरोधस्यापि वैधर्म्यरूपत्वात् वैधर्म्यात्मकभेदपक्षे तत्सिद्धिरित्यस्य सङ्गमनेपि अन्योन्याभावरूपभेदपक्षे न लगति, तस्य विरोधादन्यत्वात्, अतः पूरयति। तत्पर्यवसायिनी वेति॥

कल्पलता।

परस्परेति। परस्परविधिव्याप्यनिषेधयोः परस्परनिषेधव्याप्यविध्योर्वेत्यर्थः। अन्त्यो नीलपीतादीनामाद्यो भावाभावयोर्विरोधः। न चाविरोधे विरोधोच्छेदप्रसङ्गापाद्यापादकाभेदः, एवंभूतयोरविरोधे क्वापि विरोधो न स्यादिति सामान्यविशेषभावमाश्रित्यापाद्यापादकयोर्भेदात्। यद्वा नीलत्वं यदि पीतत्वाभावव्याप्यं न स्यात् पीतवृत्ति स्यादिति विशिष्यैवापाद्यम्। ननु विरोधोपि ज्ञानाभिन्न एव(२), अतः सोपि मास्तु, किं नश्छिन्नमित्यत आह। न चेति। उक्तरूपताया इति। नीलादीनां परस्परविरहव्याप्यरूपताया इत्यर्थः। ननु भवत्वेवम्, किं चात

(१) भेदसिद्धिरित्यत्र भेदस्य वैधर्म्यपरत्वे यथाश्रुतम्। अन्योन्याभावपरत्वे त्वाह। तदिति। तथा च भेदस्य सिद्धिर्यत इति बहुव्रीहिरिति भावः।—गुणानन्दः।

(२) ज्ञानाभिन्ने नीले पीते चैवेत्यर्थः। तदभिन्नाभिन्नस्य तदभिन्नत्वेन विरोधानुपपत्तेरिति भावः।

कल्पलता ।

इत्यत आह । तावन्मात्रेति । परस्परविरहव्याप्यतामात्रशरीरत्वादित्यर्थः । विरोधाभावे विप्रतिपत्तेरनुदयात् कथाप्रवृत्तिरेव न स्यात्, न स्याच्च ज्ञानानामपि मिथो भेद इति भावः । तत्सिद्धिरिति । विरोधसिद्धिरित्यर्थः । न द्वितीयोपीति । निभृतवैराणां तत्फलपरित्यागो वेत्यपि पक्षो नास्ति । अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदो वेति तत्रैवाभिधानादित्यर्थः ॥

यस्तु बाह्ये विरोधपालनाय विशेषो दर्शितः, स तेषामेवास्तु । यदि हि विरुद्धधर्माध्यासस्य भेदसाधकत्वं प्रति समाश्वासः, किमर्थक्रियाप्रतिनियमोपन्यासेन । न चेत्, तथापि किं तेन । सोपि अर्थक्रिययोर्विरुद्धधर्माध्यासेन भेदे सति स्यात् ।

दीधितिः ।

स तेषामेवा(१)स्त्विति सोपहासम्(२)।सोपि अर्थक्रियानियमोपि । अर्थक्रियाया अर्थक्रियान्तरानुसरणेऽनवस्था, न चानवस्थितार्थक्रियासन्तानोऽसर्वज्ञपुरुषवेद्य इति ॥

दीधितिटिप्पणी ।

मूले, तेषाम् बाह्यानाम् । अनवस्थाया अदोषत्वेऽप्याह । न चानवस्थितेति ॥

कल्पलता ।

नन्वर्थक्रियाप्रतिनियमः प्रवृत्तिप्रतिनियमश्च बाह्ये भेदक उक्तः, स च ज्ञाने नास्तीति ज्ञानं कथं भिद्यता-

(१) तेषाम—पुण० पु० पा० ।
(२) विशेषो बौद्धानामप्यस्त्येवेत्याशङ्क्याह । सोपहासमिति ।

कल्पलता।

मत आह। यस्त्विति। बाह्येपि तयोर्भेदकत्वं विरोधाधीनं, स चेद्विरोधो ज्ञानेप्यस्ति, तदा तदपि भिद्येतैव, अन्यथाऽर्थक्रियाणां प्रवृत्तानां च भेदो न स्याद्यतो बाह्यं भिद्येतेत्यर्थः। विशेष इति। अर्थक्रियाप्रवृत्तिनियमरूप इत्यर्थः। स तेषामिति। अर्थक्रियाप्रतिनियमेन बाह्यानामेव भेदोस्त्वित्यर्थः। यदि हीति। तदयं समुदायार्थः। विरुद्धधर्माध्यासो भेदको न वा। प्रथमे ज्ञानमपि नीलधवलाद्याकारं ततो भिद्येत। अन्त्येऽर्थक्रियाभेदोऽपि न स्यात्, न स्याच्च तदधीनो बाह्यभेदः। किमर्थेति। तदन्तरेणापि विरुद्धधर्माध्यासादेव बाह्यभेदसिद्धेः। न चेदिति। विरुद्धधर्माध्यासोपि यदि न भेदकः, तदार्थक्रियाप्रतिनियमोपि न स्यादित्यर्थः॥

अन्यच्च यथा बाह्येऽर्थक्रियाप्रतिनियमो न स्यादिति दण्डः, तथा ज्ञानेऽपि प्रतिभासनियमो न स्यात्, इत्यपि(१) दण्ड एव।

दीधितिः।

अथ(२) बाह्यानां भेदे साध्येऽर्थक्रियानियमानुपपत्तिरस्ति विपक्षे बाधिका, न तु ज्ञानभेदे किमपीत्यत आह। अन्यच्चेति॥

दीधितिटिप्पणी।

दूषितमप्यर्थक्रियानियमं भेदसाधकतयाऽभ्युपेत्याह। अथ बाह्यानामिति.॥

कल्पलता।

ननु यथा यदि बाह्यानां परस्परं भेदो न स्यात्त-

(१) इति—पुण० पु० पा०।

(२) अथेत्यादि। एतच्च येन केनापि अर्थक्रियाभेदसिद्धिमभ्युपेत्य।-गुनानन्दः।

अन्यथोपलम्भानुपलम्भयोरप्यसिद्धिरेव । यदपि नोपलभ्यत इत्युच्यते, तदप्युपलभ्यत एव, यदिदमुपलभ्यत इत्युक्त्वैव निर्वृत्तेः । तेनात्मना नोपलभ्यत

दीधितिः ।

त्वानुपलभ्यमानत्वव्यवस्था न स्यात्, अनुपलभ्यमानत्वेनाभिमतस्य उपलभ्यमानताया उपलभ्यमानत्वेनोपेतस्य चानुपलभ्यमानतायाः सुवचत्वादित्याह । अन्यथेति । यदपि गवादिकम्(१) । कथं तदुपलभ्यत इत्यत आह । यदिदमश्वादिक(२)मिति । एवं(३) यदश्वादिकमुपलभ्यत इत्युच्यते, तन्नोपलभ्यते, कथं, यन्नोपलभ्यते गवादिकं तदेव तदिति । अथ गौर्गोत्वेनोपलभ्यते, नाश्वत्वेन, अश्वश्चाश्वत्वेन, न तु गोत्वेनेति न तयोरभेद इति यदि, तदैकज्ञानगोचरावपि नीलपीताकारौ(४) नीलपीताकारत्वाभ्यामुपलभ्येते, न पीतनीलाकारत्वाभ्यामिति तयोरपि नाभेदः । न चैकं ज्ञानं भिन्नोभयाकारं भवितुमर्हति, तदाकाराकारिणोरभेदादिति शङ्कोत्तराभ्यामाह । तेनेत्यादि । सहोपलम्भे नीलपीतादिसमूहालम्बने । उभौ बाह्या·

दीधितिटिप्पणी ।

कत्वे निखिलव्यक्तीनामभेदे उपलभ्यमानत्वानुपलभ्यमानत्वव्यवस्था न स्यादित्यर्थः । अश्वादिकं पूरयित्वैव पाठधारणमाह । यदिदमश्वादिकमितीति । न्यूनत्वादाह । एवमिति । तदेव तदिति । भेदकाभावेऽश्वादिकमेव गवादिकमित्यर्थः । अभेदनिवारकं प्रकारतोऽनुपलम्भं दर्शयति । अथेति । न तयोरिति । तथा चाऽभेदाधीनाऽव्यवस्था

(१) नोपलभ्यमानं पूरयति । गवादिकमिति । अश्वादिकं विशेष्यम् । अश्वो गवादिकमिति नोपलभ्यत इत्युच्यते, अश्वो गवात्मकत्वेन नोपलभ्यत इत्युच्यते इति मूलार्थः कर्तव्य इति भावः ।

(२) अश्वादिकमिति । गवाश्वयोश्च न भेदकान्तरमस्तीति भावः ।—गुणानन्दः ।

(३) न्यूनत्वमुद्धरति । एवमिति ।

(४) पीतस्य नीलात्मना उपलभ्यमानत्वाभावस्यानुक्तत्वात् तन्मिश्रीकृत्य व्याचष्टे । नीलेत्यादि ।—गुणानन्दः ।

इति चेत्, तत् किं सहोपलम्भेपि नीलात्मना पीतमुपलभ्यते यतो न विरोधः स्यात्। तस्मादुभावपि विरोधौ समौ क्षमौ चाभेदविसर्जने, केवलमेकस्य प्रौढिः सुभगाभिक्षुन्यायेन यदि स्यात्।

दीधितिः।

र्थज्ञाननिष्ठौ। तेनैकमेव चित्रं ज्ञानं नीलपीताभ्यामाकाराभ्यामुपलभ्यत इति प्रत्युक्तम्, गवाश्वयोरिव नीलपीताकारयोरपि विज्ञानयोः प्रतिभासभेदादिना नियतभेदसिद्धेः, अन्यथा तयो(१)रपि क्वचित् सङ्करप्रसङ्गात्। समौ प्रमाणप्रतीतत्वात्॥

दीधितिटिप्पणी।

न स्यादिति भावः। मूले, उभौ, बाह्यानां विज्ञानानां च विरोधौ॥

कल्पलता।

नीलपीतादीनां सहोपलम्भादविरोधश्चेत्, तदोपलम्भानुपलम्भयोरपि विरोधो न स्यात्, कदाचित्तयोरपि सहोपलम्भसम्भवादित्याह। अन्यथेति। असिद्धिरेवेति। विरोधाधीनो हि भेदः, विरोधश्चेन्नास्ति, तदैकशेष एवेत्येकतरासिद्धिरित्यर्थः। एतदेवाह। यदपीति। अनुपलम्भस्याभावादित्यर्थः। मैत्रस्त्वया नोपलब्ध इति पृष्टोनुपलब्धमैत्रोप्युपलब्ध एव, मैत्र इत्युक्त्यैव निवृत्तिप्रसङ्गादित्याह। यदिदमिति। ननु यद्युपलम्भोऽनुपलम्भात्मना उपलभ्येत, अनुपलम्भो वोपलम्भात्मना, तदा तयोरविरोधः स्यात्, न चैवमित्याह।

(१) तयोः, गवाश्वयोः। एतच्च स्वमतानुसारेण, गवाश्वयोः स्वरूपालम्बने तद्विशेषाकारतायाः स्वीकरणीयत्वादिति ध्येयम्। —गुणानन्दः।

कल्पलता।

तेनेति। नीलधवलादावपि सहोपलम्भमात्रं, न त्वेकात्मनान्यस्योपलम्भ इति कथं तत्र न विरोधः स्यादित्याह। तत्किमिति। प्रतिभासभेदाय तत्रापि विरोधध्रौव्यमुपसंहरति। तस्मादिति। उभावपि बाह्यज्ञानगतौ प्रवृत्तिप्रतिनियमप्रतिभासप्रतिनियमकृतावित्यर्थः। प्रवृत्तिप्रतिनियमाधीनबाह्यभेदस्य त्वया पुरस्कृतस्य सौभाग्यात् प्रौढिः, अस्मदापाद्यमानस्य प्रतिभासाधीनज्ञानभेदस्य त्वयानभ्युपगमादप्रौढिरित्यर्थः। भिक्षुविसर्जने दुर्भगायाः प्राधान्यमसहमानया सुभगया स्वयमेव भिक्षुर्विसर्जित इति सुभगाभिक्षुकन्यायो यदि स्यादित्यत्र तदा स्यादिति शेषः। यद्वा "यदि परमसह्यस्तु विरहः(१)" इतिवन्न शेषापेक्षा॥

एतेन विवेचनाभावो निरस्तः, आकारयोरसम्भेदेन वेदनस्यैव विवेचनत्वात्।

दीधितिः।

असिद्धत्वेन(२) विवेचनाभावो न ज्ञानाभेदसाधक इत्याह। एतेनेति॥

दीधितिटिप्पणी।

असिद्धत्वेन स्वरूपासिद्धत्वेन। परमो निर्वाह इत्यनेन यद्विवेचनाभावहेतुकं साध्यं कृतं, तत्रासिद्धिर्दत्तेत्यर्थः॥

(१) उत्तररामचरिते।
इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोरसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
असौ कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः किमस्या न प्रेयः—इत्यादिः।

(२) असिद्धत्वेनेति। नीलाकारावेदनेपि पीताकारवेदनात्। एवमन्यत्रापीति भावः। —गुणानन्दः।

कल्पलता।

तदेवं विज्ञानस्य विरुद्धधर्माध्यासाद्द्वयं नास्तीति यत्परेणोक्तं, तन्निराकृत्य विवेचनाभावः परमो निर्वाह इति परेणोक्तं, तन्निराकरोति। एतेनेति। प्रतिभासभेदाविवेचनेनेत्यर्थः। आकारयोरिति। नीलधवलाकारयोरसम्भेदश्चेत्साधितः, तदा तदाकारस्यापि भेदेनैव विवेचनं सिद्धं यत इत्यर्थः॥

---

अपि च क्षणिकतायामेकपुरुषापेक्षया बाह्यस्यापि क्व विवेचनम्। नानापुरुषापेक्षया त्विहापि सन्दिग्धम्।

---

दीधिति।

अथैकाग्रहणेऽन्यस्य ग्रहणं विवेचनं न(१) विचित्रज्ञानगतयोर्नीलपीताकारयोस्तथा सम्भवति, स्वसंवेदनसंवेद्यत्वात्, अविचित्रज्ञानगतौ च नीलपीताकारावन्यावेव, आकारिणां भेदे तदभिन्नानामाकाराणामभेदानुपपत्तेरित्यत आह। अपि चेति। विवेचनाभावः तस्यां व्यक्तौ तज्जातीये सर्वत्र वा। आद्ये(२)ऽप्येकस्य पुंसः पुरुषान्तरस्यापि वा। प्रथमे, क्षणिकतायामिति। क्षणिकयोर्नीलपीतयोरेकपुरुषीयैकज्ञानग्राह्ययोस्तेन पुंसा विवेचनस्याभावादित्यर्थः(३)। चरमे, नानेति। एकपुरुष-

दीधितिटिप्पणी।

आकारिणाम् अचित्राकारिणाम्। तस्यां व्यक्ताविति। तयोर्व्यक्त्योर्विवेचनाभावः उच्यते, तत्र किं तयोर्मध्ये एकां व्यक्तिमगृहीत्वापि अन्यस्या व्यक्तेर्ग्रहणरूपं विवेचनमुक्तं, किं वा तज्जातीयामेकां गृहीत्वापि इतरजातीयाया एकस्या अग्रहणरूपं वेत्यर्थः। तेन पुंसेति। पुरुषस्यापि क्षणिकतयाऽपरकालेऽसत्त्वे नीलपीतयोरेकैकग्रहात्। तथाच विज्ञानवद्बाह्यानामपि विवेचनाभाववशाद्वैतुर्नैका-

---

(१) न च—पुग० पु० पा०, कालि मु० पु० पा०। (२) आद्ये—पुग० पु० पा०।

(३) एकपुरुषविषययोर्नीलपीतयोर्मध्ये नीलग्रहणेऽपि पीतग्रहणे सम्भाविते सति विवेचनसामान्याभावस्यापि निश्चयासम्भवादिति पञ्चम्यन्तार्थः। तथा च तयोरपि भेदो न स्यादिति भावः।

परेण परस्यावेदनात् क्व सन्देह इति चेत्, अभेदे-नैव तर्ह्यविवेचनं साध्यम्, तथा च किं तेनोपन्य-

दीधितिः।

वेद्यस्य नीलादेः पुरुषान्तरेण ग्रहणे निश्चयाभावात् सन्देहो वाच्यः, स च ज्ञानाकारेपि(१) तुल्य इत्यर्थः। एतेन(२) तेनैव पुंसा कालान्तरे बाह्यस्य स्मरणादिलक्षणं विवेचनं प्रत्युक्तं वेदि-तव्यम्। अन्येनान्यस्यावेदनात्तद्भिन्नेन पुरुषान्तरीयज्ञानेन तज्ज्ञाना(३)कारविवेचनसम्भावनापि ने(४)त्याशङ्कते। परेणेति। निराकरोति। अभेदेनैवेति। अभेदसिद्धिपर्यवसायिन्या भेदे ग्राह्यग्राहकभावानुपपत्त्यैवाविवेचनं साध्यम्, तथा च किमन्त-र्गडुनाऽविवेचनेन(५)। न चैवमेवास्तु, तस्या अप्यसिद्धेः।

दीधितिटिप्पणी।

न्त इत्यर्थः। नास्तीति। पुरुषभेदाद्यघटितविवेचनस्याभावे हेतू-क्रियमाणे इत्यर्थः। समूहालम्बने एकपुरुषवेद्यस्य। तुल्य इति। अस्मदङ्गीकृतबाह्यनीलादेस्त्वया ज्ञानाकारत्वोपगमादिति भावः। तथा च बाह्यवद्विज्ञानेपि स्वरूपासिद्धिसन्देह इत्यर्थः। एतेन तस्य पुंसः क्षणिकतया कालान्तरेऽस्थायित्वादेव। ज्ञानाकारे सन्दिग्धा-सिद्धिं परिहरति। अन्येनेत्यादि। परेण परस्यावेदनादित्येवंरूपाप-त्तेरेव हेतुताया उक्तत्वात्कथमभेदेनैवेति लिखितमत आह। अभेद-सिद्धीति। उक्तानुपपत्त्यनन्तरं तस्माद्ग्राह्यग्राहकयोरभेद एवेति सि-द्धिर्भवत्यतः पर्यवसायिन्येत्युक्तम्। अन्तर्गडुनेति। विवेचनाभावीय-साधनादेवाभेदसिद्धौ किमभेदसाधनार्थमविवेचनं प्रसाध्येत्यर्थः।

(१) नीलतज्ज्ञानयोरपि।

(२) एतेन, ज्ञानाकारे तुल्यत्वेन। तस्या भेदे ग्राह्यग्राहकभावानुपपत्तेः। एतेन, नीलतज्ज्ञान-योरेकैकाग्रहणेऽप्यपरग्रहणेनेत्यपि केचित्।—गुणानन्दः। (३) नीलतज्ज्ञानेत्यर्थः।

(४) पुरुषान्तरीयज्ञानेन न तज्ज्ञानाकारविवेचनसम्भावने—कालि० मु० पु० पा०।

(५) अभेदसाधनार्थमुपन्यस्तेनाविवेचनेन किं प्रयोजनमित्यर्थः, भेदे ग्राह्यग्राहकभावानुप-पत्त्यैवाभेदासिद्धिसम्भवादिति भावः।

दीधितिः ।

अपि च(१) भिन्नयोर्न चेद्‌ग्राह्यग्राहकभावः, कथं तर्हि बाह्ययोरपि सहोपलब्धयोर्नीलपीतयोर्विवेचनम् । एकैकग्राहिणा ज्ञानान्तरेणेति चेत्, तदपि ततो भिन्नमभिन्नं वा । भिन्नं चेत्, न तर्हि ग्राह्यग्राहकभावः । अभिन्नं चेत्, पर्यवसितं तर्हि पञ्चाना(२)मभेदेन, तदभिन्नाभिन्नस्य तदभिन्नत्वात्, तथा च कुतो विवेचनम् । एवं च(३) सहोपलम्भनियमे नियमांशो व्यर्थ(४) इति द्रष्टव्यम् । परं च विवेचनाभावज्ञानं विवेचनं गृह्णाति न वा । गृह्णाति चेत्, सिद्धं तर्हि भिन्नस्यापि ग्राह्यत्वम्, विवेचनस्या(५)नेकपदार्थघटितमूर्तिकत्वात् । न चेत्, नाभेदानुमापकम्, अभावमात्रस्यानैकान्तिकत्वात् ! वस्तुगत्या

दीधितिटिप्पणी ।

तस्याः अनुपपत्तेः । स्वयं दूषयति । अपि चेति । विवेचनम्, भवता उच्यते इति शेषः । तथा च विवेचनाभावस्तत्रैव व्यभिचारीत्यर्थः । तदपि ज्ञानान्तरमपि । ततः विषयात् । पञ्चानामिति । समूहालम्बनेन समं नीलपीतयोरभेदः, एवं नीलपीताभ्यां प्रत्येकज्ञानयोरपीत्यर्थः । ननु बाह्याङ्गीकारे एव एतद्दूषणं, मन्मते सहोपलब्धौ नीलपीतौ भिन्नौ प्रत्येकज्ञानविषयौ चान्यावित्यत आह । एवं चेति । व्यर्थ इति । तन्मते सहोपलब्धयोः प्रत्येकज्ञानविषयत्वादेव नियमार्थप्राप्तेः । अन्यदप्युच्यते इत्याह । परं चेति । तदेवाभावज्ञानं विवेचनाविषयं भवति, यदि केवलाभावविषयकं स्यात्, न च केवलाभावो हेतुर्येन तन्मात्रज्ञानमेव प्रकृते लिङ्गज्ञानं स्यात्, अनैकान्तिकत्वादित्याह । न चेदित्यादिना । वस्तुगत्येति । तथा चाभावस्वरूपेण स

(१) बाह्यस्यैवंविधविरुद्धधर्माध्यासाद्भेदामितिपूर्वोक्तबौद्धशङ्काग्रन्थे विवेचनानुपपत्तिप्रसङ्गाद्येति यो ग्रन्थस्तेन बाह्ययोर्वह्निजलयोर्विवेचनमस्ति, अतो नाभेद इत्युक्तम्, तदुपरि दूषणं प्रयच्छति । अपि चेति ।

(२) पञ्चानामिति । प्रत्येकविषयकं ग्राहकद्वयम्, ग्राह्यद्वयम्, उभयविषयकमेकं च ग्राहकमिति पञ्च ।—गुणानन्दः । (३) एवं—पा० २ पु० ।

(४) व्यर्थ इति । एकज्ञानविषयत्वस्यैव तन्मते तत्र लाभादिति भावः ।—गुणानन्दः ।

(५) विवेचनस्येति । इदमुपलक्षणम्, भावाभावयोरेकज्ञानविषयत्वेनैकत्वादिति ध्येयम् ।—गुणानन्दः ।

स्तेनापि। तज्जातीयस्य तु बाह्यवद्विज्ञानस्यापि विवेचनमेवेति(१)।

दीधितिः।

विवेचनस्याभावो नानैकान्तिक इति चेत्, अ(२)स्त्वन्यत्, इ(३)दमेव ज्ञानं(४) तं तमर्थं गृह्णाति न वेति विविच्यताम्। ग्रहणे भिन्नस्यापि ग्राह्यत्वम्, अग्रहणे तु न नियम(५) इति। एवं परेण परस्यावेदनादविवेचनं साध्यम्, तद्यदि न ज्ञातम्, कुतः साध्यसिद्धिः। ज्ञातं चेत्, सिद्धं परस्य परेण वेदनम्। द्वितीये, तज्जातीयेति॥

दीधितिटिप्पणी।

एव हेतुरित्यर्थः। इदमेव ज्ञानमिति। इदानीं मवदुक्तिजन्यं ज्ञानमित्यर्थः। तं तम् एतदुक्तिविषयीभूतत्तत्पदार्थम्। न नियम इति। नियामकस्य तत्तदर्थबाधस्याभावादित्यर्थः। अत्र फक्किकायां मूले, अभेदेनैवेत्युक्तम्, तत्रैव स्वयमप्याह। एवमिति। तत् उक्तावेदनम्। सिद्धमिति। प्रकृतहेतुज्ञानस्य विभिन्नपदार्थविषयत्वादिति भावः। द्वितीये तज्जातीय इति पक्षे॥

कल्पलता।

अपि च बाह्यज्ञानयोरपि विवेचनाभावस्तुल्य इत्याह। अपि चेति। क्वेति। बाह्यस्य क्षणिकत्वेन भेदग्रहकाले विनाशात् क्व विवेचनमित्यर्थः। यद्वा बाह्येन सहोपलम्भनियमाद्यथा ज्ञानविवेचनाभावः, तथा सहोपलब्धयोर्नीलपीतयोस्तेन पुरुषेण विवेचनाभाव इत्यर्थः। ननु नीलपीतावेकेन पुरुषेण सहो-

---

(१) इति—नास्ति पुण० पु० पा०।

(२) अभावत्वेन च हेतुत्वे व्यभिचारित्वमेव, व्यावर्तकञ्च व्याप्यतावच्छेदकान्तरमसम्भव्येव, इत्यभिप्रेत्याह। अस्त्विति।—गुणानन्दः। (३) अस्तु इ—पा० २ पु०, कलि० मु० पु० पा०।

(४) वस्तुगत्या विवेचनस्याभावो नानैकान्तिक इतीदमेव ज्ञानम्।

(५) नियमः, तद्धीः।—गुणानन्दः।

कल्पलता।

पलब्धौ, तयोस्तदानीमेव पुरुषान्तरेण विवेचनं सम्भवत्येवेत्यत आह। नानेति। पुरुषान्तरेण तदा तयोर्विवेचनमिति निश्चयो नास्ति, सन्देहस्तु ज्ञानेपि, सहोपलब्धयोरपि नीलतज्ज्ञानयोः पुरुषान्तरेण विवेचनसम्भवादित्यर्थः। पुरुषान्तरेण ज्ञानयोर्ग्राह्यग्राहकयोर्वा भेदो ग्रहीतव्य इत्याकारः सन्देहः तदा स्यात्, यदि भेदेन ग्राह्यग्राहकभावो भवेत् , नचैतदस्ति, इत्याह। परेणेति। ज्ञाने विवेचनानुपपत्त्या ग्राह्यग्राहकयोरभेदस्त्वया साध्यते, तदुभयाभेदेन च विवेचनानुपपत्तिरित्यन्योन्याश्रय इत्याह। अभेदेनैवेति। ननु क्षणिकतयैका नीलव्यक्तिः पीतव्यक्तितस्तेन पुरुषेण मा विविच्यतां, नीलजातीयं पीतजातीयाद्भिन्नमिति बाह्ये विवेचनमस्त्येवेत्यत आह। तज्जातीयस्येति। तर्हि नीलज्ञानजातीयं पीतज्ञानजातीयाद्भिन्नमिति विज्ञानेपि विवेचनमस्त्येवेत्यर्थः॥

---

संवेदनबाधितोयं विरुद्धधर्माध्यासो न भेद-

---

दीधितिः।

विरुद्धधर्माध्यासात् सम्विद्भेदः साध्यः(१), स एव(२) तु नास्ति, अनुभवबाधितत्वादित्याशङ्क्य निराकरोति। सम्वे-

दीधितिटिप्पणी।

भवता साध्यः, साधकपर्यन्तेन। इत्याशङ्क्य निराकरोतीति। उष्ट्रलगुडकमित्यनेन यथाश्रुतमूले तदध्यासस्य कथं संवेदनबाधितत्वं एवमुष्ट्रलगुडमित्यादिकं न लगतीत्यतो विकल्प्य लक्षयति।

---

(१) नीलत्वपीतत्वयोरेकत्र ज्ञानेऽसम्भवान्नीलपीतोभयविषयकमेकं ज्ञानं न सम्भवतीति भवद्भिः साधनीयमित्यर्थः। (२) स एव, विरुद्धधर्माध्यास एव।—गुणानन्दः।

साधक इति उष्ट्रलगुडकम् , संवेदनेनैवास्य(१) साधितत्वात् ।

दीधितिः ।

दनेति । एवं ब्रुवतः कतमोऽभिप्रायः, किं नीलत्वादीनां विरोध एव नास्ति(२), किं वा(३) विज्ञानस्य तद्धर्त्त्वम् , अथ तद(४)वगाहित्वम्(५) । नाद्यः, तेषां विरोधस्य साधितत्वात् । द्वितीये(६) सिद्धं(७) ज्ञानानात्मनोऽपि ग्राह्यत्वम् । तृतीये त्वाह । उष्ट्रलगुडकमिति । अथायमाशयः, यथा भवतां नीलपीताद्यारब्धेऽवयविन्येकत्रानेकरूपसमवायायोगादतिरिक्तं चित्ररूपम् , तथाऽस्माकमप्येकत्र विज्ञानेऽनेकाकारासम्भवाद-

दीधितिटिप्पणी ।

एवं ब्रुवत इति । तद्धर्त्त्वम् नीलत्वादिमत्त्वम्, अत्रापि नास्तीत्यन्वयि । तदवगाहित्वम् नीलत्वाद्यवगाहित्वम्, अत्रापि नास्तीत्यन्वयि । तृतीये त्विति । तथा च नीलत्वाद्यवगाहित्वं संवेदनबाधितमिति ( यदि ) भवतोऽभिप्रायः, तदा उष्ट्रलगुडकम्, स्वप्रकाशेन संवेदनेन त्वन्मतसिद्धस्य तदवगाहित्वस्य इदानीं अनुभवासिद्धत्वाङ्गीकारात् स्वोत्क्षतिकरत्वाच्चोष्ट्रलगुडतुल्यत्वम् । न च वाच्यं द्वितीयेऽपि उष्ट्रलगुडकं कथं नोक्तं, स्वक्षतिकारित्वरूपतत्तुल्यत्वसत्त्वादिति वाच्यम् । मूले उष्ट्रलगुडकत्वे संवेदनसाधितत्वरूपो हेतुरुपन्यस्तः, न च द्वितीयपक्षस्य तदस्ति, विज्ञानस्य नीलत्वादिमत्त्व(स्य)तादृशानुभवाविषयत्वात् तेनापि संवेदनासाधितत्वात् । इदानीं स्वयं पूर्वपक्षिणो भावं वर्णयन् दर्शयति । अथेति । सिद्धान्तयति । सम्भा-

---

( १ ) अस्य, नीलत्वपीतत्वोभयविषयकत्वस्य । ( २ ) नास्तीत्यस्याग्रिमविकल्पद्वयेऽप्यनुषङ्गः ।

( ३ ) भिन्नत्वं, विज्ञानाद्भिन्नत्वं । तद्धर्त्त्वम्, नीलादिमत्त्वम् । किं वेति क्वचित्पाठः । विज्ञानस्य तद्धर्त्त्वम्, नीलादिमत्त्वम् , तच्च तदात्मकत्वम् ।—गुणानन्दः । किं वेति दीधितौ भिन्नत्वं वेति पाठः, स च युक्तः । ( ४ ) तदनव—कलि० मु० पु० पा० ।

( ५ ) तदवगाहित्वमित्यत्र विज्ञानस्येत्यनुषज्यते । तथाच विज्ञानस्य नीलाद्यवगाहित्वमित्यर्थः ।—गुणानन्दः । ( ६ ) द्वितीये तु—कलि० मु० पु० पा० ।

( ७ ) सिद्धमिति । अग्राह्यत्वे किं तत्र मानमिति भावः ।—गुणानन्दः ।

दीधितिः ।

तिरिक्त एव चित्राकार इति, सम्भाव्येताप्यय(१)मिदं चित्रमिति ज्ञाने, न त्विदं(२) नीलमिदं च पीतमेते नीलपीते मिथो भिन्ने इत्यादिके(३)। व्यक्तीभविष्यति चेदमग्रे(४) ॥

दीधितिटिप्पणी ।

व्येताप्ययमिति । अयं चित्राकारः । इति ज्ञाने इत्याकारकज्ञाने सति । इत्यादिक इति । ज्ञाने इत्यनुषज्यते । प्रत्युत भेदत्वेनैव प्रथामाह । एत इति ॥

कल्पलता ।

ननु नीलपीतविषयकैकज्ञानस्यैकत्वेनानुभवाद्विरुद्धधर्माध्यासेन तद्भेदसाधनं बाधितमित्यत आह । संवेदनेति । एकं संवेदनमेवेदमुपक्रान्तं, तदेव तु भेदं हनिष्यति । तथा च कुरूपो हन्यतामिति श्रुत्वा कुरूपहननाय प्रथममुष्ट्रेणैव लगुडं गृहीतमिति न्यायमनुहरतीत्यर्थः । नीलात्पीतं भिन्नं नीलजातीयात्पीतजातीयं भिन्नमिति बाह्येपि संवेदनाधीन एव भेदः, स कथं तेनैव बाध्यतामिति प्रसिद्धं विरुद्धद्वयाकारं ज्ञानमपि विरुद्धधर्माध्यासाद्भिन्नमिति भावः ॥

हिनस्तु तर्हि प्रकाशमानताऽनेकत्वं, विरुद्धधर्मा-

दीधितिः ।

शङ्कते । हिनस्त्विति । प्रकाशमानता अनेकत्वमिति । भेदे

दीधितिटिप्पणी ।

हेतुमाह । भेद इति । ग्राह्यत्वेति प्रकाशमानताया पदार्थकथनं भङ्ग्या कृतम् । एकत्वेन प्रकृतज्ञाने भानं तेनाप्यङ्गीकृतमित्य-

(१) अयम्, चित्राकारः ।—गुणानन्दः ।

(२) न त्विदमिति । ततः प्रत्येकं नीलायवयवहारप्रसङ्गादिति भावः ।—गुणानन्दः ।

(३) इत्यादिके ज्ञाने चित्राकारो न सम्भवतीत्यर्थः । (४) चेदमग्रे—मुन० पृ० ९० ।

ध्यासोऽप्येकतां, तथाप्येकत्वानेकत्वविकलनीलाद्याकार-प्रकाशस्वरूपे किमायातमिति चेत्, तदिदं भीतैः क्षेत्रनिलायनम्(१)। नियताकारत्वमेव ह्येकत्वम-नियताकारत्वं चानेकत्वं(२), तन्निवृत्तौ च न नीलाकारं नापि नीलपीताद्याकारमिति निराकारमेवावशिष्यते।

दीधितिः।

ग्राह्यत्वायोगात्(३)। प्रकाशमानता एकत्वेन प्रकाश इत्यन्ये(४)। प्रकाशस्वरूपरक्षणायैकत्वानेकत्वनिराकरणम्, तस्मिंश्च(५) सति प्रकाशस्वरूपमेव न स्यादित्याह। तदिदमिति। भीतैः अन-भिज्ञैः। तदेव व्युत्पादयति। नियतेति। तन्निवृत्तौ नियतानि-यताकारत्व(६)रूपैकत्वानेकत्वनिवृत्तौ। निराकारमेवेति। तथा च नीलाद्याकारप्रकाशस्वरूप इति यदुक्तं(७) तद्व्याहत(८)मि-ति भावः॥

दीधितिटिप्पणी।

न्य इत्यस्वरसः। तस्मिंश्चेत्याकारेण स्वरूपमेव न स्यादिति य-दुक्तं, तन्मूलानुक्तेर्भावार्थतया दर्शयति। तथा चेति॥

कल्पलता।

ननु नीलधवलादि एकज्ञानकुक्षावेव प्रकाशमान-

(१) निदानम्—पुण० पु० पा०। निडायनम्—पाठः।(२) नकतो—पा० २ पु०।

(३) प्रकाशमानता, एकज्ञाने भासमानता, अनेकत्वे तस्याः कथं बाधकत्वमत आह। भेद इति।—गुणानन्दः।

(४) अन्य इत्यरुचिबीजं तु नीलपीताकारयोराकारेण ज्ञानस्य वा एकत्वप्रकाशस्यासिद्धे-रेव।—गुणानन्दः।

(५) तस्मिन्, एकत्वानेकत्वनिराकरणे। परस्परविरोधे हीति न्यायात् पारमार्थिके धर्मिणि एकतरनियमादिति भावः।—गुणानन्दः।

(६) कारत्व-कलि० मु० पु० पा०। (७) छिन्नस्थितिति शङ्कायाम्।

(८) तद्व्याहतमिति। इदमुपलक्षणम्, साकारत्वस्य विज्ञानत्वव्यापकत्वात् तन्निवृत्तौ विज्ञा-नत्वमेव न स्यादित्यपि ध्येयम्।—गुणानन्दः।

कल्पलता।

त्वानुरोधात् प्रविष्टमिति तज्ज्ञानं कथमनेकं स्यात्, न च तदेकमेव भवितुमर्हति, विरुद्धधर्माध्यासादित्येकत्वमनेकत्वं च विवादपदज्ञाने मास्तु, ज्ञानस्वरूपं तु स्वसम्वेदनसिद्धं दुर्निरसनम्। तदुक्तं ज्ञानश्रिया।

"चि(१)त्रैकव्यवहारोऽपि ज्ञाना(२)पोहपरो मतः।
एकानेकत्वविकलः प्रकाशः केवलोऽत्र सन्॥"

इत्याह। हिनस्त्विति। तर्हि तज्ज्ञानं नैकस्वरूपं न वानेकस्वरूपमिति निःस्वरूपमेव पर्यवसन्नमित्याह। तदिदमिति। भीतैः वर्बरैः। क्षेत्रनिलायनम् क्षेत्रकेवलीकरणम्। सस्यरक्षार्थे तृणे निरसनीये सस्यमपि निरस्तमेवेति यथे(३)त्यर्थः। एतदेवाह। नियतेति॥

---

स्यादेतत्। पारमार्थिको विरुद्धधर्माध्यासो भेदग्रहहेतुः, अयं तु काल्पनिक इति चेत्, एवं तर्हि सुतरामयत्नसिद्धं स्फटिकवद्बोधस्य निराकारशुद्धत्वम्, आकारनिकर(४)स्त्वनात्मैव स्फुरतीति उभयथापि कालात्ययापदिष्टाः सहोपलम्भादयः।

---

दीधितिः।

उभयथापीति। प्रकाशमानस्य ज्ञाना(ना)त्मनो नीलाद्याकारस्य पारमार्थिकत्वे काल्पनिकत्वे चेत्यर्थः॥

दीधितिटिप्पणी।

ज्ञानानात्मन इति हेतुभूतं विशेषणम्, पक्षस्य ज्ञानानात्मत्वादेव बाधितो हेतुरित्यर्थः॥

---

(१) हि—कालि० मु० पु० पा०। (२) भेदा—कालि० मु० पु० पा०।
(३) भेदे—पुना० पु० पा०। (४) निराकार—गो० २ पु०।

कल्पलता ।

ननु नीलपीतादीनामवस्तुत्वात्तद्घटितो विरुद्धधर्माध्यासोऽप्यवस्तुभूतः कथं ज्ञानं भिन्द्या(१)दित्याह । स्यादेतदिति । उभयथेति । नीलादीनां पारमार्थिकत्वे अपारमार्थिकत्वे चेत्यर्थः ।(२) तत्र पारमार्थिकत्वे विरुद्धधर्माध्यासादुक्तादेव बाधो ज्ञानस्य नीलाद्यभेदे साध्ये, अपारमार्थिकत्वे तु पर(३)मार्थसतो ज्ञानस्यापारमार्थिकनीलाद्यभेदे साध्ये तु सुतरां बाध इत्यर्थः । (४)उभयथेति । परमार्थसदाकारत्वे निराकारत्वे चेत्यर्थ इति केचित् ॥

अपि च आस्तां तावद्विरुद्धधर्माध्यासचिन्ता । योऽयं ग्राह्यग्राहकभागभेदो ग्राह्यनीलपीतादिभेदो वा चकास्ति, स किं सत्योऽसत्यो वा । सत्यत्वे स एव दोषो हेतूनाम् । असत्यत्वे वा नायमात्मा विज्ञानस्येत्यनात्मन्यपि सहोपलम्भनियमादयो गता इत्यने-

दीधितिः ।

स एव बाध एव ।(५) ग्राह्ययो(६)र्भेदे सत्यत्वाङ्गीकारे ग्राहकस्य तदुभयाभेदे बाधः । नायमिति । भेदस्य ज्ञानात्मकत्वे

दीधितिटिप्पणी ।

ग्राह्ययोर्भेदे सति अभेदे साध्ये । तद्व्याप्यतामित्यस्यार्थमाह ।

(१) ज्ञानं स्या--पुण० पु० पा० । (२) अपारमार्थिकत्वे चेत्यर्थः । --पुण० पु० पा० ।

(३) साध्ये, अपर--कलि० मु० पु० पा० ।

(४) इत्यर्थः । तत्र पारमार्थिकत्वे विरुद्धधर्म--पुण० पु० पा० ।

(५) एव । एवं--कलि० मु० पु० पा० ।

(६) ग्राह्ययोरिति । तयोर्यदि पारमार्थिको भेदस्तदा तयोर्ग्राहकत्वेनाभिमतैकज्ञानाभेदे साध्ये बाधः, न हि भिन्नयोरेको भेदः सम्भवतीति भावः । एवं ग्राह्यग्राहकयोर्ग्राहकयोरपि भेदे बोध्यम् । ग्राह्यत्वेनैव वा सर्वेषामेवोपग्रहः ।— गुणानन्दः ।

कान्तः। भेदो न प्रथते इति चेत्, अस्तु तावत् सर्वजनप्रतीतिविरोधः, स्ववाग्विरोधो वा, असिद्धास्तर्हि हेतवः। न हि भेदाप्रथने सहार्थं तद्व्याप्यतां वा पश्यामः। तदस्फुरणे पक्षादिप्रविभागोपि कथं, कञ्च बोधयितुं प्रवृत्तोसि, किमर्थं च, अन्वयव्यतिरेकाप्रतीतौ किं च हेतोर्बलं, कुतश्च विप्रतिपत्तिः कीदृशी चेति, सोयं विचारमारभते, भेदं तु साम्प्रतमपि नेच्छतीति व्यक्तं उन्मत्तोप्यनेन जितः।

दीधितिः।

ज्ञानस्य ज्ञेयभिन्नत्वापत्तेरिति भावः। विनापि भेदं तद्विषयकप्रतीतिविषयत्वरूपः सहोपलम्भः सम्भवतीत्यत आह। तद्व्याप्यतामिति। तन्नैयत्यम्(१), तद्धि तदविषयकप्रतीत्यविषयत्वादिरूपं न विना भेदं सम्भवतीति। तद्व्याप्यताम्(२) तेषां हेतूनां साध्यव्याप्यताम्, व्याप्तेर्भेदगर्भत्वादिति वाऽर्थः॥

दीधितिटिप्पणी।

तन्नैयत्यमिति। सहोपलम्भनियमरूपहेतुप्रविष्टस्य सहोपलम्भनैयत्यस्य कथं ज्ञानं भेदज्ञानं विना सम्भवति, तदविषयकेत्यादौ भेदस्य भानादित्यर्थः। हेतुनिष्ठसाध्यव्याप्यतापरतया व्याख्यान्तरमाह। तद्व्याप्यतामिति॥

कल्पलता।

एकदण्डिमतमन्तर्भाव्य दोषान्तरमाह। अपि चेति। आस्तां तावदिति। दोषान्तरमेवात्र(३) द्रढीय

(१) तन्नैयत्यम्, सहोपलम्भनैयत्यम्। तदिति। तदविषयकत्वस्य तद्विषयकाभिन्नत्वादिघटितत्वादिति भावः।—गुणानन्दः।

(२) ननु तद्विषयकप्रतीतिविषयत्वमेव हेतूकार्यम्, उक्तक्रमेण तन्मये दोषाभावादित्यनुशयादाह। तद्व्याप्यतामिति।—गुणानन्दः।

(३) मेव--पुन० पु० पा०।

कल्पलता ।

इति भावः । स एवेति । भासमानस्य भेदस्य सत्यत्वे ग्राह्याभेद(१)साधने बाध एवेत्यर्थः । अनेकान्ता(२) इति । असत्यस्य भेदस्य ग्राह्यत्वे सहोपलम्भनियतत्वादिति हेतुसत्त्वेऽपि साध्यस्य ग्राह्याभेदस्यासत्त्वादनैकान्तिकत्वमि(३)त्यर्थः । स्ववाग्विरोध इति । भेदपदमु(४)च्चारयतो भेदो न प्रथत इति स्ववाग्विरोध इत्यर्थः । असिद्धाः स्वरूपासिद्धाः । तद्व्याप्यतामिति । तस्य व्याप्यताम्, व्याप्य(५)व्यापकभावस्य भेदगर्भत्वादित्यर्थः । पक्षादीति । पक्षसाध्यहेतुदृष्टान्तादीनां भेदे सत्येव अनुमानप्रवृत्ते(६)रित्यर्थः । कं चेति । वादिनोरपि भेदाभावादित्यर्थः । किमर्थं चेति । तत्त्वनिर्णयविजयादीनामुद्देश्यानामसत्त्वादित्यर्थः । अन्वयव्यतिरेकयोरपि भेदाभावे प्रतीतिरनुपपन्ना(७), प्रतीतिभेदाभावे विरुद्धा प्रतिपत्ति(र्विप्रतिपत्ति)रपि न स्यात्, तदभावाच्च न विवाद(पद)प्रवृत्तिरिति सर्वथा सर्वत्र भेदतज्ज्ञानयोरपेक्षेत्याह । अन्वयेति ॥

---

विकल्पारूढ एव भेदो(८) व्यवहाराङ्गं, नानुभ-

---

दीधितिः ।

अस्तु तर्हि सांवृत एव भेद इत्याशयवानाशङ्कते । विक-

दीधितिटिप्पणी ।

सांवृत इति । संवृतिः विकल्पः, तद्विषय इत्यर्थः । ननु केव-

---

(१) ग्राह्यभेद--पुण० पु० पा० ।
(२) अनेकान्त--पुण० पु० पा० । (३) ान्तिक इ --पुण० पु० पा० ।
(४) भेदमु--पुण० पु० पा० । (५) तस्य (व्याप्य) व्याप्य--कलि० मु० पु० पा० ।
(६) प्रवृत्ति--पुण० पु० पा० । (७) प्रतीतिरनुपपन्ना--नास्ति पा० पुण० पु० ।
(८) भेदो--नास्ति २ पु० पा० ।

वारूढ इति चेत्, सोपि सत्योऽसत्यो वा भासते न वेति विकल्पान्नातिवर्तते।

दीधितिः।

ल्पेति। नानुभवेति। अनुभवः निर्विकल्पकम्। तस्य(१) सम्मात्रालम्बनत्वेन कालानिकोल्लेखायोगात्। सोपीति। अभासने केवलस्य(२) वा भेदस्य भासने विचारानारम्भादिति(३) प्रतियोग्यादिमिलितस्य च सतोऽसतो वा भेदस्य नैक(४)सम्विद्धि(५)ज्ञानतादात्म्यमिति कथं ग्राह्यत्व(६)मिति॥

दीधितिटिप्पणी।

लभेदस्य विकल्पारूढस्य सत्यत्वमेव वाच्यम्, तस्य च विकल्पेन सह तादात्म्ये न कोपि दोष इति कथं सत्यत्वविकल्पे दोष इति दोषं वीक्ष्याह। अभासन इति। एतच्च दृष्टान्तार्थम्। अनारम्भादिति। भवता केवलभेदस्य भानं नाङ्गीक्रियते इत्यत्र न विचारः, येन केवलभेदस्य भानं भवता वक्तव्यं, किन्तु प्रतियोगिमिश्रितभेदभानमेव, तस्य चाङ्गीकारः सत्यत्वपक्षेपि न लगतीत्यर्थः। नैकसदिति। प्रतियोगिविशिष्टभेदस्य तादात्म्यात्मकस्य विज्ञानस्य विरुद्धमित्यर्थः। असत्त्वपक्षे सत्तादात्म्येत्यपि सूचितं सदित्यनेन॥

कल्पलता।

विकल्पः सविकल्पकः(७)। अनुभवः निर्विकल्पकम्। तथा चा(८)पारमार्थिक एव भेद इति भावः। सत्य इति। सत्यो भेदो भासते च यदि, तदा सिद्धं नः समीहितं, ज्ञानमपि त्वन्मते भेदात्मकं स्यात्, तद-

(१) भेदस्यानुभवाविषयत्वे युक्तिमाह। तस्येति। निर्विकल्पकस्येत्यर्थः।—गुणानन्दः।

(२) केवलस्य, प्रतियोग्यधिकरणाभ्यामनुपहितस्य।—गुणानन्दः।

(३) विचारानारम्भात्—कलि० मु० पु० पा०।

(४) नैकेति। एकत्वोपादानात् प्रतियोग्याद्युपहितभेदात्मकत्वासम्भवस्य सदित्यनेनाऽसदात्मकत्वस्यासम्भवप्रदर्शनम्।—गुणानन्दः। (५) सद्धि—कलि० मु० पु० पा०।

(६) मास्तु ग्राह्यत्वं, का नो हानिरित्यत आह। इति कथं ग्राह्यत्वमिति।—गुणानन्दः।

(७) सविकल्पकमेव—गुण० पु० पा०। (८) तथा च—गुण० पु० पा०।

कल्पलता ।

नात्मकत्वे च भेदेपि ग्राह्यग्राहकभावसिद्धिः(१)। यदि च सत्यो भेदो न भासते तदा भेदव्यवहारानुपपत्तिः, न ह्यभासमानं किञ्चिद्व्यवह्रियते। अथासत्य एव भेदो भासते तदा(२) तदभेदात् ज्ञानमप्यसदेव स्यात्, अन्यथा भेदे ग्रा(३)ह्यग्राहकभावसिद्धिः। अथ न भासते, तदा न भेदव्यवहार इत्यर्थः॥

---

असन्नेवास्फुरन्नेवाध्यवसीयत इति चेत्,(४)अध्यवसीयत इति विवरणार्ह(५)मेतत्। तद्विषयव्यवहार-

---

दीधितिः ।

अस्फुरन् अभासमानः। अध्यवसीयते विकल्पेन विषयीक्रियते इति प्रसिद्धेऽर्थे अनात्मनोपि भानमस्फुरन्नित्यनेन विरोधश्चेत्याशयेन पृच्छति। अध्यवसीयत इतीति। तद्विषयेति। तथा चाध्यवसीयते विकल्पेन स्वजन्यव्यवहारविषयीक्रियत इत्यर्थः। स्वकारणबलायातश्चायं विकल्पस्य स्वभावभेदो यत्

दीधितिटिप्पणी ।

ननु अध्यवसीयते ( विषयीक्रियते ) इत्यर्थ इति, तत्कथं विवरणार्हमित्युक्तम्, अतो भावार्थमाह। अध्यवसीयत इति। अध्यवसीयत इति पदस्य एवंरूपः प्रसिद्धोऽर्थो भवता विवक्षितः, तदा ज्ञानानात्मनोऽलीकस्य कथं ज्ञाने भानं, अध्यवसायविषयत्वे कथमस्फुरत्त्वं च, इति दोषद्वयं स्यात्। एतद्दोषाद् भवतां प्रसिद्धो न विवक्षितः, तदा च कोऽर्थो विवक्षितः, स विव्रियतामित्यर्थः। नन्वेवं विकल्पस्य स्वाविषयार्थव्यवहारजनकत्वे कथं सर्वविकल्प एव सर्वस्यैव व्यवहारं नार्जयतीत्यत आह। स्वकारणेति। नन्वेवं विक-

---

(१) भेदोऽपि ग्राह्यग्राहकभावश्च–पुण० पु० पा०।

(२) व्यवह्रियते तदा–पुण० पु० पा०। (३) भेद ग्रा–पुण० पु० पा०।

(४) चेन्नेदो न–पा० २ पु०।

(५) विचारणीय–इति कल्पलतासम्मतः पाठः प्रतिभाति।

जननमध्यवसायार्थं इति चेत्, व्यवहारोऽपि यद्यज्ञानरूपः, कथमसंस्तेन जन्यताम्। ज्ञानरूपश्चेत्, कथं नियामकं विना तद्विषयः। स्वकारणसामग्रीसामर्थ्या-

दीधितिः।

कश्चिदेव विकल्पः कञ्चिदेवासन्तमविषयमपि व्यवहारयति, न सर्वः सर्वमिति भावः।

केचित्तु(१) अस्फुरन् निर्विकल्पकाविषयः, तत्रैवानात्मभानं निषिद्धमित्यभिप्रायः। इत्थं च निर्विकल्पकतद्विषययोरेव ग्राह्यग्राहकाभ्यामभेदः साधनीयः, सहोपलम्भादौ चोपलम्भः साक्षात्कारो विवक्षणीयः, अतो नांशतो बाधो नाप्यनैकान्तिकत्व(२)मित्याहुः(३)।

कथमसन्निति। विज्ञानवादे ज्ञानातिरिक्तमात्रस्यासत्त्वात्। यद्यपि व्यवहारात्मकज्ञानस्याभेदाविषयत्वे सिद्धमेव भिन्नस्यापि ग्राह्यत्वम्(४), तथाप्यन्येनान्यस्य ग्रहणेऽतिप्रसङ्गं परमुखेनैव निराकर्त्तुमाह। कथमिति। स्वकारणेति। एवं च व्यवहारत्व-

दीधितिटिप्पणी।

रूपाविषयतायां कथं विकल्पेऽनात्मनः स्फुरणमित्यत आह। तत्रैवेति। निर्विकल्पक इत्यर्थः। आद्यस्य फलमाह। नांशत इति। विकल्पस्य पक्षत्व इत्यर्थः। द्वितीये त्वाह। नापीति। अनेकपदेषु लक्षणा आहुरित्यत्रास्वरसः। अज्ञानत्वे कथमसत्त्वमत आह। विज्ञानवाद इति। परमुखेनैवेति। तन्मुखेनैव तद्दत्तातिप्रसङ्गनिराकरणार्थं सिद्धान्त्युत्तरमाहेत्यर्थः। ननु अलीकस्वरूपभेदस्य विकल्पविषयत्वे न किमपि नियामकमुक्तमत आह। एवं चेति। मूलपरमार्थः(५)।

(१) केचिदित्यरुचिबीजन्तु व्यवहारोपीत्यादिदूषणासन्दर्भः, विकल्पविषयतायामेव नियामकानुपपत्तेरतिस्फुटत्वादित्यादि।—गुणानन्दः।

(२) ज्ञानमात्रस्य ज्ञेयमात्रस्य वा पक्षत्वे विकल्पे तादृशभेदे वा नांशतो बाधः, निर्विकल्पकस्य नीलादिमात्रस्य वा हेतुत्वे नानैकान्तः।—गुणानन्दः। नाप्यनैकान्तिक-कलि० मु० पु० पा०।

(३) अध्यवसीयत इत्यादिसिद्धान्तग्रन्थविरोधस्तस्य ज्ञानमात्रस्य भिन्नविषयकत्वास्वीकाराभिप्रायकत्वादित्यस्वरस इति केचित्।

(४) तथाचैतद्दूषणे स्फुटे सति दूषणान्तरं कथमित्यादिना कुतो दीयत इत्याशयः।

(५) इदं पूरणम्, एवञ्चेत्यादि मन्तव्यमित्यन्तं एतावत्पर्यन्तमूलपरमार्थ इत्यर्थः।

दिति चेत्, सोऽयं(१) व्यवहृतिरूपज्ञानालीकभेदयोर्नियामका(२)न्तराभावेपि कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति, न त्वनुभवानुभाव्ययोरिति क्षीरं विहाय रुचिररोचकग्रस्तस्य सौवीरे(३)।

दीधितिः।

तज्जनकज्ञानस्याप्यसद्भेदविषयत्वं कारणसामर्थ्यादविरुद्धमित्यपि मन्तव्यम्। अनुभवेति। अनुभवः साक्षात्कारः, तद्विषयः सन्ननुभाव्यः(४)। सतो हि ज्ञानविषयत्वे इन्द्रियसन्निकर्षादिकं नियामकं सम्भवतीति। सौवीरम् काञ्जिकम्॥

दीधितिटिप्पणी।

न काञ्जिक इति। तत्र ज्ञानविषयतानियामकसन्निकर्षादिकं न सम्भवतीति काञ्जिकतुल्यता॥

कल्पलता।

अस्फुरन्निति। अज्ञायमान इत्यर्थः। विचारणीयमिति। विचारासहमेनादित्यर्थः। ज्ञानाविषयेपि भेदव्यवहारं करोति विकल्प इत्याह। तद्विषयेति। व्यवहारोपीति। त्वन्मते ज्ञानातिरिक्तस्यासत्त्वादिति भावः। तद्विषय इति। भेदविषय इत्यर्थः। एवं सति नीलादीनामपि ज्ञानविषयत्वसिद्धिरिति भावः। व्यवहारस्व(५)रूपं ज्ञानं स्वकारणबलात्तथोत्पन्नं(६) यथाऽलीकं भेदं विषयीकरोतीत्याह। स्वकारणेति। व्यवहृतिरूपज्ञानश्चालीकभेदश्चेति द्वन्द्वः समासः(७)।

(१) मध्यवसायार्थ इति चेत्, सोयं-पा० २ पु०। (२) भेदयोर्ज्ञाता-पा० २ पु०।
(३) विहाय सौवीरे रुचिररोचकग्रस्तस्य-पा० २ पु०।
(४) तद्विषयस्त्वनुभाव्यः-कलि० मु० पु० पा०।
(५) व्यवहार—पुण० पु० पा०। (६) तथोत्पन्न—पुण० पु० पा०।
(७) द्वन्द्वः—पुण० पु० पा०।

कल्पलता।

अनुभवानुभाव्ययोरिति । निर्विकल्पकवस्तुग्रा(१)ह्ययोरित्यर्थः। वस्तुभूतं नीलादि स्वकारणसामर्थ्यादेव भिन्नमपि विषयीकरोतु(२), किं नियामकान्तरेणेति भावः। वस्तुविषयतायां स्वकारणसामर्थ्यसम्भवः क्षीरमिष्टम् ,अवस्तुविषयतायां तदसम्भवः सौवीरं काञ्जिकम् ॥

भेदोपि विकल्पाकार एव, न तु बाह्य इति चेत् , यद्यसन्नेवासौ, कथं विकल्पाकारः। तदाकारश्चेत् , कथमसान्निति परिभावय । अस्तु तर्हि सन्नेवेति चेत् , नन्वद्वयदर्शि चोद्विज्ञानम् , कथं भेदप्रथा। आकारद्वय-

दीधितिः।

स्यादेतत् । विकल्पेनो(३)ल्लिखितो भेदो यदि ततो भिद्येत, तदा देश्येताप्यन्येनान्यस्य ग्रहणम् , न त्वेतदस्ति, किं तु विकल्पाकार एव, न चाकार आकारिणो भिद्यत इत्याशङ्कते। भेदोपीति। अपिशब्दान्नीलादिरपि। तथा च ज्ञानाकारयोरेव नीलपीतयोर्ज्ञानाकारो भेदो विकल्पेनोल्लिख्यत(४) इति न बाह्यसम्वेदनसङ्कथापीति भावः। अद्वयदर्शि नीलपीताद्याकारद्वयादर्शि। प्रतियोग्यनुयोग्यनुल्लेखिनो ज्ञानस्य तादृशव्यवहाराजनकत्वादित्युक्तत्वात् । अथ नैरन्तर्येण युगपदेव वो(५)त्पन्नानि

दीधितिटिप्पणी।

अद्वयदर्शित्वेपि भेदप्रथारूपत्वे को दोषः, अत आह। प्रतियोगीति। तादृशेति। भेदेत्यर्थः। स्वयमाह। अथेति। अस्त्वेव इदानी·

(१) वस्तुसद्ग्रा—पुण० पु० पा०। (२) करोति—पुण० पु० पा०।

(३) विकल्पो—कलि० मु० पु० पा०। (४) नोछिखित—काल० मु० पु० पा०।

(५) नैरन्तर्येणोत्पन्नानां क्षणिकविज्ञानानां युगपदवस्थानेन नैककार्यकारितासम्भव इत्यत आह। युगपदेव वेति।—गुणानन्दः।

दर्शि चेत्, कथमेकं सत् द्व्यात्मकम्। चित्राकारमिति चेत्, चित्रमप्ये(१)कमनेकं वेति विकल्पगि(२)लितमेव तव पश्यतः। अनेकत्वे क्व एकविज्ञानतादात्म्यम्। विज्ञानस्यापि यावदाकारमनेकत्वे क्व चित्राकारसंवेदनम्, स्वस्वमात्रमग्नत्वात्। एकत्वे क्व भेदप्रतीतिः।

दीधितिः।

त्रीणि ज्ञानानि भेदं व्यवहारयन्तीति चेद्, एकं चेद्विज्ञानं नानेकदर्शि(३), कथमद्वैतार्थस्य सिद्धिः। अनेकदर्शि चेत्, एकस्यानेकतादात्म्यविरोधात्सिद्धमन्येनान्यस्य ग्रहणम्। गूढाभिसन्धिः शङ्कते। चित्रेति। चित्राकारत्वं हि नीलपीताद्यतिरिक्ताकारविशेषशालित्वं वा नीलाद्यनेकाकारत्वं वेति विकल्पेन निराकरोति। चित्रमपीति। क्व चित्राकारसंवेदनम् क्व नीलाद्यनेकाकारसंवेदनम्। असंवेदने(४) कथं तद्भेदग्रहणम्। एकत्व इति। नीलाद्यतिरिक्तैकाकारशालित्वे नीलपीताद्यनुल्लेखे तद्भेदोल्लेखो न सम्भवतीत्यर्थः॥

दीधितिटिप्पणी।

मेव भवदुक्तस्य। यथाश्रुतचित्राकारमिति फक्किकाया नन्वद्वयदर्शि चेदित्यादिनैव दूषितप्रायत्वादनुत्थानापत्त्या तदितरजातिमुद्रया(५) उत्थानमाह। गूढेति। निराकरोतीति। अभिसन्धिम्, एकत्वे इत्यादिना। कथं तद्भेदग्रहणमिति। प्रतियोग्यनुयोग्यनुल्लेखिनश्च स्वगोचरस्य भेदविषयत्वानुपपत्तेः॥

कल्पलता।

ननु विकल्पाद्भिन्नस्यालीकभेदस्य विषयतां ना-

(१) चित्रमे—कलि० मु० पु० पा०। (२) विकल्पग–पा० २ पु०।

(३) नानेकदर्शि, अनेकाविषयि। युगपदुत्पन्नानां तदर्थविषयिणां असंसर्गाग्रहसहकारेण तद्व्यवहारजनकत्वेऽपि तादृशविशिष्टार्थस्य न सिद्धिरित्यर्थः।—गुणानन्दः।

(४) तत्संवेदनानुपगमे दोषमाह। असंवेदन इति। तद्भेदग्रहणम्, नीलपीतयोर्मिथो भेदग्रहणम्।—गुणानन्दः।

(५) नीलपीताद्यतिरिक्तजातिविशेषविशिष्टत्वमित्यभिसन्धिर्गूढ इत्याशयः।

कल्पलता।

ङ्गीकुर्म्म इत्याह। भेदो(१)पीति। कथमिति। वस्तव(२)-वस्तुनोस्तादात्म्यानुपपत्तेरित्यर्थः। तदाकार इति। आकाराकारिणोरभेदादिति भावः। अस्त्विति। सन्नेव भेदो विकल्पाकारोस्तु, तथा च न पूर्वदोष इत्यर्थः। अद्वयेति। ययोर्भेदो गृह्यते(३) तदुभयाविषयं चेदित्य(४)र्थः। न हि प्रतियोग्यनुयोगिनोर्नीलपीतयोरज्ञानेपि भेदज्ञानमिति भावः(५)। ननु नीलपीताकारयोरनुयोगिप्रतियोगिनोर्ज्ञाने सत्येव भेदज्ञानमस्तु, को दोष इत्यत आह। आकारेति। तर्हि विरुद्धद्वयाकारं ज्ञानमपि विरोधादेकं न स्यादित्यर्थः। रत्नकीर्तिमतं शङ्कते। चित्राकार(द्वय)मिति। न द्वयदर्शि नाप्यद्वयदर्शि, किं तु चित्राकारमित्यर्थः। अत्रापि नैयायिकाभिमतैकगुणपरश्चित्रशब्दः, कर्वुरार्थो वाऽनेकगुणपर(६) इति विकल्पयति। चित्रमपीति। एकं तावन्न भवति, विरुद्धधर्म्माध्यासात, नाप्यनेकम्, एकज्ञानतादात्म्याभावप्रसङ्गात्, एतदेवाह। अनेकत्व इति। तव पश्यत इत्यनादरे षष्ठी, त्वां पश्यन्तमप्यनादृत्येत्यर्थः। नन्वाकारनिकरानुरोधाद्विज्ञानमपि भिद्यतामत आह। विज्ञानस्यापीति। तथा च त्वदनुमतं चित्राद्वैतमनुपपन्नमिति भावः॥

---

(१) भेदे—कलि० मु० पु० पा०।
(२) वस्तु—पुण० पु० पा०।
(३) ग्राह्यते—पुण० पु० पा०।
(४) चेत्य—पुण० पु० पा०।
(५) नमस्तीत्यर्थः-पुण० पु० पा०।
(६) कर्वुरानानेकगुणपरो वा-पुण० पु० पा०।

अनीलाद्यनेकव्यावृत्तिकृतोऽयम(१)नेकत्वाध्यवसाय इति(२) चेत्, अतादात्म्ये कथं व्यावृत्तीनामुल्लेखः। तादात्म्ये कथमनेकत्वम्। एकत्वे तु(३) क्व

दीधितिः।

भवतां नीलपीतादिरूपविलक्षणचित्ररूपवदस्माकं नीलाद्याकारविलक्षणो विज्ञानस्य चित्रा(४)कारः, तस्य चैकत्वेऽप्यनीलाकाराद्य(५)नेकव्यावृत्तिनिबन्धनस्तत्रानेकत्वोल्लेख इत्यभिसन्धि प्रकाशयति। अनीलेति। ता अपि व्यावृत्तयो विज्ञानाद्भिन्ना न वा। भिन्नाश्चेत्, कथं विज्ञानेन तद्ग्रहः(६), अगृहीतानां च तासां भेदाध्यवसायनिमित्तत्वम्। अभिन्नाश्चेत्, कथमेकज्ञानाभिन्नानां(७) तासामनेकत्वम्। एकत्वे च कथं तत्कृतो भेदाध्यवसाय इति निराकरोति। अतादात्म्य इति। स्यादेतत्। मा भूदनीलाद्यनेकव्यावृत्तिनिबन्धनोऽनेकत्वाध्यवसायः, स्वकारणसामर्थ्या(८)यातस्तु स्यात्, तच्चानेकत्वं काल्पनिकमिति न वास्तवीं(९) विकल्पैकतां विरुणद्धी-

दीधितिटिप्पणी।

इत्यभिसन्धिमिति। गूढाभिसन्धिरित्यनेन यस्या गूढत्वमुक्तं, तामित्यर्थः। स्वकारणेति। अनेकत्वाध्यवसायः स्वकारणबलादेव

(१) त्तिकृतो—कलि० मु० पु० पा०। (२) एवेति—कलि० मु० पु० पा०।

(३) एकत्वेपि—कलि० मु० पु० पा०। (४) चित्र आ—पुण० पु० पा०।

(५) अनीलादीति। अनीलादिप्रतियोगिका या अनेका व्यावृत्तयः तन्निबन्धन इत्यर्थः। तदवगमोपि प्रकृते अयथार्थ एव, चित्राकारे अनीलादिसामान्यव्यावृत्तेर्बाधितत्वादिति ध्येयम्।—गुणानन्दः।

(६) तद्ग्रह इति। स चास्माकं विषयीकरणम्, तेषां च तथाविधाकारवत्ता।—गुणानन्दः।

(७) एकज्ञानाभिन्नानामिति अभेदोपपादकतयाऽभिहितम्, आपादनेऽनुपयोगादिति। ध्येयम्।—गुणानन्दः। (८) सामर्थ्या—कलि० मु० पु० पा०।

(९) न वास्तवीमिति। वास्तवेन वास्तवस्यैव विरोधः न, काल्पनिकेनेति भावः।—गुणानन्दः।

तत्कृतोपि भेदाध्यवसायः । उल्लेखोयमस्य विज्ञानस्य यदनेकत्वं नाम, न पुनस्तत्त्वान्तरमिति चेत् , स्वरूपमस्वरूपं वेति वाच्यम् । आद्ये, अनेक(१)स्वरूपमेकमिति कोऽन्यो वदेदसु(२)स्थात् । द्वितीयस्त्विष्यत एवास्माभिः, किं तु त्वयेष्यताम् ! भ्रान्तिरसाविति चेत् , तस्यामपि स्वरूपमस्वरूपं वा प्रकाशेत, प्रकारा-

दीधितिः ।

स्याशङ्कते । उल्लेख इति । उल्लेखः उल्लेखमात्रम्(३), उल्लिख्यते परं विकल्पेनानेकत्वं न तु वास्तव(४)मित्यर्थः । स्वरूपमिति । तदनेकत्वं ज्ञानादभिन्नं(५) भिन्नं वेत्यर्थः । द्वितीय इति । ज्ञानेन स्वभिन्नस्यानेकत्वस्य प्रकाश इत्यर्थः । विकल्पस्य भ्रमत्वात्तत्रासत्प्रकाशो(६) न विरुद्ध्यते, असत्प्रकाशन(७)स्वभावत्वाद्भ्रान्तेः, विरुद्ध्यते तु निर्विकल्पके, तस्य सन्मा(८)त्रप्रकाशनशीलत्वादित्याशङ्कते । भ्रान्तिरसाविति । निराकरोति । तस्यामपीति । विकल्पेनान्यस्या(९)सत इव निर्विकल्पकेनाप्यन्यस्य

दीधितिटिप्पणी ।

भवतीत्यर्थः । उल्लिख्यत इति । विकल्पेन अनेकत्वं केवलं विषयीक्रियते, न तु वास्तवमनेकत्वमित्यर्थः । मूले, तत्त्वान्तरम् वस्त्वन्तरम् । विरुध्यते इति । असत्प्रकाश इत्यनुषज्यते । ननु तस्यामपीत्यादिनापि न पूर्वपक्षनिराकरणं, विकल्पेऽस्वरूपालीकप्रकाशस्य तेन स्वीकारात्, निर्विकल्पक एवान्यप्रकाशास्वीकारात्तो आव-

(१) मूले, अनेकेति । अनेकत्वस्यानेकानुल्लेखेऽनुल्लेखादिति हृदयेन ।—गुणानन्दः ।

(२) दस्व—पुण० पु० पा० ।

(३) उल्लेखमात्रमित्यनेन यल्लब्धं तन्निष्कृष्य आह । उल्लिख्यते परमिति ।—गुणानन्दः ।

(४) न पुनस्तत्त्वान्तरमित्यस्यार्थमाह । न तु वास्तवमिति ।—गुणानन्दः ।

(५) एकस्वरूपमिति मूलस्य एकज्ञानाभिन्नत्वमर्थमनुसृत्याह । ज्ञानादभिन्नमिति ।—गुणानन्दः ।

(६) असत्प्रकाशः, असतोऽनेकत्वस्य विषयता ।—गुणानन्दः ।

(७) असत्प्रकाशनेति । सदसतोरैक्यानुपपत्त्या तत्र भेदेपि विषयताभ्युपगमादिति भावः ।—गुणानन्दः ।

(८) तन्मा—कलि० मु० पु० पा० ।

(९) अन्यस्य, स्वभिन्नस्य । एवमग्रेपि ।—गुणानन्दः ।

न्तराभावादिति ।

दीधितिः ।

सतः प्रकाशनमविरुद्धम्, अन्येनान्यस्य सत इवासतोपि प्रकाशने(१), ऽतिप्रसङ्गः समानः, न हि घटादिविकल्पाः कूर्मरोमादिकमपि विषयीकुर्वन्ति, कारणसामर्थ्येन(२) नियमने तु निर्विकल्पकस्यापि न वार्यत इति ॥

दीधितिटिप्पणी ।

र्थमाह । विकल्पेनेति । विकल्पस्यालीकस्वरूपत्वापत्त्याऽस्वरूपमेवासदलीके भासत इत्यङ्गीकार्यं, तथा च यथा भिन्नं असत विकल्पे भासते तथा भिन्नं सत (नि)र्विकल्पके भासतां, विषयस्य सदसत्तानिबन्धन एव तयोर्भेदो भविष्यतीति। ननु निर्विकल्पके स्वभिन्नसतः प्रकाशनेऽतिप्रसङ्गः स्यादिति चेत्, तदा विकल्पेपि स्वभिन्नासतः प्रकाशने यावदन्यभानरूपातिप्रसङ्गः स्यादित्याह । अन्येति । ननु कारणसामर्थ्यादेव विकल्पस्य स्वभिन्नयत्किञ्चिदसद्विषयत्वं, तदा निर्विकल्पकस्यापि कारणसामर्थ्यादेव स्वभिन्नयत्किञ्चिद्विषयत्वमस्त्वित्याह । कारणेति ॥

कल्पलता ।

अत्र ज्ञानश्रियः समाधानं शङ्कते । अनीलादी(३)ति । तदुक्तं ज्ञानश्रिया,

"यदि स्वरूपमाकारा(४)स्त्रिन्नैकधियः(५) कथम् ।
भेदः प्रत्यात्मना(६) बुद्धेस्तदाऽन्योन्यस्य वेदनम् ॥
मिथस्तथा(७)पि वा वित्तौ(८) बाह्यवल्लक्षण(९)स्थितिः।
भेदेप्येवं धियस्तेषां प्रकाश(१०)घटना कथम् ॥"

(१) प्रकाशे—पुण० पु० पा० ।
(२) कारणसामर्थ्यम्, विकल्पवासनाविशेषादिः, अस्मन्नये अनुगतेन्द्रियसन्निकर्षादिः । —गुणानन्दः ।
(३) अनीले—कलि० मु० पु० पा० ।
(४) माकार—पुण० पु० पा० ।
(५) तैकावयवः—पुण० पु० पा० ।
(६) प्रत्यर्थता—कलि० मु० पु० पा० ।
(७) व्यावृत्ती—कलि० मु० पु० पा० ।
(८) त्तवा—पुण० पु० पा० ।
(९) वाह्यवस्तुक्षण—कलि० मु० पु० पा० ।
(१०) प्रकाशे—कलि० मु० पु० पा० ।

कल्पलता।

इत्याशङ्क्याह(१),

"अलीकमन्यत्वेऽपी(२)दं व्यावृत्त्यन्तरमीरितम्।"

तदे(३)तत्परिहरति। अतादात्म्य इति। व्यावृत्तयो यदि ज्ञानभिन्नास्तदा कथं प्रकाशन्ताम्। ज्ञानाभिन्ना एव चेत्तदा ज्ञाना(४)भेदेन तासामप्यभेद एवेति क्व चित्राकारत्वम्। नन्वस्तु व्यावृत्तीनामप्यभेद एवेत्यत आ(५)ह। एकत्वेपीति। तथा चानेकत्वाध्यवसायमात्रत्वं त्वनु(६)जानीम इति रत्नकीर्त्तेः स्ववचनविरोध इत्यर्थः। ननु प्रतिशब्दवदवास्तव एवायमुल्लेखः,न तु वास्तवः, येनानेकत्वं तदनुरोधात् ज्ञानस्य भवेदित्याशङ्कते। उल्लेखोयमिति। न पुनरिति। अनेकत्वमेव न वस्तुसिद्धं यच्चित्राकारे ज्ञाने त्वयाऽऽपाद्यत इत्यर्थः। परिहरति। स्वरूपमिति। यदनेकत्वमुल्लिख्यते तद्यदि ज्ञानस्वरूपमेव तदा ज्ञानस्यानेकत्वमवर्जनीयम्। अथा(७)स्वरूपं ज्ञानाद्भिन्न(८)मेव ज्ञानेनोल्लिख्यते तदा भेदेपि ग्राह्यग्राहकभाव इति सिद्धं नः समीहितमित्यर्थः। त्वयेति। तवेदमत्यन्तमनिष्टमित्यर्थः। असाविति। अनेकत्वावगाही चित्रप्रत्यय इत्यर्थः। भ्रान्तिरपि (हि) ज्ञानमेव, तत्रापि पूर्वोक्तो विकल्पस्तदवस्थ एवेत्यर्थः॥

---

(१) त्याभाशङ्क्यम्—पुण० पु० पा०।
(२) त्वेऽपी—पुण० पु० पा०।
(३) इति—पुण० पु० पा०।
(४) ज्ञान—पुण० पु० पा०।
(५) एवेत्या—कलि० मु० पु० पा०।
(६) ननु—पुण० पु० पा०।
(७) तथा—पुण० पु० पा०।
(८) ज्ञानभि—पुण० पु० पा०।

स्यादेतत्। यथाऽतत् तत्तया परिस्फुरदपि न वस्तुगत्या तदेव, तथा तदप्यतत्तया परि(१)स्फुरदपि नातदेवं, ततः स्वरूपस्यातत्तया प्रथनेपि न काचित्

दीधितिः।

ग्राह्यत्वं(२) हि ग्रहविशेष्यत्वं भेदे विरुद्ध्यते, तेन न निर्विकल्पकस्य स्व(३)भिन्नविशेष्यकत्वम्, न तु ग्रहविशेषणत्वमपि(४), भ्रान्तौ चान्यद्विशेषणमेव, न चा(५)सद्विशेषणभानादेव वस्तुनः(६) स्वरूपहानिरित्याशङ्कते। स्यादेतदिति। यथेति। यथा स्थाणुः पुरुषत्वेनावाह्यो(७) वा ज्ञानाकारो(८) वा वाह्यत्वेन भासमानो न पुरुषो न वा वाह्यः, तथाऽभिन्नो विकल्पोपि भिन्नत्वेन भासमानो न भिन्न इति ग्रहविशेष्यत्वं नानुपपन्नमित्यर्थः। अन्यस्यान्यत्र विशेषणत्वे सर्वस्य सर्वत्र विशेष-

दीधितिटिप्पणी।

स्वरूपमस्वरूपं वेत्यादिदूषणात्स्येत्यादि(९)ग्रन्थानुत्थानम्, एवं अस्वरूपस्येत्यादि पौनरुक्त्यापत्तेश्चाह। ग्राह्यत्वमित्यादि। तद्भावमाह। तेन नेति। तथा चास्माकं निर्विकल्पके यदुद्दिश्यते, तदेव इतरत्र विकल्प्यते, तत्र च विशेषणावगाहनाभावात्तदंशे नियमो न कल्प्यत इत्यर्थः। अन्यदिति। अन्यत् सतो विशेषणमेव भवतीत्यत्र न कोपि दोष इत्यर्थः। अतत्ताया विशेषणत्वात् विशेषणस्यास्वरूपत्वाङ्गीकारात् कथं प्रकृतानुपयोगोऽत आह। अन्यस्येति। यद्यतत्ता-

(१) तदप्यत्तया—पा० २ पु०।

(२) ज्ञानस्य भेदाभेदे साध्ये हेतुभूतं ग्राह्यत्वं ग्रहविशेष्यत्वरूपम्, तच्च प्रकारे नीलत्वादौ नास्त्येवेति न पूर्वोक्तो व्यभिचारादिदोष इति। (३) कस्यात्म—पुण० पु० पा०।

(४) न तु ग्रहविशेषणत्वमपीत्यत्र भेदे विरुद्ध्यत इत्यनुषज्यते।—गुणानन्द

(५) न वा—पुण० पु० पा०।

(६) वस्तुनः, ज्ञानस्य असद्विशेषणात्मकतया स्वरूपहानिः असत्त्वापत्तिः। तथा च नीलपीताकारवेदनं स्वस्य अनेकप्रकारकत्वमवगाहमानमपि न विरुद्ध्यत इति भावः।—गुणानन्दः।

(७) परनये त्वाह। अवाह्यो वेति।—गुणानन्दः।

(८) ज्ञानाकारो वेति। एतस्य अवाह्यत्वेपि सामान्यविशेषभावेन विकल्पः। पारमार्थिकवाह्यभिन्नत्वस्य अवाह्यपदार्थत्वात्। यद्वा वाह्यत्वं ज्ञानभिन्नत्वं, तथा च ज्ञानभिन्नभिन्नत्वमित्यागतम्, एतदपेक्षया लाघवादाह। ज्ञानाकारो वेति। स च ज्ञानादभिन्न एवेति भावः।—गुणानन्दः।

(९) स्येत्यादि, स्यादेतदित्यादीत्यर्थः।

ग्राह्यलक्षणक्षतिरिति चेत्, यद्यतत्त्वापि परिस्फुरन्ती स्वरूपमेवास्य स्यात्, स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः। अस्वरूपस्य कथं प्रकाश इति चेत्, यद्यपि तथा वक्ष्यामः, तथाप्यतत्त्वा कथं (तस्य) स्वरूपमितीतोपि दीयतां दृष्टिः।

---

दीधितिः ।

णत्वापातादनायत्या विशेषणत्वमप्यभेदेनैव त्वया वाच्यमित्याशयवान्निराकरोति । यदीति । अन्यस्यान्यविशेष्यत्वे सर्वस्य सर्वविशेष्यत्वं स्यादित्याशयवान्(१) शङ्कते । अस्वरूपस्येति । प्रकाशः ज्ञानविशेष्यत्वम् । भेदे विशेष्यत्वेऽतिप्रसङ्गेन(२) भेदे विशेषणत्वेऽतिप्रसङ्गो न वार्यत(३) इत्याशयवानाह । तथापीति । तस्माद्भेदे विशेषणत्ववत्(४)द्विशेष्यत्वमपि स्वीकार्यम्, परिहार्यं वा विशेष्यत्ववद्विशेषणत्वमपीत्युभयथापि पक्षहानिर्भवतामिति भावः ॥

दीधितिटिप्पणी ।

पीत्यादेः भावं प्रकाशयितुं शङ्कामुत्थापयति मूले, अस्वरूपस्येति । यद्वा भावार्थमेवाह । अस्वरूपस्येति । अतत्त्वाया विशेषणत्वात्तेन स्वरूपत्वं नाङ्गीक्रियत एव, तत्कथं तथापीति लगतीत्यत आह । भेदे विशेष्यत्व इति । वार्यत इत्यस्य तृतीयान्तं कर्तृ, तथा च येनाद्यातिप्रसङ्गं दर्शयसि, तदबाधितमिति भावः ॥

---

कल्पलता ।

न ह्यविद्यासमारोपिताकारः पर्यनुयोगमर्हतीति कीर्तिकीर्तित(५)माशङ्कते । स्यादेतदिति । अतादिति ।

---

(१) स्याशयेना—पुण० पु० पा० ।

(२) विशेष्यत्वेऽतिप्रसङ्गेनेत्यस्य कल्पितेन विशेष्येण समं ज्ञानाभेदेनेति शेषः ।—गुणानन्दः ।

(३) भेदे विशेष्यत्वेऽतिप्रसङ्गेन न भेदे विशेषणत्वेऽतिप्रसङ्गो वार्यते—पुण० पु० पा० ।

(४) विशेषणत्ववदित्यत्र भेदे इति प्राचीनमनुषज्यते ।—गुणानन्दः ।

(५) कीर्तिमत—कलि० मु० पु० पा० ।

कल्पलता ।

अरजतं शुक्तिस्वरूपं तत्तया रजततया स्फुरदपि यथा न वस्तुगत्या रजतमेव, तथा तदप्येकमपि ज्ञानं अतत्तया अनेकतया स्फुरदपि न वस्तुगत्या अनेकमेव, ततः स्वरूपस्य विज्ञानस्यातत्तयानेकतया स्फुरणेपि भेदेन ग्राह्यग्राहकभावो भवेदिति(१) नास्मन्मते ग्राह्यलक्षणक्षतिरित्यर्थः । यदीति । अतत्त्वा अनेकता चित्रप्रत्यये स्फुरन्ती यदि चित्रप्रत्ययात्मा भवेत्तदायं समाधिः स्यादपि, न त्वेवम्, एकस्य चित्रप्रत्ययस्यानेकात्मकत्व(२)प्रसङ्गस्य दुर्वारत्वादित्यर्थः । नन्व(३)तत्ता चेत् स्फुरति तदा सा स्वरूपमेव वाच्या, अस्वरूपस्य स्फुरणानुपपत्तेरित्याह । अस्वरूपस्येति । यद्यपीति । सर्वमास्वरूपमेव ग्राहकज्ञानभिन्नमेव स्फुरतीति ग्राह्यग्राहकलक्षणं वक्ष्याम एवेत्यर्थः । अतादिति । अस्वरूपमनेकत्वमित्यर्थः ॥

---

कश्चास्वरूपस्फुरणे दोषः । नायं भिन्नयोर्वेद्यवेद-

---

दीधितिः ।

स्वपक्षं स्थापयितुं पृच्छति । कश्चेति । ( अस्वरूपं वाह्यं ज्ञानभिन्नं, तस्य स्फुरणे इत्यर्थः । तत्र च ज्ञानाश्रियोक्तं दोषमाह । नायमित्यादि । ) विषयविषयिभावो न कार्यकारण(४)भावनिबन्धनः, ग्रहणे(५)न्द्रिययोरपि तत्प्रसङ्गात् । नापि व्या-

दीधितिटिप्पणी ।

वक्ष्याम इत्यादिना यदुक्तं, तदेवाह मूले, कश्चेति । कार्यकारण-

---

( १ ) भवत्येव—कलि० मु० पु० पा० ।

( २ ) स्यानेकत्व—पुण० पु० पा० । ( ३ ) ननु-कलि० मु० पु० पा० ।

( ४ ) कार्यकारणेति । कार्यं विषयी, कारणं विषयः, एतच्च निर्विकल्पकमभिप्रेत्य ।—गुणानन्दः ।

( ५ ) ग्रहणेति । इन्द्रियस्यापि कारणतया आत्मजन्ययावज्ज्ञानविषयत्वापत्तिरित्यर्थः । प्रकारस्य सविकल्पकविषयत्वे किं नियामकमित्यपि बोध्यम् ।—गुणानन्दः ।

कभावो व्यापारनिबन्धनः, नियतस्य तस्याभावात्, नापि जाति(१)निबन्धनः, कश्चित्कञ्चित्प्रति ज्ञेय इति-व्यवस्थानुपपत्तिप्रसङ्गात्, न हि निसर्गसिद्धानां गो-

दीधितिः।

पारनिबन्धनः, ज्ञानेनातीतानागतयोरर्थयोस्ताभ्यां(२) वा ज्ञाने व्यापाराधानायोगात्, वर्तमानार्थकस्थलेऽपि ज्ञाने व्यापारस्य योग्यस्य अनुपलम्भबाधात्, अयोग्ये च मानाभावात्, अर्थे ज्ञाततास्भ्युपगमेपि तस्या अव्यापकत्वेना(३)तन्त्रत्वात्। एतेन ज्ञाने आकाराधानमपि प्रत्युक्तम्। नियतस्येति। व्यापारा(४)धानेपि नियामकस्याभावात्, भावे वा व्यापारगवेषणवैयर्थ्यात्, तत(५) एव तत्सम्भवात्। नापि जातिनिबन्धनः, पट-

दीधितिटिप्पणी।

भावेति। ज्ञानं प्रति विषयस्य कारणत्वमिति कृत्वैव विषयविषयिभावो नेत्यर्थः। अर्थयोरिति सप्तमी। ननु वर्त्तमानस्थल एव तथा वक्तव्यमत आह। वर्त्तमानेति। तथापि अर्थेन ज्ञाने किञ्चिद्व्यापारो जन्यते इति वक्तुं न पार्यते, तस्यानुपलम्भादित्यर्थः। ननु ज्ञानेनैवार्थे ज्ञाततारूपव्यापारो जन्यते, इत्यत आह। अर्थ इति। अव्यापकत्वेनेति। अतीतविषयस्थले ज्ञातताजननासम्भवात्सार्वत्रिकत्वमित्यर्थः। एतेन अतीतादिस्थले कारणीभूतविषयासम्भवेन अव्यापकत्वेन। मूलीयासंमतिमाह। प्रत्युक्तमिति। वर्तमानार्थस्थलेपि व्यापाराधाने नियामकं नास्तीत्याह। व्यापारेति। तत एव व्यापाराधाननियामकादेव। तत्सम्भवात् विषयविषयिभावसम्भवात्। जातिश्च

(१) नापि तज्जाति—कलि० मु० पु० पा०।

(२) ताभ्याम्, अतीतानागताभ्यामर्थाभ्याम्।—गुणानन्दः।

(३) अव्यापकत्वेन, अतीतानागतार्थयोरसत्त्वेन। अतन्त्रत्वात्, विषयविषयिभावानियामकत्वात्।—गुणानन्दः। (४) आकारा—कलि० मु० पु० पा०। तत्र प्रकारीभूतधर्मं ज्ञातताधानात् सैव परम्परया तन्नियामिका स्यादत आह। व्यापाराधानेति।—गुणानन्दः।

(५) ततः, नियामकात्। तत्सम्भवात्, विषयिताख्यस्वरूपसम्भवात्।—गुणानन्दः।

त्वादीनामीदृशी रीतिरिति चेत् , नन्वयमभेदेपि दोष-स्तदवस्थ एव । तथाहि । स्वस्य वेदनमिति नायं व्यापारनिबन्धनो व्यवहारः, स्वात्मनि तदभावात् , नापि जातिनिबन्धनः साधारण्यप्रसङ्गात् , न हि जात्यैव गौः स्वात्मानं प्रति न तु परं प्रतीति नियमो दृष्टः, न च(१) ज्ञानं स्वस्यैव परस्यापि वेदनं, सर्वसर्वज्ञत्वापत्तेः।

दीधितिः ।

स्वादेर्नियामकत्वे पटादेः(२) सर्वज्ञानविषयतापत्तेः । ज्ञानत्वस्य नियामकत्वे सर्वज्ञानानां पटविषयत्वापत्तेः, तत्तत्पटादिव्यक्तिविषयतानियामकं च ज्ञानवैजात्यमनुपलम्भबाधितम् , समूहालम्बनादौ सङ्करप्रसङ्गश्चेति । स्वात्मनि तदभा(३)वात् व्यापाराभावात् । साधारण्यप्रसङ्गात् सर्वविषयत्वप्रसङ्गात् । अथ जात्यैव सर्वं विज्ञानं स्वविषय(४)मिति चेत् , किमिदं स्वं नाम । यद्येका(५) विज्ञानव्यक्तिः, सर्वेषां वि(६)ज्ञानानां तद्विषयतापत्तिः । अथ विज्ञानमात्रम् , सर्वेषां विज्ञानानां(७) सर्वविज्ञानविषयतापत्तिरिति ॥

दीधितिटिप्पणी ।

स्वविषयनिष्ठा ज्ञाननिष्ठा वा नियामिका वाच्या । आद्ये, पटत्वादेरिति । द्वितीये, ज्ञानत्वस्येति । ननु ज्ञाननिष्ठमेव तत्तद्विषयतानियामकं वैजात्यं वाच्यमत आह । तत्तदिति । कुत्रस्थलीयतदभावाद्रित्यस्य धारणं कृतमत आह । स्वात्मनीति । सम्बलितधारणम् ॥

---

कल्पलता ।

भेदेपि न ग्राह्यलक्षणक्षतिरिति स्वपक्षनिर्वाहाय

---

(१) न हि—पुण० पु० पा० ।
(२) पटस्य—पुण० पु० पा० । (३) तदसम्भ—पुण० पु० पा० ।
(४) स्वविषयक—पुण० पु० पा० । (५) यद्येक—पुण० पु० पा० ।
(६) सर्व—कलि० मु० पु० पा० । (७) सर्वेषां—पुण पु० पा० ।

कल्पलता ।

पृच्छति । कश्चेति । अस्वरूपं ज्ञानभिन्नं बाह्यं तत्स्फुरण इत्यर्थः । तत्र च ज्ञानाश्रियोक्तं दोषमाशङ्कते । नायमिति । ज्ञाने विषयेण व्यापार आधीयते, विषये ज्ञानेन वा । आद्ये व्युत्पादितेनैव(१) ज्ञानस्य विषयकृतो व्यापारोऽन्योन्या(२)ज्ञाने तावद्विषया(३)धीनो व्यापारोऽनुपलम्भबाधितः, उत्पादकतया तदीयत्वे चक्षुराद्यपि विषयः स्यात् । विषये च ज्ञानेन ज्ञाततारूपव्यापाराधानेऽतीतानागतविषयता भज्येत । तदुक्तम् ,

"उत्पादमात्रेऽतिशयान्तरे वा
ज्ञानात् प्रकाशो(४) न हि बाह्यराशेः ।
प्रकाशरूपस्य समुद्भवे तु(५)
प्रसह्य साधारणताप्रसङ्गः ॥"

इति । ननु जातिनिबन्धन एव विषयविषयिभावोऽस्तु भेदेपीत्यत आह । नापीति । तथा सति यदेकस्य ज्ञेयं तत्सर्वस्यैव स्यात् , एतदेवाह । न हीति । नन्वित्यामन्त्रणे । स्वात्मनीति । न हि तेनैव ज्ञानेन स्वात्मनि व्यापारः कश्चिदाधीयत इत्यर्थः । साधारण्येति । तद् ज्ञानम् सर्वस्यैव स्यादित्यर्थः । एतदेवाह । न हीति । ननु भवतु सर्वसाधारण्यं, को दोष इत्यत आह । न चेति ॥

---

न तत् कस्यचित्, किं तु वेदनमात्रमिति चेत्,

---

दीधितिः ।

स्वस्य (स्व)सम्वेदनमित्येवार्थो नोपेयत इत्याशङ्कते।न तत्क-

---

(१) उत्पाद्येतैव—पुण० पु० पा० ।
(२) रोन्योना—पुण० पु० पा० ।  (३) विषयता—कलि० मु० पु० पा० ।
(४) प्रकाशे—पुण० पु० पा० ।  (५) सम्भवेदा—पुन० पु० पा० ।

तथाऽपि स्वात्मन्यजडवत् परत्राप्य(१)जडं स्यात् परस्मिन्नन्धवत् स्वस्मिन्नप्यन्धं(२) प्रसज्येत, जात्यैव, तद्रूपत्वात्। जात्यापि स्व(३)कारणात् क्वचिन्नियतरूपमेव तदुत्पन्नमिति चेत्, नैवमुच्चैर्ब्रूयाः, परैरपि कदा-

दीधितिः।

स्यचिदिति। तदुक्तम्,

"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।
इयमेवात्मसम्वित्तिरस्य याऽजडरूपता॥" इति।

निराकरोति। तथापीति। अजडम् साक्षि(४)। अन्धम् असाक्षि। विज्ञानं स्वस्मिन्निव परस्मिन् बाह्येपि साक्षि(५) स्यात्, तथा च तत एव(६) सिद्धं बाह्यम्। अथ परस्मिन्नसाक्षि, स्वस्मिन्नपि साक्षि न स्यात्, तथा च(७) परासाक्षिकं तन्न सिद्ध्येत्, मानाभावात्(८)। अथ स्वपरासाक्षिकमपि विज्ञानं परमार्थसत्त्वेन(९) च व्यवह्रियते, तर्हि बाह्यमपि स्वपरासाक्षिकमेव परमार्थसदस्तु, व्यवह्रियतां च तत्त्वेनेति कुतो बाह्यार्थभङ्गः। बाधकात्प्रमाणादिति चेत्, बाधकं यदि स्वावि(१०)षयमपि बाधेत तदा विज्ञानमपि बाधेत, अविशेषादिति कुतो विज्ञा-

दीधितिटिप्पणी।

तर्हि बाह्यमपीति। प्रमाणाविषयत्वेपि सिद्धेरुभयत्र तुल्यत्वादित्यर्थः। अविषयमपि बाह्यम्। कथमितिबाधकरूपज्ञानस्यैव स्वाभि-

(१) वदन्यत्रापि—पा० २ पु०। (२) प्यन्धं वा—पा० २ पु०।

(३) स्वरूप—पा० २ पु०। (४) स्वसाक्षि—कलि० मु० पु० पा०।

(५) अनभ्युपगम्य विषयविषयिभावं तत्ताभ्यामनुसृत्याह। साक्षीति।—गुणानन्दः। (विषयविषयिणोर्भावः विषयविषयिभावः, उभयानुगतं व्यासज्यवृत्ति सम्बन्धमेकमनभ्युपेत्य तत्ताभ्याम् विषयताविषयिताभ्याम्, साक्ष्यसाक्षित्वे अनुसृत्येत्यर्थः।)

(६) तत एवेत्यस्य स्ववदिति शेषः।—गुणानन्दः। (७) तथा च, स्वासाक्षित्वे।—गुणानन्दः।

(८) मानाभावादिति। तत्साक्षिक एव तन्मानं तन्मते।—गुणानन्दः।

(९) तत्त्वेन, परमार्थसत्त्वेन।—गुणानन्दः। (१०) स्ववि—पुष० पु० पा०।

च्चिदेवं श्रूयेत(१)।

दीधितिः।

नवादः। स्वविषयमेव चेत्, कथं न परेण परसम्वेदनम् ॥

दीधितिटिप्पणी।

भिन्नबाह्यविषयत्वादित्यर्थः ॥

कल्पलता।

ननु न ज्ञानं स्वात्मानं प्रकाशयति येन प्रतिबन्दिरियं स्यात्, तदुक्तम्,

"विज्ञानं जडरूपे(२)भ्यो व्यावृत्तमुपजायते।
इयमेवात्मसम्वित्तिस्तस्य याऽजडरूपता ॥"

(यथा तथेत्ययं शून्यता यदुत्पादवारणात्"। इत्यादि।) तदेतदाशङ्कते। न तत्कस्याचिदिति। यथा-तदीया स्वात्मन्यजडरूपता तथा परं प्रति तथा स्यात्, परस्मिन्नेवं(३) चेत्स्वस्मिन्नपि तथा(४) स्यादिति सैव प्रतिबन्दिरित्याह। तथापीति। ननु परं प्रत्यजडं स्यादिति परमपि गृह्णीयादित्यर्थो वा परापेक्षयाप्यजडरूपतया व्यवह्रियतामिति वा। नाद्यः, उक्तदोषात्। नान्त्यः, इष्टापत्तेः। (नैवम्।) इयमेव चेत् स्वप्रकाशता तदा परप्रकाशतापीयमेव स्यादित्यविशेषापादनमात्रतात्पर्यकत्वात्, परप्रकाशे दोषस्यो-द्ध(५)रणीयत्वादिति। ननु स्वस्मिन्नजडं चेत् (तदा) परत्रापि तथा स्यात्, परत्रान्यं(६) चेत् तदा स्वस्मिन्न(७)पि तथा स्यादित्यत्र किमापादकमत आह। जा

(१) श्रूयते-पुण० पु० पा०।
(२) जडरागे-पुण० पु० पा०। (३) रिन्नत्य—पुण० पु० पा०।
(४) तथा—कलि० मु० पु० पा०। (५) स्योद्धा—पुण० पु० पा०।
(६) स्यात्, स्वन्यं—कलि० मु० पु० पा०। (७) तदाऽस्मास्व—पुण० पु० पा०।

कल्पलता ।

इयैवेति । तज्जातीयं यत्(१) तत्सर्वं प्रति तथैवेति ( तथा ) दर्शनादित्यर्थः । स्वकारणबलात् स्वस्मिन्नेव तद्(२)ज्ञरूपमित्याशङ्क्यते । जात्यापीति । तदेतत्तुल्य- मित्याह । नोच्चैरिति(३) ॥

अभेदोऽस्तु मा वा, भेदं तु प्रकाशमानत्वेन व्यासेधाम इति चेन्न; वस्तुनि भेदनिवृत्तेरेवाभेद(४) रूपत्वात् ।

दीधितिः ।

वस्तुनीति । तेषामलीकव्यावृत्तये ॥

दीधितिटिप्पणी ।

वस्तुनीतिपदप्रयोजनमाह । वस्तुनीतीति । तेषामलीके भेदनि वृत्तिसत्त्वेपि अलीकाभेदाशङ्काराभावात् ॥

कल्पलता ।

(५)ननु प्रकाशमानत्वादिभिर्हेतुभिर्ज्ञानाभेदो नीलादीनां न मया साध्यते, किन्तु ज्ञानाद्भेदमात्रं निराक्रियते, तथा चाभेदेपि प्रकाशमानतानिराकरण- मतन्त्रमित्याह। (६)अभेदे इति । भेदनिराकरणमेवा- भेदसाधनमिति न प्रकारभेद इत्याह । न वस्तुनीति । अलीके(७) भेदाभेदनिराकरणमसम्भवीत्यत उक्तं वस्तुनीति ॥

(१) यज्जातीय—पुण० पु० पा० । (२) स्वस्मिन्नेवा—पुण० पु० पा० ।
(३) नोच्चैरिति–नास्ति,—कलि० मु० पु० पा० । (४) दरव—पुण० पु० पा० ।
(५) तदेतत्तुल्यमित्याह । अभेद इति ।—कलि० मु० पु० पा० ।
(६) मतन्त्रमित्याह । जात्यापीति । तदेव तुल्यमित्याह ।—कलि० मु० पु० पा० ।
(७) अलीक—पुण० पु० पा० ।

अस्तु तर्हि भेदाभेदविधुरमेव चित्रम्, चेतोभेदे प्रकाशमानत्वायोगात्, अभेदे चित्रत्वानुपपत्तेरिति चेन्न, मिथोविरुद्ध(विधि)द्वयविधिवत् तदुभय(१)निषेधस्याप्येकत्र विरुद्धत्वात्। न च सोऽप्यस्त्विति वाच्यम्। स्याद्वादावतारे(२) तवापि दिगम्बरत्वप्रसङ्गात्।

दीधितिः।

चित्रत्वम् मिथोविरुद्धनीलपीताद्याकारत्वम्। मिथोविरुद्धेति। परस्परविरहरूपेत्यर्थः(३)। सोपि विरुद्ध(४)स्तदुभयनिषेधोपि। स्याद्वादावतार इति। स्यादिति तिङन्तप्रतिरूपको निपातोऽनेकान्तवाची। दिगम्बरो(५) वस्तूनां सत्त्वासत्त्वानिर्वचनीयत्वानि अनिर्द्धारितानि प्रतिजानीते। तथाहि, ते(६) सप्तभङ्गीनामकं नयमाचक्षते, स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यश्च(७), स्यादस्ति च नास्ति च, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति। वस्तु सत्त्वाश्रय इत्यनिर्धारितम्, तथाऽसत्त्वाश्रय इति, अनिर्वचनीयत्वाश्रय इति, सत्त्वाश्रय इति, सत्त्वानिर्वक्तव्यत्वाश्रय इति, असत्त्वा-

दीधितिटिप्पणी।

मिथोविरुद्धेत्यादिदूषणलग्नतार्थमाह। चित्रत्वमिति। ननु मिथोविरुद्धगोत्वाश्वत्वयोर्निषेधः एकत्र सम्भवत्येवेत्यत आह। मिथो विरुद्धेतीति। अनेकान्तः अनिर्धारणम्। स्यादस्तीत्यादिसप्तानामेव स्यादित्यस्यार्थं कथयित्वा विशिष्टवाक्यार्थं दर्शयति। वस्तु स

(१) वत् मिथोविरुद्धद्वय-पा० २ पु०। (२) वतारेपि-पा० २ पु०।

(३) मिथोविरुद्धयोर्गोत्वाश्वत्वयोर्निषेधौ न विरुद्धौ, अतो व्याचष्टे। परस्परविरहेति तच्च भेदाभेदरूपं प्रकृते।—गुणानन्दः।

(४) विरुद्ध इति। अपिर्भिन्नक्रमः। विरुद्धोऽपि तदुभयनिषेधः, भेदाभेदोभयनिषेधस्तत्रास्त्वित्यर्थः।—गुणानन्दः।

(५) दिगम्बरा—पुस्त० पु० पा०। (६) ते हि—पुस्त० पु० पा०।

(७) चावक्तव्यः—पुस्त० पु० पा०।

दीधितिः ।

निर्वक्तव्यत्वाश्रय इति, सत्त्वासत्त्वानिर्वचनीयत्वा(१)श्रय इति, एवं सप्तधाप्यनिर्धारितमि(२)त्यर्थः । एवं तथाप्यनिर्धारण-(मात्र)वादित्वे तन्मत एव प्रवेशः(३) स्यात्, तन्मतं च आनुभविकस्य सत्त्वस्य(४) प्रमाणान्तराबाध्यत्वेन निर्धारणात्, असत्त्वानिर्वचनीयत्व(५)योस्तत्र तत्र दूषितत्वात्, द्वयोर्द्वयोस्त्रयाणां वा विरोधेनैकत्रासम्भवात्, विरोध्युभयगोचरज्ञानस्य(६) संशयत्वेनाप्रमाणत्वाच्च समुच्चयपक्षस्य निरस्तत्वाद्दुष्टमिति भावः ॥

दीधितिटिप्पणी ।

त्वाश्रय इति । अनिर्धारितमिति स्यादित्यर्थकथनम् । सर्वत्रैव अनिर्धारितमिति सम्बन्धः । मूलं व्याचष्टे । तन्मतमिति । द्वयोर्द्वयोरेकत्राङ्गीकारं दूषयति । द्वयोरिति । तन्मतञ्चेति दुष्टमित्यनेनान्वयि ॥

कल्पलता ।

ननु नीलधवलाद्या(७)कारं चेतो न नीलधवलादि(८)भ्यो भिन्नं, नाप्यभिन्नं, भेदे सति नीलधवला(९)दीनां प्रकाशमानत्वं न स्यात्, अभेदे सति नीलधवलादीनामेकरूपतापत्तौ चित्र(१०)त्वमेव ज्ञानस्य भज्येतेत्यत आ(११)ह । अस्तु तर्हीति । यथा (गो)भेदाभेदावेकत्र विधातुं न शक्येते, तथा निषेद्धुमपीत्याह । मिथ इति । नन्वेकत्र विरुद्धोभयनिषेधयोर्यो विरोध आपाद्यते सोऽप्यस्तु, तथापि ज्ञानविषयत्वेन ज्ञानकुक्षिप्र-

(१) त्वानिर्वक्तव्या—पुण० पु० पा० । (२) र्धारित इ—कलि० मु० पु० पा०

(३) तन्मतप्रवेश एव—कलि० मु० पु० पा० ।

(४) च सत्त्वस्यानुभविकस्य—पुण० पु०

(५) त्वानिर्वक्तव्य—पुण० पु० पा० ।

(६) गोचरस्य ज्ञानस्य—कलि० मु० पु० पा० । (८) नीलादि—कलि० मु० पु० पा० ।

(७) नीलधवला—कलि० मु० पु० पा० । (१०) चित्ररूप—पुण० पु० पा० ।

(९) नीला—कलि० मु० पु० पा० ।

(११) भज्येतेत्या—पुण० पु० पा० ।

कल्पलता ।

विष्टत्वादित्यत आह । स्याद्वादेति । स्यादित्येवंरूपो वादः स्याद्वादः, तथा च यद्यदनिष्टमापाद्यते तत्र तत्रे(१)-ष्टतापादने दिगम्बरमतानुप्रवेश इत्यर्थः। यद्वा एवं गतत्रपस्य तव वस्त्रत्यागोपि न लज्जामापादयेदित्यर्थः॥

अस्तु तर्हि चतुःशिखरीशून्यमेव चित्रम्, आश्चर्यरूपत्वात्, एकानेक(त्व)विरहेपि सत्त्वमित्याश्चर्यार्थो हि चित्रशब्द इति चेत्। अथ चतुःशिखरशेखरमेव किं

दीधितिः ।

भेदाभेदौ तयोर्व्यतिरेकाविति चत्वारि शिखराणि कोटयः। अभेदः(२) तादात्म्यम् । एकनिषेधस्यापरविधिपर्यवसायित्वात् कथमेतत्, तत्राह। चित्रमिति । (विरुद्धं) चित्रत्वं कर्बुरत्वं नैतदुपपादकमत आह । आश्चर्येति । आश्चर्यमाह । एकानेकेति। एकत्वानेकत्वेत्यर्थः(३) । एकत्वम् अभेदः, अनेकत्वम् भेदः । चित्रं ज्ञानमिति प्रयोगे चित्रपदस्याश्चर्यार्थताव्याख्यानानुरोधादेव चेद्विरुद्धधर्मसंसर्गित्वमुपेयम्, तद्वरं प्रथमोपस्थितत्वाल्लाघवाच्च(च)तुःशिखरशालित्वमेवोपेयतामित्याह । अथेति । अथ

दीधितिटिप्पणी ।

शिखराणीत्यस्य व्याख्या, कोटय इति । ननु अभेदस्य भेदाभावरूपतया तद्व्यतिरेकश्च भेदरूपमेवेति कथं चत्वारीत्यत आह। अभेदस्तादात्म्यमिति । चित्रमितीति । इदमेवाश्चर्यमित्यर्थः । भेदाभेदयोरेव प्रकृते उपयोगादाह । एकत्वमिति । प्रथमोपस्थितत्वादिति ।

(१) तत्र तत्र तवे–पुण० पु० पा० ।

(२) नन्वभेदस्य भेदविरहरूपत्वात् त्रीण्येव शिखराणि, इत्यत आह । अभेद इति । यादृशं प्रमेयं तत्त्वाभेदसंसर्गे तथा व्यवहियतेरिति भावः।—गुणानन्दः।

(३) एकत्वानेकत्वेति । विरहपदस्य भेदपरत्वं यथाक्रमेण व्याघः।—गुणानन्दः।

न स्यात्, आश्चर्यरूपतायुक्तेस्तुल्यत्वात्। एकैकपक्षानुपपत्तिश्च यथा तन्निषेधपर्यवसायिनी, तथा तदितरविधि(१)पर्यवसायिन्यपि स्यादिति(२)।

दीधितिः।

तत्तत्पक्षानुपपत्त्याऽवश्यं तत्तदभावैर्भवितव्यम्, तत्राह। एकैकेति। परस्परनिषेधविधि(३)नान्तरीयकविधिनिषेधयोरेकतरनिषेधेऽपरविधिरप्यावश्यक इति॥

दीधितिटिप्पणी।

अभावज्ञानपूर्वं प्रतियोगिनोऽवश्यमुपस्थितिर्यत इत्यर्थः। तत्तदिति। परस्परविरुद्धानामेकत्रानुपपत्त्येत्यर्थः॥

कल्पलता।

अस्तित्वेति। भेदविधिः अभेदविधिःभेदनिषेधः अभेदनिषेध इति च(४)त्वारि शिखराणि(५) कोटयस्तच्छून्यमित्यर्थः। नायं चित्रशब्दः कर्बुरार्थः, किं त्वाश्चर्यार्थ इत्याह। एकानेकेति। नीलधवलाद्याकारं ज्ञानं नैकं(६), विरुद्धधर्माध्यासात्, नाप्यनेकं, तथा(७)प्रतिभासप्रसङ्गात्, एवं विरोधे सत्यपि चैतादृशं ज्ञानमितिमहदेवाश्चर्यमित्यर्थः। चतुष्कोटिशून्यतापेक्षया चतुष्कोटिसत्ताया(८) एव लाघवेनाभ्युपगन्तुमुचितत्वादित्याह। अथेति(९)। चतुःशि(१०)खरशेखरं चतुष्कोटिप्रधानमित्यर्थः। यथा शून्यतायामाश्चर्यं (तथा) चतुष्कोटिविधावपि(११), विरोधस्तूभयत्रापि तुल्य इ-

(१) तद्विधि—पा० २ पु०। (२) स्यात्—पा० २ पु०।
(३) विधिनिषेध—कलि० मु० पु० पा०। (४) तच्च—कलि० मु० पु० पा०।
(५) चत्वारि बुद्धविशेष—कलि० मु० पु० पा०।
(६) नैकं-नास्ति, पा० कलि० मु० पु०। (७) प्यनेकं प्रतिनियत-कलि० मु० पु० पा०।
(८) सत्ताया—पुण० पु० पा०। (९) अर्थेति—पुण० पु० पा०।
(१०) चतुष्कोटिशि—पुण० पु० पा०। (११) विचारमपि—पुण० पु० पा०।

कल्पलता ।

स्यादित्याह । आश्रयेति । नन्वे(१)कैकपक्षानुपपत्त्या सर्वकोट्यभावात् शून्यता स्यादित्यत आह । एकैकेति । यः पक्षो(२) नोपपद्यते तस्य यथा निषेधस्तथा तद्विपरीतपक्षस्यापि(३) विधिरित्यर्थः ॥

---

दीधितिः ।

किं चोक्तकोटिचतुष्टयाभाववत्तया चित्रज्ञानं गृह्यते न वा । न चेत्, न चित्रत्वसिद्धिः, स्व(४)वचन(५)विरोधश्च । गृह्यते चेत्, कोटिचतुष्टयभानमावश्यकम्, अभावमात्रग्रहे(६) चित्रत्वासिद्धिः । न च कोटिचतुष्टयात्मकमेकं विज्ञानं भवितुमर्हतीत्यनायत्या अन्यो(७)न्यस्य ग्रहणमभ्युपगन्तव्यम्, तथा च प्रमाणबाधितं चित्रस्य मिथोविरुद्धधर्म्मवदनेकस्याद्वैतमभेद(८)मुपे-

दीधितिटिप्पणी ।

अपि चेत्यस्याशयं(९) ददाति । किञ्चेति । न चित्रत्वसिद्धिरिति । उक्ताभावचतुष्टयवत्त्वमेव तस्य चित्रत्वं, तस्य यदि प्रमाणेनाग्रहणं न तत्सिद्धिरित्यर्थः । स्ववचनेति । ईदृशरीत्या चित्रं ज्ञानं न गृह्यते इति वचनेनैव विरोधः । एतद्वाक्यप्रविष्टप्रतियोगिकोटौ उक्तरीत्या ग्रहणनिरासानुपपत्त्याऽमानत्वादुक्तवाक्यस्य, इत एव तादृशग्रहणलाभात् । एतत्पर्यन्तं तत्राप्रतिभानमनुत्तरमिति मूलं व्याख्याय प्रतिभाने त्विति मूलं व्याचष्टे । गृह्यते चेदिति । ननु प्रतियोगिनं विनैवाभावचतुष्टयग्रहणाधीनमेव चित्रत्वमत आह । अभावमात्रेति । आश्रयाभाव एव तदेत्यर्थः । ननु कोटिचतुष्टयग्रहणे

---

( १ ) नार्थ—पुण० पु० पा० ।  ( २ ) पक्षे—कलि० मु० पु० पा० ।

( ३ ) पक्षस्य—कलि० मु० पु० पा० ।  ( ४ ) सिद्धिश्च—पुण० पु० पा० ।

( ५ ) स्ववचनेति । चतुःशिखरीशून्यमिति वचनं चतुःशिखरीगोचरज्ञानजनकं चेत्, तदा एकस्य चतुःशिखरतानुपपत्त्या विरोधः । तदजनने व्यर्थमेव स्ववचनमिति भावः ।—गुणानन्दः ।  ( ६ ) अभावमात्रेत्यत्र मात्रपदेन प्रतियोग्युपरागव्यवच्छेदः ।—गुणानन्दः ।

( ७ ) अन्ये—पुण० पु० पा० ।

( ८ ) अद्वैतमभेदमिति । अवधारणोपग्रन्थस्याद्वैतपदस्य छत्रेऽर्थविवरणम्, एवं द्वैतं भेदमित्यत्रेतनमपि ।—गुणानन्दः ।  ( ९ ) स्याशयं—पा० २ पु० ।

अपि चात्र वस्तुतश्चतुष्कोटिविरहे चेतसो भाषान्तरेणेदमुक्तम्,(१) यदनात्मान एवैताश्चतस्रः कोटयो भासन्ते न वा(२) प्रतिभान्तीति(३)। तत्राप्रतिभासनमनुत्तरम्। प्रतिभासने तु ग्राह्यलक्षणायोगेपि ग्राह्यभाव इति चित्रमेतत्। तथा च चित्राद्वैतादरं चित्रद्वैतमस्तु प्रतिभासनानुरोधादिति।

---

दीधितिः।

अथ चित्रस्य द्वैतं भेद एवाङ्गीक्रियताम्, तथा सति नीलपीताद्यनेकोल्लेखित्वमेकत्वं च ज्ञानस्यानुभूयमानमनुरुद्धं भवतीत्याह। अपि चेति। ग्राह्यलक्षणम् अभेदः॥

दीधितिटिप्पणी।

च को दोषोऽत आह। न चेति। प्रमाणबाधितं अद्वैतरूपमभेदमुपेक्ष्येति सम्बन्धः। मूले, भाषान्तरेणेति। तद्वचनेतरभाषया। इदम् वक्ष्यमाणोभयकोट्यन्यतरत्। उक्तम्, उपेयम्। अभावचतुष्टयस्यैव ज्ञानात्मकतया प्रतियोगिनस्तदनात्मकत्वमेवेत्यभिप्रेत्याह। अनात्मान इति॥

---

कल्पलता।

किं चैताश्चतस्रः कोटयो भासन्ते न वा। आद्ये ज्ञानाभिन्ना एव भासन्ते इति पक्षः स्ववचनविरोधादेव त्याज्यः। अभाने चतुष्कोटिशब्दप्रयोगस्यैवानुपपत्तिरित्याह। अपि चेति। चित्रद्वैतमिति। ग्राह्यलक्षणाभावेपि ग्रहणमित्येकं चित्रं, तच्च ग्रहणमेकत्वानेकत्वविधुरमिति तन्मतानुसारादपरश्चित्रमित्यर्थः॥

---

(१) मुक्तम्, यदमुक्तम्—पा० २ पु०। (२) न वा—पा० २ पु०।
(३) प्रतिभासन्त इति—पा० २ पु०।

स्यादेतत्। बहिरन्तरुभयत्रा(१)पि ग्राह्यलक्षणक्षतिरस्तु, प्रकाशमानत्वं तु नीलादीनामशक्यापह्नवम्, तावन्मात्रं चास्माकमभिमतमिति चेत्। तदेतद्विक्रीतगवीरक्षणम्। किमिदं हि प्रकाशमानत्वं यत् सर्वथा ग्राह्यलक्षणक्षतावपि न क्षीणम्। न प्रकाशसम्बन्धः, नियमानुपपत्तेरित्युक्तम्। न प्रकाशतादात्म्यम्, चित्रत्वा(२)नुपपत्तेरित्युक्तम्। तस्मान्नीलादीनां प्रकाशमानत्वं परिपालयता ग्राह्यलक्षणे यत्नः कर्तव्यः, परिहर्तव्यं वा प्रकाशमानत्वम्। अन्यथा तपनीयमपनीय वाससि ग्रन्थिकर्तार-

दीधितिः।

नीलादीनां वाह्यत्वे ज्ञानात्मकत्वे च ग्राह्यत्वासम्भवात्तन्मास्तु, प्रकाशमानत्वादेव तेषां ज्ञानाभेदः साधयितव्य इत्याशङ्कते। स्यादेतदिति। ग्रहणानां क्वाचित्कनीलपीताद्याकारस्य कारणतया वाह्यं नीलादिकमुपेयम्। आकारं परित्यज्य वाह्याङ्गीकरणं काञ्चनपरिहारेण(३) वसने ग्रन्थिः, वाह्यत्यागे नीलादीनामसम्भवतः प्रकाशमानत्वस्य हेतुत्वेनोपादानं गगने

दीधितिटिप्पणी।

ग्राह्यत्वासम्भवादिति। वाह्यत्वपक्षे अतिप्रसङ्गापत्त्या ज्ञानात्मकत्वे च चित्रत्वानुपपत्त्या नीलादीनां ग्राह्यत्वरूपहेत्वसम्भव इत्यर्थः। तत् ग्राह्यत्वरूपं हेतुर्मास्तु। तेषाम् नीलादीनाम्। उपेयम्, आकारवादिना नैयायिकेन, वाह्याङ्गीकारे युक्त्यन्तराभावात्। वाह्याङ्गीकरणं नैयायिकैः, यथा सुवर्णार्थमुपादेयस्य ग्रन्थेस्तेन विनैवोपादानं हास्यकारि, तथा आकारार्थमुपादेयवाह्यस्य नियामकं स्वाकारं विनैवाङ्गीकरणमपि तथेति। यदाकारवादिनैयायिकयोर्विमत्यैतद्भवता दूषितं, इदानीं ततोपि भवन्मतं हास्यास्पदमिति समुदा-

(१) भयथा—कलि० मु० पु० पा०। (२) चित्रा—[illegible] पु०।
(३) परित्यागेन-पुनः पु० पा०।

मुपहससि, स्वयं च कलकमुपादाय गगनाञ्चले ग्रन्थिं करोषीति। सेयं (सर्वप्रकारमसिद्धिः) सर्वप्रकारं

दीधितिः।

ग्रन्थिः। सर्वप्रकारमिति। यदि क्वचिद्भेदे(१)पि ग्राह्यत्वं यदि वा न क्वापि भेदे ग्राह्यत्वमुभयथापि विपक्षे बाधकाभावान्न व्याप्तिसिद्धिः। एवं भेदे ग्राह्यत्वे ग्राह्यत्वादे(२)र्विपक्षवृत्तित्वं, भेदे चाग्राह्यत्वे स्वप्रकाशनिषेधात् चित्र(३)प्रत्ययानुपपत्त्या चाभेदे ग्राह्यत्वायोगात् सपक्षविपक्षव्यावृत्तत्वमित्येके वदन्ति।

दीधितिटिप्पणी।

यार्थः। उभयथाऽपीति। तथा च तन्मते सर्वप्रकारपदमुभयमत-परमिति भावः। न व्याप्तिसिद्धिरिति। असिद्धिपदं व्याप्यत्वासि-द्धिमात्रपरमिति भावः। अनैकान्तिकमिति व्याचष्टे। एवमिति। अत्रापि सर्वप्रकारपदं तथैव बोध्यमित्याह। भेद इति। ग्राह्यत्वादेः ग्राह्यत्वादिहेतोः। विपक्षेति। विपक्षवृत्तित्वरूपमनैकान्तिकत्वमित्य-र्थः। स्वप्रकाशेति। ग्राह्यत्वरूपहेतोर्देशभेदात् सपक्षवृत्तित्वं नास्ति। स्वप्रकाशनिषेधात् स्वग्राह्यत्वाभावात्। ननु स्वप्रकाशनिषेधेपि नीलादिना सममभेदेनैव ग्राह्यत्वस्य सपक्षवृत्तित्वमत आह। चित्रेति। भेदे ग्राह्यत्वस्य भवदनभ्युपगमात् तदेव विपक्षवृत्तित्वं, तथाच सा-धारणानैकान्तिकत्वमित्यर्थः। सर्वज्ञानमिति ज्ञानद्वयाभेदेपि ग्राह्यत्व-स्य नैयायिकैरप्यङ्गीकारात् सपक्षवृत्तित्वमस्तीत्यस्वरससूचनाय एक

(१) क्वचिदिति। किञ्चिज्ज्ञानग्राह्यत्वं भेदेपि यदि तदा एतज्ज्ञानग्राह्यत्वेन एतदभेदे सा-ध्ये अप्रयोजकत्वान्न व्याप्तिग्रहः। भेदेपि ज्ञानान्तरविषयत्ववत् एतज्ज्ञानविषयत्वस्याप्युपपत्तेः। यदि च न क्वापि भेदे ग्राह्यत्वं तदा विपक्षे बाधकाभावः। विपक्षे बाधकग्राहकप्रमाणस्य परस्प-रविरुद्धनानापदार्थाभेदानुपपत्त्या तदनवतारे कथं व्याप्तिसिद्धिरित्यर्थः। इदमुपलक्षणम्, व्या-प्तेरपि नानापदार्थघटिततया एकस्मिन्ज्ञाने तदात्मकत्वानुपपत्त्या व्याप्तेरपि कथं प्रसिद्धिरित्यपि बोध्यम्।–गुणानन्दः।

(२) ग्राह्यत्वादेरित्यादिपदात् प्रकाशमानत्वादिपरिग्रहः।–गुणानन्दः।

(३) स्वप्रकाशनिषेधस्य प्रसाध्याङ्गकत्वादाह। चित्रेति। हेतुद्वयं सपक्षव्यावृत्तत्वमात्रा-न्वयि। तन्नये च सर्वप्रकारं भेदे ग्राह्यत्वे अग्राह्यत्वरूपमभ्युपगच्छत इत्यध्याहारेण भङ्गसमर्थनं बोध्यम्।–गुणानन्दः।

चानैकान्तिकत्व(१)मिति ।

---

दीधितिः ।

अन्ये पुनः (स) प्रकारमसिद्ध्यादेरेवाहुः । तथाहि, नीलादेर्ज्ञानाकारस्य निरा(२)कारज्ञानवादिनां, बाह्यस्य च विज्ञानवादिना(३)म(४)सिद्धत्वादुभयसाधारणनीलत्वाद्यभावात्, ज्ञाने सिद्धसाधनात्, बा(५)ह्ये च बाधात्, आश्रयविशेषणसन्देहाभावा(६)च्चा(७)श्रयासिद्धिः, स्वप्रकाशनिषेधात् सहोपलम्भनियमस्य(८) स्वरूपासिद्धिः, विपक्षे बाधकाभावात् तदवृत्तिधर्मशून्यत्वस्योपाधित्वाच्च सर्वेषां व्याप्यत्वासिद्धिः । एवं(९) सर्वेषां पक्ष-

दीधितिटिप्पणी ।

इति । असिद्ध्यादेरिति । आदिशब्देनानैकान्तिकपरिग्रहः । तथा च सर्वा असिद्धयः सर्वाणि चानैकान्तिकानीति सर्वप्रकारपदार्थः । नीलादेरिति । नीलाकारज्ञानं पक्षीकर्तुं न शक्यते, नैयायिकमतेऽसिद्धत्वात् । बाह्यं च न शक्यते, इतरवादिनाऽनङ्गीकारादित्यर्थः । ननु ज्ञानत्वरूपेण पक्षीकर्तव्यं नीलत्वादिरूपेणैव वात आह । ज्ञान इति । तथा च सिद्धसाधनबाधनिबन्धना पक्षेऽसन्देहात् सन्दिग्धसाध्यकत्वरूपविशेषणाभावादाश्रयासिद्धिरित्यर्थः । सर्वा असिद्धीर्दर्शयित्वा सर्वान्व्यभिचारान्दर्शयति । एवमिति । ननु तत्तदंशग्राह्यत्व-

---

(१) चानैकान्तिक––पुण० पु० पा० । (२) नीला–कलि० मु० पु० पा० ।

(३) विज्ञानवादिनामित्यत्र असिद्धत्वादित्यनुषज्यते । बाह्यस्येत्यत्र नीलादेरिति प्राक्तनम् । उभयेति । ज्ञानाकारो बाह्यञ्चेत्युभयम् । तथा च ज्ञानात्मकस्य पक्षत्वे सिद्धसाधनम्, बाह्यस्य च तत्त्वे बाध इति । इदमुपलक्षणम्, उभयसाधारणतदुपगमेऽपि अंशतः सिद्धसाधनात् । तन्मये पक्षतावच्छेदकावच्छेदेन सिद्धेरुद्देश्यत्वे अंशतो बाधोद्धारो दुर्वार एवेति ध्येयम् । गुणानन्दः ।

(४) निराकारज्ञानवादिनां अ–पुण० पु० पा० ।

(५) ग्रा–पुण० पु० पा० । (६) सन्देहाभावादिति । तस्य पक्षतात्वमभ्युपेत्य, न चेत् साधकबाधकमानाभावरूपतद्योग्यतापरं तत्पदमिति ध्येयम् ।–गुणानन्दः ।

(७) बाधा–पुण० पु० पा० । (८) सहोपलम्भनियमः, ज्ञानाविषयकत्वधीविषयत्वम् । विपक्षे बाधकाभावादिति व्याप्तिग्रहरूपव्याप्यत्वासिद्धिसम्पादनाय । व्याप्यताभावरूपव्याप्यत्वासिद्धिसम्पादनायाह । तदवृत्तीति । प्रकाशावृत्तीत्यर्थः । साधनाव्यापकत्वसन्देहाधीनत्वात् सन्दिग्धोपाधिः । अनौपाधिकत्वरूपव्याप्तेरभाव इति भावः । यद्वा अनौपाधिकत्वस्य विपक्षबाधकत्वमाशङ्क्य निराकरोति । तदवृत्तीति ।—गुणानन्दः ।

(९) सर्वेषां हेतूनां सर्वप्रकारमनैकान्तिकत्वं व्युत्पादयति । एवमित्यादि । केवलान्वयि-

दीधितिः ।

त्वेऽनुपसंहार्यत्वम्, विशिष्य पक्षत्वे तज्ज्ञानाभेदे साध्ये ग्राह्य-त्वस्य साधारण्यम्, तज्ज्ञानग्राह्यत्वस्य च स्वप्रकाशनिषेधाद-साधारण्यम्, साधारण्यमपि विचित्रज्ञानवेद्येऽलीके भेद इति । केचित्तु प्रकारो विचारस्ये(१)त्याहुः ॥

दीधितिटिप्पणी ।

मेव हेतूक्रियतामत आह । तज्ज्ञानेति । अलीक इति । अलीकेन सम-सम्भेदस्य तैरनङ्गीकारादित्यर्थः । सन्देहाद्यभावे आश्रयासिद्धौ माना-भाव इत्यस्वरसश्च अन्ये इत्यनेन सूचितः । केचित्त्विति । तथाच सर्वप्रकारमित्यस्य सर्वप्रकारेण विचारे क्रियमाण इत्यर्थः ॥

कल्पलता ।

ननु नीलादयः प्रकाशात्मानः, प्रकाशमानत्वादि-त्येतावन्मात्रम(त्रा)स्मदभिमतं, न तु स्वस्य परस्य वा वेदनमित्यस्मदभिमतमित्याशङ्कते । स्यादेतदिति । तदुक्तं(२) ज्ञानश्रिया,

"प्रकाशमानं नीलादि जडं वाऽजडमेव वा ।

इति प्रकरणेऽस्माभिर्बुद्धित्वे(३) हेतुरुच्यते ॥" इति ।

बहिरन्तरिति । स्वसंवेदने परसंवेदने वा ग्राह्यलक्षणक्षतिरस्त्वित्यर्थः । नीलादीनां प्रकाशमानत्वं त्वयैव दूरीकृतं, त्वयैव च ज्ञानाभिन्नत्वे साध्ये हेतुत्वेनोपादीयत इत्युपहसति । तदेतदिति । न प्रकाशेति । व्यापाराधानमन्तरेण नियमानुपपत्तेरिति त्वया-चिन्तितम्, न प्रकाशतादात्म्यं विरुद्धधर्माध्यासेन(४) चि-

धर्मावच्छिन्नपक्षताकत्वस्य प्राचां मते तत्त्वात् । ज्ञानान्तरे ग्राह्यत्ववति तज्ज्ञानभेदात् तन्नयमाल-म्ब्य तज्ज्ञानग्राह्यत्वस्य साधारण्यं व्युत्पादयति । साधारण्यमिति । एतन्नये सिद्धेरभाव एवासि-द्धि, अव्ययीभावाच्च नपुंसकम्, तद्विशेषणं च सर्वप्रकारमिति ध्येयम् ।—गुणानन्दः । विचि-त्रस्य—कलि० मु० पु० पा० । (४) ध्यासे—पुण० पु० पा० ।

(१) विचारस्येति । एतन्नये कुर्वत इत्यध्याहारेण समन्वयो वोध्यः ।—गुणानन्दः । (२) उक्तं—पण० पु० पा० ।

(३) बुद्धि—पुण० पु० पा० ।

कल्पलता ।

त्राकारज्ञानस्य भेदप्रसङ्गादिति मयोक्तं, तथा चोभ-यथापि प्रकाशमानत्वं नीलादीनामनुपपन्नं, तथा च भेदेपि विषयविषयिभावोभ्युपगन्तव्य(१) इत्युपसंह-र(२)ति। ( तस्मादिति । ) अत्र ज्ञानश्रिया तदय(३)-माकारबाह्यतामतिवाह्य (बाह्य)वादव्यसनिनो भेद-साधनविधिस्तपनीयमपनीय वाससि ग्रन्थिकरणवृ-त्तान्तमनुहरतीति सोल्प्रा(४)समुक्तं, तदिदानीमवसर-प्राप्तेनोपहासान्तरेण शिथि(५)लयन्नाह। अन्यथेति। नीलादीनां ज्ञानाकारता तावत्(६) तपनीयं, तत्त्वया परित्यक्तं, बाह्यरक्षा(७) वाससि ग्रन्थिः स च क्रियते। तच्चानुपपन्नम्। न हि ज्ञानाकारतिरस्कारे ग्राह्यलक्ष-णस्थितिरिति(८) परोपहासार्थः। यथा भेदे ग्राह्यलक्ष-णाभावस्तथा स्वसम्वेदनेपि, तथा च सर्वथा ग्राह्यलक्ष-णाभावेपि प्रकाशमानत्वस्य गगनाञ्चलग्रन्थेः करणमि-ति परं प्रति नैयायिकानामुपहासः। सेयमिति। नीला-दि(९) ज्ञानाभिन्नं प्रकाशमानत्वात्, सहोपलम्भाद्धेत्या-दि(१०)हेतूनां नीलादिबा(११)ह्यानभ्युपगमे आश्र-यासिद्धत्वं, अभेदे भेदेपि च(१२) ग्राह्यलक्षणाभावात् स्वरूपासिद्ध(त्व)म्। तद्वृत्तियावद्धर्म्मवत्त्वं हि तदभेदे साध्ये(१३)उपाधिरिति सोपाधित्वाद्व्याप्यत्वा(१४)-

(१) गम्यत--पुग० पु० पा०। (२) इत्युपदस--पुग० पु० पा०।
(३) तदुद--कलि० मु० पु० पा०। (४) सोढा--पुग० पु० पा०।
(५) ग्रन्थि--पुग० पु० पा०। (६) ज्ञानाकारभावं--कलि० मु० पु० पा०।
(७) बाह्यं वस्तु--कलि० मु० पु० पा०। (८) स्थितिर--कलि० मु० पु० पा०।
(९) नीलं--कलि० मु० पु० पा०। (१०) द्धेत्यादी--कलि० मु० पु० पा०।
(११) दिग्रा--पुग० पु० पा०। (१२) भेदेऽभेदः--पुग० पु० पा०।
(१३) साध्ये--नास्ति, पा० पुग० पु०। (१४) सोपाधित्वा--पुग० पु० पा०।

कल्पलता।

सिद्धत्वं चेत्यर्थः। सर्वेति। प्रकाशमानत्वात्सहोपलम्भाद्देत्व(१)स्यालीके भेदेपि गतत्वात् साधारणत्वं, स(२)पक्षविपक्षव्यावृत्तत्वाच्चा(३)ऽसाधारणत्वम्, अत एव चानुपसंहारित्वं चेत्यर्थः। यद्यप्येकत्र साधारणानैकान्तिकत्वमसाधारणानैकान्तिकत्वं चानुपपन्नम्, तथापि विकल्प ग(४)त्नीयमिति॥

एतेन द्वितीयः (पक्षः) प्रत्युक्तः। न हि सजा(५)तीयत्वेन ग्राह्यलक्षणवैधुर्यमुत्सार्यते, अतिप्रसङ्गस्य तादवस्थ्यात्। जडत्वे प्रकाशासम्भावनैवेति चेन्न। तु-

दीधितिः।

एतेन ग्राह्यलक्षणवैधुर्येण असिद्ध(६)त्वेन च। द्वितीयः पक्षः अभिन्नजातीयत्वम्। अतिप्रसङ्गस्येति। साजात्यस्य नियामकत्वे सर्वज्ञानानां सर्व(७)ग्राह्यत्वापातादित्यर्थः। प्रकाशकत्वं प्रकाश्यत्वव्यापक(त्व)म्, न च विना व्यापकं व्याप्यसम्भव इत्याशङ्कते। जडत्व इति। जडत्वम् अप्रकाशकत्वम्। प्रकाश(८)सम्भावना प्रकाश्यत्वासम्भावना। ज्ञानजातीयमपि किञ्चिदेव किञ्चिद्गृह्णाति न सर्वं सर्वम्, अत्र यद्भेदो नियामको न

दीधितिटिप्पणी।

ननु जडत्वे प्रकाशकत्वस्यैवासम्भवे नाप्रकाशविषयत्वस्य सम्भव अत आह। प्रकाशकत्वमिति। प्रकाशकमपीत्येव वक्तुं युक्तमत आह।

(१) प्रकाशमानत्व--पुण० पु० पा०। (२) स च--पुण० पु० पा०।
(३) व्यावृत्तत्वाच्च--पुण० पु० पा०। (४) ग--पुण० पु० पा०।
(५) सज्जा-पा० २ पु०।
(६) ज्ञानान्तरस्य ज्ञानान्तरेण विषयीकरणे अभेदेन ग्राह्यग्राहकभावस्य वैधुर्येण असम्भवेन। असिद्धत्वेन, स्वप्रकाशनिषेधात् सहोपलम्भनियमस्यासिद्धत्वेन, विपक्षे बाधकाभावाद्व्याप्यत्वासिद्धत्वेन वा।—गुणानन्दः। ग्राह्यलक्षणवैधुर्येण सि—पुण० पु० पा०।
(७) सर्वज्ञान—पुण० पु० पा०। (८) प्रकाश—पुण० पु० पा०।

त्य(१)त्वात्। यथा ह्यस्वसम्वेदनवादिनः परं प्रति प्रकाशमपि ज्ञानमात्मनि जडमेव, तथा स्वसम्वेदनमात्र(२)-वादिनोऽपि। स्वा(३)त्मनि प्रकाशमान(४)मपि ज्ञानं परं प्रति जडमेव। कथञ्चित् बुद्ध्यन्तरेप्यजडं(५) चेत्, बाह्येपि तथा(६) किं न स्यादिति सन्दिग्धविपक्षवृत्तित्वम्।

दीधितिः।

तर्ह्यन्येन ज्ञानेनान्यज्ञानग्रहणम्। अथ कारणसामर्थ्यम्, तदा बाह्यस्यापि ग्रहणम्, बाधकाभावादित्याह। तुल्यत्वादिति। प्रकाशयतीति प्रकाशम्(७), इन्द्रियसन्निकर्षादि(८)विरहादात्मनि जडमेव, अभेदविरहात्(९) परं प्रति जडमेव, तथा च स्वमात्रसम्वेदनवादिना(१०)मिव तवापि नान्येनान्यग्रहणम्, कथञ्चित् स्वकारण(११)सामर्थ्यात् ज्ञानत्वे(१२) साध्ये ग्राह्यत्वस्य हेतोः सन्दिग्धविपक्षवृत्तित्व(१३)मित्याखण्डलार्थः॥

दीधितिटिप्पणी।

प्रकाशयतीति। ननु स्वमात्रसंवेदनवादिन एव मूलोक्तो दोषः, न तु स्वजातीयसंवेदनवादिनाम् इति मूलेन कल्योपरि दूषणं दत्तमत आह। तथा चेति। स्वतज्जातीयसंवेदनवादिनः नान्येनान्यग्रहणं स्यात्॥

(१) अतु-पा० २ पु०। (२) स्वसम्वेदन-कलि० मु० पु० पा०।

(३) आ—पुण० पु० पा०। (४) प्रकाश—कलि० मु० पु० पा०।

(५) प्यजडमेवेति—पा० २ पु०। (६) तथैव—पा० २ पु०।

(७) घञन्तत्वे नपुंसकत्वानुपपत्तेराह। प्रकाशयतीति।—गुणानन्दः।

(८) आत्मनि जाड्ये हेत्वाकाङ्क्षायामाह। इन्द्रियसन्निकर्षादीति। विरहो जन्यतासम्बन्धेन।—गुणानन्दः। (९) परं प्रति जाड्ये हेतुं पूरयति। अभेदविरहादिति।—गुणानन्दः।

(१०) स्वसम्वेदनमात्रवादिनामित्यत्र यथाश्रुते मात्रस्य प्रकृतार्थासम्पादकत्वात् पाठित्वाच्चाह। स्वमात्रेति।—गुणानन्दः।

(११) कथञ्चिदित्यस्य सजातीयत्व इत्यर्थे बाह्येपीत्यस्यासङ्गतेराह। स्वकारणेति।—गुणानन्दः।

(१२) सन्दिग्धानैकान्तिकत्वस्य साध्यहेत्वाकाङ्क्षायामाह। ज्ञानत्व इत्यादि।—गुणानन्दः। ज्ञानत्वेन—कलि० मु० पु० पा०। (१३) विपक्षस्य साध्याभाववतः स्वरूपेण वा सन्देहस्य हेतुदोषाभावात्पूरयति। वृत्तित्वमिति।—गुणानन्दः।

कल्पलता।

एतेनेति। ग्राह्यलक्षणाभावेनेत्यर्थः। अनैकान्तिकत्वेनेत्यन्ये। द्वितीयः पक्षः नीलादीनां ज्ञानाभिन्नजातीयत्वम्। स्वजातीयस्यापि ग्रहे ग्राह्यलक्षणक्षतिस्तदवस्थेत्याह। न हीति(१)। अतिप्रसङ्गस्येति। घटपटादीनां सर्वेषां ज्ञानजातीयतया घटज्ञानस्य पटविषयत्वप्रसङ्गस्तदवस्थ एवेत्यर्थः। प्रकाशमानत्वेन ज्ञान(स)जातीयत्वं सेत्स्यति, जडस्य प्रकाशमान(२)त्वानुपपत्ति(३)रित्याशङ्कते। जडत्व इति। तुल्यत्वादिति। यथा भिन्नतया जडं न प्रकाशते तथै(४)वाजडमपीत्यर्थः। एतदेवाह। यथा हीति। नैयायिकानां ज्ञानं स्वात्मनि जडं, बौद्धानां तु स्वभिन्नज्ञानजातीयमपि जडमेव, तथा च तदपि कथं गृह्णीयादित्यर्थः। ननु ज्ञानजातीयं स्वभिन्नमपि प्रकाशयति, न तु जडजातीयमित्यत आह। कथञ्चिदिति। ज्ञानानां स्वभिन्नप्रकाशनसामर्थ्यं यदि तदा स्वभिन्नं जडमपि प्रकाशयत्विति विपक्षे(५) बाधकाभाव इत्यर्थः॥

ननु बाह्ये सर्वथैव ग्राह्यलक्षणक्षतिः, इह तु

दीधितिः।

स्यादेतत्। भेदस्य(६) साजात्यस्य वा ग्राह्यत्वनियामकत्वेऽतिप्रसङ्गा(७)दभेदस्य तथात्वे च चित्रप्रत्ययानुपपत्तेर्नै(८)तद-

(१) नहीति—नास्ति पा० पुण० पु०। (२) प्रकाश—कलि० मु० पु० पा०।

(३) नुपपत्ते—पुण० पु० पा०। (४) तद्वदे—कलि० मु० पु० पा०।

(५) विपक्ष—पुण० पु० पा०।

(६) साजात्ये अभेदे वा ग्राह्यत्वसम्भवे समानोपादानकत्वस्य नियामकत्वानुसरणानुपपत्तेर्बाह्य इव तत्राप्यनुपपत्तिमाह। भेदस्येति। ज्ञानभेदस्य बाह्यत्वन्येत्यर्थः। यद्वा भेदस्य स्वभेदस्य। साजात्यस्य स्वसमानजातीयत्वस्य ज्ञानत्वस्येति यावत्।—गुणानन्दः।

(७) अतिप्रसङ्गात्, सर्वेषां बाह्यानां स्वभिन्नानां ज्ञानानां च सर्वेषां स्वविषयत्वापातात्।—गुणानन्दः। (८) ने—कलि० मु० पु० पा०।

समानोपादानतानियमेन चित्राकाराणां परमार्थभिन्नानामेव व्यतिवेद(१)नसिद्धिः । न । मिथः प्रथानि-

दीधितिः ।

(२)स्तु, अभिन्नोपादानकत्वं तु तथा(३) भवेत्, न च बाह्य(४)विज्ञानयोरेकोपादानकत्वं(५) नाम, सजातीयकारण(६)स्यैवोपादानत्वात्, तच्च स्वस्येव स्वसहोत्पन्नस्य विज्ञानान्तरस्याप्यविशिष्टम्, तेन(७) सहोत्पन्ना नीलपीतादि(८)प्रत्ययाः स्वात्मानं परं च गृह्णन्तो(९) भवन्ति विचित्रप्रत्यया इत्याशङ्कते । नन्विति । इह विज्ञाने । चित्राकाराणां नीलपीतादिप्रत्ययानाम्(१०) । व्यतिवेदनम्(११) मिथोग्रहणम् । एवमपि

दीधितिटिप्पणी ।

नैतदस्तु न तेषां नियामकत्वमस्तु । तथा उक्तनियामकम् । तच्च अभिन्नोपादानकत्वञ्च । अविशिष्टमिति । एतन्मते आलयविज्ञानेन एकदा ग्राह्यग्राहकज्ञानद्वयं जन्यते, कार्यभेदस्तु तत्तद्व्यक्तिनियामकेतरकारणाधीन इति तयोरालयरूपाभिन्नोपादानकतया ग्राह्यग्राहकभाव इति । ननु मया एकोपादानकत्वमेव नियामकमङ्गीकृत्यातिप्रसङ्गो निवार्यते, न तु सामग्रीसामर्थ्यं, अतीतानागतनिखिलज्ञानानामेकव्यक्तिसमानोपादानकत्वाभावात् । एतदुपादानस्य क्षणिकतया काला-

(१) व्यतिवेच-पा० २ पु० । (२) एतत्, उक्तानां ग्राह्यत्वनियामकत्वम् ।-गुणानन्दः।

(३) तथा, ग्राह्यत्वनियामकम् ।—गुणानन्दः ।

(४) इच्छासुखादीनामपि ज्ञानेन तुल्योपादानत्वे अतिप्रसङ्गमाशङ्कयाह । बाह्येति । इत्थञ्च स्वस्य स्वभिन्ननीलपीतात्मकज्ञानयोश्च स्वविषयत्वं व्युत्पादयति । तच्चेति । समानोपादानकत्वञ्चेत्यर्थः ।—गुणानन्दः । (५) पादानत्वं-पुण० पु० पा० ।

(६) कारणत्व—कलि० मु०पु०पा० । (७) तेन, उक्तस्य नियामकत्वेन ।-गुणानन्दः ।

(८) नीलेत्यत्र आदिपदात् रक्तादिपरिग्रहः, तेन न बहुवचनानुपपत्तिः ।-गुणानन्दः ।

(९) गृह्णन्तः, विषयीकुर्वन्तः । विचित्रप्रत्ययाः स्वविषयविरोधिविषयिणो भवन्ति ।-गुणानन्दः । (१०) एतन्नये आकारस्योपगमे मानाभावाच्चित्रत्वानुपगमाच्च इ। नीलादिप्रत्ययानामिति ।-गुणानन्दः । (११) व्यतीहारो हि स्वकीयस्य वस्तुनो मिथोऽर्पणम्, तद्दशायां च न तत्स्वकीयं, एतच्च न प्रकृत इत्यत आह । मिथ इति । ग्रहणम्, विषयिता ।-गुणानन्दः । व्यतीहार-इति गुणानन्दसम्मतः पाठः ।

यस्ये ह्युपादानमुखेन सामान्यतो वा सामग्रीसामर्थ्यमेव वक्तव्यम्, अन्यथा तथाविधकार्यानिष्पत्तेः(१),

दीधितिः ।

स्वकारणसामर्थ्यात्(२) विज्ञानं नियतज्ञानग्राहकमित्यायातम्, तथा च तत एव(३) नियतबाह्यग्राहकमपि भवेदिति सन्दिग्धा(४)नैकान्तिकत्वमिति दूषयति। नेति। हिशब्दो(५) हेतौ। उपादानं(६) यदि क्षणिकं स्यात्, स्यादपि तत्सामर्थ्यं नियामकम्, न त्वेतदस्ति, स्थैर्यस्य प्रतिसन्धानादिति सामग्रीसामर्थ्यं नियामकं(७) वक्तव्यम्। सामान्यतः कारणमात्र(८)मुखेन। तथाविधं कार्यम् नियत(९)विषयकं विज्ञानम्। अथायमाशयः, तज्ज्ञानग्राह्यत्वे तत्सामग्री(१०)जन्यत्वं नियामकमिति। नैतदपि। चित्रप्रत्ययानुपपत्तेः, सामग्र्यभेदे कार्यभे-

दीधितिटिप्पणी ।

न्तरस्याव्यजनकत्वादत आह। उपादानं यदीति। मूले, उपादानमुखेन समवायिकारणत्वरूपेण। उपादानस्य स्थिरतया तन्मात्रं मा भूदिति-प्रसङ्गान्नियामकम्, सामग्र्यास्तु क्षणिकतया तज्जन्यत्वमेव तथा वाच्यमित्यभिप्रायेण स्वयं दर्शयति। अथेति। हेतुमाह। सामग्र्यभेद

(१) नुत्पत्तेः—कलि० मु० पु० पा०।

(२) स्वकारणस्य, स्वोपादानस्य। सामर्थ्यात्, नियामकत्वात्।—गुणानन्दः।

(३) तत एव, स्वकारणसामर्थ्यादेव। विज्ञानमिति प्राक्तनमत्रान्वयि।—गुणानन्दः।

(४) अवतारिकाछलेनैव पूर्वक इति व्याचष्टे। सन्दिग्ध इति।—गुणानन्दः।

(५) अग्रे पूर्वक एव दोष इति भविष्यति, तच्च नेत्यत्र न हेत्वाकाङ्क्षानिवर्तकमत आह। हि शब्द इति। तथाच पूर्वक एव दोषो यत इति लभ्यते।—गुणानन्दः।

(६) उपादानमुखेनेत्यत्रारुचिमाह। उपादानमित्यादि। एतावतैव परमते ग्राह्यत्वे नियामकं परीत्यैवाभिधातुं कारणमात्रमुखेनेत्यादिग्रन्थ इति भावः।—गुणानन्दः।

(७) सामग्रीसामर्थ्यादित्युपादानमुखेनेत्यत्र योजयित्वा तत्र विधेयं पूरयति। नियामकमिति।—गुणानन्दः।

(८) कारणमात्रेत्यत्र मात्रेण उपादानत्वस्यैव नियामकत्वव्यवच्छेदः।—गुणानन्दः।

(९) व्यतिवेदनस्य प्रक्रान्तत्वात् तत्परामर्शनिराकरणायाह। नियतेति।—गुणानन्दः।

(१०) तत्सामग्रीति। एतावतैव च बाह्यस्य ग्राह्यतानिरासः, तस्य ज्ञानसामग्र्यजन्यत्वादिति भावः।—गुणानन्दः।